

# राष्ट्रिय संस्कृत संस्थानम्

नवदेहली

गङ्गानाथ झा केन्द्रीय संस्कृत विद्यापीठ ग्रन्थमाला

॥ ४२ ॥

श्री जीवादेवविरचितः

# भाट्टभास्करः

॥ सम्पादकः ॥

॥ डॉ॰ कमलनयन शर्मा ॥



Rashtriya Sanskrit Sansthan

*(Under the auspices of the Ministry of Human Resources Development, Govt. of India)*

New Delhi



Ganganatha Jha
Kendriya Sanskrit Vidyapitha

TEXT SERIES

*General Editor*

Dr. G.C. Tripathi



No. 42

# Bhāṭṭabhāskara

*by*

Jīva Deva

*Edited by*

Dr. Kamal Nayan Sharma




ALLAHABAD
1996

राष्ट्रियसंस्कृतसंस्थानम्
(केन्द्रीयमानवसंसाधनविकासमन्त्रालयस्याङ्गभूतम्)
देहली

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला

।। द्विचत्वारिंशत्प्रसूनम्।।

प्रधानसम्पादकः
डॉ० गयाचरण त्रिपाठी



श्री जीवदेव विरचितः

# भाट्टभास्करः

सम्पादकः
डॉ० कमलनयन शर्मा

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
चन्द्रशेखर आजाद पार्क,
प्रयागः-211002
1996

श्री जीवदेवविरचित:

# भाट्टभास्कर:

•

प्रधानसम्पादक:

**डॉ० गयाचरण त्रिपाठी**

प्राचार्य:

•

सम्पादक:

**डॉ० कमलनयन शर्मा**



**श्रीगङ्गानाथ-झा-केन्द्रीय-संस्कृत-विद्यापीठ**

**चन्द्रशेखर आजाद पार्क, इलाहाबाद-२११००२**

**१९९९**

प्रकाशक:
**डॉ0 गयाचरण त्रिपाठी**
प्राचार्य:
गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
चन्द्रशेखर-आजाद पार्क
इलाहाबाद-211002







मूल्यम्



मुद्रक:
**शाकुन्तल मुद्रणालय:**
**34, बलरामपुरहाउस**
**इलाहाबाद-211002**

## FOREWORD

The Vidyapeeth is very happy to bring out a critical edition of the work 'Bhāṭṭabhāskara by Jīva Deva, a great Mīmāṁsā Scholar of his times. As its very name indicates, the present work is an exposition of the principles of the Mīmāṁsā Philosophy as accepted and elucidated by Kumarila Bhaṭṭa and his followers.

The Philosophy of Mīmāṁsā which is based on the interpretations of the statements contained in the Saṁhitās of the Black Yajurveda and Brāhmaṇas, is perhaps the oldest of all the systems of Indian Philosophy. Its basic purpose is to help a human being gain material prosperity and spiritual advancement (*abhyudaya* and *niḥśreyas*) by correctly performing the Vedic ritual which it seeks to explain and substantiate through its exposition. It has also intimately interacted with the Buddhists and has successfully defended the performance of Vedic ritual which was serverly criticised by them. The School of Kumārila, as against the school of Prabhākara, represents the older and the more orthodox view of Mimāmsā Philosophy, though Sir Ganganatha Jha would perhaps think otherwise.

It is unfortunate that the study of Mimāṁsā is dwindling day by day in the North and it is very difficult to find a real good school of this Philosophy in

this part of India whereas in Mithila and especially in the South, Mīmāṁsā scholars are still found in abundance. The reason behind this phenomenon seems to be that the performance of Vedic sacrifices has become very rare in North whereas in the South Vedic sacrifices continue to be performed.

The present work, though unfortunately incomplete, is a lucid exposion in very simple language of the basic tenets of the Mīmāṁsā Philosophy. It can serve as a very good introduction into the Mīmāmsā Philosophy for the fresh entrants in this Śāstra. The text of the work has been reconstructed on the basis of eight manuscripts, two of which belong to this Institute, two to the Manucripts collection of Shri Raghunath Mandir Jammu and the remaining four have been procured from the Saraswati Bhawan Library in Varansi. It is a pity that none of these manuscripts represents the work in its entirety. All of them are incomplete which leads us to assume that Shri Jīva Deva did not perhaps live long enough to complete his work.

Jīva Deva lived and worked most probably in the latter half of the 17th century. Though the exact period of the composition of this work cannot be fixed with certainty, it can safely be assumed that the work was composed sometime between 1670 to 1685 A.D.

Jīva Deva was born in the illustrious family of the famous Maharashtriyn saint Shri Ekanātha who was his gteat-grandfather. His father was Āpadeva and the grandfather Ananta Deva, both of whom were very famous Mimaṁsā Scholars. He had also an elder

brother named Ananta Deva–the second, who is also famous for his Mīmāṁsā writings. Mīmāṁsā was thus, so to say, in the blood of Jīva Deva. This is the reason why his treatment of the subject is so exhaustive, yet so simple and natural. Jīva Deva and his forefathers lived and worked in the historical city of Paithan (Pratiṣṭhāna) situated on the bank of Godavari in the state of Maharashtra (some 40 Km. south of the city of Aurangabad). Paithan has been a centre of Art, Culture and Literature since the times of the Sātavāhanas and had commercial relations with the city of Rome in ancient times.

The work has been ably edited by Dr. Kamal Nayan Sharma, Reader in Dharmshastra at the Kendriya Sanskrit Vidyapeetha, Jaipur. He started working on this text while he was a Lecturer in this Vidyapeetha and continued that at Puri and Jaipur where he finally completed it. He has also taken pains not only to write a scholarly commentary on this work which is printed in the form of an appendix but also to write annotations on certain topics and points appearing in the text which need further exposition and elucidation. These Pariśiṣṭas have really made this work very valuable, though it has iccreased the valume of the work to such an extent as was quite unforeseen when the work was sent to press.

Since Dr. Sharma was not available in Allahabad to read the proof sheet of thits book, the work was got done by other scholars (Pt. Tarinish Jha / Dr. Ram Narayan Mishra). But it is perhaps difficult for a person not fully conversant with the subject matter to do justice to the intricate job of proof-reading. To make the

things verse, I was mostly out of Allahabad while this work was underprint (first in Canada and then in Lucknow). This has unfortunately resulted in the text containing perhaps an unusually high number of printing mistakes for which I earnestly crave the indulgence of the scholars.

**G. N. Jha K. S. Vidyapeetha** | **G. C. Tripathi**
*Allahabad* | *Principal*
Date : 17-3-1996

# विषयानुक्रमणिका

विषयाः पृष्ठम्

**विषयाः** **पृष्ठम्**

विषयाः पृष्ठम्





# प्रस्तावना

अथेयं प्रस्तूयते प्रस्तावना श्रमिदापदेवतनूजन्मनोऽनन्तदेवानुजन्मनः आनन्दकन्द श्रीकृष्णचन्द्रचारुचरणार्पितचित्तवृत्तेः श्रीमतो जीवदेवस्य कृतिषु मीमांसागहनवनसञ्चारिभट्टमतप्रकाशकस्य भाट्टभास्करस्य । तत्र विषये द्वित्राः शब्दाः विनिवेद्यन्ते तत्र भवतां भवतां सारस्वतसत्रसमुपासकानां विद्यावरिष्ठानां ज्ञानगरिष्ठानां श्रीमतां विद्वद्वरेण्यानां समक्षम् । इदमत्रावधेयम्, अस्माकं भारतीयानां महार्घरत्नभूतायाः भारतीयाः संस्कृतेः दर्शनानाञ्च प्रभवस्थानं विविधविद्यानिधानभूता वेदा एव सन्तीति न तिरोहितं विद्वद्विपश्चिमानाम् । वेदे तावत्सर्वेषां विषयजातानां सूक्ष्माणि तत्त्वानि सूत्ररूपेण सुनिगूहितानि विद्यन्ते । अत्र च प्राचीनपरम्परालम्बिनः तज्ज्ञाः प्रमाणम् । तान्येव च बीजभूतानि तत्त्वानि यथावसरं सूक्ष्मातिसूक्ष्मतत्त्वदर्शिभिः महामनीषिभिरङ्कुरादिक्रमेण पल्लवितानि पुष्पितानि फलितानि च सञ्जातानि । अद्यतनीयाश्च जनाः तेषामेव श्रमसिद्धसोपानमधिरुह्य तत्परिपाकसञ्जातरसानुभवं कुर्वन्ति । वेदप्रामाण्यादेवान्येषां शास्त्राणां प्रसिद्ध्यति प्रामाण्यम् । वेदश्च मन्त्रब्राह्मणात्मकः । 'मन्त्रब्राह्मणात्मकः । 'मन्त्रब्राह्मयोर्वेदनामधेयम्' इति कात्या[1]यनापस्तम्[2]बवचनात् । 'मन्त्रब्रह्म[3]णमित्याहुः' 'आम्[4]नायः पुनर्मन्त्राश्च ब्राह्मणानि च' । एभ्यश्चवचनप्रमाणेभ्यः वेदानां मन्त्रब्राह्मणात्मकत्वं संसिध्यति । उभयत्र चापौरुषेयत्वात्प्रामाण्यं तिष्ठति । अपौरुषे[5]यं पौरुषेयञ्च । अपौरुषेयं श्रुतिः । सा च मन्त्रब्राह्मणे । विवृतक्रियातन्त्रा मन्त्राः । मन्त्राणां स्तुतिनिन्दाव्याख्यानविनियोगादिग्रन्थो ब्राह्मणम् । पौरुषेयन्तु पुराणमन्वीक्षिकी मीमांसा स्मृतितन्त्रमिति च चत्वारि शास्त्राणीत्यादि तदीयो ग्रन्थः ।

---

१. कात्या० प्रतिज्ञाप० १-१ २. आप० यज्ञप० २४-१-३१

३. बो. गृ. २-६२ ४. को. सू. १-३

५. जै. सू. २-१-३२

उभयोः प्रामाण्यमभिलक्ष्यैव पूर्वमीमांसासूत्रकारेण भगवता जैमिनिना सूत्रितम्—'त[1]च्चोदकेषु मन्त्राख्या' 'शेषे ब्रा[2]ह्मणशब्दः' इति। व्याख्यातञ्च भाष्ये—अभि[3]धानस्य चोदकेष्वेवंजातीयेष्वभियुक्ता उपदिशन्ति—मन्त्रानीधीमहे, मन्त्रानध्यापयामः मन्त्राः वर्तन्त इति। अर्थात् अभियुक्ताः यत्र मन्त्रत्वेन कुर्वन्ति व्यवहारम्। तेषामेव मन्त्रत्वमिति। तन्त्र[4]वार्त्तिके च—तदभिधानं चोदकं प्रयोजकं येषामिति बहुव्रीहिः। अध्येतृवृद्धव्यवहारसिद्धं चेदं प्रायिकचिह्नयुक्तं लक्षणं लाघवार्थमित्यादिः। अनेनापीदमेव सिद्धयति यत् मन्त्रत्वेन वृद्धव्यवहार एव मन्त्रत्वप्रयोजक इति। अतएवोक्तं माधवाचार्येणापि—अभि[5]युक्तानां 'मन्त्रोऽयम्' इति समाख्यानं लक्षणमिति। मन्त्राणां लक्षणमित्यर्थः। वेदविद्यापारदृश्वा सायणोऽपि वक्ति ऋग्वेदभाष्यभूमिकायाम्—तस्[6]मादभियुक्तानां 'मन्त्रोऽयम्' इति समाख्यानं लक्षणमिति। आपदेवीये च 'मन्[7]त्राणां प्रयोगसमवेतार्थस्मारकतयार्थवत्त्वम्' इत्युक्तम्। प्रयोगोऽनुष्ठानं तत्समवेतः तद्विषयीभूतो योऽर्थः तत्स्मारकत्वेनेत्यर्थं इति व्याख्यातम्। कर्मणां पदार्थस्मरणपूर्वकानुष्ठानस्यैव सर्वत्र विहितत्वात् तादृशपदार्थस्मारकापेक्षायां मन्त्राणामेव तादृषपदार्थस्मृतिजनकतावच्छेदकाश्रयत्वेनोपयोगस्य समुचितत्वदिति सा[8]रविवेचिन्याम्। ग्रन्थेनैतावता लक्षणद्वयं सम्पद्यते—मन्त्रत्वेनाभियुक्तव्यवहारविषयतावच्छेदकतावच्छेदपकताश्रयत्वं मन्त्रत्वमिति। पक्षेऽत्र नियमविधिस्वीकारादेव जायते सार्थक्यम्। पदार्थस्मारकत्वेनान्यहेतूनामपि विद्यमानत्वात्। अतएवोक्तम्-[9]मन्त्रैरेव पदार्थस्मरणं कर्त्तव्यमिति। एवमेव ब्राह्मणविषयेऽपि दृश्यते भाष्ये-मन्त्र[10]लक्षणे उक्ते परिशेषसिद्धत्वाद् ब्राह्मणलक्षणमवचनीयम्। मन्त्रलक्षणेनैव सिद्धम्। यस्यैतल्लक्षणं न भवति, तद् ब्राह्मणमिति परिशेष सिद्धं ब्राह्मणम्' इति। अतः मन्त्रातिरिक्तवेदभागाः ब्राह्मणपदवाच्या इति। अत्रैव च वा[11]र्त्तिककारस्यापि स्वारस्यं प्रतिभाति। विधिलक्षणमित्यत्र ब्राह्मणवाची विधिशब्द इति। न्यायमालायामपि सिद्धान्तिम्—[12]मन्त्रब्राह्मणरुपौ द्वावेव वेदभागावित्यङ्गीकारान्मन्त्रलक्षणस्य

---

१. जै. सू. २-१-३३ — २. शा. भा. २-१-३२
३. काव्यमीमांसा अ०-२ — ४. तन्त्रवार्त्तिकम्-२-१-३२
५. जै० न्या० मा० २-१-७ — ६. ऋग्वेद भा० भू० पृ० ३५
७. मी. न्या. प्र. पृ.-११० — ८. सारविवे. चिनी पृ०-११०
९. मी. न्या. प्र. पृ. ११० — १०. शा. भा. २-१-३३
११. तन्त्रवार्त्तिकम्-२-१-३३ — १२. जै. न्या. मा. २-१-८

पूर्वमभिहितत्वात् । अ[1]विशिष्टो वेदभागो ब्राह्मणम् । इत्येतल्लक्षणं भवति । एवमुभयोर्लक्षणस्य विद्यमानत्वात्तदुभयात्मको वेद इति सिद्धान्तः सुप्रतितिष्ठति । केचिच्च श्रुतिवेदयोर्भेदं कञ्चन स्वीकुर्वन्ति । तेषां सिद्धान्तोऽनेन प्रकारेण निराकृतो वेदितव्यः । तदुभयात्मकस्य वेदत्वात् । वेदश्श्रुतिश्चानर्थान्तिरम् । तदुक्तमपि मनुना—'श्रुति[2]स्तु वेदो विज्ञेयो धर्मशास्त्रन्तु वैस्मृतिः' इति । व्याख्यानमपि कुल्लूक भट्टेन—[3]श्रुतिर्वेदः, मन्वादिशास्त्रं स्मृतिः । केचिच्च ब्राह्मणग्रन्थे व्याख्यानशब्दप्रयोगेण भ्रान्ताः भवन्ति, सहसा कथयन्ति च—न ब्राह्मणानांवेदत्वं भविनुमर्हति, तेषां वेदव्याख्यानरुपत्वात् । तन्न विचारसहम् । विशिष्टमाख्यानं व्याख्यानमित्यस्यैवात्र स्वीकारात् । वैशिष्टचञ्च—संहिताभागपरिपठितमन्त्राणां विनियोगादिप्रतिपादकत्वम् यथा—संहिताभागे 'उद् प्रथस्व' इति मन्त्रो वर्त्तते पठितः । तस्य च क्वोपयोग इति जायते जिज्ञासा । तत्र ब्राह्मणवाक्यं समुपतिष्ठति विनियोग वोधनाय । यथा—'उरुप्रथस्वेति पुरोडाशं प्रथयति' इति । अर्थात् उरु प्रथस्वेति मन्त्रस्य पुरोडाशप्रथनरुपे कार्ये भतति विनियोग इति । अनेन प्रकारेण तत्र विनियोगवोधकता तत्र तिष्ठति, न त्वत्र अथ = अनन्तरमिति पर्यायशब्दनिर्देशमात्रमेव व्याख्यानं भवति । एवमेव काव्यमीमांसायामपि वेदानां मन्त्रब्राह्मणात्मकत्वं स्वीकरोति ग्रन्थकारः । तथा च श्रुतीनामपौरुषेयत्वं ब्राह्मणानां स्तुतिनिन्दा व्याख्यान विनियोगादिप्रतिपादकत्वम् । तथाहि—तच्चद्विविधम्—अपौरुषेयं पौरुषेयञ्च' इत्यादि । तस्मान्न ब्राह्मणवाक्यत्नां वेदत्वाभाव इति वोध्यम् । ब्राह्मणग्रन्थानामपि गुरुमुखोच्चारणानूच्चारणरुपेणैव भवति । ग्रहणम् । अन्यथा स्वस्वैषम्यापत्तिर्दुर्वारैवस्यात् । तस्यात्तदुभयात्मका वेदा प्रमाणभूता इति । एवञ्च प्रायः सर्वेषामपिशास्त्राणां वेदमूलकत्वमेव प्रतिभाति । तत्र समेषां शास्त्राणां येन केनापि व्याजेन बीजदर्शनात् । लत्र किञ्चिद्विचारयामो वयम् । तथाहि—वेदेषु तावदनेकत्र शब्दनिर्वचनप्रकारस्य संसूचनं समुपलभ्यते । यथा—तत्[4]पर्णस्य पर्णत्वम् 'तच्छ[5]म्यै शमित्वम्' 'तच्छ[6]यैतस्य श्यैतत्वम्' 'तद्[7]रोहिण्यै राहिणीत्वम्' 'तदा[8]हुतीनामाहुति-

१. जै न्या. मा. २-१-८
ऋग्वेद भा. भू. पृ. ३७

२. मनु० स्मृ. २-१०

३. मन्वर्थमु. २-११

४. तै. ब्रा. १-१-३

५. तै. ब्रा. १-१-३

६. ,, ,, १-१-८

७. ,, ,, १-१-१०

८. ऐ. ब्रा. १-१-२

त्वम्' 'तमि[1]न्द्रसन्तमिन्द्र इत्याचक्षते' 'य[2]दिप्रथमतः तत् पृथिव्याः पृथिवीत्वमि'त्यादि । एभिरुदाहरणैर्निर्वचनशास्त्रस्य वेदमूलकत्वं स्पष्टमेव सिद्धयति । तैत्तिरीयोपनिषदि '[3]शीक्षां व्याख्यास्यामः' वर्णः, स्वरः, मात्रा, बलम्, साम, सन्तान इत्युक्त शीक्षाध्यायः' । अनेन शिक्षाग्रन्थस्य तन्मूलकत्वं दृश्यते । ततश्चानेकग्रन्थकारैः शिक्षाशास्त्रं समुपबृंहितम् । बलशब्देनात्र स्थानप्रयत्नयोः ग्रहणं भवति । सामशब्देन साम्यमुक्तं भवति । सन्तानश्च संहितेति ।

एवमेव '[4]यत्स्वाध्यामधीयतैकामप्यृचं यजुः साम वा तद् ब्रह्मयज्ञ' इति । तथा रि[5]च्यत इव वा एष प्रेवरिच्यते, यो याजयति प्रति वा गृह्णाति, याजयित्वा प्रतिगृह्य वानश्नन् त्रिः स्वाध्यायं वेदमधीयीत इत्यादिवेदवाक्यमधिकृत्यैव प्रवर्त्तते कल्पशास्त्रम् । तत्र वेदविहितयागानां प्रयोगस्यैव दृश्यते समर्थनम् । अतएव 'कल्प्यते समर्थ्यते यागप्रयोगोऽत्रेति व्युत्पत्तिरपि सङ्गच्छते । तथा च वा[6]ग्वै पराच्यव्याकृतावदत्ते देवाइन्द्रमनुब्रुवन्निमां नो वाचं व्याकुर्विति । सोऽब्रवीत् वरं वृणौ, मह्यं चैवैष वायवे सह गृह्याता । तस्मादैन्द्रवायवः सह गृह्यते । तमिन्द्रो मध्यतोऽवक्रम्य व्याकरोत् । तस्यादिय व्याकृता वागुद्यते । इति । 'द्वेविद्ये वेदितव्येतु शब्दब्रह्म परं च यत् । शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति । ब्रह्मविन्दूनिषत प्रसङ्गेनानेन व्याकरणशास्त्रस्य तन्मूलकत्वं सिद्धयति ।

तथा च 'तस्मात्सप्त चतुरुत्तराणि छन्दांसि प्रातरनुवाकेऽनूच्यन्ते'[7] इति । तथा 'गा[8]यत्रीभिर्ब्राह्मणस्यादध्यात् त्रिष्टुभी राजन्यस्य, जगतीभिर्वैश्यस्य' इति श्रूयते । अनन्तरञ्च पिङ्गलप्रभृतिभिः महर्षिभिर्लौकिकानामपि यगण्ययगणादिसाध्यानां छन्दसां विवर्द्धनं कृतमं । ज्योतिषशास्त्रे च सम्वत्सरर्त्तुमासपक्षतिथिनक्षत्रसायं प्रातः कालादिविचिाराणां प्रामुख्यं समवलोकयामः । तेषाञ्च मूलानि पश्यामस्तत्र । यथा—सम्व[9]त्सरमेतद् व्रतं चरेत्' । 'सव[10]त्सरमुख्यं भृत्वा' इत्यादौ सम्वत्सरप्रयुक्तविधीनां दृश्यते

---

१. ऐत० ब्रा. २-४-३
२. तै. ब्रा. १-१-३
३. तै. उ. १-१
४. तै. आ. २-१०
५. तै. आ. २-१६
६. तै. सं. ६-४-७-३
७. तै. ब्रा. १-५-१२
८. तै. ब्रा. १-१-६
९. तै. आ. १-३२-१
१०. तै. सं. ५-६-५

प्रतिपादनम् । 'वसन्ते[1] ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः' इत्यत्रर्त्तुमाश्रित्य प्रवर्त्तमानाः विधयः सन्ति प्रतिपादिताः ।

'मासि[2] मासि सत्रपृष्ठानि उपयन्ति, मासिमासि अतिग्राह्या गृह्यन्ते', इत्यादिषु मासविधयो दृश्यंते । 'तं काम[3]येत वसीयान् स्यादिति तं पूर्वपक्षे याजयेत्' इत्यादौ पक्षमाश्रित्य सन्ति प्रतिपादिताः विधयः । ए[4]काष्टकायां दीक्षेरन् 'फल्गुनीपूर्णमासे दीक्षेरन्' इत्यादौ तिथयः सन्ति निर्दिष्टाः । कृत्ति[5]कास्वग्नीनादधीत' इत्यत्र नक्षत्रं विहितं वर्त्तते । 'प्रात[6]र्जुहोति, सायं जुहोति' इत्यादौ च सायंप्रातःकालादिविधयो दृश्यन्ते एतवाता सन्दर्भेण स्पष्टं वक्तुं प्रभवामो वयं यज्ज्यौतिषं शास्त्र वेदमूलकमेव । एवमेव इति[7]हासपुराणाभ्यां वेदं समुपबृंहयेत् ।

विभेत्यल्पश्रुताद् वेदो मामयं प्रहरेदिति ।। इत्युक्तम् । अत्राप्यैतरेय तैत्तिरीयकाण्वादिशाखासु तत्तत्स्थलेषु प्रतिपादितानि हरिश्चन्दनाचिकेतोपाख्यादीनि मूलभूतानि सन्ति । तदुपजीव्यैव प्रवर्त्तन्त इतिहासग्रन्था । तथोपनिषद्ग्रन्थेऽभिहिताः सृष्टिस्थितिलयाख्याः पुराणादिषु विस्तरेण प्रतिपाद्यन्ते । तस्मादेतेषां वेदमूलकत्वमेव । धर्मशास्त्रस्य तु वेदमूलकत्वेनैव प्रामाण्यमिति स्पष्टमुदीरित' स्मृ[8]त्याधिकरणे । स्मरणं स्मृतिः । वेदार्थस्मरणं कृत्वैव लोकहिताय स्मृतिग्रन्थानामुपदेशः । तथा च मनुः[9]—

**यः कश्चित्कस्यचिद्धर्मो मनुना परिकीर्त्तितः ।**
**स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ।।**
**सर्वं तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा ।**
**श्रुति प्रमाण्यतो विद्वान् स्वधर्मे निविशेत वै ।।**

तन्मूलकानि वेदवाक्यान्यपि दृश्यन्ते—तदु[10]हवा एते ब्रह्मवादिनः पूर्वाभिमुखाः सन्ध्यायां गायत्र्याभिमन्त्रिताः आप ऊर्ध्वं विक्षिपन्ति 'इति

---

१ तै. ब्रा. १-१-२
२. तै. सं. ७-५-१५
३. तै. सं २-२-३
४. तै. सं. ७-४-८
५. तै. ब्रा. १-१-२
६. तै. ब्रा. २-१-२
७. म० भा० १-१-२६७
८. जै. क स्या. मा. १-३-१
९. मनु. २-७-८
१०. तै. आ. २.२

सन्ध्यावन्दनविधिप्रतिपादको मन्त्रः । 'पञ्च[1] वा एते महायज्ञाः सतति प्रतायन्ते' इति मञ्चमहायज्ञप्रतिपादकानि वाक्यानि समवलोक्यन्ते । धर्मशास्त्रीयवचनसमर्थकानि वाक्यान्यनेकानि सन्ति । नात्रान्वेषणं सर्वेषामावश्यकमिति कृत्वाविरमामि ।

एवमेवदर्शनानामपि वेदमूलकत्वमेव दरीदृश्यते । तत्र तत्र प्रतिपादिताः सिद्धान्ताः येन केनापि प्रकारेण साक्षात् परम्परयावा सन्ति विद्यमानाः ।

यद्यपि दर्शनशब्दोऽनेकत्र प्रवर्त्तते, यथा—दृश्यतेऽनेनेति विग्रहे दृश्धातोः करणे ल्युटि निष्पद्यते दर्शनं चक्षुरादिकम् । यथा च कालिदासीये 'चि[2]न्ताजडं दर्शनम्' इति । नेत्रमित्यर्थः । तथा च हलायुधविवरणे-दृश्यते यथार्थतत्त्वमनेनेति दर्शनं शास्त्रम् । तत्तु षड्विधम्—'द्वे न्याये द्वे च मीमांसे द्वे योगे' इति षड्विदुः । न्यायशब्देनात्र न्यायवैशेषिकयोः ग्रहणम् मीमांसे पूर्वोत्तरमीमांसे इति । योगेन साङ्ख्ययोगदर्शनस्य ग्रहणम् । महा[3]भारते च—

वायुश्च सुखसंस्पर्शो निष्प्रतीपश्च दर्शनम् ।
भयं नाभ्याविशत्तत्र यत्र राजा युधिष्ठिरः ।। इति ।

दर्शनं धर्मब्रह्मस्वरुपावेक्षणमिति तट्टीकायां नीलकण्ठः । धर्मविक्षणं पूर्वमीमांसाशास्त्रेण भवति । ब्रह्मस्वरुपावेक्षणञ्चोत्तरमीमांसापरपर्यायेण वेदान्तशास्त्रेण भवति । वेदान्तोपनिच्छब्दश्चानर्थान्तरम् । सृष्टिः प्रभवति, कुत्र च तिरोभवति, कया च शक्त्या स्थिररुपेण तिष्ठतीत्यादीनां समेषां विषयाणां सूक्ष्मरुपेण यत्र विचारः क्रियते, तदेव दर्शनशास्त्रम् । एते च विषयाः वेदेषूपलभ्यन्ते । अतएव वेदमूलकत्वं दर्शनशास्त्राणामिति प्रतिपादयन्ति विज्ञाः । तत्र कानिचिदुदाहरणान्युपस्थाप्यन्तेऽधस्तात् । वेदेषु खलु ऋग्वेदस्य प्राथम्यं सर्वसम्मतम् । तत एत्रोदाहरणान्युपस्थाप्यन्ते प्रप्रथमम् ।

[4]किं स्विदासीदधिष्ठानमारभ्यमाणं कतमत्स्विकत्थासीत् ।
यतो भूमिं जनयन् विश्वकर्मा वि द्यामौर्णो न महिना विभूवचक्षाः ।

---

१. तै. आ. २-१०१ २. अभिज्ञान शा० ४-६
३. म० भा० विराट् पर्व १-२८-२ ४. ऋग्वेद १०.६.८१.२

अत्रैव सायणः—लोके टि घटं चिकीर्षुः कुलालो गृहादिकं किञ्चित्स्थान-मधिष्ठाय मृद्रूपेणारम्भणद्रव्येण चक्रादिरुपैरुपकरणैर्घटं निष्पादयति, तद्वदीश्वरस्य जगदाश्रयद्यावापृथिव्योरुत्पादनवेलायामधिष्ठानं किं स्विदासीत्। किं नामाभूत। किञ्चिदियर्थः तथा तयोरारम्भणं कतत्स्वित् । आरभ्यतेऽनेत्युपादानकारणम् । तदपि कल्मद्भवेत । तदपि नेत्यर्थः । यद्यपि सम्भवेदारम्भण कथासीत्। कथमभूत् ? किं स्वयं सदसद्वा भवेदित्यर्थः । सच्चेदद्वैतःभङ्गप्रसङ्गः । असच्चेत्सयात्मकयोर्द्यावापृथिव्योरुपादानानर्हत्वात् 'नान्यत्किञ्चनमिषत्' इति। यतो यस्मादधिष्ठानादारम्भणाच्च विश्वचक्षाः सर्वद्रष्टा विश्वकर्मा परमेश्वरो भूमिं जनयम् वर्त्तते तथा द्यां दिवं व्योर्णोत् व्यवृणोत् सृष्टवान् । महिना स्वमहत्त्वेनेत्यादिः । अनेन च सृष्टिप्रक्रिया स्पष्टमुदीरिता भवति । एवमेव—

**विश्वतश्[२]चक्षुरुत विश्वतोमुखो विश्वतो बाहुरुत विश्वतस्तपात् ।**
**सं बाहुभ्यां धमति सं. पतत्रैर्घावा भूमीं जनयन् देव एकः ।।**

अनया सर्वात्मकत्वेन कुलालादिविलक्षणादधिष्ठानाद्यभावेऽपि स्रष्टुं शक्नोतीत्याह—विश्वतो बाहुः । उतापि च विश्वतस्तपात्। स एवंविधः परमेश्वरः स्वस्मिंस्त्रैलोक्यमुत्पादयति । कथमित्युच्यते । बाहुभ्यां दिवं सं धमति । सम्यक् प्रेरयति। तथा पतत्रैर्गमनशीलैः पादैः पृथिवीं सं धमतीति। उभयोरेव श्रवणं प्राधान्याभिप्रायम् । एवं द्यावाभूमीं जनयन् दिवं च पृथिवीं चोत्पादयन् देवोद्योतमानः स्वयंप्रकाशः परमेश्वर एकोऽसहाय एव वर्त्तते, इत्यादि। अनेन च कुलालादिरिवं वाह्यसाधन-सामग्रत्रयावेऽपि सर्वशक्तिमत्त्वेन स्वस्मिन्नेव सर्वमुत्पादयतीति सिद्धयति। अतोऽत्र दार्शनिकतत्त्वानां बीजानि सन्त्येवे ति निश्चिनोमि ।

**[३]किं स्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः ।**
**मनीषिणो मनशापृच्छेदुं तद् यदध्यतिष्ठद् भुवनानिधारयन् ।।**

अनेनापि वनवृक्षभावेन व्यष्टिसमष्टिरुपस्य सृष्टिस्वरुपस्य प्रतिपादनं भवति। सर्वभुवनधारकत्वञ्च तस्मिन्नेवनिहितं वर्त्तते । सर्वेषाञ्चाधि-

---

१. ऐ० आ० २-४-१ २. ऋग्वेद १०-६-८१-३
३. ऋग्वेद १०-६-८१-४

ष्ठानरूपः स इत्यादिना जगत्स्रष्टृत्वञ्च धारकत्वञ्च प्रतिपाद्यते । अनेन चोत्पत्तिस्थित्योर्ज्ञानं जायते । आभ्यामेव च संहारमप्युपक्षयति । एवं सृष्टिविषयकानि मूलतत्त्वानि प्रतिपाद्य शेषेण मन्त्रेण तमेव स्तौति । एवमेव हिरण्यगर्भसूक्तेऽपि दार्शनिकं तत्त्वं द्रष्टुं शक्यते—

तथाहि—

**[1]हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् ।**
**स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥**

अत्र भाष्यं सायणस्य—हिरण्यगर्भो हिरण्मयस्याण्डस्य गर्भभूतः प्रजापतिर्हिरण्यगर्भः । तथा [2]तैत्तिरीयकम्—'प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुपत्वाय । यद्वा हिरण्मयोऽयमण्डो गर्भवद् यस्योदरे वर्त्तते, सोऽसौ सूत्रात्मा इत्युच्यते । अग्रे प्रपञ्चोत्पत्तेः प्राक् समवर्त्तत । मयाध्यक्षात्सिसृक्षोः परमात्मनः सकाशात्समजायत । यद्यपि परमात्मैव हिरण्यगर्भस्तथापि तदुपाधिभूतानां वियदादीनां सूक्ष्मभूतानां ब्रह्मण उत्पत्तेस्तद्रूपाहितोऽव्युत्पन्नः इत्युच्यते । स च जातो जातमात्र एवैकोऽद्वितीयः सन् भूतस्य विकारजातस्य ब्रह्माण्डादेः सर्वस्य जगतः पतिरीश्वर आसीत् । न केवलं पतिरासीदेव, अपि तर्हि स हिरण्यगर्भः पृथिवीं विस्तीर्णां द्यां दिवमुतापि चेनामस्माभिर्दृश्यमानां पुरोवर्त्तीनीमिमां भूमिम् । यद्वा पृथिवीत्यन्तरिक्षं नाम । अन्तरिक्षं दिवं भूमिं च दधार । अनेनापि मन्त्रेण जगतः सृष्टिस्थित्योर्वर्णनं करोति वेदपुरुषः । अत्र किंशब्दोऽनिर्ज्ञातस्वरूपत्वात्प्रजापतौ वर्त्तते । यद्वा सृष्टचर्थं कामयतं इति कः । यद्वा कं सुखम् । तद्रूपत्वात्क इत्युच्यते । अथवेन्द्रेण पृष्टः प्रजापतिर्मदीयं महत्त्वं तुभ्यं प्रयायहं कः कीदृशः स्यामित्युक्तवान् । स इन्द्रः प्रत्यूचे, यदीदं ब्रयीम्यहं कः स्यामिति तदेव त्वं भवेति । अतः कारणात्क इति प्रजापतिराख्यायते । एतत्[3]सर्वमैतरेय ब्राह्मणादौ वर्त्तते प्रपञ्चितम् ।

एवमेव—

**[4]य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।**
**यस्यच्छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥**

---

१. ऋग्वेद १०-१०-१२१-१
२. तै. सं. ५-५-१-२
३. ऐत० ब्रा० ३.२१
४. ऋग्वेद-१०-१०-१२१-२

यः प्रजापतिरात्मदा आत्मनां दाता। आत्मानो हि सर्वे तस्मात्परमात्मन उत्पद्यंते। यथाग्नेः सकाशात् विस्फुलिङ्गाः जायन्ते, तद्वत्। यद्वाजन्मनां शोधयिता। बलदा बलस्य दाता शोधयिता वा। यस्य प्रशिक्षपं प्रकृष्टं शासनमाज्ञां विश्व स्मिन् सर्वे प्राणिन उपासते प्रार्थयन्ते सेवन्ते वा। तथा देवा अपि यस्य प्रशासनमुपासते। अपि चामृतममृतत्वम्। यद्वा अमृतम्। मरणं नास्त्यस्मिन्नित्यमृतं सुधा। तदपि यस्य प्रजापतेश्छाया छायेय वर्त्ति भवति। मृत्युर्यमश्च प्राणापहारिणो छामेव भवतः। अनेन च प्रकारेण 'यः[1] प्राणतो निमिषतो महित्वैक' '[2]यस्येमे हिमवन्तो महित्वा' 'येन[3] द्यौरुपा पृथिवी च, इत्याद्यनेकैः मन्त्रैः प्रजापतेः महत्वं सृष्टिस्थितिविनाशकारकत्वञ्च प्रतिपाद्यते।

एवमेव वाक्सूक्तेऽपि जगत्कारणत्वं तद्धारकत्वञ्च स्पष्टमुदीर्यते यथा—

> अहं[4] रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः।
> अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा॥

अहं सूक्तस्यद्रष्ट्री वागांभृणी। यद ब्रह्म जगत्कारणं तद्रूपा भवन्ती रुद्रेभी रूपैरेकादशभिः तदात्मना चरामि। एवं वसुभिरित्यादौ तत्तदात्मना चरामीति। तथा मित्रावरुणा मित्रं च वरुणं च। उभोभावहमेव ब्रह्मीभूता-बिभर्मि। धारयामि। इन्द्राग्नी अपि अहमेव धारयामि। उभोभावश्वि-नाप्यहमेव धारयामि। मयि हि सर्वं जगच्छुक्लौ रजतमध्यस्तं दृश्यते। माया च जगदाकारेण विवर्त्तते। तादृश्याः मायायाः आधारत्वेनासङ्गस्यापि ब्रह्मणउक्तस्य सर्वस्योत्पत्तिः। अनेन प्रकारेणात्रापि सूक्तेऽस्य जगतः उत्पत्तिः स्थितिश्च प्रतिपाद्यते। एवमेव 'अहं[5] सोममहमानसं बिभर्मि' इत्यादिना मन्त्रेण पुरोवर्त्तिनां सर्वेणां पदार्थानां धारणकर्त्तृत्वं मय्येव वर्त्तत इति वक्तिवाक्। 'अहं[6] राष्ट्री संगमनीवसूनाम् इत्यादिनोपासकानां कृते धनानां प्रापयित्री अहमेवेति प्रतिपादयति। अनेनोपासकोपास्यभावोऽपि प्रतिपादितो भवति। 'मया[7] सोऽन्नमत्ति यो विपश्यति यः प्राणिति'

---

१. ऋग्वेद १०-१०-१२१-३ २. ऋग्वेद १०-१०-१२१-४
३. ,, १०-१०-१२१-५ ४. ,, १०-१२-१२५-१
५. ,, १०-१०-१२५-२ ६. ,, १०-१०-१२५-३
७. ,, १०-१०-१२५-४

इत्यादिना भोक्तृशक्तिरुपत्वं प्राणनशक्तिरुपत्वञ्च स्वस्मिन् निर्दिशति। 'अहं[१] सुवे पितरमस्य मूर्धन्मम' इत्यादिना सर्वेषां जनतित्रित्वात् योनिरूपत्वं प्रतिपादयति। एवमेवाहमेव सर्वात्मकमस्मीइत्यादिरूपेण[२] सृष्टि प्रपञ्चं प्रपञ्चयामि।

दार्शनिकतत्त्वविवेचनाय नारदीयसूक्तन्तु जगत्प्रशिद्धं वर्त्तत एव। सर्वप्रथमं जिज्ञासते सृष्टेः प्राक् किदृशी स्थितिरासीदिति, न त्वर्षिः भ्रान्तइति। तत्र भ्रान्तिकल्पनं स्वगतभ्रान्तत्वं द्योतयति। तत्सूक्तञ्च—

[३]नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमा परो यत्।
किमावरीवः कुह कस्य शर्मन्नम्मः किमासीद् गहनं गभीरम्॥

अत्र सृष्टिं प्रतिपिपादयिषया पूर्वन्तात्तत्प्राग्रूपत्वं प्रदर्शयति। तत्र प्रपञ्चस्यात्यन्ताभाव आसीत्। सृष्टेः मूलतत्त्वं प्रतिपादयितुकामः शङ्कते। ततश्च निराकरोति। न त्वत्रर्षिः सन्देहमग्नोविद्यते। अत्र महता प्रघट्टकेन प्रसाधितं सायणेन निगूढं सृष्टितत्त्वं प्रकाशितञ्च। सर्वेषां संहारशक्तिविशिष्टो मुत्युरपि नासीत्तदानीमिति 'न[४] मृत्युतं तर्हि न रातया अन्ह आसीत्प्रकेतः' इत्यादिना स्पष्टीकरोति। 'तम[५] आसीत्तमसा निगूढमग्रे' '[६]कामशतदग्रे समवर्त्तताधि' '[७]तिरश्चीनो विततो रश्मिरेषामधः स्विदासीदुपतिस्विदासत्' इत्यादिभि सर्वैः मन्त्रैः जिज्ञासापूर्वकं सृष्टिविषयकं समाधानमेव प्रतिपाद्यते। सायणाचार्योऽत्र दार्शनिकं तत्त्वं स्पष्टीचकार स्वपक्षे भाष्ये। अधिकन्तु ततएवावसेयः। एवमेव पुरुषसूक्तेऽपि[८] सृष्टितत्त्वमेव तेन रूपेण विवेचितं विद्यते। किं वहुना शतथब्राह्मण प्रभृतिषु ग्रन्थेषु यज्ञात्मना सृष्टयादिप्रक्रिया तस्याश्च विस्तारो बहुधा विचारितोऽलोक्यंते। एवं दार्शनानि वेदमूलकानीति सिद्धयंति। दर्शनानि चास्तिकनास्तिकभेदेन द्विविधानि सन्ति। यादि देदमूलकानि, तानि 'आस्ति'-शब्देन व्यपदिश्यन्ने। यानि च वेदप्रामाण्चं न मन्वते, तानि 'नास्तिक' शब्देनाभिलप्यते। आस्तिकनास्तिकव्यवस्था वेदप्रामण्यमधि कृत्यैव प्रवर्त्तते, न त्वीश्वरमधिकृत्य। अतएवोक्तम्—

---

१. ऋग्वेद १०-१०-१२५-४
२. ऋग्वेद १०-१०-१२५-५
३. ,, १०-१०-१२९-१
४. ,, १०-१०-१२९
५. ,, १०-१०-१२९
६. ,, १०-१०-१२९
७. ,, १०-१०-१२९
८. ,, १०-७-९०

[1]वेदप्रमाणकानीह प्रोचुर्ये दर्शनानि षट् ।
न्यायवैशेषिकादीनि ते स्मृता आस्तिकाभिधाः ।।इति।।

एवमेवेदमपि वक्तुं शक्यते—

वेदाप्रमाणकानीह प्रोचुर्ये दर्शनानि षट् ।
चार्वाकबौद्धजैनानि ते स्मृताः नास्तिकाभिधा ।।इति।।

विषयेऽस्मिन् महर्षिणा पाणिनिनाप्युक्तम्—'अस्ति[2] नास्ति दिष्टं मतिः' इति । तदिति प्रथमासमर्थेभ्यः अस्ति नास्ति दिष्ट इत्येतेभ्यः शब्देभ्य अस्य इति षष्ठयर्थे ठक्प्रत्ययो भवतीति काशिकायामर्थः । अस्ति मस्मितिरस्य आस्तिकः' इत्युदाहृतम् । नास्ति मतिरस्य नास्कि इत्यपि । ततश्चाशङ्कितम्—न च मतिसत्तामात्रे प्रत्यय इष्यते, किन्तर्हि, परलोकोऽस्ति—इति अस्य मतिः, स आस्तिकः । तद्विपरीतो नास्तिक इति । अत्र अस्तिनास्ति शब्दौ निपातौ, न तु क्रियापदे । एताञ्च काशिकामनुसृत्यैवात्र सिद्धान्तकौमुद्यां भट्टोजिदीक्षितेन सर्वा शङ्कामनुपस्थाप्यमूलरूपेण 'अस्ति परलोक इत्येवं मतिर्यस्य, स आस्तिक नास्ति परलोक इत्येवं मतिर्यस्य स नास्तिकः' इत्युदाहृतम् । परन्त्वत्र व्याख्याने स्वीक्रियामाणेऽन्यत्राप्यतिव्याप्तिसम्भावनया तथा 'नास्तिको[3] वेदनिन्दकः' इति मनुमनुसृत्य वेदाधारकमेवास्तिकत्वं नास्तिकत्वं वा व्यवस्थापितम् । एवं सति व्याकरणशास्त्रमनुपयुक्तंमिति चेत् ? न 'तस्य शब्दानुशासनमात्रपरत्वात्' न तेन परिभाष्यतेऽपि तु शब्दानामनुशासनं क्रियते प्रकृतिप्रत्ययनिर्देशेन । ततश्चार्थप्रत्ययः । एवमेव 'नास्तिको मूर्खवचनः' इत्यपि केचितद्वदन्ति । मूर्ख उच्यतेऽनेति मूर्खवचनः । अर्थात् नास्तिकशब्देन मूर्खरूपार्थोप्रतिपाद्यते । 'मुहेः[4] खो मूर्च' इत्युणादिसूत्रेण मूर्खषब्दो निष्पाद्यते । मुहधातु वैचित्त्येऽर्थे भवति । वैचित्त्यञ्च सदसद्विवेकविरहितत्वम् । तस्मादेव च न शास्त्रसिद्धवस्तुन्यपि मतिः स्थिरीभवति । विमुग्धत्वात् । तस्मादेवेदमुखमिति प्रतिभाति । प्रकृतमनुसरामः । यथाऽन्यानि शास्त्राणि वेदमूलकानि तथैवास्माकं दर्शनशास्त्रमपि वेदमूलकान्येव । तत्र प्रथमतया समुपतिष्ठते न्याय वैशेषिक कुलम् । न्यायदर्शने परमाणुकारणतावादः सुप्रसिद्धः । यद्यपि वेदे नैतच्चब्दप्रयोगेण जगत् कारणता प्रसाधिता वर्त्तते तथापि

---

१. दर्शनाङ्कुरा पृ०—१
२. पा० सू० ४-४-६०
३. मनु —२·११
४. उपदिस् सू० पा० सं० ७०८

महाप्रलयकाले सर्वे पदार्थाः परमाणुरूपेणैव परब्रह्मणि परमात्मनि तिष्ठन्ति। स्थूलाः पदार्थाः स्वस्वकारणे तिरोभवंति। अन्ततश्च परमेश्वरः तत्सर्वपदार्थविशिष्टः एकाकी तिष्ठति। सृष्टिप्रकरणे शतपथब्राह्मणे वर्त्तते सर्वं निरुपितम्। पुनश्च सृष्टिसमये तत एव सर्वे पदार्थाः निःसरन्ति पूर्ववत्। अतः परमाणुकारणतावादोऽपि नावैदिकः। प्रतिपादनप्रकार भेदमात्रमेव वरीवर्त्ति। पृथिव्यप्तेजोवाय्वाकाशकालदिगात्मनसाञ्च विचारो वैदिके वाङ्मयेऽनेकत्र बहुशः समुपलभ्यते। तस्यैव सूक्ष्मतम-विवेचनं प्रस्तौति न्यायशास्त्रम्। कालतत्त्वस्य वैदिकं विवेचनं काल[1]मधवे माधवाचार्येण स्पष्टमेव प्रस्तुतम्। अनवसरत्वादत्र समुपस्थान वै नैवोचितमिति कृत्वा त्यज्यते। तत एव बोध्यः। प्रत्यक्षानुमानादीनामपि वर्णनं येन केनप्रकारेण तत्र समुपलभ्यत एव। स्वप्रामाण्यसंसिद्धये च पौनः पुन्येन स्मरतिवेदम्। महेश्वरप्रधानसमये '[2]द्यावाभूमीं जनयन् देव एकः' इति ऋग्वेदीयं वचनमुदाहरन्ति। न्यायदर्शनेऽऽत्मचिन्तनं सूत्रकालादेव प्रवृत्तमस्ति। तदपि वेदमूलकमेव। उपनिषदाख्ये चतुर्थभागे वेदस्यात्म-विचारस्य प्राचुर्यात्। तदर्थमेवोपनिषद्भागस्य दृश्यते प्रयत्नः। उपनिषदां सहत्त्वं नात्र निर्देष्टुमावश्यकम्। सर्वविदितत्वात्। आत्मज्ञानमूलकञ्च परमपुरुषार्थभूतं मोक्षाख्यतत्त्वम्। मोक्षस्यपरमपुरुषार्थत्वे न केषामपि दर्शनविद्यापरिशुद्धान्तः करणानां विद्वद्वरेण्यानां तिरोहितम्। तदर्थमेव समेषां भगीरथ प्रयत्नः। नात्रास्तिकशब्दाभिधेय दर्शनानामेव, अपि तु नास्तिकपदाभिलप्यानां दर्शनानामपि तदर्थमेव प्रकृतिस्ति। साध्यभूतस्य मोक्षस्य स्वरूप विषये तत्साधनविषये व भवेन्नाम मतवैभिन्न्यम्। तत्प्राप्त्युद्देश्यतायां नास्ति काचिद्विचिकित्सा। न्यायदर्शने शरीरेन्द्रियाणां लक्षणादिकं सम्यक् प्रतिताद्य परीक्ष्य च स्वसिद्धान्तस्थिरीकरणं समवं-लोक्यते। एते विषयाअपि तत्र तत्र सन्दर्भानुसार सूक्ष्मरुपेण तत्रापि विचारिताः सन्त्येव ब्राह्मणारण्यकोपनिषद्ग्रन्थेषु। तत एवादाय वेदान्तिनः स्वस्वसम्प्रदायग्रन्थे सूक्ष्मत्वे वा प्रतिपादयन्तो दरीदृश्यन्ते। ईश्वरोपादान-कारणता वा निमित्तकारणता व भवतीति अणेनामदृष्टान्तेन सर्वमुपपादितं वर्त्तत एव। पञ्चम्यन्तपदेन हेतोरुपन्यासः क्रियते। तत्र साध्यपक्षादीनां भवति कल्पना। एवं स्वतन्त्ररुपेण विचारे क्रियमाणे नैते पदार्थाः वेदातिरिक्ता इत्युद्घोषयितुं प्रभवामो वयम्। एवमेव वैशेषिकदर्शनेऽपि

---

१. कालमाधवः—प्रथमप्रकरणम् २. ऋग्वेद - १०-१०

'अथातो[1] धर्मं व्याख्यास्यामः' '[2]यतोऽभ्युदयनिः श्रेयससिद्धिः सधर्मः' '[3]तद्वचनादाम्नायस्य प्रामाण्यम्' इत्यादीनि कणादोपज्ञानि सूत्राणि समुपलभ्यन्ते। तदनाद्यपौरुषेयवेदप्रतिपादिताधर्मादेव द्रव्यदीनां पदार्थानां प्रसव इतिस्वयमेव वक्ति सूत्रकारः। तथाहि—'धर्म[4]विलेषप्रसूतात् द्रव्य-गुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानन्निः श्रेयसमि'ति। परमपुरुषार्थं भूतं मोक्षाख्यं तत्त्वमेव निःश्रेयसपदवाच्छेदकता श्रयत्वं विभर्ति। एभिश्च सूत्रैरिदमवगम्यते यदेतेषां पदार्थानां प्रतिपादने वेदानामस्ति कश्चिदुपयोग इति। यथेश्वरः साक्षात्परम्परमा वा समेषां दार्शनिकानमुद्देश्य भूतस्तथैव वेदा अपितृतप्रत्पदार्थप्रतिपादनेऽक्षुण्क्षप्रमाण-भूता इति न शङ्कापङ्कलङ्कलेशोऽपि। पदार्थानां परस्परं साधर्म्यवैधर्म्य प्रतिपादनेन हानोपादेययोः भवति ज्ञानम् ततभूचान्तिमे ईश्वरे न कस्यापि साधर्म्यं वैधर्म्यं वा भवतीति प्रतिपादनवैलक्षण्येन निःश्रेयसप्राप्तिरिति दर्शनस्यास्य परमवैदिकत्वं सिद्धयत्येव। व्योमशिवाचार्याः व्योमवत्यां गुणग्रन्थे 'यावदात्मनिधर्माधर्मौतावदायुः शरीमिन्द्रियाणि विषयाश्चे'ति-वदन्ति। तदनन्तरञ्च 'क्षीयन्ते[5] चास्यकर्माणि' इत्युपनिषद्गिरमुद्गिरन्ति। अनेन च धर्माधर्मयोः धारकत्वमपि प्रसिद्धयति। तथा चोक्तम्—

[6]धारणाद्धर्म मित्याहुर्धर्मो धारयते प्रजाः।
यत्स्याद्धारणसंयुक्तं स धर्म इति निश्चयः।।

एवं पश्यामो वयं यत्सूत्ररुपेण वेदप्रतिपादितानां विषयणामेवात्र मुमुपवृहणं जातमिति। अतएव वेदा सर्वज्ञानदिधानभूता इति प्रवदन्ति तज्ज्ञाः।

तदनन्तरञ्च साङ्ख्ययोगकुलं प्रत्यवतिष्ठते। साङ्ख्यानाञ्च प्रधान-कारणतावाद- सुप्रसिद्ध एय। प्रधानकारणवादः प्रकृतस्वरूपञ्च यत्रतत्र वेदे समुपलभ्यत एव। प्रकृतस्वरूपं तत्कारणतावादश्च श्वेताश्वतरोपनिषदि स्पष्टमेव समवलोक्यते, यथा—

[7]अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानाः सरूपा।
अजोह्येको जुषमाणोऽ ॅ यं ते जहात्येनां भुक्तभोगामजोऽन्यः।।इति।।

---

१. वै. सू. १-१-१
२. वै. सू. १-१-३
३. ,, ,, १-१-३
४. ,, ,, १-१-४
५. मुण्डकोप० २-२-८
६. महा. भा. कर्णपर्व ६१-५८
७. श्वेताश्वतरोप० ४-५

अत्रैव च साङ्ख्योक्तं द्वैतवादमपि परिपुष्णाति, यथा—

[1]द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नयोऽभिचाकशीति ।।

एवमेव ऋग्वेदेऽप्यभिहितम्—

[2]दक्षस्य वादिते जन्मनि व्रते राजाना मित्रवरूणाविवाससि ।
अतूर्त्तपन्थाः पुरुरथो अर्यमा सप्त होता विषुरूपेषु जन्मसु ।।

हे अदिते ! पुरुषव्यवस्थानुकूले जन्मनि दीप्तियुक्तौ मित्रश्चवरुणश्चेति मित्रवरुणौ तयोः परिचर्यां करोषि । व्यवस्थितमार्गयुक्तो विविधमार्गभागिनोऽर्यमा भवति पुरुषः । विविधेषु जन्मसु सप्तसंख्याकहोतृयुक्तो भवति । सायणभाष्ये स्पष्टीकृतोऽयं मन्त्रः । मन्त्रस्य चानेकेऽर्थाः सम्पादिताः सन्ति । अनेन नित्यस्य पुरुषस्य सत्ता प्रमाणिता भवति । निरुक्तनिघण्टुग्रन्थे सर्वेषां पदानां व्युत्पत्तिप्रदर्शदपूर्वकमर्थाः समुपवर्णिताः विद्यन्ते । अदितिशब्दस्योपादानकारणभूतः प्रकृतिरूपार्थः । दक्षशब्दस्य च प्रज्ञानं वा चेतनं वाऽर्थः । अनेन पथा प्रकृतिपुरुषरूपयोः तत्त्वयोः साङ्ख्यसम्मतयोः भवति प्रतिपादनम् । पुनश्च—

'तम[3] आसीत् तमसा गूढमग्रेऽप्रकेतं सलिलं सर्वमा इदम्' इति । अत्रापि तमशब्देनाव्यक्तस्यैव भवति ग्रहणम् । तदेच च कारणभूतम् । तस्मादेव च भवति सृष्टिः । अतोऽनेन प्रधानकारणतावादस्य तथा सतः सज्जायत इति सत्कार्यवादसिद्धान्तस्य भवति स्थापनम् । अत्र सायणभाष्यमपि प्रमाणरुपेण समुपस्थापयितुं शक्यते । तथाहिअग्रे सृष्टेः प्राक् प्रलयदशायां भूतभौतिकं सर्वं जगत् तमसा गूढम् । यथा नैशन्तमः सर्वपदार्थजातमावृणोति, तद्वत् । आत्मतत्त्वस्यावरकत्वान्मायापरसंज्ञं भावरूपाज्ञानमात्रमत्र तम उच्यते । तेन तमसा निगूढं संवृतं कारणभूत तेन तेन आच्छादितं भवति । आच्छादकत्वात्तस्मात् तमसो नामरूपाभ्यां यदाविर्भवन तदेव जन्मेत्युच्यते । यतेन कारणावस्थायामतदेव कार्यमुत्पद्यते । इत्यसद्वादिनोऽसत्कार्यवादिनो येमन्यन्ते ते प्रत्याख्यायाः । असपदार्यवादस्य प्रत्याख्यानपूर्वकं सत्कार्यवादस्वसमर्पणमेव जायतेऽनेन । अत्रैव च प्रधानापरपर्यायमजशब्दमपि विनिर्दिशति यथा—

---

१. श्वेतरतरोप ४ ६ २. ऋग्वेदः-१०-६४-५ ३. ऋग्वेदः १०-१२९-३

**तमिद्[1] गर्भं प्रथमं दध्रे आपो यत्र देवाः समगच्छन्त विश्वे ।**
**अजस्य नाभावध्येकमर्पितं यस्मिन् विश्वानि भुवनानि तस्थुः ।।**

अनेनाजायरय्यर्यायस्य प्रधाननिष्ठां कारणतां वक्ति । एवमेव 'असङ्गो[2] ह्ययं पुरुषः' इत्यनेन पुरुषस्यासङ्गता गुणत्रयसम्पर्कशून्यता च भवति प्रतिपादिता । 'स यथा सैन्धव ······यतो यतस्त्वाददीत लवणमेवैवं वा अर इदं महद्भूत् मनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय' इत्यत्र साङ्ख्यसम्मतं महत्तत्वं प्रतिपादितम् । तथैव 'सदेव[3] सोम्येदमग्र आसीत्' 'सत्स्वेव[4] सोम्येदमग्र आसीत्' 'यथा[5] सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं भवति' इत्यादिभिर्वचनजातैः सृष्टेः प्रागपि कारणभूतस्य सत्ता प्रतीयते । अत्रैव च 'यदग्ने[6] रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वम्' इत्यादिनाप्रकृतेः गुणत्रयस्य स्वरूपप्रतिपादनं भवति । महानारायणोपनिषद्यपि '[7]अजामेकां लोहितशुक्लकृष्णाम्' इत्यनेन वचनेन तस्यैव प्रधानस्य स्वरूपमभिव्यनक्ति । '[8]तमेकनेमिं त्रिवृतम्' इत्यनेनापि गुणत्रयविशिष्टं प्रधानमेव सङ्केतयति । '[9]मनसस्तुपराबुद्धिर्बुद्धेरात्मा महान् परः । तथा 'महतः[10] परमव्यक्तमव्यक्तात्पुरुः परः । पुरुषान्न परं किञ्चित्सा काष्ठा स परा गतिः ।

**'[11]संयुक्तमेतत्क्षरमक्षरञ्च व्यक्ताव्यक्तं भरते विश्वमीशः ।**
**अनीशश्चात्मा बध्यते भोक्तृभावाज्ज्ञात्वा देवं मुच्यते सर्वपापैः' ।।**

'तत्कारणं[12] साङ्ख्ययोगाधिगम्यम्' 'ऋषिप्रसूतं कपिलं यस्तमग्रे' '[13]क्षरम्प्रधानम्' '[14]मायान्तु प्रकृतिं विद्यात्' 'देवा[15]त्मशक्तिं स्वगुणैर्निगूढाम्' इत्यादौ सर्वत्र साङ्ख्यतत्त्वं जेगीयते । अपि च मैत्रायणी उपनिषद्यपि—'[16]तमो वा इदकमेकमास, तत्पश्चात्तत्परेणेरितं विषमत्वं

---

१. ऋग्वेदः १०-८२-६
२. बृ. आ. उप ४.३०-१५
३. बृ. आ उप ६-२-१
४. " " " ६-२-२
५. छा. उप. ६-१-४
६. छा. उप. ७-४ ३
७. म. ना. उप. पृ० १४१
८. श्वे. उप. १-४
९. कठ. उप. ३-१०
१०. कठ. उप. ३-११
११. श्वे. उप. १-४
१२. श्वे. उप. ५-२
१३. " " १--१०
१४. " " ४-७
१५. " " १-३
१६. मैत्रा. उप. १-३

प्रयात्येतद्वै रजसो रूपं तद्रजः खल्वीरितं विषत्वं प्रयात्येतद्वै तमसो रूपं तत्तमः खल्वीरितं तमसः सम्प्रस्त्रवत्येतद्वै तत्सत्त्वमेवेरितं तत्सत्त्वात् सम्प्रास्तवत् सोंऽशोऽयं यश्चेतनमात्रः प्रतिपुरुषं क्षेत्रज्ञ सङ्कल्पाध्यवसायाभिमानलिङ्गः प्रजापतिः' इत्यादिप्रसङ्गेन साङ्ख्यशास्त्रीयानां तत्त्वानां सलक्षणं विवेचनं वर्त्तते। एतयुक्तं साङ्ख्यकारिकायामपि—'[1]अध्यवसायो बुद्धिः' '[2]अभिमानोऽहङ्कारः' 'उभ[3]यात्मककत्र मनः सङ्कल्पामिन्द्रियञ्च साधर्म्यात्' इत्यादिभिः कारिकाभिः। '[4]पञ्चतन्मात्राणि भूतशब्देनोच्यन्ते,' पञ्चमहाभूतानि भूतशब्देनोच्यन्ते'। इत्यनेन साङ्ख्यसम्मततन्मात्रादीनां प्रतिपादनमवलोक्यते। प्रश्नोपनिषद्यपि '[5]पृथिवी चापश्चापोमात्रा' इत्यादि दृश्यते। एवमेव साङ्ख्यकारिकायामपि—'[6]तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः' इत्युक्तं तन्मात्राविषयमधिकृत्य। अनेन प्रकारेण योगस्यापि श्रुतिमूलकत्वं वोध्यम्। तत्त्वानि तु तान्येव सन्ति। ईश्वर एवाधिक्येन राजते तत्र। या योगिकी प्रक्रियात्वधिका दृश्यते। साङ्ख्यमपि स्त्रीकुर्वन्ति, केचिच्चनिरीश्वरम्। उपयत्र युक्तिप्रमाणाभ्यां सद्भावान्नैव निश्चप्रचं किञ्चिद्वक्तुं शक्यते। साङ्ख्ययोगयोरैक्यमेव। तत्र विषयेवक्ति गीता—

[7]साङ्ख्ययोगौ पृथक् बालाः प्रवदन्ति न पण्डिताः। इति

एवमेव—

[8]एकं साङ्ख्यञ्च योगञ्च यः पश्यति स पश्यति ॥ इति

तथैव योगविषये कठोपनिषद—'अ[9]ध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' इति। तथा च—[10]विद्यामेतां योगविधिञ्च कृत्स्नम्' इति। अन्यत्र चोपनिषदि योगविद्यावाहुल्येन वर्त्तते प्रतिपादिता। तस्मात्साङ्ख्ययोगयोः श्रुतिमूलकता निर्विवाद एव सर्वेषां प्रभवस्थानं स एवेति डिण्डिमघोषः।

---

१. सां. का.—२३
२. सां. का.—२४
३. " " —२७
४. मैत्रा. उप. ३-२
५. प्रश्नोप. ४-८
६. सां. का.—३८
७. गीता—५-४
८. गीता—५-५
९. कठोप. १-२-१२
१०. कठोप २-६-१२

किं वहुना, ये खलु नास्तिकशिरोमणयस्तेषामपि सिद्धान्ताः वेदे पूर्वपक्षरुपेण विलसन्ति तत्तद्विषयविचारप्रसङ्गे । ते किल पूर्वपक्षमेव सिद्धान्तभूतं पक्षं स्वीकृत्य स्वाभीष्टसिद्धयर्थं जगद्वञ्चनार्थञ्च स्वकल्पनानुसारि व्याख्यानमकुर्वन् । तेषामनुयायिनश्च दुराग्रहग्रहिलत्वात् लवणमरीचिकादिकं संयोज्य स्वादुङ्कारं कृत्वा भुञ्जते । आग्रहवशाबुद्धौ मालिन्यमायाति । तत्र सत्पदार्थानां न जायतेऽवभासः, मलिनदर्पणवत् । अतएव ते भ्रान्तास्तत्रैवेतस्ततः परिधावन्तः दरीदृश्यन्ते । यथा च छन्दोग्ये—'[1]तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयम् । तस्मादसतः सज्जायत' इति । तथा '[2]नैवेह किञ्चनाग्र आसीत्' इति च । अनेन चासत एव वस्तुत सतो भवति समुत्पत्तिः । पक्षमिममङ्गीकृत्य बौद्धाः समुद्घोषितवन्तः, यत् असत एव सज्जायत इति । सत्त्वमपि प्रथमक्षणध्वंसप्रतियोगित्वम् स्वस्मिन् दर्शनेऽस्यैव सिद्धान्तस्य परिपोषणं स्वबाल इव युक्तिप्रमाणाभ्यां कुर्वते । एकेऽर्थात् पूर्वपक्षिण इत्यर्थः । नायमर्थस्तेषां बुद्धौ समाविशति । तत्रैव सिद्धान्तपक्षोऽपि वर्त्तते—'सदेव[3] सोम्येदमग्रआसीदेक मेवाद्वितीयम्' इति । सिद्धान्तोऽयमुपनिषद्यनेकत्र समायाति । समेषां वाक्यानांमन्त्रोपस्थापनं नावथकमिति कृत्वा नोपस्थापितम् । 'सत एव सज्जायते' इत्येव सिद्धान्तः वेदार्थपरिशीलनविशुद्धान्तःकरणानां विदुषाम् । अन्यथा 'यतो[4] व इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व, तद् ब्रह्म' इति श्रुतिवाक्येन प्रतिपादितं ब्रह्मलक्षणमपि न संगंस्यते । तस्यापि ब्रह्मणोऽसद्रूपापत्तेः । न केनापि ब्रह्मणोऽसद्रूपत्वं स्वीकृतम् । सद्रुपाद्ब्रह्मण उत्पन्नञ्च जगत् विवर्त्तरूपं वा भवेत् परिणामरूप वेत्यन्यदेतत् । ब्रह्मण सद्रूपत्वन्तु वर्त्तते एव नात्रैते विषयाः साकल्येन विचारणीयाः सम्पूर्णेऽद्वैतविशिष्टाद्वैतादिविविधवेदान्तशास्त्रे विचारितत्वात् तत एवावगन्तव्यम् । अस्तु, प्रकृतमनुसरामः ।

साख्ययोगदर्शनयोर्वेदमूलकत्वे निरुपिते पारिशेष्यात् पूर्वोत्तरमीमांसादर्शनकुलमवशिष्यते । तत्रैव किञ्चिद्विचारयामः अनयोर्दर्शनयोर्वेदमूलकत्वप्रामाण्याय न यत्नोविधेयः । न वा तदर्थं वेदवाक्यान्येषणम् ।

---

१. छान्दोग्य. ७-२-१ २. बृ. आ. उप. २-१
३. " ७-२-१ ४. तै. उप.

उभयोर्वेदवाक्यविचारपरत्वात्। उभयत्राधिकरणरूपेण क्रियते विचारः। अधिकरणञ्च पञ्चाङ्गं भवतीति सर्वत्र सुप्रसिद्धमेव । वेदवाक्यान्युदाहृत्य तत्र संशयमुपस्थाप्य प्रथमं पक्षं समुपस्थापयन्ति। युक्तिप्रमाणाभ्याञ्च सम्यक्साधयन्ति । ततश्चतासां युक्तीनां तेषाञ्च प्रमाणानां सिद्धान्तसंसाधनपरेभ्यः युक्तिप्रमाणेभ्यः खण्डनं विधाय सिद्धान्तपक्षं सुस्थिरीकुर्वन्ति। ततश्चान्तिमो निर्णयो भवतीति। उभयत्र दर्शने इयमेव सरणिः स्वीकृता वर्त्तते । अतएव तयोर्वेदमूलकत्वं प्रमाणयितुं नोचितं प्रतिभाति, न वावश्यमिति सर्वं सुविदितमेव सर्वेषां दर्शनशास्त्रपरिशीलनतत्पराणां सङ्ख्यावताम्। पूर्वमीमांसायां वेदस्य पूर्वभागेऽर्थात्संहिताभागपठितानि वाक्यानि सन्ति विचारितानि। अतएव च पूर्वमीमांसाशब्देन व्यपदिश्यते। केवलेन मीमांसाशब्देनापि भवति व्यपदिदेशः। पूर्वभागे वेदे कर्मकाण्डसाधकानां मन्त्राणां विद्यतेपाठः। तद्विचाराय प्रवृत्तत्वात् कर्मकाण्डशब्देनापि कुर्वन्ति व्यवहारः। उत्तरमीमांसायाञ्चोत्तरभागपरिपठितानि वाक्यानि विचार्यन्ते। तस्मादेव कारणादुत्तरमीमासाशब्देन भवति व्यवहारः। उभयोरत्यन्तं सामीप्यमपि वर्त्तते। अतएवोभयोरैकशास्त्र्यमपि समर्थयन्ति आचार्याः। एकस्मिन्नेव वस्तुनि पूर्वोत्तरभावस्य सम्भवात्। यतो हि 'यस्मादुत्तरमस्ति, पूर्वश्च नास्ति, स एव पूर्वशब्देन कथ्यते । यस्मात्पूर्वमस्ति, पश्चाच्च नास्ति, स एवोत्तरशब्देनोच्यते। एतच्चैकशास्त्रत्वपक्ष एव संघटते। वेदविभागोऽप्येवमेव वर्त्तते। अतएव पूर्वोत्तरशब्देन व्यवहारः प्राचां विदुषाम्। उभयोः शास्त्रयोः परस्परमतीव सामीप्यसम्बन्धो विचारसरणिदृष्ट्यापि दृश्यते, तथैव निर्मातुः सम्बन्धादपि। पूर्वमीमांसाया सूत्रकर्त्ता भगवान् जैमिनिः। उत्तरमीमांसायाश्च सूत्रकृत् भगवान् बादरायणः। स एव च व्यासनाम्ना प्रसिद्धः। उभयोः गुरुशिष्यभावोऽपि स्मर्यते। तथा च [1]कूर्मपुराणे—

अथ शिष्यान् स जग्राह चतुरो वेदपारगान्।
जैमिनिं च सुमन्तुं च वैशम्पायनमेव ॥

× × × ×

जैमिनिं सामवेदस्य सुमन्तुमृषिसत्तमम्।

वेदानां विभागकरणादेव वेदव्यासशब्देन जातो व्यवहारः। तदुक्त[2]मपि—

---

१. कूर्मपुराणम् — १-५२ २. महाभागतम् आदिपर्व

वेदान् विव्यास यस्मात्स वेदव्यास इतीरितः । अस्तु ।

एवमुभयोर्गुरुशिष्यभावः सिद्धयति । तस्मादेव समकालिकत्वमपि । अतएव चोभयोः सूत्रग्रन्थयोरुभयोर्विचाराः समुपवर्णिताः सन्ति । व्यासोऽपि स्वशिष्यं जैमिनिं स्मरति । जैमिनिरपि स्वकीयं गुरुं व्यासं स्मरति । तथाहि— औत्पत्ति[1]कस्तु शब्दस्यार्थेन सहसम्बन्धः ......बदरायणस्यानपेक्षत्वात् । [2]अन्तेतु बादरायणस्तेषां प्रधानशब्दत्वात् । [3]जातन्तु बादरायणोऽविशेषात् । विधिन्तु[4] बादरायणः । [5]विधिवत्प्रकराणविभागे प्रयोगं बादरायणः ।

एवमेव बादरायणोऽपि स्वप्रियशिष्यं जैमिनिं स्मरति उत्तरमीमांसासूत्रे । तथाहि—

साक्षाद[6]विरोधं जैमिनिः । सम्पत्ते[7]रिति जैमिनिस्तथाहिदर्शयति । [8]मध्वादिष्वसम्भवादनधिकारं जैमिनिः । धर्मं[9] जैमिनिरत एव । शेषत्वात्पुरुषार्थवादो यथास्येष्विति जैमिनिः । परामर्शं जैमिनिरचोदना चापवदति हि । तद्भूतस्य तु नातद्भावा जैमिनेरपि नियमारूपा भावेभ्यः । परं जैमिनिमुख्यत्वात् । ब्राह्मेण जैमिनिरूपन्यासादिभिः । भावं जैमिनिर्विल्पमननात् । पूर्वोत्तरमीममांसासूत्रयोः परस्परं दर्शितः सम्बन्धः । यद्यपि पूर्वमीमांसादर्शनस्य सूत्रकारो भगवान् जैमिनिरिति तथापि जैमिनेः प्राक् मीमांसादर्शनं नासोदिति वक्तुं न शक्यते । यनो हि स्वयमेव स्वपूर्वभाविनोमीमांसासूत्रकारान् स्मरति स्वपज्ञे मीमांसा सूत्रे । तत्र च प्रकारत्रयं वर्त्तते । कुत्रचिन्मतभेदप्रदर्शनाय तेषां नामान्युट्टङ्कितानि सन्ति । कुत्रचिच्च तैः सहसम्मतिं प्रदर्शनाय । द्विर्बद्धं सुबद्धमिति न्यायमनुसृत्य स्वसिद्धान्तदाढर्याय तेषां नाम गृह्णाति । यत्किमपि स्यादत्र, जैमिनितः पूर्वमपरे मीमांसकाः समभवन्ति निश्चप्रथम् । जैमिनिव्यवहारात् । तेषां नामानि निर्दिश्यन्तेऽधस्तात् । एवञ्च तत्रत्यं शाबरभाष्यमपि संयोजितम्, येन मतैक्यं मतभेदो वा सुस्पष्टीभविष्यति । तत्तन्मीमांसकानां नामानि मतानि च ज्ञातुमपि स्यात्सौकर्यमिति समीहा । तथाहि—

---

१. जै. सू. १-१-५
२. जै. सू. ५. २. १९
३. " " ४-१-८
४. " " १०. ८-४४
५. " " ११-१-६४
६. वे. सू. १-२-२८
७. " " १-२-३१
८. " " १-३-३१
९. " " ३-२०-४०

'औत्पत्ति[1]कस्तु शब्दस्यार्थेन सम्बन्धः...... बादरायणस्यातपेक्षत्वात्' इति । अत्र बादरायणग्रहणं पूजार्थम् । अर्थात् यद् बादरायणस्यमतं शब्दार्थसम्बन्धविषये तदेव मतमस्कमिति सूचयति । यद्यपि समकालिकतानयोः पूर्वमेवोक्तम्, तथाप्यन्येषां मतमिति ज्ञापनायात्र मया योजितम् । '[2]द्रव्यगुणसंस्कारेषुबादरिः' इति । बादरिराचार्योऽत्र द्रव्यगुणसंस्कारेष्वेव शेषशब्द इति मेने, यागफलपुरुषेषु । '[3]कर्माण्यपि जैमिनिः फलार्थत्वात्' । जैमिनिस्तु खल्वाचार्यः कर्माण्यपि शेषभूतानि मन्यतेस्म । न बादरिवावधारणमनुमेने । तस्मादनवधारणा द्रव्यगुणसंस्काराः शेषभूताः । यागोऽपि शेषभूतः फलं प्रति । सूत्रेऽत्र जैमिनिपददानेनायं जैमिनिः भिन्न एवेति मन्यते कश्चित् । केचिच्च जैमिनिस्तु एक एवेति । परन्तु आचार्याणां परत्वेनाख्यानमेका शैली । अन्यशास्त्रेऽप्येवं दृश्यते व्यवहारः । द्वितीयमत एवास्माकमाग्रहः । '[4]सर्वेषामैकमन्त्र्यमैतिशायनस्य भक्तिपानत्वात् सवमाधिकारो हि' । अनैन्द्राणाममन्त्रकं भक्षणमिति तन्न । सर्वेषां समन्त्रकं भक्षणम् ।.........भक्त्यापीत पीतइत्युच्यते एवमैतिशायन आचार्यो मन्यतेस्स । अस्माकमप्येतदेव मतम् । आचार्यग्रहणं तस्मादागतमितितस्य संकीर्त्यर्थम् ।

'स्या[5]द्वाऽस्य संयोगवत्फलेन सम्बन्धस्तस्मात्कर्मैतिशायनः' इति सुवर्णधारणादीनां पुरुषधर्मत्वं भवति, तस्मात् दुर्वर्णोऽस्य भ्रातृव्यो भवति । अर्थात् सुवर्णधारणं न कर्माङ्गमपितु पुरुषधर्म एवेति भावः । '[6]क्रतौ फलार्थत्वादङ्गत्वं कार्ष्णाजिनिः' इति । प्रतितिष्ठन्ति ह वा य एता रात्रीरूपयन्ति' इति वाक्यम् । फलार्थवादा उतफलविधय इति सन्देहः । किं प्राप्तम् । फलार्थवादा इति कार्ष्णाजिनिर्मेने । '[7]फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात्' इति । आत्रेयः पुनराचार्य एवंजातीयकेभ्यः फलमस्तीति मेने । न फलार्थवादः । जैमिनिः पूर्वमतस्य पूर्वमतस्यपरामशः । स्तावकत्वमेवैतेषां वाक्यानाम् । अयमेवानयोर्भेदः । '[8]अङ्गेषु स्तुतिः परार्थत्वात्' इति सूत्रेण फलार्थवादस्य समर्थनं करोति । 'द्रव्य[9]संस्कारकर्मसुपरार्थत्वात्फलश्रुतिरर्थवादः स्यात् । अत्र द्रव्यादीनां परार्थत्वादर्थवादत्वकल्पनं

---

१. जै सू. १-१-५ २. जै. सू. ३-१-३
३. " " ३-१-४ ४. " " ३-२-४४
५. " " ३-४-२७ ६. " " ४-३-१७
७. " " ४-३-१८ ८. " " ४-३-१६
९. " " ४-३-१

भवति । '[1]मुख्यानन्तर्यं मात्रेयस्तेन तुल्यश्रुतित्वादशब्दत्वात्प्रकृतानां व्यवायः स्यात्'। अत्रेयो मन्यते स्म। मुख्यानन्तर्यं वैकृतस्य पश्चात्तु प्रकृतं प्रयुज्येत। प्रधानानन्तरं वैकृतस्य पाठः प्रत्यक्षः। तस्मात्पूर्वमुपहोमास्ततो नारिष्ठहोमा इति। '[2]अन्ते तु बादरायणस्तेषां प्रधानशब्दत्वात्'। बादरायणस्त्वाचार्यो मन्यतेस्म । अन्ते वैकृतानां प्रयोग इति। कुतः। प्रधानशब्दगृहीतत्वात्प्रकृतानामङ्गानाम्। तस्माच्च प्रधानशब्दात्परमेतत्। तस्मात्प्रत्यक्षःदेव क्रमान्नारिष्ठहोमेभ्यः पराञ्च उपहोमा इति। '[3]लिङ्गविशेषनिर्देषात्पुंयुक्तमैतिशायनः'। दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति विषयः। सन्देहः—स्वर्गकामं पुमांसमधिकृत्य 'यजेत' इति शब्द उच्चरितः अथवाऽनियमः, स्त्रियं पुमासंवेति। किं प्राप्तम्। पुंल्लिङ्गमधिकृतं मेने ऐतिशायनः। कुतः। लिङ्गविशेषनिर्देशात्। अनेन पूर्वपक्षोत्थापनम्। अत्र सिद्धान्तस्थापनाय सूत्रम्—[4]जातिन्तु बादरायणोऽविशेषात्तस्या स्त्रिया अपि प्रतीयेत, 'जात्यर्थस्याविशिष्टत्वात्' नैतदस्ति पुंस एवाधिकार इति। जातिन्तु भगवान् बादरायणोऽधिकृतां मन्यते स्म ।.........स्वर्गकामशब्देनोभावपि स्त्रीपुंसावधिक्रियते । अतो न विवक्षितं पुंल्लिगमिति। कुतः ? अविशेषात्। '[5]चातुर्वर्ण्यमविशेषात्' इत्यनेन पूर्वपक्षं कृत्वा '[6]निर्देशाद्वात्रयाणां स्यादग्न्याधेये ह्यसम्बन्धः क्रतुषु ब्राह्मणश्रुतिरित्यात्रेय' इति। त्रयाणामधिकारः स्यात्। कुतः। अग्न्याधेये त्रयाणां निर्देशो भवति। 'वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः' इति।......... तस्माननधिकृतोऽग्निहोत्रादिषु शूद्र इत्यात्रेयो मुनिर्मन्यते स्म । '[7]निमित्तार्थेन बादरिस्तस्मात्सर्वाधिकारं स्यात्' इति। सोऽस्ति प्रतिषेधवचने शूद्रान्न व्यवर्त्तेत।.. ......तस्माद् बादरिः सर्वाधिकारं शास्त्रं तन्यते स्मेति गम्यते। 'अपि[8]वाऽन्यार्थदर्शवाद् यथाश्रुतिः प्रतीयेत'। यथाश्रुत्येव प्रतीयेत। ब्राह्मणादयो ह्यधाने श्रूयन्ते। तेन ब्राह्मणकर्त्तृकमाधानमित्यादि.......तस्मान्न शूद्रो जुहुयात् यजेत वा। '[9]कर्मभेद' तु जैमिनिः प्रयोगवचनैकत्वात्सर्वेषामुपदेशः स्यात्' इति। यदुक्तं नास्ति भेदः,

---

१. जै. सू. ५-२-१८
२. जै सू. ५-२-११
३. " " ६-१-६
४. " " ६-१-८
५. " " ६-१-२५
६. " " ६-१-२६
७. " " ६-१-२७
८. " " ६-१-२८
९. " " ६-३-४

इमान्यङ्गानि इमानि प्रधानानीति। प्रयोगवचनैकत्वादिति जैमिनिशह स्म। '[1]अनिरुप्तेऽभ्युदिते प्राकृतिभ्यो निर्वपेदित्याश्मरथ्यस्तण्डुलभूतेष्ववपनात् इति। अनिरुप्तेऽभ्युदिते प्राकृत्तोभ्यो निर्वपेदित्याश्मरथ्य आचार्यो मन्यते स्म। अनेन सूत्रेण पूर्वपक्षमुपस्थापितम्। '[2]यूर्ध्वंभागभ्यस्त्वालेखनस्तत्कारित्वाद्देवतापनमवस्य' इति। व्यूर्ध्वं या भजन्ते कर्म, ताभ्यो निर्वयेदित्यालेखन आचार्यो मन्यते स्म। कुतः। तत्कारित्वाद्देवतापनयस्य। 'स[3] कुलकल्पः स्यादिति कार्ष्णाजिनिरेकस्मिन्नसम्भवात' इति। स मनुष्याधिकारपक्षे कुलकल्पो भविष्यतीत्येवं कार्ष्णाजिनिराचार्यो मन्यतेस्म। कुतः। एकस्मिन्नसम्भवात्। अत्रैव '[4]अपि वा कृत्स्नसंयोगादित्यादिना कुलकल्पपक्षस्य खण्डनं विधीयते। '[5]विप्रतिषेधात्तु गुण्यन्यतरः स्यादिति लावुकायनः' इति लावुकायनमतम्। तस्माद्विरोधादन्यतरद्वचनं गौणमिति लावुकायन आचार्यो मन्यतेस्म। आचार्यग्रहणं पूजार्थम्। नात्मीयमतप्रतिषेधार्थम्। '[6]कालाभ्यासेऽपि वादरिः कर्मभेदात्' इति। षडहाभवन्ति, चत्वारो भवन्ति, पञ्चहाभवन्ति। कालाभ्यासेऽपि वादरिः। षडहकालाभ्यासेऽप्यस्मिन् श्रूयमाणे वादरिराचार्यो द्वादशाहिकनामह्नां प्रवृत्ति मन्यते स्म। कुतः। कर्मभेदात्। '[7]तदावृत्तिन्तु जैमिनिरहनामप्रत्यक्षसंख्यत्वात्' इति। तदावृत्ति पाष्ठिकष्यैव प्रज्ञास्य षडहस्यावृत्ति जैमिनिराचार्यो मेने। कुतः। अह्नामप्रत्यक्षसंख्यत्वात्। तस्मात्षडहाभ्यासः। '[8]वर्णे तु बादरिर्यथाद्रव्यं द्रव्यव्यतिरेकात्' इति। उत्तरावर्णवशेन कर्त्तव्यं बादरिर्मन्यतेस्म। न योनिभागवशेन। कुतः। योऽसौ प्रकृता वार्ह भावः कृतो नासावागमः। उत्तरासु आर्हभावः कर्त्तव्य इति पूर्वपक्षः। '[9]अधिकञ्च विवर्णञ्च जैमिनिः स्तोभशब्दत्वात्' इति। अनेन च स्तोभस्य लक्षणं प्रतिपादतम्। '[10]विधिस्तु बादरायणः' इति। आग्नेयेऽनुवादः ऐन्द्राग्ने विधिरिति। उभयोः कालाविधिः स्यात् कुतः। वादरायण आचार्यो मन्यते स्म। प्रागपि सोमयागान्सान्नाय्यविधिरिति। तस्मात् कालार्थः संयोग इति। '[11]तथाचान्यार्थदर्शनं कामुकायनः' इति। तथा चान्यार्थदर्शनं भवति, यथान्याय उपदिष्ट

---

१. जै. सू. ६-५-१४ २. जै. सू. ६-७-१७
३. ,, ,, ६-७-३५ ४. ,, ,, ६-७-३६
५. ,, ,, ६-७-३७ ६. ,, ,, ८-३-६
७. ,, ,, ८-३-७ ८. ,, ,, ९-२-३३
९. ,, ,, ९-२-३७ १०. ,, ,, १०-८-४४
११. ,, ,, ११-१-५८

इति कामुकायन आचार्यो मन्यतेस्म । किं पुनस्तत् । चतुर्दश—पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावस्यायामिति । यद्यावृत्तिः स्यान्न त्रयोदश चतुर्दश वा व्यवतिष्ठेन् । '[1]सकृदिज्यां कामुकायनः परिमाणविरोधात्' इति । सकृदिज्यां कामुकायन आचार्यो मेने । इत्यादि । 'विधि[2]वत्प्रकरणाविभागे प्रयोगं बादरायणः' इति । तन्त्रेण प्रयोगं बादरायणो मन्यतेस्म । कुतः । प्रकरणाविभागात् । '[3]जैमिनेः परतन्त्रापत्तेः स्वतन्त्रप्रतिषेधः स्यात्' इति । जैमिनेराचार्यस्य मतं कर्त्तव्यावाज्य भागाविति ।

अनेन च सन्दर्भेणायं स्पष्टोभवति यद् जैमिनिराचार्पेक्षया प्राक्तनकालेप्यनेके मीमांसकाः समभूवन् । तथाप्येवं वक्तुं न शक्यते, मीमांसाया प्रादुर्भाव एव तत एव कालात् समभूत् । यावद् वेदाआसन्, तत्तर्थविचारोऽप्यावश्यक एव । परस्परविरुद्धार्थप्रतिपादकानां वेदवाक्यानां विचाराय काचित् सरणिः आसोत्स्वीकृता । या सरणि रासीत् सैव मीमांसेति । अतएव वेदेषु मीमांसाशब्दस्यानेकत्र प्रयोगाः मिलन्ति । कुत्रचित् मिसासायां कुतचिच्च विचारे । अतः पूर्वपरिगणिताचार्यापेक्षयापि प्राचीना वर्त्तते । तत्र प्रसङ्चे कानिचिद्वाक्यानि समुदाह्रियन्तेऽधस्तात् । तथाहि—[4]भ्रातृव्येणावर्त्तते नैनं पात्रे पाने न ततपे मीमांसन्ते । [5]उत्सृज्यांनु नोत्सृज्यानुमिति मीमांसन्ते ब्रह्मवादिनः । [6]तद् राजन्यस्याग्निहोत्रं होतव्यं राजन्यस्याग्निहोत्रानुन्न होतव्यमिति मीमांसन्ते । [7]होतव्यं हार्हपत्यान्न होतव्यमिति मीमांसन्ते । [8]अपरेण दग्धव्याः पूर्वेणानु इति मीमांसन्ते । [9]ऋतुमेव नात्यनै, होतव्यानुन्न होतव्यानुमिमिति मीमांसन्ते । [1]अस्यामेव प्रतितिष्ठत्यभिधायांनुनाभिधायांनु इति मीमांसन्ते । [11]संस्थाप्यान्त संस्थाप्यानुमिति मीमांसन्ते । [12]अनुषक्तोहि वा एष पाप्मनानुथैतन्मीमांसन्ते । [13]कतिपात्राणीति पृच्छेद् द्वादशयात्राण्युपांशुसवनस्त्रयोदशः यत्तन्मीमांसन्ते । [14]पात्रानु पात्रानु मिति मीमांसन्ते । [15]ब्राह्मणं पात्रे न

---

१. जै. सू. ११-१-६३ २. जै. सू. ११-१-६२
३. ,, ,, १२·१-७ ४. तै. सं. ६-२-६-४
५. तै. सं. ५-१-७-१ ६. मै. सं. १-६-१०
७. ,, ,, १-८-५ ८. ,, ,, १-८-६
९. ,, ,, १-८-७ १०. ,, ,, १-१०-२१
११. ,, ,, ३-७-९ १२. ,, ,, ३-८-४
१३. ,, ,, ३-१०-५ १४. ,, ,, ३=१०-५
१५. ता. म. ब्रा. ६-५.१

मीमांसन्ते। [1]यस्तल्पे वोदके वा विवाहे वा मीमांसेरन्। [2]मीमासते। ब्रह्मवादिनोह्रस्वा वा दीर्घा वा प्लुता वा। [3]मीमांसाञ्चक्रुः। [4]का मीमांसा सुत्यायाम्। [5]अथातः परिधानस्यैव मीमांसा। [6]अथातो गो आयुषो-र्मीमांसा। [7]अथातः ऋतुप्रैषाणामेव मीमांसा। [8]यस्यैव विदुषस्ता अन्वाहुः सो एषा मीमांसा। [9]सो एषा मीमांसैत्वेतरन्त्वेव क्रियते। [10]आग्रयणं गृहीत्वा सो एषा मोमांसैव। [11]यदुक्थ्यः सो एषा मीमांसैव। [12]अथाश्चिति-पुरोषाणामेव मीमांसा। [13]देवत्रादर्शपूर्णमासयोर्मीमांसा। [14]यदाज्यं तत्रो भयोर्मीमांसा। [15]पुरोडाशस्यै वर्हिषदो मीमांसा। [16]सैषा मोमांसाग्नि-होत्र एव। [17]सैषा आनकस्यमीमांसा भवति। [18]सैषा आनन्दस्य मीमांसा-भवति [19]प्राचीनशाल औपमन्यवः मीमांसश्चक्रुः। [20]अथातो व्रतमीमांसा। [21]अथातो होत्राणामेव मीमांसा। एवमेव काठक[22]संहितायान्त्वनेकत्र दृश्यते मीमांसाशब्दस्य प्रयोगः। सूत्रग्रन्थेष्त्रपि शब्दस्यास्य प्रयोगाः बहवः सन्ति। यथा—अस्त[23]मितेऽऽदित्ये उदकं गृह्णीयात्। [24]मीमांसित्वो भयं देवः सममन्नमकल्पनयन्। [25]तत्र प्रायश्चित्तं कुर्यान्न कुर्यादिति मीमांसन्ते। अनेवेदमायाति यत्नमीमांसायाः प्रचारः प्रसारश्चातीवप्रत्नकालादेवासीत्। यदा वेदानां वैदिकानाञ्चासीन्महान् प्रभावस्तदा ऋषयः स्वस्वविचारान् प्रकयन्तिस्म। सर्वे च प्रत्यक्षीकृतवेदा साक्षात्कृधर्माणः आसन्। धर्मस्य तत्त्वं ते जानन्तिस्य। धर्माधर्मनिश्चये तेषां न काचित् विचिकित्सा।

---

१. तां. म. ब्रा. ६-५-१ २३-४-३
२. नृसिंह पू. त. उ. पृ. ४१
३. छां. उः—५.११.१
४. शां. ब्रा. अ. ३
५. शां. ब्रा. अ. १८-४
६. ,, ,, ,, २६-२
७. ,, ,, ,, २८-४
८. शत. ब्र. १-३-५-१७
९. शत. ब्रा. ४-१-१-१६
१०. ,, ,, ४.२.३.७
११. ,, ,, ४.५.४.७
१२. ,, ,, १०.२.९.५
१३. ,, ,, ११-२-४.४
१४. तै. ब्रा. ३.३.४६
१५. तै. ब्र. ३.३.८.५
१६. ,, ,, ३.१०.९
१७. तै. आ. ८-१
१८. तै. उ. २-८
१९. छां उप. ५-११-१
२०. बृ. उप. १-५-२१
२१. शां. ब्रा. १८-२४-३४
२२. का. सं. ४८.३, ८-१२, १९-८, २३-९ २५-३, २७-५, २९-२, ३१-१, ३३-७, १४, ३७-१ इत्यादि।
२३. बो. ध. सू. १-६-११
२४. ,, ,, ,, १-१०-५
२५. वसिष्ठ ध. सू. २२-२

परन्तु यदा वेदानां पठन-पाटन-परम्परा शिथिला जाता। तस्याश्च परम्परायाः ह्रासकालः समागतस्तदा त एव निर्णायान् न्यायान् सूत्ररूपेण जुजुम्फ, अस्माकं सन्ततयोऽनेनैव पथा धर्मनिर्णयं करिष्यन्तीति समीहया। तदेवास्य सूत्रकाल इति वदन्ति विद्वांसः। यद्यपि मीमांसा सूत्रे समुपन्यस्ता अनेके चार्याः दृश्यन्ते, ते सूत्रकाराः वा केवलं विचारका वा सन्तीति निश्चयेन न किमपि वक्तुं शय्यते। परन्तु सम्प्रति जैमिनिकृतानि सूत्राण्येव समुपलब्धानि सन्ति। सम्प्रत्यनुपलम्भात्तेषामपि सूत्राण्यासन्न वेति निश्चप्रचं किमपि वक्तुं न प्रभवामोवयम्। आधुनिकेऽनेहसि तु जैमिनिकृता मीमांसेति प्रसिद्धिः। यद्यपि काशकृत्स्नीया मीमांसापि श्रूयते, यत्र तत्रोल्लिखितापि वर्त्तते तथाप्यऽनुपलब्धत्वात् केवलमनुमानप्रमाणविषयगोचरत्तामावहति। सूत्राणि च सूचनारूपाणि भवन्ति। अत्रेदमपि कथयितुं शय्यते यत् प्राक्काले विस्तृतरूपेण ये विषयाः ज्ञाताः आसन्, ते केनापिकारणेन विस्मृता इव जाताः। तेषां विषयाणां संक्षिप्तरूपेण संरक्षणाय पुनर्ज्ञानाय च सूत्राण्यावश्यकानि। अतः सूत्राणि विषयस्मारकाणीत्यपि कथनं नोचितम्। उक्तमपि कुत्रचित् (सूचनात्सूत्रमुच्यते)' इति। भामतीकारेण स्वोपक्षायां भामत्यामुक्तम्—

[1]लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च।<br>
सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः॥ इति

तत्रैव चैवमपि वदन्ति—

[2]अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।<br>
सूत्रस्य लक्षणञ्चैतत्सहेतु अनुमापकम्॥ इति

[3]अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः। भवतु नाम, गूढार्थास्तु भवन्तीति ज्ञायते। न सर्वेषां ज्ञानसौक तत्र भवतीति कृत्वा कारुणिक-आचार्यस्तत्र वृत्तिग्रन्थनिर्माणं कृतवान्। वृत्तिश्च '[4]सूत्राणां सकलसार-विवरणं वृत्तिति रीत्या सूत्रार्थ विवरणं तत्र जायते। तथा च सूत्रेषु

---

१. वागुराण१—५६-१४२<br>
भामती – पृ० ४७

२. भामती—पृ० ४७

३. विष्णुधर्मोत्तर पुराण

४. का. मी.—अ० २

निगूढार्थाः झटिति प्रतीयन्ते। मीमांसाया प्राचीनतमो वृत्तिकारो भगवान् 'उपवर्षः' इति ज्ञायते। यतो हि मीमांसाभाष्यकारेण शबरस्वामिनोक्तम्—'अथ गौरित्यत्र कः शब्दः। गकारौकारविसर्जनीय[1] इति' भगवान् 'उपवर्षः'। भगवच्छब्दव्यवारेण तत्र समायरोऽपि सूचितोभवति। ततश्चानेके वृत्तिकाराः समभवन्। न समेषालत्रोहङ्कनं सम्भवमिति कृत्वात्यज्यते। ततश्च भाष्यकाराः समागच्छन्। भाष्यञ्च सूत्राणां स्पष्टार्थप्रतिपादनाय प्रवर्त्तते। उक्तमपि—

**[2]सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः।**
**स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः॥ इति**

'[3]आक्षिप्य भाषाणात् भाष्यम्' इत्यपि वदन्ति। जैमिनिसूत्रमधिकृत्य शबरस्वामिना भाष्यं भाषितम्। तदधुनापि विराजते, उपकरोति च मीमांसाज्ञानपिपासुजनानाम्। सर्वजन संवेद्या च भाषा तत्र समुपनिबद्धा। कथयन्ति च स्यवमेव—[4]लोके येष्वर्थेषु प्रसिद्धानि पदानि सति सम्भवे तदर्थान्येव सूत्रेष्वित्यवगन्तव्यम्, नाध्याहारादिभिः परिकल्पनीयोऽर्थः परिभाषितव्यो वा' इति। अन्तं यावत्स्वप्रतिज्ञातं निर्वहति। अतएव समाजे गौरवमाहवति। भाष्यमाधारीकृत्य भट्टपादेन कुमारिलेन वार्त्तिकं निर्भितम्। तत्र च भाष्यकारोद्दिष्टानां विषयाणामथ चान्येषामाक्षेपप्रत्याक्षेपाणां समाधानं युक्तिप्रमाणाभ्यां कृतम्। वार्त्तिक-ग्रन्थेन भाष्यं सुदृढं जातम्, जातम्, मीमांसापि चातिदृढा जाता। वार्त्तिकस्य महत्त्वमेतावज्जातं यत्पश्चाद्वर्त्तिनोऽऽचार्याः सश्रद्धं स्मरन्ति प्रमाणरूपेण चोपस्थापयन्ति च। वार्त्तिकञ्च—

**[5]युक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्त्तते।**
**तं ग्रन्थं वार्त्तिकं प्राहुर्वातिकज्ञाः मनीषिणः॥ इति**

अस्तु, वार्त्तिकस्यापि काठिन्यमनुभूय आचार्याः एकैकं विषयमधिकृत्य विरचितवतन्तः। तत्र पार्थसारथिमिश्रप्रभृतयोऽऽचार्याः भट्टसम्प्रदाये

---

१. शा. भा. १-१-५
२. पराशरोपपुराणम् अ. १८
३. क. मी.—अ. २
४. शा. भा. १-१-१
५. विष्णुधर्मोत्तर पुराणम्

प्रतिष्ठाभाजः सन्ति । प्रभाकरसम्प्रदाये च शालिकनाथः गुरुसम्प्रदाय-जीवातुरूपः । प्रकरणविषये उक्तम्—

[1]शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरे स्थितम् ।
प्राहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः ।। इति

तात्पर्यटीकायाश्च –'ग्रन्थान्तर्गतप्रकरणन्तु, एवं क्वचित् केनचिदर्थेनैकेन सूत्रवाक्यातायामेकवाक्यत्व समूहः प्रकरणमि'ति, प्रतिपादितम् । 'एवमेव [2]शास्त्रैकदेशस्य प्रक्रिया प्रकरणम्' इत्यपि राजशेखरः । एकैकं विषयमधिकृत्य विषयप्रतिपादने सौष्ठवमायाति स्पष्टप्रतिपत्तिरपि भवति । तदर्थमयं यत्नआर्चाणां भवतीति ज्ञायते । अस्यामेव परम्परायां जीवदेवोऽपि वर्त्तते । मीमांसायाः तत्तद्विषयमधिकृत्य भाट्टमतप्रचाराय प्रसाराम च भाट्टभास्करनामकं ग्रन्थं विरचितवान् । भाट्टभास्करस्यापि मीमांसासमाजे समस्त्युपयोगः । प्रवृतग्रन्थस्य परिचयोऽपि प्रदीयतेऽग्रे । अत्र खलु जीवदेवविरचितभाट्टभास्करविषये किञ्चिद्वदामः । अनेनाध्येतारष्तुष्टा स्युरिति मनीषा । परिच्छेदद्वयात्मकोऽयं ग्रन्थः । तत्र प्रथमः परिच्छेदः प्रमाणनिरुपणात्मकः । तत्र धर्माधर्मयोः प्रमाणानि तदुपोद्वलकानि च प्रमाणानि सन्ति निरुपितानि । द्वितीयश्च परिच्छेदः प्रमेयात्मकः । तत्राग्निहोत्रमारभ्य सोमविकृतिं यावत्वसर्वे यागाः सुनिरुपिताः सन्ति । यागादीनामेव धर्मत्वात् । अत्र यावदुपलब्ध एव भागो विद्यते सम्पादितः । अनुपलम्भादन्येषां विषयणाम् । तदर्थं मया परिशिष्टमेकं सामान्यज्ञानाय योजितम् । तदुपकाराय भवेदित्याशासे । '[3]अथातो धर्मजिज्ञासा, इत्यादिना सर्वप्रथमं जैमिनिना धर्मविषयिणी जिज्ञासाभिहिता । आकरं प्रश्लिष्याधर्मजिज्ञासापीति केषाञ्चिन्मतम् । जिज्ञासा च 'सा[4] हितस्य तस्य ज्ञातुमिच्छा । नेच्छामात्रेण संशयनिवृत्तिपूर्वकं निर्णयजनकं ज्ञानं समुत्पद्यते । तस्य विचारविषयत्वात् । अतएव जिज्ञासापदस्य विचारे लक्षणेत्याचार्याणां पन्थाः । तत्रापि तात्पर्यानुपपत्तिरेव लक्षणबीजामत्र, नान्वयानुपपत्तिः । आकाङ्क्षादिवाशात्पदानामन्वयस्योपपद्यमानत्वात् तात्पर्यस्य चानुपपद्यमानत्वात् । अत्र '[5]ज्ञ+तुम्+सन्' इति प्रकृत्या ज्ञानमात्रे शक्तिः । अनुष्ठानोपयोजिज्ञानेऽजहल्लक्षणा प्रत्ययार्थः, साध्यसाधनभावः सम्बन्धः, जहल्लक्षणया

१. पारासरोपपुराणम् २. का. मी. अ. २ ३. जै. सू. १-१-१
३. शा. भा. १-१-१ ५. अर्थसं. किरणापली पृ०–७

इच्छासाध्यो विचारो बोध्यते । धर्मानुष्ठानोपयोगिज्ञानसाधकविचारः कर्त्तव्यः' इति कृष्णवल्लभाचार्याः ।

एवं वेदार्थविचारकस्यास्य दर्शनस्य वेद इव प्रचीनताङ्गीकर्त्तुं शक्यते । अस्यापि दर्शनस्यातीव प्राचीन परम्परावर्त्तते । विषयेऽस्मिन्पूर्वमपि निवेदितम् । न जैमिनित एव प्रवर्त्तनेऽमीमांसेयम् । अत्रापि गुरुपरम्परावलोक्यते तदुक्तं भट्टपादेन—

[1]योऽप्ययं शास्त्रसम्बन्धो वर्ण्यते कैश्चिदादितः ।
क्रियानन्तर्यरूपो वा गुरुपर्व क्रमोऽपि वा ।। इति

तत्रैवन्यायरत्नाकरः—पर्व = अवच्छेदः । गुरुपर्वणां क्रमो गुरुपर्वक्रमः । तद्यथा—'ब्रह्माप्रजापतये मीमांसा प्रोवाच, सोऽपीन्द्राय, सोऽऽप्यामिसोऽपि जैमिनये, स च स्वोपदेशानन्तरमिमं न्यायं ग्रन्थे निबद्धवान्' इति । ततश्च सिद्धान्तचन्द्रिकायामुक्तम्—'गुरु[2]पर्वात्मिकश्च सम्बन्धो मयात्रैव कैश्चियुक्तः । तद् यथा—ब्रह्मा प्रजापतये मीमांसा प्रोवाच, सोऽपीन्द्राय, सोऽप्यग्नये, स च वसिष्ठाय' इत्यादि । शेषं पूर्ववत् । अत्रादित्यस्थानेऽग्निरिति पाठः । क्वचित्तु—ब्रह्मा महेश्वरो वा प्रजापतये मीमांसा प्रोवाच, प्रजापतीन्द्रायेन्द्रोऽऽदित्यायेत्येवं पाठान्तरम् । यत्किमपि भवेन्नाम, परन्तु मीमांसापरम्परातीव नवीना वर्त्तत इति वक्तुं न शक्यते । अपरमप्येकं पाठन्तरं नीलकण्ठशास्त्रिणा निर्दिष्टम् । तथाहि—'सोऽयं प्राजापत्यो विधिः, तामिमां प्रजापतिः बृहस्पतये प्रोवाच, बृहस्पतिः नारदाय, नारदो विष्वक्सेनाय, विष्वाक्सेनो व्यासाय पाराशर्याय, व्यासः पाराशर्यो जैमिनये, जैमिनिः पौष्पिण्डाय पाराशर्यायिणो वादरायणेत्यादिः । अयञ्च परम्परा निर्देशः स्वार्थसिद्धये स्वकपोलकल्पित एव प्रतिभाति । सम्प्रति या मीमासा समुपलभ्यते, तस्या सूत्रकारो भगवान् जैमिनिरेव । जैमिनिश्च भगवतो व्यासस्य शिष्य इति पौराणिक वंशपरम्परया पूर्वमेव संसाधितम् । अस्यां परम्परायां वादरायणापेक्षया पर्वत्रयं पूर्वमेव जैमिनिरायाति । तन्न समीचीनम् । परम्पराविरुद्धत्वाच्छास्त्रविरुद्धत्वात्प्रमाणाभावाच्च । मतमिदं स्वप्रयोजनसिद्धयर्थं प्रदर्शितम् । एतेषां मतेऽनेके सन्ति जैमिनयः । यतो ही मीमांसासूत्रेऽनेकत्र जैमिनिं स्मरति सूत्रकारः । अतोज्ञायते यत्सूत्रकारजैमिन्यपेक्षा तत्तदनेके जैमिनतो बभूवेति । इयमेव च वादरायणस्यापि

---

१. श्लो. वा प्रति. सू. श्लो. २. सि. च. पृ० ७

स्थितिः । व्यासपक्षे ब्रह्मसूत्रेऽनेकत्र बादरायणशब्दव्यवहारो दृश्यते। अतएव प्रतिभाति यदयं बादरायणोऽपरं स्वपूर्वभाविनं बादरायणं स्मरति। स्मृताश्च सर्वे जैमिनयो बादरायणो वा परस्परं भिन्नाः सन्ति। एतदर्थं-संसाधनायैषा परम्परा विनिर्दिष्टा तेन। बादरायणापेक्षया प्राचीनतरो जैमिनिरिति। स च जैमिनिर्न मीमांसासूत्रकारः। सूत्रकारश्च भिन्न एवेति तेषां धीः। परन्तु नात्र श्रद्धा विधेया। शास्त्रप्रमाणविरुद्धत्वात्। पूर्वनिर्दिष्टपरम्परा शास्त्रशिद्धात्वात्प्रामाणिकी। वर्त्तमानकालीनपूर्वोत्तर-मीमांसासूत्रकारयोः पौर्वापर्यं गुरुशिष्यभावश्च पुराणप्रसिद्धः। अतएव तत्रैव श्रद्धधन्ते विज्ञाः। तत्परम्परायामेव प्रकरणग्रन्थनिर्माणकर्त्तृत्वेनायं जीवदेवो विराजते। अत्रैव खलु जीवदेवः धर्माधर्मविवेचनाय प्रवर्त्तते। यथा धर्मजिज्ञासा धर्मोपादानार्थमावश्यकी, तथैवाधर्मजिज्ञासापि तद्धानायावश्यकीति। तदुक्तं शास्त्रदीपिकायाम्—'धर्म[1]ग्रहणं चोपलक्षणार्थमधर्म-स्यापि, हानाय जिज्ञास्यत्वात्' इति। अकारप्रश्लेषेण वा सूत्रमधर्म-जिज्ञासायामपि व्याख्येयमिति। रङ्गनाथवृत्तावप्युक्तम्—'[2]धर्मजिज्ञासा वेदार्थरूपस्य धर्मस्य विचारः कर्त्तव्यः' इति। अनेनविचारार्थे जिज्ञासा-शब्द इति बोध्यम्।

[3]सिद्धार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते।
शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥ इति

रीत्या प्रेक्षावत्प्रवृत्त्यर्थं ग्रन्थादावनुबन्ध चतुष्टयमवश्यमेव वक्तव्यम्। प्रवृत्तिजनकज्ञानविषयत्वमनुबन्धत्वम्। तत्राधिकारी, विषयः, प्रयोजनम्, सम्बन्धश्च। तत एव तत्र ग्रन्थे प्रवर्त्तन्ते जनाः। सुखप्राप्तिः दुःख-निवृत्तिश्चेहमानः पुरुषोऽधिकारी। धर्माधर्मौविषयौ। धर्माधर्मनिर्णयः ग्रन्थस्य प्रयोजनम्। प्रतिपाद्यप्रतिपादकभावश्च सम्बन्धः। एतदर्थबोध-नायैव ग्रन्थकारो वदति प्रथममेव—'[4]सुखदुःखप्राप्तिनिवृत्त्यर्थिनां पेक्षावतां धर्माधर्मविषये प्रवृत्ति निवृत्ती दृश्येते, तत्र कार्त्स्येन धर्माधर्मनिर्णयार्थ-मयमारम्भः। इति। कार्त्स्येनेति पादोपादानादिदं प्रतीयते यदन्यत्र न साकल्पेन धर्माधर्म प्रतिपादनं वर्त्तत इति। अत्र तु वर्त्तते। अतो न ग्रन्था-न्तरेणस्य गतार्थता बोध्या।

---

१. शा. दी. १-१-१ २. रङ्ग. मृतिः १-१-१
३. श्लो. वा. प्रति. सू. १७ ४. भाट्टभास्करः पृ. २

## धर्मः

धर्मविषये विवदन्ते विद्वांसः। धर्मस्यानेकानि लक्षणानि तत्तच्छास्त्रेषु दृश्यन्ते। यथा—साङ्ख्यमतेऽन्तःकरणस्य वृत्तिविशेषरूपो यागाद्यनुष्ठानजन्यो धर्मः सौगतमते ज्ञानस्य ज्ञानान्तरजन्यवासनारूपः। आर्हतमते प्रद्गलाख्यदेहारम्भकपुण्यविशेषोत्पन्नपरमाणुरूपः। नैयायिकमतेऽदृष्टापरपर्यायविहितकर्मजन्यात्मनो विशेषगुणरूपः। मीमांसकेषु केचिदपूर्वमेव धर्म इति वदन्ति। एतत्सर्वं दृष्टिपथं कृत्वा वार्त्तिककारेण भट्टपादेनोक्तम्—

[1]अन्तःकरणवृत्त्यादौ वासनायाञ्च चेतसः।
पुद्गलेषु च पुण्येषु नृगुणोऽपूर्वजन्मनि ॥ इति

एवमेव भागवताः—'अयं हि परमोधर्मो पद्योगेनात्मदर्शनम्' इति ऐतिह्यविदश्च 'आचारः परमो धर्मः' अथवा 'आचारप्रभवो धर्म' इति व्याहरन्ति। वैशेषिकमते 'यतोऽभ्युदयनिः श्रेयसिद्धिः स धर्मः इति। केचनाभियुक्ताः 'नहि सत्यात्परो धर्मः' इति सङ्गिरन्ते। एवं वादिनां विवादविषयीभूते धर्मशब्दार्थे जैमिनिना सूत्रितम्—'चोदना[2]लक्षणोऽर्थो धर्मः' इति। तस्य च निर्गलितार्थसंक्षेपः—'वेदवोधितश्रेयःसाधनताको यागादिक्रियाकलापो धर्मः इति। यागादिक्रियायां धर्मशब्दव्यवहारे लोकव्यवहारोऽपि प्रमाणभूतस्तथा भगवता शवरस्वामिना प्रतिपादितमपि—'[3]यो हि यागादिकमनुतिष्ठति तं धार्मिक इत्याचक्षते' इति। तथैव

[4]धर्मः स्वनुष्ठितः पुंसां विष्क्सेनकथासु च।
नोत्पादयेत् यदि रतिं श्रम एव हि केवलम् ॥ इति

पुराणादावपि दृश्यते। एतत्सर्वञ्च वार्त्तिककारेणाभिहितम्—

[5]श्रेयो हि पुरुषप्रीतिः सा द्रव्यगुणकर्मभिः।
चोदनालक्षणैः साध्या तस्मात्तेष्वेव धर्मता ॥
अन्यत्साध्यमदृष्ट्वैव यागादीननुष्ठितः।
धार्मिकत्वसमाख्यानं तद्यागादिति गम्यते ॥

---

१. श्लो. वा. चो. सू. ९५
२. मी. सू. १-१-२
३. शा. भा. १-१-२
४. भा. पु. १-२-८
५. श्लो. वा. चो. सू. १५१-१६४

पश्वादीनि च धर्मस्य फलानीति व्यवस्थितम् ।
चित्रागोदोहनादीनां तान्युक्तानि फलानि च ।।
तस्मात्तेष्वेव धर्मत्वं धर्माणीति च दर्शनात् ।
लिङ्गसंख्याविनिर्युक्तो धर्मशब्दो निदर्शनम् ।। इति

धर्म इत्येव पुंल्लिङ्गत्वेन भवति सर्वत्र व्यवहारस्तथापि '[1]तानिधर्माणि प्रथमान्यासन्' इत्यादि श्रुत्या नपुंसकलिङ्गत्वमपि प्रतीपते । अतएव 'लिङ्ग-संख्याविनियुक्त' इत्युक्तम् । अतएव च—

'द्रव्य[2]गुणक्रियादीनां धर्मत्वस्थापयिष्यते' इति प्रतिज्ञातमपि । एतत्सर्वं हृदि निधायैव जीवदेवो धर्मो नाम—वेदबोधितश्रेयःसाधनताको यागादिः । अधर्मोऽपि—वेदबोधिता श्रेयः साधनतको ब्रह्महत्यादिः । तज्ज-न्यानि चापूर्वाणि पुण्यपापाख्यानि धर्माधर्मशब्दवाच्यानि' इत्याह । उभयत्र प्रयोगोऽपि दर्शयति, यथा—'धर्मं चर, धर्मान्न प्रमदितव्यम्, धर्मः क्षरति कीर्त्तनात्' इत्यादि । सर्वेषां मतानां समादरपूर्वकं धर्मस्वरूपप्रतिपादन-मेवास्य ग्रन्थकारस्य परमं प्रयोजनं वैशिष्टयञ्च । यद्यप्ययं ग्रन्थकारो जीवदेवः स्वपितरमापादेवमनुसरति तथाप्यत्र मतभेदोऽपि समुपस्थापयति । नामदेवः मागजन्येऽपूर्वे धर्मशब्दस्य प्रयोगमिच्छति । यतोहि धर्मं लक्षयति—'[3]वेदेन प्रयोजनमुद्दिश्य विधीयमानोऽर्थो धर्मः', यथा यागादिः । अनेन भाष्यकारादिसम्मतयागादि क्रियारूप एव धर्म इति साधितं भवतीत्यनयो-र्भेदः । सारविवेचिन्यां यागादिरितप्रतीकमादाय 'एतेन[4] गौतमीयानामिव नास्माकमपि विहितकर्मजन्यापूर्वमेव धर्मः, किन्तु वेदविहितोयागादिरेव मुख्यो धर्मः, अपूर्वेतु तज्जन्यत्वेन भाक्तः प्रयोगः' इति । परन्त्वत्र 'उभय-त्रापि प्रयोगात्' इत्यनेनोभयत्र प्रतिपादयतीति विशेषः ।

## धर्मे प्रमाणानि

धर्माधर्मयोश्च वेदमन्वादिस्मृतिशिष्टाचाराः प्रमाणानीत्युक्तम् । तत्र वेदानां धर्माधर्मयोः स्वतः प्रामाण्यं भवति, स्मृतीनाञ्च वेदमूलकत्वेन तत्र प्रामाण्यम्, शिष्टाचारस्य च स्मृतिमूलकत्वेन प्रामाण्यमिति स्मृत्यधिकरण-शिष्टाचारप्रामाण्याधिकरणयोः भाष्यवार्त्तिकादौ स्पष्टम् । मनुना च

---

१. पुरुषसूक्तम्—१६ २. श्लो. वा. चो. सू. १३
३. न्या. प्र. पृ.—१ ४. मी. न्या. प्र. पृ. २

'[1]स्वस्य च प्रियमात्मनः' इत्यप्युक्तम् । यत्र 'उदिते जुहोति, अनुदिते जुहोति, समयाध्युषितेजुहोति' इत्येककार्यसम्पादनायानेके कालाः विहितास्तत्र 'स्वस्य च प्रियकात्मन' इत्यस्य भवति प्रयोगः, न तु यत् यत्स्वप्रियं भवति तत्तदाचरणीयामिति । शास्त्रीयमर्यादासङ्गापत्तेः । तस्मादेतेषां तत्र प्रमाण्यमिति ।

## वेदपौरुषेयत्वम्

वेदानामपौरुषेयत्वञ्च मीमांसाशास्त्रस्य जोवातुरूपः । तदर्थमेव प्रयतन्ते मोमांसकाः । मोमांसादर्शनेप्रायः सहस्त्राणिण्यधिकरणानि विद्यन्ते । तत्रैकमेव वेदापौरुषेयत्वाधिकरणं परमसिद्धान्तरूपम् । तदतिरिक्तानि च सर्वाण्यधिकरणानि साक्षात्परम्परया वा तस्यैव साधकानीति वेदितव्यम् । नैयायिकमते ईश्वरोच्चरितत्वद्वेदानां प्रामाण्यम्, तन्न सहन्ते मीमांसकाः । ईश्वरोच्चरितत्वेनापि प्रामाण्ये सादित्वापत्तिर्दुवारा स्यात्, गोतादिवत् । एतत्सर्वमत्र विचारितम् । सिद्धान्तितञ्च 'तस्मान्नेश्वरः कर्त्तेत्यन्यत्र विस्तर;' इति । अन्यत्र वार्त्तिकादावित्यर्थः । तत्र च शब्दस्य नित्यत्वम्, तदर्थस्य च नित्यत्वम्, तयोश्चयो सम्बन्धस्तस्यापि नित्यत्वं महता प्रबन्धेन प्रसाधितम् । तस्मान्नेश्वरो वेदकर्त्तेति । यद्वदन्ति 'पुम्योग एव श्रुतिकुयार्याः गर्भे मानम्' इति । तदपि न । पुम्योगस्य प्रवचनकर्त्तृकत्वेन सूत्रभाष्यवार्त्तिकादौ स्पष्टीकृतत्वात् । तस्मान्न पुरुषसंयोगाद्वेदानामनादित्वभङ्गः । तत्रानित्यद्धासमानपदार्थानामपि नित्यार्थप्रतिपादकत्वेनाप्यनित्यत्वशङ्का परास्ता भवति । ग्रन्थकारोऽत्र गगनादिवत्स्वरूपानादित्वं न स्वीकरोति, अपि तु कार्यानादित्वमेवाङ्गीकरोति विशेषः । एवमपि ध्येयम्—यदि नैयायिकादिवदीश्वरोच्चरितत्वेन वेदानां प्रमाण्यं स्यात्तर्हि बुद्धोच्चारितानां देशनानामपि प्रामाण्यं स्यादेव । तस्या अपीश्वरोच्चरितत्वात् । बुद्धस्य च विष्णोरवतार भूतत्वेनेश्वरत्वात् । रामकृष्णादिवत् । यत्र यत्रेश्वरोच्चरित्वं तत्र तत्र वेदवत्प्रामाण्यमिति व्याप्तेर्विद्यमानत्वात् । तस्मान्नायं पक्षे रोचते मोमांसाकेभ्यः । न्यायप्रकाशे च 'न हि वेदः पुरुषनिर्मितः' इत्यादिनापौरुषेयत्वं प्रसाधितमतिसंक्षेपेण । मोमांसकमते महाप्रलयानङ्गीकारात् संसारस्य चानादित्वाद् गुरुपरम्परया

---

१. मनु. २-१२

वेदानामध्ययनाध्यापनादिपरम्पराविरल धारेव प्रवहति। न कदाचिद्भव-त्युच्छेदः। तस्मादेव वेदानां नित्यत्वमपौरुषेयत्वञ्च भवति प्रसाधितम्। वार्त्तिकञ्चोदोहृतमत्र—

[1]वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम्।
वेदाध्ययनसामान्यादधुनाध्ययनं यथा॥ इति

अनेन च वेदपरम्पराया अनादित्वं सिद्ध्यति। अपि चोक्तम्—'[2]यस्य निःश्वसितं वेदा' इति। अनेनापि नित्यत्वमेव समागच्छति। ईश्वरस्य नित्यत्वात्तस्य श्वासप्रश्वासयोरपि नित्यत्वाद्वेदानाञ्च तत्स्वरूपादपि नित्य-त्वमेवायाति। तस्माद्वेदानां नित्यत्वमिति मीमांसकरद्धान्तः। अन्यत्रतु बहुविस्तरेण वर्त्तते प्रतिपादितइति संक्षेपः।

## वेदविभागः

वेदानाञ्च मन्त्रस्वरूपदृष्टया भगवता वेदव्यासेन चत्वारो विभागाः प्रदर्शिताः। यथा—ऋक्, साम, यजुस्तथाथर्व। एतेषाञ्च लक्षणान्यपि जैमिनिनोक्तानि। 'यत्रार्थ[3]वशेन पादव्यवस्था सा ऋक्, गीतिषु[4] सामाख्या, शेषे[5] यजुः शब्दः' इति। शान्तिकपौष्टिककर्माणि यत्र प्राधान्येन प्रति-पाद्यन्ते, सोऽथर्ववेदः। अत्र च वाक्यदृष्टया वेदानां करोति विभागः। अतस्तयोर्न परस्परं विरोधः। विधिनिषेधार्थवादमन्त्रनामधेयात्मा वेदः। न्यायप्रकाशेऽपि यद्यपि पञ्च भेदा एव प्रदर्शितास्थापि क्रमप्रयुक्तभेदोऽपि दृश्यते। तत्र विधिमन्त्रनामधेयनिषेधार्थवाद इति क्रमः। अनेनैव प्रकारेण विषयाणां प्रतिपादनमपि वर्त्तते। इत्येवात्र भेदः।

## विधिप्रामाण्यम्

'विधिः[6] प्रयोजवदर्थविधानेनार्थवान्' इत्यापदेवः। उदाहरणञ्च 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इति। विधिस्वरूपप्रतिपादने न्यायप्रकाशा-

---

१. श्लो. वा. वेद. नि. ३६६ २. सायण
३. मी. सू. २-१-३५ ४. मी. सू. २-१-३६
५. ,, ,, २-१-३७ ६. मी. न्या. पृ. ५

पेक्षया जीवदेवस्य किमपि वैशिष्ट्यं प्रतिभाति, यथा—विधीनां विधायकत्वेन धर्मे प्रामाण्यम्। विधायकत्वञ्च—अज्ञातज्ञापकत्वमनुष्ठापकत्वञ्च। विधयो हि लिङ् लेट् लोट् तव्यश्चाज्ञात भावनाज्ञापकास्तदनुष्ठापकाश्च इत्यादिः। उभयोर्मतयोः समीक्षणेनास्य स्पष्टप्रति पादकता प्रतीयते। अयमेव भेदः।

## भावना

भावना च भाव्यतेऽनयेति व्युत्पत्त्या यागानुकूलो व्यापार इत्युक्तं जीवदेवेन। लक्षणेऽत्र प्रयोजककर्त्तृव्यापारः प्रयोज्य कर्त्तृर्वेति न स्पष्टं वदति। परन्तु न्यायप्रकाशे 'भवितुर्भवनानुकूलो भावकव्यापारविशेषो-भावनेति कथनेति कथने प्रयोजककर्त्तृ निष्ठीयो यागानुकूलो व्यापारः, सेत्र भावनेति स्पष्टो भवति। 'भावकव्यापारविशेष' इत्युक्तावपि भेदो भवत्येव। व्यापारविशेषो भावनेत्यपि क्वचित्।

## भावनाविभागः

भावना च द्विविधा—शाब्दीभावना आर्थीभावना चेति। नात्र विषये कस्यापि मतभेदः। पुरुषप्रवृत्त्यनुकूलभावकव्यापारविशेषः शाब्दीभावनेति न्यायप्रकाशः। अत्र तु पार्थसारथिमण्डनमिश्रमताभिप्रामेण शब्दगतः शाब्दाभिहितोवेति पदं तत्र योजितम्। अतः शब्दगतः शब्दाभिहितो वा पुरुषप्रवृत्त्यनुकूलो व्यापारः शाब्दीभावनेति जीवदेवः। मण्डनमिश्रमते शब्दाभिहितपक्ष एव वर्त्तते प्रामाणिकः। पार्थसारथिमते शब्दगतः शब्दाभिहितो पुरुषप्रवृत्तिजनकप्रयोजककर्त्तृ निष्ठो यो व्यापारः, स एव शाब्दीभावनेति। तथा चोक्तं भाट्टभास्करे—तच्छब्दाभिहितत्वाच्छाब्दी भावना, न तु शब्दगतः शक्तिविशेषः। प्रमाणाभावादिति मण्डनमिश्रः। तदेव शब्दगतत्वाच्छब्दाभिहितत्वाच्च शाब्दीभावनेति पार्थसारथिमिश्रः। उभयोर्मतयोः सामञ्जस्यं कृत्वा जीवदेवस्य प्रवर्त्तते भावनालक्षणम्। आर्थीभावना—स्वर्गेच्छाजनितो यागविषयो या प्रयत्नः, स आर्थीभावनेत्यापतेवः। स चाख्ययातार्थः। पुरुषगतः फलानुकूलो व्यापार आर्थीभावनेति जीवदेवः। अर्थ्यते फलमेनेनेत्यर्थः गुरुषस्तद्गतत्वादार्थी। वस्तुतस्तु अर्थ्यत इत्यर्थ फलम् तस्येयमार्थी। 'पचति' इत्यादिपदानामुच्चरणेऽऽख्यात श्रवणे च पाकानुकूलो व्यापारः पुरुषे एव प्रतीयते।

अतएवाख्यातार्थः आर्थीभावना, लिङ्र्थः शाब्दीभावनेति बोध्यम्। एवमेव वेदेऽपि 'यजेत' इत्यादिपदश्रवणे सति पुरुषगतफलानुकूलव्यापारात्मक-भावनैव प्रतीयते। अतोऽआर्थी भावना आख्यार्थ इति। तत्रापि न्यायसुधा-कृन्मते यत्न एवार्थीभावना। मिश्रमते व्यापारसामान्यमार्थी भावनेत्युभयो र्भेदः। यत्नत्वेन यत्नवाचकता आख्याते तिष्ठतीति केषाञ्चिन्मतम्। एकेनैव यत्नत्वेन सर्वेषां यत्नानां बोधसम्भवादत्र लाघवमपि। तन्न। यथानेक व्यापाराणां विद्यमानत्वात्सर्वत्र शक्तिस्वीकारे गौरव तथैवानेक-व्यक्तावनेकजातिस्वीकारेऽपि गौरवमेव प्रसज्येत, न लाघवमिति। तस्मान्नायं पक्षः समीचीन इति संक्षेपः।

## कर्त्तुराख्यातवाच्यत्वाभावनिरूपणम्

वैयाकरणा[1]नाम्मते कर्त्तृकर्मसंख्याकाला आख्यातप्रत्यार्थभूताः। व्यापारोधात्वर्थः। धात्वर्थस्यैव प्राधान्यात् धात्वर्थमुख्यविशेष्यक एव शब्दबोधः। तत्रैवाख्यातार्थानामन्वयः तत्रापि संख्याथायाः कर्त्तरि कालस्य च व्यापारेऽन्वयः। अतएव 'रामः गच्छती' त्यादौ 'एकत्वसंख्याविशिष्ट-रामकर्त्तृकवर्त्तमानकालिकोत्तरदेशसंयोगानुकूलो व्यापार इति शाब्दबोधः। मीमांसकानाम्मतेऽऽख्यातार्थो भावना तत्रापि लिङ्प्रत्ययघटकीभूतलिङंशेन शाब्दीभावनोच्यते तयाख्यातांशेनार्थी भावना प्रतिपाद्यते। आख्यातार्थ-मुख्यविशेष्यक एव भवति शाब्दबोधः, न धात्वर्थमुख्यमुख्यविशेष्यकः। प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यात्। कर्त्तारं विना भावनानुपपन्ना भवति। तथा भावनां विना कर्त्तृत्वमेव न समुत्पत्स्यते। येन विनायन्नोप-पद्यते तत्तेनाक्षिप्यते। कर्त्तुरभावाद्भावना नोपपत्स्यते। अतो भावनायात् भवति कर्त्तुरक्षेपः। एतन्मतप्रकाशनायैव 'इयञ्च भावना क्रियात्वात् कर्त्तारं विनानुपपना, तमाक्षिपति, न त्वाख्यातानां कर्त्तरि शक्ति' इत्या-द्युक्तम्। कृति भावनाव्यापाराणाञ्च नार्थान्तरत्वम्। वाचकशब्द भेद-मात्रमेव भिन्नत्वम् मीमांसकमते 'एकत्वसंख्याविशिष्टरामादिकर्त्तृकवर्त्त-मानकालिकी गमनानुकूला भावनेति बोधः। 'अनन्यलभ्यः शब्दार्थः इति न्यायेन भावनयाक्षिप्यते कर्त्ता, न कर्त्रा भावनाक्षेपः। एकत्वादिसंख्या च परिच्छेदिका भवति। अत्रापि च न्यायसुधाकृन्मते गवादिशब्दानां जातौ शक्तिमाश्रित्याविनाभावेन व्यक्तौ लक्षणा भवति तथैवाख्यातानां कृतौ

१. धात्वर्थप्रकरण।

अर्थात् भावनायां शक्तिमाश्रित्य तद्वतिलक्षणा। मिश्रमतञ्चधातूनामेव क्रियारूपस्वार्थाभिधायिनां कर्त्राक्षेपकत्वात्तल्लक्षकत्वमिति । अस्मादेव कारणाच्छाब्दबोधोऽपि जायते वैलक्षण्यम् । न्यायमते वाक्यगतप्रथमान्त-पदस्यैव सर्वप्रधान्यात्तत्रैवान्येषां पदजन्यपदार्थानां भवत्यन्वयः। अतः प्रथमान्तार्थमुख्यविशेष्यक एव शाब्दबोधः तेषां मते प्रसिद्धः। तस्माद् 'एकत्वसंख्याविशिष्टवर्त्तमानकालिकोत्तरदेशसंयोगानुकूलव्यापाराश्रयः रामः' इति जायते शाब्दबोधः। अत्र कुत्र प्रामाण्यं कुत्र वा अप्रमाण्यमिति विचचारयिषया किमपि वक्तुं न प्रभवामः। सर्वेषां मुनीनां तेषामनुभावाञ्च प्रमाणभूतत्वात्। तत्रन्निर्दिष्टपथा गन्तव्यमित्यिस्माकं मतिः।

## 'प्रतितिष्ठन्ति हवा य एता रात्रीरूपयन्ति' इत्यत्र विचारः

रात्रिसत्रयागप्रसङ्गेऽयमर्थवादी दृश्यते। यत्र विधिवाक्ये न श्रूयते फलम् परन्त्वर्थवादे फलं श्रूयते, तत्रार्थवादप्रतिपादितमेव फलं तस्य यागस्य भवतीति सिद्धान्तः। अत्रविधौ फलं न श्रुतम्। अर्थवादवाक्ये च प्रतिष्ठा-रूपं फलं श्रूयते। तस्मादर्थवादवाक्यपरिपठितमेव फलं विधेरपि भवतीति कल्प्यते। यद्यत्यर्थवादानां स्वार्थे न भवति प्रामाण्यम. अपि तु विधिवाक्येन सहैकवाक्यतया भवति प्रामाण्यम्, तथाप्यत्र स्तुत्यर्थमुपस्थितस्य वाक्यस्य प्रतिष्ठारूपं फलं भावनयाक्षिप्यते। विधिवाक्ये च प्रतिष्ठाकामपदमध्या-हृत्य भावनायां कुर्वन्त्यन्वयः। मिश्रमते 'प्रतितिष्ठन्ति' इत्यस्य पदस्य सन्तन्तत्वेन विपरिणामः। 'उपयन्ति' इत्यस्य च विधित्वेन विपरिणामः। यच्छब्दस्यैतच्छब्दस्य च व्यत्यासः। तस्मात् 'ये प्रतितिष्ठासन्ति व एता रात्रीरूपयेयुरि'त्यर्थः। न्यायसुधाकृन्मते 'प्रतितिष्ठन्ति' इत्यस्य लृडन्तत्वेनापि विपरिणामः। ततश्च 'ये प्रतितिष्ठासन्ति त एता रात्रीययेयुरि'ति बोधः। एवमेव 'सुवर्णं हिरण्यं भार्मभि' त्यत्र द्रवर्णतारूपं फलं भविष्यतीति लृडन्त-त्वेन परिणाम उक्त एव तस्मादयं पक्षः समीचीन इत्येतेषां मतम्। अतः रात्रिसत्रस्य प्रतिष्ठारूपमेव फलं मन्तव्यमिति संक्षेपः।

## वैश्वानरं द्वादशकपालमित्यत्र विचारः

'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते' इति विधाय 'यस्मिज्जाते एतामि' त्यादिना फलश्रुतिः। वाक्यमिदं नैमित्तिकम्। अतएव पापक्षयरूपं फलं निमित्तवशाद्भवति। अर्थवादवाक्य पुत्रगतपूतत्वादिकं फलं स्यादेव।

तस्मादत्र भाव्यद्वयकल्पनमिति मिश्रमतम्। न्यायसुधाकृन्मते पुत्रगतपूतत्वाद्येव बोध्यम्। पुतान् सुरक्षितान् कुर्यादिति विधिकल्प्यः पापक्षयस्तु न फलम्। जातेष्टेर्भाव्यद्वयकल्पनमनुपयुक्तम्। मिश्रमते नैमित्तिकस्थले पापक्षय एव फलम्, अकरणे प्रत्यवायश्रवणात्। राणकमतेऽकरणजनितप्रत्यवायपरिहार एव फलम्, न पापक्षयः। इत्येवानयोर्भेदः।

## मत्वर्थलक्षणा

'तदस्यास्त्य[1]स्मिन्निति मतुप्' इति सूत्रविहितमतुप्प्रत्ययस्य यो ह्यर्थस्तत्र लक्षणा। मतुवर्थश्च वैशिष्टयम्। तद्विशिष्ट इत्यर्थः। यथा—'यवमान्' इत्यत्र यवाः सन्त्यस्यास्मिन्निति वार्थः। अर्थात् यवविशिष्टः कश्चिदित्यर्थः। उभयत्र यवेभ्यः सम्बन्धो प्रतीयत एव। तथैव तद्द्रव्यविशिष्टार्थप्रतिपादकता यत्र भवति तत्रैव मत्त्वर्थलक्षणा स्वीक्रियते। यत्र यागादिकं कर्म प्रकारान्तरेण प्राप्तं भवति तत्र गुणमात्रस्य भवति विधानम्। यथा 'दध्ना जुहोति' इति। अयमेव च गुणविधिः। दधिरूपगुणस्य विधायकत्वात्। अग्निहोत्रं जुहोति' इत्यनेन वाक्येन होमस्य ज्ञातत्वादनेन दाधिरूपस्य गुणमात्रस्य विधानं भवति। यत्र च द्रव्यकर्मणो-रूभयोरप्राप्तिरेव तत्रोभयं विधत्ते वाक्यमेकम्। तत्र द्रव्यविशिष्टयागाद्युभयविधानाद् विशिष्टविधानं भवति। यत्र च विशिष्टविधानं तत्रैव विशिष्टविधिः स्वीक्रियते। यथा -'सोमेन यजेत' इति। अत्र सोमरूपद्रव्यस्य तथा यागरूपस्य कर्मणः न केनाप्यन्येन प्रकारेण जायते ज्ञानम्। तस्मादेवात्रोभयस्य अर्थात् गुणविशिष्टकर्मणः विधानम्। गुणविशिष्टकर्मण ऐक्यादुभयविधानेऽपि वाक्यभेदप्रसक्तिः। तदुभयोः समुदायस्यैथ्यात्। सोमेन यागेनेति समानाधिकरण्येनान्वये विध्यावृत्तिः लक्षणं वाक्यभेदः प्रसज्येत। याग इव सोमस्यापि प्राधान्यापत्तिः। सोमस्तु द्रव्यं यागार्थमस्ति, तदपि नोपपत्स्यते, करणत्वेनान्वयात्। एवमेव 'यागेन सोमम्' अथवा 'सोमेन यागम्' इति वैयधिकरण्येनाप्यन्वयासम्भवः। प्रथमपक्षेऽऽर्थीभावनायामन्वितस्य यागस्य सोमकर्मक भावनायामन्वयानुपपत्तेः। यथा सोमो यागार्थस्तथैव यागोऽपि सोमार्थः स्यात्। अपरस्मिश्च पक्षे भावनाकरणत्वेनान्वितस्य यागस्य साध्यत्वेनान्वयानुपपत्तिः स्यादेव। सम्बन्धमात्रस्य विधानेऽपि 'यागेन स्वर्गं भावयेत्' 'सोमेन यागं भावयेत्' इत्यन्वये सति

---

१. पा. सू. ५.२.९४।

वाक्यभेदप्रसक्तिः। इति कर्त्तव्यात्वेनापि नान्वयः सम्भवः। तृतीयया करणत्वाभिधानात्, इति कर्त्तव्यतात्वानविधानाच्च। करणे एव तृतीया विधानात्। अन्येनकेनापि प्रकारेण सोमस्यान्वयासम्भवात् 'सोम' पदस्य सोमवति लक्षणा क्रियते। इयमेव च मत्वर्थलक्षणा। ततश्च तृतीयया 'सोमवता यागेनेष्टं भावयेदिति भवति वाक्यार्थः। पक्षेऽस्मिन् न कोऽपि दोषः। यद्युच्येत, लक्षणैव दोष इति। तन्न। वाक्यभेदापेक्षया लक्षणायां लाघवात्। अगतिकगतिकत्वाञ्चिन्मात्रदोषोऽपि भवति स्वीकार्यः यतो ह्ययं पददोषः, स च वाक्यदोषः। वाक्यदोषापेक्षया पददोषस्यैवोचितत्वात्। अत्रापि 'सोमेन' इति तृतीयान्तस्य लक्षणा न भवति, अपि तु सोमपदस्यैव सोमवति भवति लक्षणा। सोमपदेन सोमवल्लक्ष्यते, तृतोया तु पूर्वत एव वर्त्तते। अतः सोमवतेति जायते पदम्। एतत्सर्वं ग्रन्थकारेण स्पष्टीकृतम्—'न तु तृतीयान्तेन स्वीकार्यम् प्रकृत्यैव मत्वर्थलक्षणासम्भवादित्यादिना।

## धात्वर्थस्य भावनायामन्वयप्रकारः

धात्वर्थस्य भावनायामन्वयस्य प्रकारत्रयं मीमांसाशास्त्रसम्मतम्। तत्र धात्वर्थस्य भावनायां करणत्वेनान्वय इति प्रथमः पक्षः। धात्वर्थस्य भावनायां साध्यत्वेनान्वय इति द्वितीयः पक्षः। धात्वर्थस्य भावनाया-माश्रयत्वेनान्वय इति तृतीयः पक्षः। तत्र प्रथमः पक्षः प्राधान्यं भजते। धात्वर्थस्य भावनायां करणत्वेनैवान्वयः, यदि नास्ति कश्चित्प्रतिबन्धकः। यथा—यजतीत्यत्र धात्वर्थोयागः। आख्यातार्थश्च भावना। भावनायां धात्वर्थस्य करणत्वेनान्वये 'यागेन भावयेदि'ति वाक्यार्थः। अत्र साध्याङ्क्षायां स्वर्गादिकं फलं साध्यत्वेनान्वेति। अतः 'यागेन स्वर्गादिकं फलं भावयेदि'त्यर्थः। परन्तु 'दध्नाजुहोति' इति गुणविधौ धात्वर्थस्य करणत्वेन नान्वयः। 'तथा सति 'होमेन भावयेदि'ति वाक्यार्थः सम्पत्स्यते। ततश्च साध्याकाङ्क्षायां यत्किञ्चिन्निष्ठं साध्यत्वं कल्पनीयं स्यात्। करणत्ववाचकतृतीयाद्यभावात् करणत्वेनान्वयो न सम्भवः। अतएव साध्यत्वकल्पने सति। दध्ना होमं भावयेदि'त्येव वाक्यार्थः। अतोऽत्र धात्वर्थस्य साध्यत्वेनान्वयः। तस्माद् गुणविधौ धात्वर्थस्य साध्यत्वेनान्वय इति सिद्धान्तः।

एवमेव गुणकामाधिकरणप्रामाण्येन धात्वर्थस्याश्रयत्वेन भवत्यन्वयः। 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यत्र 'अग्निहोत्रं जुहोति' इत्यादिवचनान्तरेण

होमस्य विहितत्वान्नात्रापि होमस्य विधानम् । होमस्येन्द्रियरूपफलेन सह-सम्बन्धे सति गुणपदमेवानर्थकं भवेत् । गुणसम्बन्धे च फलपदानर्थक्यापत्तिः । नोभयसम्बन्धः, वाक्यभेदापत्तेः । तस्मादत्राश्रयत्वेनभावनायां । धात्वर्थ-स्यान्वयः । ततश्च 'दधिकरणत्वेनेन्द्रियं भावयेदि'ति सम्पद्यते वाक्यार्थः । करणत्वञ्च सापेक्षं भवति । अतस्तदपेक्षायां सन्निधिपठितो होमोऽऽश्रय-त्वेति । अतएव ग्रन्थकारोऽपि वदति—'तस्मात्सर्व भावनायां धात्वर्थः करणम्, क्वचिद् गुणोऽपि । तत्र धात्वर्थो भाव्य आश्रयो वेति संक्षेपः । एवं प्रकारत्रयं सिद्धमिति दिक् ।

## आकाङ्क्षात्रयम्

शाब्दीभावना—आर्थीभावनेति भावनाद्वयं भवतीति पूर्वमुक्तम् । 'यजेत' इति पदं श्रूयते धात्वर्थो यागः । आख्याते च धर्मितावच्छेदकद्वयं तिष्ठति । लिङ्त्वमाख्यातत्वञ्च । लिङ्स्थानेऽऽख्यातस्यागमनेन तत्र लिङ्त्वमपि विद्यते । अनेन शाब्दीभावना प्रतिपाद्यते । आख्यातत्वेन चार्थी-भावनोच्यते । तत्र शाब्दीभावनाया आकाङ्क्षात्रयं भवति । किं भावयेदिति साध्याकाङ्क्षा । केन भावयेदिति साधनाकाङ्क्षा । कथं भावयेदिति—इतिकर्त्तव्यताकाङ्क्षा । शाब्दीभावनायाः साध्याकाङ्क्षायामार्थीभावनां शत्रयोपेता साध्यत्वनेनान्वेति । आर्थीभवनाया एव तस्याः साध्यत्वात् । करणापरपर्यायसाधनाकाङ्क्षायां लिङ्गादिजन्यं ज्ञानं साधनत्वेनान्वेति । इतिकर्त्तव्यताकाङ्क्षायाञ्च 'वायुर्वै क्षेपिष्ठा देवता' इत्याद्यर्थवादवाक्य-प्रतिपादितप्राशस्त्यादिज्ञानमिति कर्त्तव्याताात्वेनान्वेति ।

एवमेवार्थी भावनाया अप्याकाङ्क्षात्रयं सञ्जायते । तत्र साध्या-काङ्क्षायां स्वर्गादिफलं साध्यत्वेनान्वेति करणाकाङ्क्षायाञ्च यागहोमादिः करणत्वेनान्वेति । इतिकर्त्तव्याकाङ्क्षायां जायमानायां 'समिधो यजति' इत्यादिप्रयाजादय इतिकर्त्तव्यतात्वेनान्वेति । ततश्च जायते वाक्यार्थबोधः । तदनन्तरञ्च प्रवर्त्तते जन इति संक्षेपः ।

इतिकर्त्तव्यताविषये कश्चन मत भेदोऽपि वर्त्तत एव । यागेन स्वर्गं कुर्यादिति । कर्त्तव्यतायाः विशेष इतिकर्त्तव्यता । फलानुकूलव्यापारात्मिका भावना कर्त्तव्यतारूपेणोक्तविशेषरूपमपेक्षते । कथमिति कोऽसौ व्यापार इत्यर्थ इति मिश्रतम् । यागानुकूलयत्नात्मिका भावना कर्त्तव्यतारूपेणोक्ता,

सा स्वकरणानुग्राहकं व्यापारमपेक्षत इति राणकमतम् । उभयोर्निदेशो ग्रन्थकारेण कृत इति ।

## प्रकृतिविकृतिस्वरूपम्

प्रकृत्यादिदृष्ट्या यागश्चतुर्विधः । प्रकृतिरूपः, विकृतिरूपः, प्रकृतिविकृतिरूपः । अनुभयरूपः । ग्रन्थकारभाषयैवात्र वदामि—'यत्रोपदेशेनैव दृष्टादृष्टार्थयावदपेक्षिताङ्गान्वयः, सा प्रकृतिः । यथा—दर्शपूर्णमासौ, ज्योतिष्टोमः सर्वे च होमाः । यत्रातिदेशेनैव तादृशाङ्गान्वयः, स विकृतिः । यथा—सौर्यादिः । यत्र केषाञ्चिदङ्गानामुपदेशेन तथा केषाञ्चिदङ्गानामतिदेशेन प्राप्तिः, ते च प्रकृतिविकृतिरूपा । यथाग्निषोमीयादिः । अग्निषोमीययागे पशुधर्मा उपाकरणनियोजनादय उपदेशेन तथा दर्शपूर्णमासान्तर्गतपयोयागधर्मा प्रयाजादयोऽतिदेशेन प्राप्यन्ते । अतएवोभयात्मकाः । केचिच्चानुभयरूपाः भवन्ति, यथा—गृहमेधीयादयः । 'मरुद्भयो गृहमेधिभ्यः । इत्यनेन विहितो यागो गृहमेधीयो भवति विशेषस्तु ग्रन्थतोऽवसेय इति ।

## सन्दंशस्वरूपम्

यद्यप्यत्र ग्रन्थकारो न लिखति स्वरूपं सन्दंशस्य, तथाप्युदाहरणन्तु प्रस्तौति । तेनैव स्वरूपमपि स्पष्टीभविष्यतीति तेषां मनीषा । सन्दंशो नाम—एकाङ्गानुवादेन विधीयमानयोरङ्गयोरन्तराले विहितत्वमित्यापदेवः । उदाहरणं यथा—'अभिक्रामं जुहोति' इत्यनेनाभिक्रमणं विहितम् । 'समानयत उपभृतः' इति मन्त्रेण प्रयाजमनूद्य केषाञ्चिदङ्गानां वर्त्तते विधानम् । ततश्चाभिक्रमणं विहितम् । पुनश्च तदनन्तरं प्रयाजमनूद्य 'यो वै प्रयाजानां मिथुनं वेद' इत्यादिना केषाञ्चिदङ्गानां भवति विधानम् । अत्र प्रयाजाङ्गयोर्मध्ये विहितमभिक्रमणमपि प्रयाजाङ्गमेव भवति; मध्ये पठितत्वात् । इदत्रव सन्दंशस्य स्वरूपम् ।

## विधिनिरूपणम्

तत्राज्ञातार्थज्ञापकत्वं विधित्वम् । तदुक्तमपि—'विधिरत्यन्तमप्राप्ते' इति । यस्य प्रकारान्तरेण न भवति ज्ञानम्, तत्पदार्थविधायकत्वमित्यर्थः । यथा—यागस्वर्गयोः साध्यसाधनभावः 'यजेत स्वर्गकामः' इत्यनेनैव बोध्यते ।

नात्र प्रकारान्तरमप्यस्ति। अतएवास्य विधित्वं संघटते। अत्र न्यायप्रकाशे। 'तत्र विधिः प्रयोजनवदर्थविधानेनार्थवान्। स चाप्राप्तमर्थं विधन्ते'। उदाहृतञ्च 'अग्निहोत्रं जुहुमात्स्वर्गकामः' इति। तदनन्तरं विधिश्चतुर्विध इत्युक्तम्। पुनश्चोत्तरभागेऽपूर्वादिदिविधित्रयमुपपादितम्। तत्र जायते-शङ्का—वारद्वयं विधिभेद निरूपणे किं तात्पर्यमिति। कथञ्च पुनर्भेदकथनं संघटते। परन्तु भाट्टभास्करे नैषशङ्कावसरः। अपूर्वविधिपरिसंख्याविधि-भेदाद् विधिस्त्रिविधः। मुख्योऽयं भेदः। तदनन्तरमत्यन्ताप्राप्तार्थबोधको विधिरपूर्वविधिरित्युक्तम्। तल्लक्षणयित्वाऽपूर्वविधेर्भेदं प्रदर्शयति। स चतुर्विध इति। अनेन स्पष्टी भवति—यदपूर्वविधेरेव चत्वारो भेदाः भवन्तीति उत्पत्तिविधिर्विनियोगविधिरधिकारविधिप्रयोगविधिश्चेति।

तत्र कर्मस्वरूपमात्रबोधकोविधिरुत्पत्तिविधिरिति न्यायप्रकाशः। यथाग्निहोत्रं जुहोतीती। अनेनाग्निहोत्ररूपकर्ममात्रस्य भवति बोधः। कर्मण उत्पत्तिं प्रथमज्ञाप्तिं या करोति, स प्रथम इति। पूर्वोक्तस्यैव व्याख्यामात्रं प्रतीयते। उदाहरणमपि तदेव। न्यायप्रकाशे उत्पत्तिविधेः सहकारीणि प्रमाणानि नोक्तानि। अत्र तु शब्दान्तराभ्याससंख्यासंज्ञागुण-प्रकरणान्तरान्तराणि। षट् सहकारीणि प्रमाणानि सन्ति प्रतिपादितानि। उदाहरणानि भाष्यवार्त्तिकग्रन्थतो बोध्यानि। विस्तरभयान्नेह तन्यन्ते।

अङ्गाङ्गिभावसम्बन्धबोधको विधिर्विनियोगविधिः। होमस्वार्गादि-फलयोः भावनाद्वारकमङ्गाङ्गिभावं बोधयति। एवमेवदधिहोमयोः 'दध्ना जुहोति' इति वाक्येनाङ्गाङ्गिभावो बोध्यते। विनियोविधेरपि 'श्रुतिलिङ्ग-वाक्यप्रकरणस्थानसमाख्यारूपाणि सहकारिभूतानि षट् प्रमाणानि भवन्ति।' एतेषां समवाये पूर्वपूर्वप्रमाणानां प्राबल्यं परपरप्रमाणानाञ्च दौर्बल्यम्। तत्र 'श्रुतिलिङ्गवाक्यप्रकरणास्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्र-कर्षात्' इति जैमिनिवचनमेव प्रमाणम्।

किन्नामाङ्गत्वमित्यग्रे स्वयमेवोक्तं ग्रन्थकारेणअङ्गत्वञ्च-परोद्देश-प्रवृत्तपुरुषकृतिसम्बन्धित्वम्। भवति हि होमस्य फलोद्देशप्रवृत्तपुरुषकृति-सम्बन्धित्वात्फलाङ्गत्वम्। एतत्प्रमाणषट्कसहकृतविनियोगविधिरङ्गाङ्गि-भावं बोधयति। श्रुत्यादीनां स्वरूपादिकं ग्रन्थे विस्तरेण प्रतिपादितं वर्त्तत एव। यत्र कुत्रचिन्न्यायप्रकाशतोऽ अर्थतः शब्दतश्च विद्यते भेदोऽपि।

विनियोगविधौ कुत्रचिद्विशेषणमविवक्षितं भवति, कुत्रचिच्च विवक्षितमपि। यथा—'ग्रहं सम्मार्ष्टि' इति। अत्रग्रहगतमेकत्वमविवक्षितं भवति। अन्यथा विध्यावृत्तिलक्षणवाक्यभेदप्रसक्तिः स्यात्। एकत्वसंख्यातिरिक्तानां ग्रहाणां सम्मार्गाभावोऽपि प्राप्नोति। अतएवोक्तम्—'विनियोगविधौयदुद्देश्यं तद्विशेषणमविवक्षितमि'ति। यत्तु विधेयविशेषणम्, तद्विवक्षितमेव। यथा—'अष्टवर्षं ब्राह्मणमुपनयीत' इत्यत्रोपनयनसंस्कारस्य संस्कार्यत्वेनोद्देश्यभूतो ब्राह्मणः। तदुद्दिश्योपनयनसंस्कारस्य विहितत्वात्। अतस्तद्विशेषणमष्टवर्षत्वपुंस्त्वाद्यप्राप्तत्वद्विवक्षितमेवेति न्यायसुधाकृन्मतम्।

उद्देश्यतादशायामविवक्षितत्वमेव तस्यापीति मिश्रमतम्। अधिकारविधिः—उत्पत्तिविधिनोत्पन्नस्यविनियोगविधिया विनियुक्तस्य च यागादिकर्मणः फलविशेषस्वर्गपशुपुत्रादिसम्बन्धबोधनद्वारानुष्ठानकर्त्तुः पुरुषस्य फलभोक्तृत्वरूपमधिकारं यो विधिर्बोधयति, सोऽधिकारविधिरिति। यथा—'सोमेन यजेते' त्युत्पन्नस्य यागस्य 'ज्योतिष्टोमेन स्वर्गकामो यजेते' त्यनेन स्वर्गरूपकफलविशेषसम्बन्धः क्रियते। स्वर्गकामस्य पुरुषस्य चाधिकारो बोध्यते। तस्मादस्याधिकारविधित्वम्। यागादिकर्मसु मनुष्याणामेव भवत्यधिकारः। तथा योक्तं ग्रन्थकारेण—एषु सर्वकर्मसु मनुष्याणामधिकारो, नान्येषाम्, सामर्थ्याभावात्। मनुष्मेष्वपि नान्धस्याधिकारः। 'आज्यमवेक्षते' इत्यनेन विहितेऽऽज्यावेक्षणेऽसामर्थ्यात्। पङ्गूनामपि नाधिकारः, विष्णुक्रमणेऽसामर्थ्यात्। बधिरस्य श्रवणशक्त्यभावान्नाधिकारः। काणस्य पुरुषस्य विषये समस्ति मतभेदः। एकस्य चक्षुषः पर्याप्तिसम्बन्धेन गोलकद्वये प्रत्येकंपरिसमाप्तत्वेन चक्षुर्जज्यावेक्षणसम्भवात्। केषाञ्चिन्मते चक्षुषोऽव्यासज्यवृत्तित्वावच्छिन्नत्वं स्वीकृत्य खण्डचक्षुषः काणस्य नाधिकार इति।

## आधानाधिकारविचारः

'वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः शरदि वैश्यः' इत्यनेन वचनेन त्रैवर्णिकानामेवाधानेऽधिकारः। विशिष्यनिर्देशाभावाच्छूद्रस्य नाधिकार आधाने। 'वर्षासुरथकारोऽग्नीनादधीत' इत्यनेन यद्यपि रथकारसङ्करजातिविशेषस्याप्याधानं प्रतीयते, तथाप्याधानमात्र एवाधिकारः। सोऽपिलौकिकेऽग्नौ, न त्वाधानसिद्धेग्नौ। तस्या भावात्। अध्ययनसिद्ध-

विद्याभावाच्च' यावतिकर्मणि वेदोऽधिकारं प्रतिपादयति तावत्येव कर्मण्यधिकारः, न तु सर्वत्र । प्रमाणाभावात् ।

## स्त्रीणामधिकारविचारः

आधानाध्ययनयोः पुरुषाणामेवाधिकारत्वेन तत्सिद्धाग्निविद्याभावात् स्त्रीणामपि यागादौनाधिकार इति प्रतीयते तथापि स्वतन्त्राधिकाराभावेऽपि भर्त्रा सह विद्यत एवाधिकारः। उभयोः स्त्रीपुरुषयोः द्रव्याणां संसृष्टत्वात् द्रव्यत्यागात्मकेषु यागेषु पृथक् कर्तृत्वासम्भवात् । 'न[1] भर्त्रा विभजेत्' इत्यादिना विभागप्रतिषेधान्न पृथग्भावः समुचितः। तथा 'भार्या[2] दासश्च पुत्रश्च त्रय एवाधनाः स्मृताः' इत्यनेन स्वातन्त्यप्रतिषेधात्' 'पाणिग्रहणादि सहत्वं कर्मसु द्रव्यपरिग्रहेषु च' इत्यापस्तम्बवचनेनोभयोः सहत्वमपि बोध्यते। तस्मात्स्वतन्त्ररूपेणाधिकाराभावेपि भर्त्रा सहाधिकारोऽस्त्येवेति शम् ।

## शूद्राधिकारचर्चा

अध्ययनसिद्धविद्याभावादाधानसिद्धाग्न्यभावाच्च शूद्राणां नास्त्यधिकारः। तथा च 'वसन्ते ब्राह्मणोऽग्नीनादधीत त्रैवर्णिकस्यैवाधानेऽधिकारः अष्टवर्षं ब्राह्मणमुपनयीत' इत्यादिवचनैश्च त्रैवर्णिकस्यैवाध्ययनेऽधिकारः इति प्रतिभाति, तथापि यत्र विषयेऽऽज्ञापयदि वेदः शूद्रेभ्यस्तत्र विषयेऽध्ययनेऽस्त्येवाधिकारः। कुत इति चेत्, वेदप्रामाण्यात् । वेदानाञ्च स्वतः प्रामाण्यं सुसिद्धमेव । वेदाज्ञा च राजाज्ञावत्परिपालनीया। अन्यूनानतिरिक्तत्वेन भवति पालनं राजाज्ञायाः। तथैवात्रापि यावन्मात्रार्थविषयेऽधिकारः प्रतिपादितस्तावन्मात्रस्यैवाध्ययनं कर्त्तव्यमिति । न तेन सर्वत्राधिकारो बोध्यः। यथा 'वास्तुमध्ये चरुं निर्वपेत्, एतया निषादस्थपतिं याजयेत्' इति वाक्येन शूद्रविशेषस्य निषादस्यास्त्येवाधिकारः । नात्र निषादानां स्थपतिरिति षष्ठीसमासस्वीकारेण त्रैवर्णिकानामेव ग्रहणम्। तत्र लक्षणादिदोषप्रसङ्गात् । तस्मान्निषादश्चासौस्थपतिश्चेति कर्मधारयसमासे स्वीक्रियमाणे निषादजातिविशेषएवाधिक्रियत इति दिक् ।

---

१. गो० ध० सू०    २. मनु० ८.४.१६

'ये यजमानास्त एवर्त्विजः' इत्यादिवचनेन सत्रेषु ब्राह्मणनामेवाधिकारस्तथैव' राजासूयेन स्वाराज्यकामो यजेत' इत्यनेन विहिते राजसूययागे क्षत्रियमात्रस्यैवाधिकारः । एवमेव 'वैश्यो वैश्यप्रकारेण वर्णचतुष्टयस्य स्वस्वाधिकारविशिष्टे कर्मण्यधिकार इति न वेदानां कुत्रापि पक्षपातः, परन्तु यथामर्यादमेव गुरुभिरध्ययनं कर्त्तव्यम्, न सर्वत्र स्वेच्छया प्रवर्त्तितव्यमिति शास्त्रमर्यादा ।

अयमत्रविशेषः । यथा सत्रेषु ब्राह्मणस्यैवाधिकारो न क्षत्रियादीनाम्, तथैव राजसूये क्षत्रियस्यैवाधिकारो, न ब्राह्मणादित्रयाणाम् । वैश्यस्तोमे वैश्यस्यैवाधिकारो, ब्राह्मणादित्रयाणाम् । निषादेष्टचाञ्च निषादस्यैवाधिकारो न ब्राह्मणादित्रयाणामिति सर्वेषां वर्णानामत्र जातस्समावेश, परन्तु शास्त्रमर्यादा नोल्लङ्घनीया । शास्त्रमर्यादामाश्रित्य कार्यसम्पादने न केषामपि कुत्रापि क्लेश इति दिक् ।

एवमेव तिरश्चामपि विद्याभावादर्थज्ञानात्कालान्तरीयफलकामनाभावाच्च नाधिकारः । देवतोद्देशेन द्रव्यत्यागाभावाद् देवानामप्यनधिकार । एककालावच्छेदेनेन्द्रद्वयासम्भवादिन्द्रान्तरोद्देशेनापि द्रव्यत्यागासम्भवात् । अतीतकालकेन्द्रे वर्त्तमानसमये इन्द्रत्वाभावात् । ऋषीणामधिकारविषये भाष्यवार्त्तिकयोर्मतभेदोऽवलोक्यते । भाष्यकारमते ऋषीणाभृषेरभावात् 'आर्षेयं वृणीते' इत्यनेन विहितार्षेयवरणाभावादनधिकार इति । वार्त्तिककारमतेऽनादौ संसारे भृगुप्रभृतीनामृषीणां तत्पूर्वकालीन भृग्वादिवरणसम्भावेनास्त्येवाधिकार इति ।

## विग्रहभावादित्यत्र स्वकीयं मतम्

मीमांसकानाम्मते देवानां न भवति विग्रह इति लोकप्रवादः । कुत्रचिद्ग्रन्थेऽप्येवमेव दृश्यतेऽपि । तन्न रोचतेऽस्मभ्यम् । करचरणादियुक्तानाभिन्द्रादिप्रभृतीनां देवानामनेकत्र प्रतिपादितत्वात् । सम्पूर्णे यजुर्वेदे देवानामनेकविधा स्तुतिरेव दृश्वते । 'इन्द्रो वृत्राय वज्रमुदमच्छत्' इत्यत्र कराभावे वज्रोदयच्छनं कथं सम्भवम् । करचरणनेत्रप्रभृतीना—मङ्गानामपि दृश्यते वर्णनम् । तत्कथं संगंस्यते । अर्थवादत्वादिति चेत् । न अर्थवादानां विधिशेषत्वान्निषेधशेषत्वाद्वा विधिनिषेधवाक्यकल्पनमावश्यक भवेत्' ततश्च गौरवापत्तिः प्रसज्येत । यत्र स्वार्थप्रतिपादने न भवति

सार्थक्यम्, विधिवाक्येन सहैकवाक्यतयैव सार्थक्ये सम्भवति सत्यर्थवादत्व-कल्पनमुचितम्, न सर्वत्र स्वेच्छयार्थवादत्वकल्पनं युक्तम्। वेदानामध्ययनेन स्पष्टमेव देवताविग्रहः प्रतीयते। कथं तस्यापलाप इति। विग्रहाभावादित्यस्य कर्मानुष्ठानकाले विग्रहाभावादित्येवार्थः, न तु, सर्वथा विग्रहाभावादिति। भगवता भाष्यकारेण पक्षत्रयमुपस्थाप्य विचारितम्। अर्थो देवतेति प्रथमः पक्षः। शब्दविशिष्टोऽर्थो देवतेति द्वितीयः पक्षः। शब्दो देवतेति तृतीयः पक्षः। तत्रपूर्वोक्तं पक्षद्वयं निरस्यान्तिमं पक्षं समर्थितवान्। तत्राप्यनुष्ठानकाले शब्दानां देवतात्वमर्थात् शब्दद्वारकमेव तेषां पूजनादिकं भवति, न तु तेषां विग्रहखण्डने तात्पर्यम्। तथाहि भाष्यम्[1]—देवतायाश्च यज्ञसाधनभावो न रूपेण भवति। केन तर्हि सम्बन्धिना शब्देन। यथाध्वर्युर्हस्ताभ्यामुपकरोति, एवं देवता शब्देनोपकरोति। यथा होतुः पाणौ द्विर्लेपेनोपस्तृणातीति पाणिसम्बन्धेऽपि हौत्रैवोपकरोति, एवं सम्बन्धिना शब्देनोप कुर्वती देवतोपकारिणो गम्यते। ततश्च देवतायामप्युपकारिण्यां चोदितायां शब्दस्यैव यज्ञे समवायः। तस्मान्न शब्दोऽर्थप्रत्यायनार्थमुच्चारितः' इत्यादिः। भाष्यांशस्यास्य व्याख्या तन्त्ररत्ने दशमाध्यायस्य चतुर्थेपादे द्रष्टव्या। अयं भावः—सम्बन्धिना शब्देनेत्युक्ते शब्दस्तस्य च सम्बन्धस्तयोश्च वर्त्तत इत्यवभासते। सम्बन्धश्च द्विष्ठ एव भवति। शब्दस्य सम्बन्धी कश्चिदर्थ एव भविष्यति, न लौकिकपुत्रपौत्रादयः। योऽर्थः, स एव करचरणादिसम्वलितविग्रहविशेष इति सेत्स्यति। तथा च भाष्योक्तदृष्टान्तेनैव स्पष्टी भवति। अत्र न किमपि वक्तव्यमवशिष्यते। देवता स्वसम्बन्धिना शब्देनोपकरोतीति कथनेनैव सुस्पष्टं भवति यच्छब्दातिरिक्तं किमपि तत्त्व वर्त्तते। तत्तत्त्वं किं भवितुमर्हतीति जिज्ञासायां देवतेति वक्तुं प्रभावामोवयम्। भाष्यास्यास्य मूलं तैत्तिरीयब्राह्मणेऽवलोकयितुं शक्यते। तत्रैकाख्यायिका वर्त्तते। देवानां किञ्चदनुष्ठानमासीत्कर्त्तुम्। तत्र विचारितं तैर्यदग्न्यावाहनापेक्षयास्मासु विराजमानस्यैवाग्निदेवस्य पूजनादिकं वरम्। तत्र सर्वसम्मात्याग्निदेवस्य पूजनादिकं जातम्, परन्तु कर्मानुष्ठानस्य साफल्यं नैव सम्भवत्। कथन्न साफल्यमिति समीक्षणे सति तैर्निर्णीतं यदावाहनपूर्वकमेव देवानां पूजनमावश्यकम्, प्रत्यक्षरूपेण विराजमानस्य देवस्य। तत एव कर्मानुष्ठानं भवेत्सफलमिति। सर्वप्रथमं तत एव सिद्धान्तः सञ्जातः 'परोक्षप्रिया हि देवाः' इति। ततश्चानेकत्रोपनिषत्सु वाक्यमिदं प्रलुक्तं दृश्यते समप्रसङ्गे।

---

१. शा. भा. १०.३२-२४

अनख्यायिकपरितनं भाष्यं तुलनीयं वर्त्तते। एतन्मूलकमेव भाष्यमिति प्रति भाति तस्मान्न सर्वथा देवविग्रहाभावः, अपि तु कर्मानुष्ठानकाले साक्षाद्विग्रहाभावः, तदेव सम्बन्धिना शब्देनोपकरोति यागमिति देवतावादरहस्येऽस्माभिर्निरुपितमिति दिक्।

## प्रयोगविधिनिरूपणम्

प्रयोगप्राशुभावबोधकोविधिः प्रयोगविधिः। प्राशुभावः शैघ्रयम्। स चाङ्गवाक्यैकवाक्यतामापन्नः प्रधानविधिरेव। क्रमपठितेषु वाक्येष्वेकस्यानुष्ठानानन्तरमपरस्यानुष्ठाने विलम्बे प्रमाणाभावादव्यवहितोत्तरमेवानुष्ठानमिति। विलम्बानुष्ठाने नास्ति किञ्चिदपि प्रमाणम्। अर्थात् प्रधानक्रममाश्रित्वैवाङ्गानामनुष्ठानमिति यावत्। क्रमो नाम विततिविशेषः पौर्वापर्यो वेत्यापदेवः। 'एवमुत्पन्नस्य विनियुक्तस्य फलविशेषसम्बन्धस्य च कर्मणः साङ्गस्य प्रयोगं बोधयन् यो विधिः, स प्रयोगविधिरिति जीवदेवः। उत्पन्नस्योत्पत्तिविधिना विनियुक्तस्य विनियोगविधिना फलविशेसम्बद्धस्याधिकारविधिनेत्यर्थः। यथा—अग्निहोत्रादौ अस्यापि विधेः सहकारिणि षट् प्रमाणानि भवन्ति। यथा—श्रुत्यर्थपाठस्थानमुख्यप्रवृत्त्याख्याति। प्रमाणैरेतैः सहकृत एव। प्रयोगविधिः साङ्गं प्रयोगमनुष्ठापयति। श्रुत्यादीना स्वरूपादिकं ग्रन्थतो ज्ञेयम्।

## अतिदेशस्वरूपम्

अन्यत्र श्रुतानामङ्गानामन्यत्र तदतिदेशनमतिदेशः इति जीवदेवः। भाष्य वचनमत्र स्वयमेव प्रमाणयति—

**प्रकृतात्कर्मणो यस्मात्तत्समानेषु कर्मसु।**
**धर्मप्रदेशो येन स्यात्शोदेश इति स्मृतः॥** इति

स चातिदेशस्त्रिविधिः—वचनातिदेशः, नामातिदेशश्चोदनालिङ्गातिदेशः। समानमितरच्छयेनेति प्रथमः। अत्रानेन वचनप्रामाण्येन भवत्यतिदेशः। उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति, मासं दर्शपूर्णमासाभ्यां यजेतेत्यादिकं द्वितीयम्। नित्याग्निहोत्राद्यपेक्षया कर्मान्तरणीमानि तृतीयत्वतिदेशश्चोदनागतेन लिङ्गेन तदर्थगतेन वा सामान्येन कल्प्यमाने सौर्ये। अयं भावः—'अग्नयेत्वा जुष्टं निर्वयामि' इति। चोदना विधिस्तद्गतं लिङ्गं

निर्वपति वर्त्तते । तेनाग्निदेवतोद्देश्यकयागस्य सूर्यदेवतोद्देश्यके यागेऽतिदेश इति संक्षेपः।

## ऊहनिरूपणम्

ऊहो नाम—कार्यवशेनान्यथाभावः। कार्यवशेन पदपरिवर्त्तनमिति यावत्। न्यायमालात्र प्रमाणयति—

**प्राकृतस्थानपतितपदार्थान्तरकारितः।**
**ऊहः प्रयोगो विकृतावूह्यमानतयोदितः ॥इति**

ऊहश्च त्रिविधः—मन्त्रोहः, सामोहः संस्कारोहश्चेति। 'अग्नये त्वा जुष्टं निर्वपामि' इत्यग्निप्रकाशकोऽयं मन्त्रः। परन्तु यदि सूर्य देवता प्रकाशनं कर्त्तुमिच्छति कश्चिज्जनस्तर्हि अग्निपदस्थाने सूर्यपदं संयोज्य चतुर्थ्या च विपरिणलप्य 'सूर्यायत्वा जुष्ढं निर्वपामि' इत्यूहो भवति। ततश्च सूर्यदेवताप्रकाशत्वं भवति तस्य मन्त्रस्येति प्रथमः। सामोहस्तु—योन्यां पठितस्य साम्न उत्तरयोर्वचनातिदेशे सति तद्वशेनान्यथा भावः। यथा—'अभित्वा शूर नोनुम' इत्यस्यामभिवत्यामृचि रथन्तरं साम पठितम्। तेनेयं योनिरूच्यते। 'तद् रथन्तरं पृम्ठं भवती'ति वाक्येन पृष्ठस्तोत्रार्थतया विहिमित्यादिः। संस्कारोहस्तु—प्रकृतावेकस्मिन् द्रव्येऽनुष्ठितानां सस्काराणां विकृतौ प्रागुक्तपञ्चमानान्यतममानेन तत्कार्यापन्नेऽन्यस्मिन् कारणादन्यथाभावः। यथा—व्रीहिषु कृतानामवद्यातादीनां 'नैवारश्चरुरि'ति प्रत्यक्षविधिना नीवारेषु व्रीहिकार्यापन्नेषु क्रियमाणानामदृष्टिप्रहारादि-रूपोऽन्यथाभावो वैतुष्यादिकार्यवशेनेत्यर्थः। कुत्रचिदूहस्य वाधोऽपि भवति। स च वाधस्त्रेधा विभक्तः—प्रत्याम्नानात् अर्थलोपात्, पर्युदासाच्च।

तत्र नीवारैर्व्रीहिबाधः प्रथमः। 'प्राजापत्यं घृतेश्चरुं निर्वपेच्छत-कृष्णलमायुष्कामः' इति द्वितोयः। पित्र्येष्टौ 'न होतारं वृणीत' इति तृतीयः। पर्युदागबलादतिदिष्टस्य होतृवरणस्य प्रकृतिविकृत्युभमसाधारणोऽपि भवति वाधः। तथानि—नित्यं कर्म नैमित्तिककाम्याभ्यां वाध्यते। दर्शपूर्ण-मासयोर्यथा—'पञ्चदशसामिधेन्यो भवन्ति' इत्यनेन विहितेन नैमित्तिकेन साप्तदश्येन वाध्यते। एवमेव 'एकविंशतिरनुब्रूयात्प्रतिष्ठाकामस्य' इत्यनेन विनितेन काम्येनैकविंशत्या अपि पाञ्चदश्यं वाध्यते। काम्यनैमित्तिकयो-र्काम्येन नैमित्तिकं बाध्यते। यथा—अत्रैव 'सप्तदश वैश्यस्य' इत्यनेन

विहितं नैमित्तिकं साप्तदश्यं 'एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्ये इत्यनेन विहितेन काम्येन विंशतिसंख्याकेन बाध्यते। क्रत्वर्थपुरुषार्थमध्ये पुरुषार्थेन क्रत्वर्थं बाध्यते। यथा—गोदोहनेन चमसबाधः। सामान्यविशेषयोर्मध्ये सामान्यं विशेषेण बाध्यते। यथा—'आहवनीये जुहोति' इत्यमेन विहितस्याहवनीयस्य 'पदे जुहोत' इत्यनेन विहितेन पदाधिकरणकेन होमेन भवति बाधः। एवमेव वैयाकरणनिकायेऽपि '[1]वृद्धिरेचि' '[2]एङिपररूपम्' इत्यादावनेकत्र द्रष्टुं शक्यते। सावकाशनिरवकाशयोर्निरवकाशेन सावकाशो बाध्यते। यथा—उपांशु चरन्ती'त्यादिविहितमुपांशुत्वं 'यावत्या वाचा कामयीत' इत्यादिभिर्विशेषस्वरैरवकाशैर्बाध्यते। निरवकाशत्वमेवात्र मूलम्। '[3]निरवकाशो विधिरपवादः' पूर्व[4]परनित्यान्तरङ्गापवदानामुत्तरोत्तरं बालीयः' इति हि वैयाकरणाः। अपवादत्वाच्च बलवत्त्म्। अत्रैवान्या अपि परिभाषाः, यथा—'[5]अन्तरङ्गादप्यपवादो बलीयान्' 'पूर्वं[6] ह्यपवादाः अभिनिविशन्ते पश्चादुत्सर्गाः' '[7]प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते'त्यादिः'। उत्सर्गः सामान्यम्। प्रकल्प्यप्रबाध्य परित्यज्येति वार्थः। अतएव निरवकाशस्य बलीयस्त्वमिति बोध्यम्। पूर्वापरयोःपरस्य बलवत्त्वम्। यथा—उद्गातृप्रतिहर्त्रपच्छेदे। एवमेव परिभाषेन्दुशेखरे पूर्वपरेत्यादौ पूर्वात्परं बलवत्। '[8]विप्रतिषेधे परं कार्यम्' इति सूत्रमेव मूलम्। क्वचित्पूर्वस्यापि बलीयस्त्वम्। अपच्छेदवाक्यमेवोदाहरणम्। अयं भावः—यत्र पूर्वनैरपेक्ष्येणैवात्मलाभस्तत्र पौर्वापर्ये परस्य बलीयस्त्वम्। यत्र तु पूर्वसापेक्ष आत्मलाभस्तत्र पूर्वं बलीय इति भावः। अङ्गप्रधानयोः समवाये प्रधानस्य बलवत्त्वम्। यथा—अग्निहोत्रअवणीनिर्वापयोः। अत्र दिर्वापस्य प्रधानत्वेनाग्निहोत्रहवण्यनुरोधेन न बाधः। अपित्वग्निहोत्रहवण्या बाधः। व्याकरणेऽपि '[9]प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः' इति दृश्यते परिभाषा। प्रधानङ्गाङ्गाङ्गयोरङ्गाङ्गं बाध्यते। प्रधानाङ्गेनेत्यर्थः। यथा—'य इष्टया पशुना' इत्यत्र सोमाङ्गपर्वकालेन दीक्षणीयाङ्गपर्वकालबाधः। अत्राप्यङ्गाङ्गापेक्षया प्रधानाङ्गस्य प्रधानत्वमेव कारणम्। यद्यपि प्राकृतेन वैकृतस्य भवति बाधस्तथापि कुत्रचित्समुच्चयोऽपि दृश्यत एव। यथा—नारिष्ठहोमप्रसङ्गे। इयञ्च बाध्यबाधकभावमर्यादा।

---

१. पा. सू. ६.१.८८ २. पा. सू. ६.१.९४ ३. वाचनिकत्
४. परि. शे. २.३८ ५. परि. शे. २.५७ ६. परि. शे. २.६३
७. ,, ,, २.६४ ८. पा. सू. १.४.२ ९. ,, ,, ३.११७

## तन्त्रनिरुपणम्

तत्र पूर्वन्तावद्भाष्यकारीयं तन्त्रलक्षणं प्रस्तूयते—यत्सकृतकृतं बहूनामुपकरोति, तत्तन्त्रमित्युच्यते । तदुक्तमपि--

'[1]साधारणं भवेत्तन्त्रं परार्थेत्वप्रयोणक' । इति

तत्रापि प्रकारत्रयं वर्त्तते--तन्त्रेण प्रयोगानुष्ठानमिति प्रथमः । आवृत्त्या प्रयोगानुष्ठानमिति द्वितीयः । परार्थोपजीवनेनानुष्ठानमिति तृतीयः । एवमेव तन्त्रमपि त्रिविधम्--फलतन्त्रम्, पदार्थतन्त्रम्, अनुष्ठानतन्त्रञ्च । 'राजा राजसूयेन स्वाराज्यकामो यजेत' इत्यत्र फलतन्त्रम् । अत्र फलैक्याद् बहूनामिष्टिपशुसोमनामेकेनैव नाम्ना व्यवहारादेवत्वेन व्यवहारः । समे-दर्शपूर्णमासाभ्यां यजेत' 'पौर्णमास्यां पौर्णमास्या' 'दर्शपूर्णमासयोश्चत्वार ऋत्विजः' इत्यत्र पदार्थतन्त्रम् । एककालानामेकदेशकालकर्त्तॄणां यदङ्गभूत-प्रयाजाद्यनुष्ठानसाधारणं तदनुष्ठानतन्त्रमिति विवेकः ।

## प्रसङ्गनिरूपणम्

'अन्यार्थेनान्यस्य तत्प्रयुक्तिशक्तस्योपकारः प्रसङ्गः' इति ।
'[2]तदुक्तम् एवमेव प्रसङ्गः स्याद्विद्यमान स्वके विधा' इति ।

जामात्रर्थं कृतो दीपः शिष्यस्योपकरोतीति । स च त्रिविधः—अनुष्ठान-प्रसङ्गः, पदार्थप्रसङ्गः, शास्त्रप्रसङ्गश्चेति । तत्र पश्वर्थप्रायाजाद्यनुष्ठानेन पशुपुरोडाशाद्युपकारोऽनुष्ठानप्रसङ्गः । सौमिक्यावेद्या सोमान्तर्गतेष्टि-पशूनामुपकारः पदार्थप्रसङ्गः । उदाहरणादिकन्तु ग्रन्थतोज्ञेयम् ।

## प्रतिनिधिविचारः

तत्र मुख्याभावे प्रतिनिधिग्रगणं भवतीति सिद्धान्तः । मुख्यसद्भावे न कुत्रापि प्रतिनिधिग्रहणं श्रूयते । तत्रापि सदृशावयवयुक्तस्यैव भवति प्रानिनिध्यम् । यथा—'व्रीहि भर्यजेत' इत्यनेन व्रीहेर्विधानं भवति । तस्या-

---

१. शा. भा. ११.१.१    २. शा. भा. १२.१.१

भावे तत्सदृशावयवविशिष्टय नीवारस्य भवति ग्रहणम्, न तु यवस्य। तस्य विसदृशत्वात्। 'व्रीहिभिर्यक्ष्ये' इति सङ्कल्पानन्तरं यदि यवोपदनं करोति तर्हचनृतवदनसंत्त्वात् 'नानृतं वदेत्' इति निषेधातिक्रमः स्यात्। तस्मान्न यवोपादानम्। सदृशायववेष्यपि निषिद्धं न प्रतिनिधेयम्। यथा च—'अयज्ञिया वै भाषा वरकः क्रोद्रवाश्च' इति। प्रत्यक्षवचननिषेधेन न प्रतिनिधियोग्यता। प्रतिनिधीनां स्वरूपतो याङ्गात्वाभावेऽपि तद्गतमुख्य-सदृशावयवानामङ्गत्वम् तथापि यज्ञसम्बन्धस्तु भवत्येव। पूर्व मुख्याभावे प्रतिनिधिना यागाद्यरम्भस्ततश्च मुख्योपलब्धिस्तर्हि पुनरपि मुख्यग्रहणमेव कार्यमिति शास्त्रमर्यादा। निमित्तापाये नैमित्तिकस्याप्यपायात्। पूर्वं प्रतिनिधिना प्रधानकार्यसम्पादनेऽपि मुख्यलाभे सति प्रधानावृत्तिः कर्त्तव्या। अङ्गाङ्गप्रधानाङ्गयोः प्रधानाङ्गस्य वलवत्त्वात्। क्वचिच्च वाचनिकं प्रतिनिधित्वम्, यथा—'यदि सोमं न विन्देत फूतीकानभिषुणुयात्' इति। तत्रापि सुसदृशावयवमन्दसदृशावयवयोः सुसदृशावयवस्यैव ग्रहणम्। प्रतिनिधावषवादोऽपि दृश्यते। यथा— देवतायाः प्रतिनिधित्वं न भवति। यस्मिन् यागे येन शब्देन यस्याः देवतायाः वर्त्तते विधानम्, तत्र तेनैव शब्देनोद्दिष्टा भवति देवता। अतएव देवतापर्यायस्यापि न भवति ग्रहण-मिति स्थितिः। मन्त्रणामपि न भवति प्रतिनिधिः। एवमेव यजमानस्य प्रोषितस्यान्यकार्यव्यापृतस्य मृतस्य वा न भवति प्रतिनिधिः। प्रतिनिधि-भूते यजमाने यजमानत्वाभावात्। यजमानत्वं स्वामिपर्यायत्वापरपर्यायम्। स्वामित्वञ्च कर्मजन्यफलभोक्तृत्वम् तच्च न तत्र तिष्ठतीति विशेषः। पत्न्या अपि तत्प्रतिनिधित्वं न सम्भवति तस्या अस्वतन्त्रत्वादनग्नेश्च कर्त्तुत्वाभावान्न प्रतिनिधित्वम्। सत्रेषु तु विशेषः। तत्र यजमाने मृते सति तत्संख्यापूरणाय प्रतिनिधित्वमस्त्येव। यथाशक्तीत्युपबन्धात्। सत्राणां यद्यपि काम्यत्वं वर्त्तते तथाप्यारब्धानां नित्यत्वमेव स्वीकुर्वन्ति। एवमेयाध्वर्यवादिकर्त्तॄणां दृष्टार्थविघातिदि क्रियायाः गुणस्य चास्ति प्रति-निधिरिति संक्षेपः।

## प्रायश्चित्तम्

विधिसहकृतकर्मणां स्वरूपं प्रतिपाद्याधुना यत्किञ्चिन्निमित्तेन तत्र वैगुण्यापादकदोषसम्भावना, तन्निवृत्त्यर्थं यानि कर्माणि शास्त्र-विहितान्यनुष्ठेयानि च सन्ति, तान्येय प्रायश्चित्तानि 'तेषां स्वरूपाण्यत्र संक्षेपेक्ष प्रतिपाद्यन्ते।' प्रायः पापं विजानीयाच्चित्तं तस्य विशोधनमिति

केनचिदुक्तम्। [1]पापक्षयार्थं विहितं कर्म प्रायश्चित्तम्। तच्च नैमित्तिको धर्मः। प्रायश्चित्तं पापक्षयमात्रसाधनं कर्मेति शूलपाणिनोक्तम्।

[2]प्रायो नाम तपः प्रोक्तं तपो निश्चय उच्चयते।
तपो निश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम्॥ इति

एवमेव मनुनाप्युक्तम्—

[3]अकुर्वन्विहितं निन्तिञ्च समाचरन्।
प्रसक्तश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः॥

अत्रैव याज्ञवतक्योऽप्याह—

[4]विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्।
अनिग्रहाच्चेन्द्रियायां नरः पतनमृच्छछि॥ इति

प्रायश्चित्तस्यावश्यकर्त्तव्य प्रतिपादिता—

[5]चरितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये।
निन्द्यैर्हि लक्षणैर्युवता जायन्तेऽनिष्कृतैनसः॥

[6]तस्मात्तेनेह कर्त्तव्यं प्रायश्चित्तं विशुद्धये।
एवमस्यान्तरात्मा च लोकश्चैव प्रसीदति॥

एतानि च प्रायश्चित्तानि तत्प्रयोजनानि च कर्मविपाकविषयाणि। अत्र च यत्प्रायश्चित्तं तत्कर्मगतवैगुण्यनिवृत्तिसम्पादकत्वे सति साद्गुण्यजनकत्वे-नार्थवत्। अयं भावः—प्रायश्चित्तमिदं तत्तत्कर्माङ्गभूतम्। अतएव तत्कर्म-पूरकत्वेनापूर्वजन्मनि सहायकत्वात्कर्माङ्गमिति। अन्यथा कर्मवैगुण्येनापूर्व-वैगुण्यम्। तद्वैगुण्येन फलवैगुण्यमित्यार्थः। तस्मात्साङ्गतासिद्धयर्थं प्रायश्चित्तमावश्यकम्। अतएव 'यस्य सर्वाणि हवींषि नश्येयुः' इत्यादौ शेषेण हविषा नावदानम्, अपि त्वाज्येनैव कर्मसमापनीयं भवति। अत्र

---

१. धर्मशास्त्रकोष पृ० ५२२ २. अङ्गिरस स्मृति ४-११
३. मनु ११-४४ ४. यांज्ञ. स्मृ. ३.२१९
५. मनु. ११-५३ ६. " " ३.२२०

भाष्यकारवार्त्तिककारयोर्मतवैभिन्न्यं समयलोक्यते । भाष्यकारमते पात्रद्वयव्यासक्तस्य हविषः पर्याप्तिसम्बधावच्छिन्नत्वेन पृथक् पृथक् हविष्ट्वं वर्त्तते । अतोऽर्द्धनाशेऽप्यर्द्धेन यागसम्पादनं कार्यम् । वार्त्तिकमते पात्रद्वयव्यासक्तस्य हविसो व्यासज्यवृत्तिधर्मावच्छिन्नत्वादेकस्मिन् वैगुण्ये उभयत्रवैकुण्यसम्भवादाज्यग्रहणमावश्यकम् । एवमेव स्विष्टकृदादौ हविर्नाशे न शेषेणावदानम्, अपि त्वदृष्टसम्पादनार्थमाज्यस्य ग्रहणम् । 'यस्य पुरोडाशं क्षायति' इत्यादावपि कृत्स्नदाहे प्रयोगात्मकं प्रायश्चित्तम् । एवमेव 'भिन्ने स्कन्ने जुहोती' त्यादावपि भेदनस्यैव प्रायश्चित्तनिमित्तत्वं बोध्यमिति । अत्र प्रयोगविधावङ्गवाक्यैकवाक्यतापन्नत्वेन कल्प्यत्वादूहादिवदवेदत्वं राणककते मिश्रमते लिङ्गादिप्रमाणकल्प्यश्रुतिवद्वेदत्वमिति भेदः, इति संक्षेपः ।

## नियमविधि

'नियमः पाक्षिके सति' इति वार्त्तिकग्रन्थमनुसृत्यैकस्यकस्मिन् पक्षे प्राप्तत्वादपरस्मिन् पक्षेऽप्राप्तत्वेन पाक्षिको प्राप्तिमत्त्वान्नियमविधित्वम् । अतएवोक्तं न्यायप्रकाशे—'पक्षेऽप्राप्तविधिरिति' । उदाहरणं यथा—'व्रीहीनवहन्ती'ति । अत्रावघातस्य वैतुष्यमेव प्रयोजनम् । तत्पूर्वकत्वात्तण्डुलनिष्पक्षेः । वैतुष्यनिष्ठकार्यतानिरूपिता कारणतानेकत्रावघातारमकुट्टननखविदलनादिषु वर्त्तते । तत्रैकस्यग्रहणेऽन्यस्य त्यागोऽवश्यम्भावी । अतएव पाक्षिकी प्राप्तिरित्युच्यते । नखविदलनादिपक्षेऽवघातस्यप्राप्तत्वेनावघातकर्त्तव्यतानेन विधिना विधीयते । अतोऽवघातेनैव वैतुष्यं सम्पादयेन्नान्येन प्रकारेणेति । अतएव च फलितार्थं वदन्ति—'अवन्यादेवेति' नियमः । न च नखविदलनादीनामेव ग्रहणं स्यादिति वाच्यम् । अवघातस्य विधिप्रतिपादितत्वेन कल्पितत्वान्नखविदलनादीनाञ्च कल्प्यत्वात् । कल्पितकल्प्ययोर्मध्ये कल्पितस्यैव प्राबल्यात् । अस्य विधेर्विधावेव तात्पर्य मिति विशेषः ।

## परिसंख्याविधि

परिसंख्येत्यत्र संख्याशब्दो ज्ञानपरः । परिचोपसर्गो वर्जनार्थे । वर्जनं निवृत्तिः । अतो निवृत्त्यात्मकज्ञानसम्पादकोऽयं विधिः । अतएव चास्यविधेः निवृत्तावेव तात्पर्यमिवि विज्ञाः । अयमेवोभयर्नियम परिसंख्ययोर्भेदः ।

जीवदेवोऽप्येवमेव वदति—इतरनिवृत्तिफलको विधिः परिसंख्याविधिरि'ति। परिवर्जने, संख्या बुद्धिरिति। वर्जनबुद्धिरेतुरित्यर्थः। वार्त्तिके च 'तत्र चान्यत्र च प्राप्ते परिसंख्येति गीयते' इति। इदमेव वार्त्तिकमनुसृत्य न्यायप्रकाशे—उभयस्य युगपत्प्राप्तावितरव्यावृत्तिपरो विधिः परिसंख्या-विधिरिति। परिसंख्या च द्विविधा भवति—शाब्दी लाक्षणिकी च। शाब्दी एव न्यायप्रकाशे श्रौतीशब्देन व्यवहृता। 'अत्र ह्ययववपन्ती' त्यत्र श्रुतेनैवकारेण पवमानातिक्तस्तोत्रव्यावृत्तेरभिधानाच्छाब्दी परिसंख्या कथ्यते। 'पञ्च पञ्चनखाः भक्ष्या' इत्यत्र लाक्षणिकी। अत्र व्यावृत्तेरभि-धायकशब्दाभावात्। अत्र पञ्चनखापञ्चनखनाञ्च रागतः भक्षणप्राप्ता-प्राप्तवपञ्चनखानां निवृत्तिः लक्षणयाश्रीयते। एवकारादिपदाभावात्। अतएव त्रिदोषग्रस्ता भवतीत्युच्यते। त्रयो दोषाश्च—श्रुतहानिरश्रुत-कलनाप्राप्तवाधश्चेति। अत्र श्रुतस्य पञ्चनखस्य हानिः। अश्रुतपञ्च-नखेतर भक्षणनिवृत्तिकल्पना, रागप्राप्तभक्षणावाधश्चेति ज्ञेयम। अत्रापि पूर्वोक्तौ द्वौ शब्दनिश्ठौ। अन्त्यश्चार्थनिष्ठ इति विवेकः। विशेषश्चात्र ग्रन्थतोऽवसेवः।

## निषेधनिरूपणम्

यथा धर्मजिज्ञासावश्यकी तथैवाधर्मजिज्ञासाप्यावश्यकीति पूर्वमुक्तम्। जिज्ञासा च निषेधविषया। येन वाक्येन यन्निषिध्यते, तस्यानुष्ठानेऽधर्मं एव भविष्यति। अतएव ततो निवृत्तिरावश्यकी। यथैव विधीनां प्रवर्त्तनायां तात्पर्यं तथैव निषेधवाक्यानां निवर्त्तनायां तात्पर्यम्। अतएव ग्रन्थकारेणोक्तम्—निषेधानां निवर्त्तनावोधकत्वेनाधर्मे प्रामाण्यमिति। न्यायप्रकाशेऽपि—'अनर्थहेयो कर्मणः सकाशात्पुरुषस्य निवृत्ति करत्वेन निषेधानां पुरुषार्थानुबन्धित्वमि'ति। 'यजेतस्वर्गकामः' इत्यनेन श्रेयः साधनत्वमाक्षिप्य यागादौ प्रवर्त्तयन्ति तथैव 'न कलञ्जं भक्षयेत्' इत्य-नेनानर्थहेतुत्वमाक्षिप्य पुरुषं निवर्त्तयष्ति। तस्मान्निवर्त्तनाप्रतिपादकत्वं निषेधानां स्पष्टमेव सिद्धयति। यथा विधिस्थले प्रवर्त्तना प्रवृत्त्यनुकूलो व्यापारस्तथैव निषेधस्थले निवर्त्तना निवृत्त्यनुकूलो व्यापारः। निवर्त्तना च नञर्थः। रागवशात्कश्चिद् ब्राह्मणहननादौ प्रवृत्तस्तं प्रति 'न ब्राह्मणं हन्यात्' इति वाक्यघटकोभूतो नञ् निवर्त्तनां प्रतिपाद्य पुरुषं ब्राह्मण-वधान्निवर्त्तयति 'अयं मां निवर्त्तयतो'ति प्रतीतेः सत्त्वात्। अत्र नैयायिक नाम्मते प्रादयो द्योतकास्चादयो वाचकाश्च भवन्तीति व्यवस्था।

वैयाकरणानाम्मते नैतादृशो भेदः, अपि तु प्रायः सर्वेषां द्योतकत्वमेवेति। तथा चोक्तम्—

[1]द्योतकाः प्रादयो येन निपाताश्चादयस्तथा।
उपास्येते हरिहरौ लकारो दृश्यते यथा॥ इति

येन हेतुना प्रादयो द्योतकास्तेनैव हेतुना चादयो निपातास्तथा द्योतका इत्यर्थः। एवमेव—

[2]निपातानां वाचकत्वमन्वयव्यतिरेकयोः।
युक्तं वा न तु तद्युक्तं परेषां मतमेव नः॥ इति

परेषां मीमांसकादीनां मतं न युक्तमित्यर्थः। अतएव वैयाकरणमते प्रायः द्योतकत्वमेव। मीमांसकानाम्मते प्रादीनां चादीनाञ्च द्योतकत्वं वाचकत्वं वेत्यत्र नास्त्याग्रह इति सामान्यस्थितिः। अतो 'न ब्राह्मणं हन्यात्' इत्यत्र नञो द्योतकत्वं वा भवेद्वाचकत्वं वा, परन्तु निवर्त्तनयामेव तात्पर्यम्। परन्त्वत्र जीवदेवः स्पष्टमेवोदीत्यति—'निपातानां तु न द्योतकत्वं किन्तु स्वातन्त्र्येणार्थावबोधकत्वम्'। 'न ब्राह्मणं हन्यादि' त्यस्य 'यद् ब्राह्मणं हन्यात्, तन्नेत्यर्थः। नञर्थस्य विध्यन्वये निवर्त्तनाभिधेया। स च निषेध्यस्यानिष्टहेतुत्वं विना न संघटत इति तदाक्षिप्यते। ततश्चानिष्ट-हेतुताज्ञानं निवृत्तिश्च। अनिष्टञ्च कुत्रचित्पुरुषार्थो भवति कुत्रचिच्च क्रत्वर्थः। पुरुषार्थनिषेधेषु पुरुषगतप्रत्यवायः। क्रत्वर्थनिषेधेषु क्रतुगत वैगुण्यम्। न ब्राह्मणं हन्यात्' 'न कलञ्जं भक्षयेत्' इत्यादिनिषेधः पुरुषार्थः। 'नानृतं वदेत्' 'न स्त्रियमुपेयात्' इत्यादि च क्रत्वर्थः। अयञ्च नञ् द्विविधः—प्रसज्यपर्युदासभेदात्। तदुक्तं हरिणा—

अप्राधान्यं विधेर्यत्र प्रतिषेधेऽप्रधानता।
प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ्॥ इति

क्रिया च भावना। भावना चाख्यातार्थः। अयं भावः—यत्र निषेधस्थले विधिनिष्ठमप्राधान्यं प्रतिषेधनिष्ठञ्च प्राधान्यमवभासते, तथाख्यातार्थः भावनया सह नञ् सम्बद्ध्यते, तत्र प्रसज्यप्रतिषेध आश्रीयते। यथा 'न कलञ्जं भक्षयेत् दित्यादीनि वाक्यानि' पर्युदासश्च—

१. वै. भू. सा. ४२ २. वै. भू. सा. ४७

**प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता ।**
**पर्युदासस्स विज्ञेयो यत्रोत्तरपदेन नञ् ।। इति**

यत्र विधिनिष्ठं प्राधान्यं निषेधनिष्ठञ्चाप्राधान्यं भासते, तथोत्तरपदेन सह नञ् सम्वद्धयते, तत्र पर्युदासो विज्ञेयः विजानीयादित्यर्थः । अत्रोत्तरपदं क्रियावाचकप्रत्ययातिरिक्तरम्, न तु वैयाकरणमतवच्चरमावयवे रूढम् । प्रत्ययातिरिक्तश्च धातुः । तस्माद् यत्र धात्वर्थेन सह नञ् सम्वद्धयते, तत्र पर्युदासो भवतीत्यर्थः । यथा—'नेक्षोतोद्यन्तमादित्यमि'ति । अक्षेक्षणरूप-धात्वर्थेन सह नञ् सम्मवद्धयते । स्वसम्वन्धिप्रतिपक्षवोधकत्वं नञः स्वभावः । अत ईक्षणाभावरूपानीक्षणसङ्कल्पोऽर्थः । अतएवानीलक्षण-सङ्कल्पेन भावयेदित्यर्थः । पर्युदासस्य वाधकत्वं द्विविधम्—उपक्रमबलात् विकल्प भयाच्च । 'नेक्षेतोद्यन्तमादित्यम्' इत्यत्र 'तस्य व्रत' मित्युपक्रम-बलात्पर्युदासः स्वीक्रियते । 'यजतिषु ये यजामहं करोति' इति सामान्य-शास्त्रम् । ततश्च 'नानूयाजेषु ये यजामहं करोति । इति निषेधशास्त्रम् । '[1]तुल्यबलविरोधे विकल्पः' इति न्यायेनोभयोस्तुल्यबलत्वाद्विकल्पप्रसक्तिः । तस्मात्स्वीक्रियते पर्युदासः । तस्माद्धात्वर्थेन सहान्वितस्य नञः पर्युदासत्वम् । आख्यातार्थेन सहान्वितस्य नञः प्रसज्यप्रतिषेधत्वमिति निष्कर्ष इत्यति संक्षेपः ।

## अर्थवादप्रामाण्यम्

विधिनिषेधैकवाक्यतया तदपेक्षितस्तुतिनिन्दार्थत्वेनार्थवादानां धर्मे प्रामाण्यमिति जीवदेवः । सूत्रकारेणापि '[2]आम्नायस्य क्रियार्थत्वादानर्थक्य-मतदर्थानां तस्मादनित्यमुच्यते' इत्यादिभिरनेकैः सूत्रजातैः पूर्वपक्षमुपस्थाप्य '[3]विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः' इत्याद्यनेकैः सूत्रैरेवमेव समाधानं प्रस्तुतम् । विधिवाक्येन सहैकवाक्यतयार्थवादानां प्रामाण्यं भवति, न स्वार्थप्रतिपादकत्वेनार्थवत्त्वम् । स्तुतिप्रतिपादकानामर्थवदानां विधि-वाक्येन सहैकवाक्यता सञ्जायते । निन्दप्रतिपादकानामर्थवादानां विधि-वाक्येन सहैकवाक्यता सञ्जायते । निन्दाप्रतिपादकानामर्थवादवाक्यञ्च निषेधवाक्यने सहैकवाक्ययता भवति । अतएव न्यायप्रकाशेऽर्थवादो द्विविधः—'विधिशेषः निषेधशेषश्च' इत्युक्तम् । विधिशेषोऽर्थवादो यथा—'शोभतेऽस्य मुखमि' त्यादयः । एवमेव 'वायव्यं श्वेतमालभेत' इति

१. गौ. ध. सू. १.१.५ २. जै. सू. १-२-१ ३. जै. सू. १-२-१

विधिवाक्यस्य 'वायुर्वैक्षेपिष्ठादेवता' इति। 'बर्हिषि रजत् न देयम्' इति निषेधवाक्यस्य 'सोऽदोदीद्यदरोतीत्ततद्रूद्रस्य रूद्रत्वमि'ति। प्रकारान्तरेण चतुर्विधोऽप्यर्थवादः—निन्दा-प्रशंसा-परकृति-पुराकल्पभेदात्। निन्दाप्रशंसा-प्रतिपादकार्थवादयोरुदाहरणे पूर्वमेन प्रतिपादिते। एककर्तृकचरित्रान्वाख्यानं परकृतिरिति जीवदेव। परेण महता पुरुषेणेदं कर्मकृतमिति प्रतिपादकोऽर्थवादः परकृतिरिति कृष्णयज्वा। यथा—'अग्निर्वाअकामयते इत्यादि। बहुसंज्ञकचरित्रान्वाख्यानं पुराकल्प इति जीवदेवः। परप्रवक्तृकार्यादिप्रतिपादकः पुराकल्प इति कृष्णयज्वा। यथा—'तमशपद् धियाधिया वध्यासुः' इत्यादि। एतत्सर्वमत्रापि जीवदेवन प्रतिपादित विस्तरेणेति दिक्।

## 'स्वाध्यायोऽध्येतव्य' इति वाक्यार्थः

स्वाध्यायशब्दे स्वस्य अध्याय इति षष्ठीसमासः। स्वशब्दश्चात्मकुलपरम्परावचनः। अध्यायशब्दश्च स्वशाखावच्छिन्नवेदपरः। 'अध्येतव्य' इत्यत्राधिपूर्वकेङ्धातोरध्ययनमर्थः। 'इङ्अध्ययने' इति स्मरणात्। तव्यप्रत्ययार्थश्चार्थी भावना। तस्यां धात्वर्थस्याध्ययनस्य करणत्वेनान्वयः। धात्वर्थस्य करणत्वेनान्वयस्य सिद्धत्वात्। किं भावयेदिति साध्याकाङ्क्षायां स्वाध्यायस्य साध्यत्वेनान्वयः। अध्ययनञ्च गुरुमुखोच्चारणानूच्चारणरूपम्। तस्मादध्ययनेन गुरुमुखोच्चारणानूच्चारणेन स्वध्यायं स्वकुत्रपरम्परागतैकशाखावच्छिन्नं वेदं भावयेत्प्राप्नुयादित्यर्थः। अध्ययनञ्च दृष्टार्थमदृष्टार्थं वेति विचारे दृष्टर्थमेवाध्यनमिति भाट्टमतम्। तस्यार्थग्रहणरूपं दृष्टमेव प्रयोजनम्। तदुक्तमपि –

**[1]लभ्यमाने फले दृष्टे नादृष्टपरिकल्पना।**
**विधेस्तु नियमार्थत्वान्नाऽऽर्थक्यं भविष्यति ॥ इति**

सम्भवति दृष्टफलकत्वेऽदृष्टफलकल्पनाया अन्याय्यत्वादिति न्यायोऽप्यनुगृहीतो भवति। अर्थग्रहणञ्च विचारं विना न सम्भवति। अतस्तदर्थ गुरुकुले स्थित्वार्थग्रणं यावदविचारः कर्त्तव्यः। 'स्वाध्यायोऽध्येतव्य' इत्यध्ययनविधौ तव्यश्रुतेरध्ययनकरणिकायां भावनायां स्वाध्यायस्य कर्मत्वं गम्यते। तच्च योग्यतया प्राप्यत्वमिति जोवदेवः। संस्कार्यस्य विकार्यस्य वा असम्भवात्। तेनाध्ययनेन स्वध्याय प्राप्नुयादित्यर्थः। अर्थवोधनायैवोच्चारणं क्रियत। अन्यथोच्चारक्षस्य वैयर्थ्यप्रसङ्गात्। पार्थसारथिमिश्रमते संस्कार्यत्व मेव कर्मत्वमत्र। स्वाध्यायेन संस्कारेणाध्ययनेन

१. शा. दी. १-१-१

यच्छक्यते कर्त्तुं तत्कुर्यादिति भावा परन्तु दृष्टार्थत्वेन विरोधः। तस्मादध्ययनं दृष्टप्रयोजनकमेवेति। युक्तिप्रमाणैश्च संसाधितं जीवदेवेन।

प्राभाकरमते—'अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीत' इत्यनेनाध्यापनं विहितम्। आचार्यत्वकामी चात्र नियोज्यः। आचार्यकरणेऽर्थे '[1]सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः' इत्यनेनात्मनेपदं विहितम्। तेन च नियोज्यविशेषणमाचार्यत्वमिति प्रतीयते। अतोऽनेनाध्यापनविधिप्रयुक्तेनाध्ययनेन स्वाध्यायं भावयेदित्यर्थः। भाट्टमतेऽध्ययनविधिप्रयुक्तमध्ययनम्। प्रभाकरमतेऽध्यापनविधिप्रयुक्तमध्ययनमित्युभयोर्भेदः। यत्रवेदार्थे सन्देहस्तत्र विचारः कर्त्तव्यः। तदर्थमेवशास्त्रारम्भ इति संक्षेपः।

## गौणीवृत्तिः

गुणादागता गुणयोगाद्वा गौणी। तदुक्तं जीवदेवेन 'स्वार्थं निष्ठगुणयोगादर्थान्तरे वृत्तिर्गौणी। सदृशगुणयोगादित्यपि केचित् गुणश्च-तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवायभेदात्षड्विधः। एभिरेवगुणैर्गौणीवृत्तिः प्रकल्प्यते। 'यजमानोप्रस्तरः' इत्यादीन्युदाहरणानि ग्रन्थतोऽवलोक्यानि। सूत्रमपि तथैव—'[2]तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवायात्' इति। सादृश्यसम्बन्धवती गौणी तदन्यसम्बन्धवती लक्षणेति कमलाकरः। लक्ष्यवाचकपदवती गौणीत्यपि केचित्। गुणानां भेदाभावात् युक्तस्तद्गुणयोग। तेन सादृश्यसम्बन्धे तस्य प्रकारत्वे उपपदसत्त्वे वा गौणी, न लक्षणा। लक्ष्यवाचकपदवत्त्वात्। नहि लक्षणायां तदस्ति क्वापि। तत्रैव वार्त्तिकं प्रमाणयति कमलाकरः—

[3]अभिधेयाविनाभूते प्रतीतिः लक्षणोच्यते।
लक्ष्यमाणैर्गुणैर्योगाद् वृत्तेरिष्टा तु गौणया॥

लक्ष्यमाणाः प्रतीयमानाः गुणाः, न तु लक्षिताः। गुणास्तैर्योग इति केचित्। सर्वञ्चैतत्तन्त्र वार्त्तिके मीमांसाकुतूहले भाट्टभास्करे च प्रपञ्चितमिति दिक्।

---

१. पा. सू. १ ३-३६  २. जै. सू. १-४-३२
३. तन्त्र. वा. १-४-२२

## मन्त्रप्रामाण्यम्

[1]मन्त्राणां प्रयोगसमवेतार्थस्मारकत्वेनार्थवत्त्वम्, पदार्थविधया च धर्मेप्रामाण्यमिति जीवदेवः। न्यायप्रकाशेऽप्येवमेव दृश्यते—[2]मन्त्राणाञ्च प्रयोगसमवेतार्थस्मारकतयार्थवत्त्वमिति । [3]प्रयोगोऽनुष्ठानं तत्समवेतस्तद्विषयीभूतोयोऽर्थः पदार्थस्तत्स्मारकत्वेन प्रमाण्यमिति व्याख्यातं सारविवेचिन्याम् । पदार्थस्मरणस्य दृष्टफलस्य विद्यमानत्वेऽदृष्टार्थं तेषामुच्चारणमिति न मन्तव्याम् । यद्यपि हुं फडादिमन्त्राणां नास्ति कश्चनार्थस्तथापि सर्वेषामैकरूप्याय दृष्टार्थत्वमेव स्वीक्रियते । यद्यपि पदार्थध्यानविधया अथवा गुर्वादिशिष्टजनोपदेशादिनापि पदाथानां स्मरणं भवितुमर्हति तथापि मन्त्रैरेव स्मर्त्तव्यमिति नियमविद्याश्रयणेन मन्त्रोच्चारणेनैव पदार्थज्ञानमावश्यममिति कृत्वा मन्त्रोच्चारणमावश्यमम् । निरमविध्या श्रयणेन परमापूर्वसहायीभूतं नियमापूर्वमपि लभ्यते । तस्मान्मन्त्रैरेव पदार्थस्मरणम् । पदार्थबोधकवाक्येन मन्त्राणां प्रामाण्यमिति मिश्रमतम् । वाक्यविधयैव प्रामाण्यमिति राणकमतमित्युभयोर्विशेषः । येन केनापि प्रकारेण भवेत्प्रामाण्यम्, परन्तु मन्त्राणां प्रामाण्यन्त्वस्त्येवेति दिक् ।

## नामधेयानां प्रामाण्यम्

नामधेयानां विधेयार्थपरिच्छेदकत्वेन धर्मे प्रामाण्यम् । न्यायप्रकाशे च तत्परिच्छेदकतयार्थवत्त्वमित्यभिहितम् । अयं भावः—साध्यसाधनेतिकर्त्तव्यतानन्तः पातित्वान्नामधेयानां धर्म प्रामाण्यं नैव प्रतिभाति । तथाहि—कामशब्दाद्यभावेन फलबोधकत्वं नैव सम्भवम् । धात्वर्थस्यैव करणत्वेनान्वयस्य निश्चितत्वात्पदान्तरोपात्तपदार्थस्य तत्त्वेनान्वयासम्भवात् । उद्भिदादिपदानां गुणवाचकत्वाभवेन तद्विधायकत्वेनेतिकर्त्तव्यतायामपि तान्तर्भावः। स्तावकत्वाभावादर्थवादत्वेनापि प्रामाण्यं भवितुं नार्हति। मन्त्रत्वेन प्रसिद्ध्यभावान्न तत्रान्तर्भावः। तस्मात्कथं प्रामाण्यमिति जिज्ञासाया माह ग्रन्थकारो नामधेयानामिति। विधेयोयागादिस्तत्परिच्छेदकत्वेनेतरव्यावृत्तिसम्पादकत्वेनेत्यर्थः । व्यावृत्तिर्व्यवहारो वा नाम्नां प्रयोजनमितिन्यायात् । तस्मान्नामधेयानां तत्त्वेन धर्मे

---

१. भा. गा. पृ.    २. न्या. प्र. पृ. ११०    ३. सा. वि. पृ. ११०

प्रामाण्यमिति। तत्रापिनामधेयानां न स्वातन्त्र्येण धर्मे प्रामाण्यं भवति, अपि तु विधिवाक्येन सहैकवाक्यतया तत्रप्रामाण्यमिति बोध्यम्। अर्थवादवाक्यवत्। नामापि भवति द्विविधम्–यौगिकं रुढञ्च। यत्र यौगिके स्वीक्रियमाणे दोषः समापतन्ति तत्र रूढिरेवाश्रीयते। तत्र चतुर्भिश्च प्रकारैर्नामधेयत्वगङ्गीक्रियते। यथा—मत्वर्थलक्षणाभयात्, वाक्यभेदभयात्, तत्प्रयशास्त्रात्, तद्व्यपदेशात्।

तत्रोद्भिदा यजेत पशुकामः इत्यत्रोद्भिद्यतेऽनेनेति करणसाधनत्वेन खनित्रादिबोधकतत्वं स्वीक्रियते चेर्त्तहि वाक्यभेदापत्तिः स्यात्। उद्भिद्रूपगुणविधायकत्वे तद्गुण सम्वलितं याग लक्षयित्वा तद्गुणवता अर्थात् उद्भिद्वता यागेन फलं भावयेदित्यादिवाक्यार्थबोधे मत्वर्थलक्षणा स्वीकार्या भवेत। लक्षणा च जघन्या वृत्तिः। तस्मादत्र नामधेयत्वमेव स्वीक्रियत। यौगिकस्थले मत्वर्थलणणाभयादेव नामत्वम्, न रूढिस्थले।

'चित्रया यजेत पशुकामः' इत्यत्र चित्रात्वस्त्रीत्वरूपगुणविधायकत्वे गुणद्वयविधानं स्यात्। ततश्च विध्यावृत्तिलक्षणवाक्यभेदापत्तिः स्यात्। यथा—यः पशुसाधनत्वेन कामयमानो यागं कुर्यात्, सचित्रवर्णेन स्त्रीत्वविशिष्टेन च पशुना यागं भावयेदिति वाक्यद्वयं सम्पद्येत। अतोऽत्र वाक्यभेदभयान्नामत्वं स्वीकार्यमिति।

'अग्निहोत्रं जुहोति' इत्यादौ तत्प्रख्यन्यायेन कर्मनामधेयत्वम्। तस्य विधित्सितस्य गुणस्य प्रख्यापकं ज्ञापकं शास्त्रं यत्रास्ति, स तत्प्रख्यन्यायः। 'अग्निहोत्रं जुहोति' इत्यत्राग्नये होत्रं अर्थात् द्रूगमानं द्रव्यमस्मिन्निति व्युत्पत्त्या द्रव्यदेवता विधायकत्वम्। 'दध्ना जुहोति' इत्यादिवाक्यैरेव द्रव्यस्य प्राप्तत्वान्न द्रव्यविधायकत्वं सम्भवम्। एवं 'यदग्नये च प्रजापतये च' अथवा 'अग्निर्ज्योतिर्ज्योतिः स्वाहा' इत्यनेन देवता प्राप्तत्वान्न देवताविधायकत्वम्। अत्र च राणकमते 'यदग्नये च' इति देवताप्रापको मन्त्रः। मिश्रमतेऽग्निर्ज्योतिरिरिति भेदः। रणकमते भाष्यवार्त्तिकसम्मतिरिति विशेषः। अतएव होमनामधयेनाग्निहोत्रेण होमेनेष्टं भावयेदितिवाक्यार्थः। एवमेव वाजपेयज्योतिष्टोमादिशब्दा अपि नामधेयवाचकाः। इष्टिशब्दस्तु प्रकृतिविकृत्युभयसाधारणं नामधेयम्। वैश्वदेवस्थलेऽष्टानां यागसमुदायानां वैश्वदेवेति नामधेयम्।

'श्येनेनाभिरन् यजेत' इत्यत्र तद्व्यपदेशन्यायेन यागनामधेयत्वम्। व्यपदेश उपमानम्। तेन व्यपदेशस्तद्व्यपदेशः। यद्विधीयते तस्यैव

स्तुतिरपि भवति। अत्र श्येनेन स्तूयते यागः। अतएव 'यथा श्येनो वै निपत्यदत्ते, एवभयमर्थात् यागः द्विषन्तं भ्रातृव्यमादत्ते' इति। श्येनेन श्येनस्यैवोपमानं न घटते, अभेद स्थले उपमानोपमेय भावस्याप्रसिद्धत्वात्। विशिष्टविधौ स्वीकारे च मत्वर्थलक्षणापत्तिः स्यात्। तस्मात्तेन गुणेनार्थात् श्येनगतेन ग्रणेन व्यपतेशादुपमानाच्छ्येनशब्दो यागनामधेयमिति संक्षेपः।

## द्रव्यनामविवेचनप्रकरणम्

प्रकरणेऽत्र बर्हिरादिशब्दानां वेदलोकप्रयोगवैलक्षण्यं प्रतिपाद्यते। बर्हिःशब्दो यद्यपि लोके कुशमात्रे प्रयुज्यते तथापि याज्ञिकपरिभाषायां संस्कृतेष्वेव कुशेषु बर्हिःशब्दप्रयोगः। एवमेवाज्यपुरोडादिशब्दानानामपि-व्यवहारः। यद्यपि 'योगादरूढिर्बलीयसी' इति ज्यायेन यौगिकशब्दापेक्षया रूढेर्बलीयस्त्वं सिद्ध्यति तथापि कुत्रचिद्योगे क्लृप्ते सति रूढेर्कल्पनं न भवति। यथा—प्रोक्षणीशब्दे। क्वचिच्च लोकप्रसिद्धवेदप्रसिद्धयोर्वेद-प्रसिद्धेर्बलीयस्त्वम्। यथा त्रिवृच्छब्दोलोके त्रैगुण्ये प्रसिद्धः, वेदे च स्तोत्रीयनवके प्रसिद्धः। एवमनेके शब्दाअत्रोदाहरणरूपेण सन्ति विचारिता इति दिक्।

## धर्मे स्मृत्यादीनां प्रामाण्यम्

मन्वादिस्मृतीनां धर्माधर्मयोर्न वेदवत्स्वतः प्रामाण्यम्, अपि तु श्रुतिमूलकत्वेनैव प्रामाण्यमिति पूर्वमुक्तम्। स्मृत्यधिकरणमेव तत्र प्रमाणम्। न प्रत्यक्षादिप्रमाणमूलत्वेनेत्यादि विस्तरेणविचारितं जीवदेवेन। एवमेव च कल्पसूत्रेतिहासपुराणादीनामपि प्रामाण्यमिति वोध्यम्। न तेषां स्वतः प्रामाण्यम्, दृढतरकर्त्तृस्मरणस्य विद्यमानत्वात्। वेदविरुद्धानाञ्च स्मृत्यादीनां न धर्मे प्रामाण्यम्। कुत इति चेत्। वेदविरुद्धत्वादेव। तदुक्तं मनुना—'तस्याद्धर्मो हि निर्बभौ' इति। तस्माद्वेदादित्यर्थः। तस्मादेव धर्मो प्रभवति। अतस्तस्यैव तत्र प्रामाण्यम्। अत्र भाष्यकारमते मूलभूतश्रुत्य-नुमानासम्भवादप्रामाण्यमिति। वार्त्तिककारमते त्वननुष्ठानलक्षणमेवा-प्रामाण्यम्, न तु सर्वथा अप्रामाण्यमेव। वेदानां सर्वासां शाखानामनुप-लम्भान्निशचयाभावात्। 'वेदं कृत्वा वेदिं करोति' इत्यादौ मध्ये विहिताचमनादिना क्रमबाधोऽपि दृश्यते। अतः क्वचित्तद्विरुद्धानामपि प्रामाण्यं वोध्यम्। बौद्धजैनादिस्मृीनां वेदविरुद्धानामविरुद्धानाञ्चो-भयेषामप्रामाण्यम्, वेदविद्वेषीकरणत्वात्। कुत्रचिद्वेदानां प्रामाण्यम्

कुत्रचिच्चाप्रामाण्यमित्यर्द्धजरतीयन्याय स्यानौचित्यात् । धर्माधर्मयो प्रत्यक्षादिप्रामाणानां प्रामाण्यनिरासात्परिशेषाद् भ्रान्त्यादिमूलकत्वमेव वाध्यम् । कर्त्तृस्मरणाच्चापौरुषेयत्वमपि न सम्भवमिति दिक् ।

सदाचाराणां श्रुतिस्मृतिमूलत्वेन धर्मे प्रामाण्यम् । सदाचारेण स्मृति-कल्पनम्, पुनश्च कल्पितया स्मृत्या श्रुतिकल्पनम्, ततश्च प्रामाण्यम् । अतएव द्व्यन्तरितं प्रामाण्यं वदन्ति तदुक्तमपि—

आचरत्तु स्मृतिं ज्ञात्वा श्रुतेश्च परिकल्पनमि'ति ।

मन्वादयः पूर्वं वेदानामध्ययनं सम्पादितवन्तः । ततश्च तमनुसृत्यैवाचारण-मपि विहितवन्तः । अतएव तेषां स्मरणमाचारणं वा धर्मे भवति प्रमाणम् । अतएव च समृत्या सहविरोधे सदाचारस्यैव भवति वाधः । वेदेन सह विरोधे च स्मृतीनः बाध इति मर्यादा । एवमेव धर्मधीसंस्कृतात्मनां वैदिकानामात्मतुष्टेरपि धर्मे प्रामाण्यम् । तदपि वैकल्पिके विषये, न तु सर्वत्र । अतएव सन्दिग्धधर्मनिर्णये शिष्टाचार स्यापि प्रामाण्यमिति ।

## यागहोमदानस्वरूपम्

यागहोमयोः स्वरूपे यद्यपि न दृश्यते महान् भेदस्तथापि स्वल्पमात्रन्तु भेदोऽस्त्येव । यजतिचोदनाचोदितो यागः । जुहोतिचोदनाचोदितोहोम इत्यपि लक्षयन्ति । अयं भावः—यजतिपदघटितेन विधिवाक्येन यो विधीयते, स एव यागाः । एवमेव जुहोतिपदघटितेन वाक्येन यो विधीयते, स एव होम इति । देवतामुद्दिश्य विहितद्रव्यस्य त्यागस्तुभयत्र भवति, परन्तु होमे प्रक्षेप आधिक्येन भासते । अर्थात् तस्य प्राधान्यं भवति । एतच्च याज्ञिकमानससङ्कल्पगम्यम् । कस्य प्राधान्यं कस्य वा अप्राधान्यमिति याज्ञिकव्यवहारेणैवावगन्तुं शक्वते । नान्य पन्था विद्यत इत्यस्माकं धी । अत्र सूत्रकारेणाप्यभिहितम्—होमेऽऽसेचनमछिकेन रूपेण भासत इति । परवर्त्तिनोऽऽचार्या आसेचनपदमेव प्रक्षेपशब्देन व्याख्यातवन्तः । तदत्र ग्रन्थसन्दर्भाः समुपस्थाप्यन्ते । तथाहि 'यजति[1]चोदना द्रव्यदेवत्ताक्रियं समुदाये कृतार्थत्वात्' इति यागस्वरूपप्रतिपादनाम् सूत्रम् । तथा चात्र भाष्यम्—'यजति[2]चोदना तावद् द्रव्यदेवताक्रियम् । द्रव्य तेवतामुद्दिश्य त्यज्येते, तस्य च क्रिया, यथा क्रियया तयोः सम्बन्धो भवति । समुदाये—

---

१. मी. सू. ४.२.२७ २. शा. भा. ४.२.२७

समुदितेष्वेषु यजतिशब्दो भवति। लोके इष्टोऽनेन पशुपतिरिति। तेन मन्यामहे, द्रव्यदेवताक्रियस्यार्थस्य यजतिशब्देन प्रत्यायनं क्रियते। ज्ञानमेवात्र प्रयोजनमिति।

एवमेव होमशब्दार्थबोधकमपि सूत्रं दृश्यते—'ततुक्ते[1] श्रवणाज्जुहोतिरासेचनाधिकः स्यात्' इति। तथा च भाष्यम्—[2]तदुक्ते यजत्युक्तेऽर्थे जुहोतिः श्रूयते, आसेचनाधिके। तस्माद् यजतिरेवाऽऽसेचनाधिको जुहोति। हुतमनेनेत्येवजातीयके वक्तारो भवन्ति लोके। वेदेऽपि यजतिचोदितं जुहोतिनानुवदति। 'संग्रामिणं चतुर्होत्रा याजयेत्' इत्यादीन्युदाहरणानि। अस्मादेव स्पष्टीभवति यद् यागहोमयोर्नास्ति कश्चिद् विशेषः। केवलमासेचनमेवाधिकं भासते होमे। तच्च याज्ञिकसम्प्रदायगम्यमिति। दानलक्षणमपि भाष्येऽवलोक्यते—[3]आत्मनः स्वत्वव्यावृत्तिः, परस्य स्वत्वेन सम्बन्धः। इदमेव वाक्यं परिष्कुर्वन्ति—स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वोत्पादनं दानमिति। एषु समानतामसमानतां च बोधयितुमाह—यजतिददातिजुहोतिषु सर्वेषूत्सर्गसमानः। तत्र यजतिर्देवतामुद्दिश्योत्सर्गमात्रकम्। जुहोतिरासेचनाधिकः, ददातिरुत्सर्गपूर्वकः परस्वत्वेन सम्बन्ध इत्येष एषां विशेषः। अनेनभाष्यप्रघट्टकेन एषु यादृशी समानता यादृशो वा भेदः, तत्सर्वं सुस्पष्टीभवति। अत्रैव टुप्टीकाकारोऽपि वदति—[4]न पदार्थलक्षणमिदम्, किन्तर्हि, 'यजेत स्वर्गकाम' इति साधनत्वेन यागस्य चोद्यमानस्य प्रयोगः कथ्यते। यो देवतोद्देशेन द्रव्यं त्यजति, तेन यागोऽनुष्ठितो भवति, न त्यागमात्रेण यागः कृतो भवति। तस्मात्प्रयोगकथनमेतत्। सूत्रकारश्च चोदनेत्याह। चोदनेति हि वाक्यमुच्यते। जुहोतिशब्दस्यापि फले चोदितस्य प्रयोगानुष्ठानमेव कथ्यते, आसेचनाधिक्यञ्च तत्र प्रायकिम्। ददातेरप्यनुष्ठानकथनमेवेति। अनेनेदंज्ञायते यदेतेषु वस्तुतो नास्ति कश्चिद्भेदस्तथापि कुत्रचिदासेचनादिकमाधिक्येन भासते, न सर्वत्र। प्रायिकमिति कथनात्।

सर्वत्रानुष्ठानकथनमात्रमेव वर्त्तते। ततश्च यजतिजुहोतिचोदना भेदादेव च-भेद इति निश्चीयते। अत्रैव शास्त्रदीपिकाकारमतमप्युपस्थाप्यते। तत्रवदति पार्थसारथि मिश्रः—"[5]देवतोद्देशेन स्वद्रव्यपरित्यागो

१. मी. सू. ४.२.२८ २. शा. भा. ४.२.२८
३. शा. भा. ४.२ २८ ४. टुप्टीका ४ २.२७-२८
५. शा. दी. ४.२.२७-२८

यागः' स एव प्रक्षेपाधिको होमः, स्वीयस्य परकीयत्वापादनं दानमि'ति। अत्र च प्रसङ्गे भट्टपदीयं व्याख्यानद्वयमुपस्थापयति। तथाहि—या देवतामुद्दिश्य द्रव्यं त्यजति, तेन यागचोदनार्थः सम्पादितो भवति, प्रक्षेपन्त्वधिकं कुर्वता होमविध्यर्थं इति प्रथमः। द्वितीयश्चान्यत्र दर्शादियागत्वमाशङ्क्योक्तम्—'नह्युत्पत्तिचोदनास्वाग्नेयदिषु यजिः श्रूयते। तत्रेदमुच्यते—द्रव्यदेवताक्रियं श्रूयमाणं यजतिचोदनेति मन्तव्यम्। तदविना भावात्तस्येत्येकस्यार्थः। इतरस्य तु यजत्यभिहिते कर्मणि पुनर्जुहोति श्रवणं 'चतुरवत्तं जुहोती'ति तत्कथमुपपादनीयम्। यागहोमयोर्भेदात्। अत आह आसेचाधिकः स्यात्प्रक्षेपमात्रम्। तत्राप्राप्तं चतुरवत्तं संस्कारार्थं विधीयते। यागांशस्तु प्राप्तानुवाद इत्यादिः। व्याख्यानद्वयमपि पूर्वोक्तमेवार्थं परिपुष्णातीति विभावनीयम्।

खण्डदेवोऽत्र विषयमधिकं स्पष्टीकरोति—यत्र[1] प्रक्षेपोऽङ्गभूतः त्यागनिष्ठञ्च प्राधान्यम्, तत्र यागशब्दव्यवहारः। यत्र च त्यागः न प्राधान्यं भजते, प्रक्षेपन्तु प्रधानस्तत्र होम शब्दव्यपदेशः। एवञ्च यमुद्दिश्य सम्प्रदानस्वत्वापादनको द्रव्य त्यागो भवति, तत्र दानशब्दव्यवहार इति। तथाहि ग्रन्थ प्रघट्टकः—यत्र प्रक्षेपाङ्गकी देवतोद्देशपूर्वको द्रव्यत्यागो विधीयते, स यागपदार्थः। प्रयाजादिषु प्रक्षेपसिद्धयर्थमाद्यं विशेषणम्। तत्र यागाक्षेपेणैव प्रक्षेपसिद्धेः। प्रक्षेप प्रधानक उक्तविधस्त्यागो होमपदार्थः। सम्प्रदानस्वत्वापादनको द्रव्यत्यागो दानपदार्थः। अत्र सक्यतावच्छेदकं चोक्तविधत्यागत्वसम व्यापकं जातिरूपमखण्डोयाधिरूपं वा समान्यमित्यदिः। एभिश्च ग्रन्थसन्दर्भैः यागहोमदानपदार्थोनां स्वरूतं स्पष्टं भवति। यद्यपि मौलिकभेदाभाव स्तथापि स्वल्पभेदसत्त्वाद्भेदोऽस्त्येव।

अत्रैव ग्रन्थकारो जीवदेवोऽपि कथयति—देवतोद्देशेन द्रव्यत्यायो यागः। एतत्सिद्धान्तसाधनाय विवेचनां प्रस्तुत्य लिखति -देवतोद्देशेन द्रव्यस्य च पुरोडाशादेस्त्यागो मानसः सङ्कल्पः याग इत्युच्यते। स एवाग्न्याद्यधिकरणकप्रक्षेपाधिकी होमः। स्वस्वत्वयागपूर्वकं परस्वावापादनं दानमित्यादिकमिति दिक्।

## कर्मभेदकप्रमाणानि

कर्म भेदकानि च षट् प्रमाणानि भवन्ति। उत्पत्तिविधेः सहकारिप्रमाणपूर्वं प्रतिपादितानि। तानि च शब्दानन्तराभ्याससंख्या संज्ञागुण-

---

१. भा. दी. ४.२.२७-२८

प्रकरणान्तराणि । अत्र ग्रन्थे सर्वाण्युदाहरणपूर्वकानि सन्ति निरुपितानि । संक्षेपतोऽत्रार्थज्ञानाय लिख्यन्ते । तत्रापर्यायधातुनिष्पन्नान्यैकप्रकरण गतात्यायाखयातानि शब्दान्तराणीति जीवदेवः । यथा—'सोमेन यजेत' हिरण्यमात्रेयाय ददाति' दक्षिणानि जुहोति । अत्र यजतीत्यादीनामाख्यातानां भेदाद् भवति कर्म भेदः । एकस्यैवाख्यातस्य पौनः पुन्येन श्रवणमभ्यासः । यथाः—पञ्चप्रयाजेषु । यजतीनां पञ्चकृत्वोऽभ्यासत्कर्म भेदः । 'तिस्त आहुतीर्जुहोति' इत्यत्र त्रित्व संख्यया कर्म भेदः । 'अथैव ज्योतिरथैषविश्वज्योतिरथैष सर्वज्योति' रित्यादौ संज्ञया कर्म भेदः । 'वैश्वदेव्याभिक्षा वाजिभ्यो वाजिनमि' त्यत्राभिक्षावजिनगुणेन भवति कर्म भेदः । 'अग्निहोत्रं जुहोति' 'मासमग्निहोत्रं जुहोति' इत्यादो जुहोतीति पदसामन्येऽपि विभिन्न प्रकरणपरिपठितत्वाकर्म भेदः । एवं कर्म भेद प्रमाणानि निरुपितानीति क्षक्षेपः ।

## अनुपादयपञ्चकविचार

मीमांसकानाम्मतेऽनुपादेयपञ्चकमपि भवति । अनेनापि कर्म भेद प्रतिपादनं भवति । यथा—देशकालनिमित्तफल संस्कार्यरूपम् । उदाहरणं यथा—'सरस्वत्याः दक्षिणे तीरेऽऽग्नेयोऽष्टाकपाल' इत्यत्र दक्षिणतीररूपदेशविशेषाद् भवति कर्म भेदः । दार्शपौर्णमासिकाग्नेयादिदं भिन्नं कर्म । 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इत्यत्र क्त्वाप्रत्ययप्रतिपादितेन कालेन कर्म भेदः । स्वतन्त्रदर्शपूर्णमासापेक्षया भिन्नमिदं कर्म । 'सत्रायागूर्य विश्वजिता यजेत' इत्यत्राशक्तिनिमित्तककर्मभेदः । स्वतन्त्ररूपेण पठितेन 'विश्वजिता यजेत' इत्यनेनात्र भेदः । 'आग्नेयमष्टाकपालं निर्वपेत् रुक्कामः' इत्यत्र कान्तिरूपफलसम्बन्धेनात्राग्नेयन्द्रिन्नः । 'त्रैधातवीया दीक्षणीया भवति' इत्यत्र दीक्षासंस्कारोशेन त्रैधातव्याख्यं कर्मान्तरं विधीयते । एवमेवानुपादेयसम्बन्धसहकृतो सन्निधिप्रकरणान्तरं कर्म भेदकं भवतीति संक्षेपः ।

## अग्निनोत्रम्

अत्र यत्किमपि वक्तव्यं वर्त्तते तत्सर्वं प्रायः ग्रन्थकारेण स्वयमेकवोक्तं तत्र । 'अग्निहोत्रं जुहोति' इत्युत्पत्तिवाक्यम् । अग्निहोत्रेण होमे नेष्टं भावयेदिति वाक्यार्थः । इदञ्च कर्म नित्यमपि भवति नैमित्तिकमपि ।

फलविशेषाकाङ्क्षायां 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इत्यनेन विहितं स्वर्गरूपं फलं कल्प्यते। एवमेव 'यावज्जीव मग्निहोत्रं जुहुयात्' इत्यनेन जीवने निमित्तेऽग्निहोत्रकर्त्तव्यता विधीयते। अस्य च विधेः फलं पापक्षयः। अतोऽनेन नैमित्तिकत्वमप्यस्य। प्रयोगभेदेनापूर्वभेदोऽपि बोध्यः। एवमेवान्यत्रापि कर्मानुष्ठानाभ्यासादपूर्वभेदोऽपि भवति। अत्र च द्रव्याणि

[1]पयो दधि यवागूश्च सर्पिरोदनतण्डुलाः।
सोमो मांसं तथा तैलमापश्चोक्तानि वै दश॥ इति

तत्राणि च 'यदेग्नये च प्रजापतये च' 'यत्सूर्याय च प्रजापतये च' इति वचनाभ्यामग्निसूर्य समुच्चितप्रजापतिर्देवतेति। नात्र परस्परं बाध्यबाधकभावः। यत्रैकस्यैव कर्मणो विधायके वाक्ये देवताद्वयं श्रूयते, तत्र मिश्रलिङ्गकवाक्यत्वम्। यत्र चैकस्य कर्मणो विधायके वाक्ये एकैव देवता श्रूयते, शुद्धलिङ्गकवाक्यत्वव्यवहारः। मिश्रलिङ्गकवाक्येऽपि समुच्चितस्य विधाने न वाक्यभेदः, समुच्चितस्यैकत्वात्। होमार्थमुद्धृतेऽग्नौ नष्टे सति ज्योतिष्मतीष्टिः प्रायश्चित्तत्वेनानुष्ठेयेति प्रायश्चित्तमपि संक्षेपेण प्रतिपादितम्। यजमाने मृते मृताग्निहोत्रस्यापि संक्षिप्ता व्यवस्था वर्त्तते प्रतिपादितेति तत एव सर्वमेतज्ज्ञेयमिति शम्।

## दर्शपूर्णमासौ

अत्राग्नेय ऐन्द्रभागः, दधियागः पयोयागश्चेति दर्शसंज्ञकास्त्रयो यागाः। आग्नेयागः उपांशुयागः, अग्नीषोमीययागश्चेति पूर्णमाससंज्ञकास्त्रयो यागाः। 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्या चाच्युतो भवति' इत्युभयाग्नेयविधिः। 'उपांशु यागविधिः। 'आग्नेयो वै ब्राह्मणो देवतया स सोमेनेष्ट्वाऽग्नीषोमीयो भवति' इत्यग्निषोमीयविधिरित्यादीन्युत्पत्तिवाक्यानि सन्ति। उपांशुयागमधिकृत्य याज्ञिकमीमांसकयोरस्ति मतभेदः। याज्ञिकानाम्मते दर्शेप्युपांशुयाजा। मीमांसकमते दर्शे नोपांशुयाजः, अपि तु पूर्णमासीकालसम्बन्धात्पूर्णमास्यामेवोपांशुयाज इति। एवमुत्पत्तिविधिशिष्टानां षण्णां यागानां दर्शपूर्णमासेति संज्ञा। ततश्च

---

१. का. सू. कर्कमाष्येऽग्निहोत्रकत्वम्।

'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यनेन स्वर्गरूपं फलं विधीयते। एवमेव 'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ' इत्यनेन तदतिरिक्तपुत्रपश्वादिफलमपि प्रतीयते। अस्यापि नित्यत्वमपि भवति काम्यत्वमपि। उभयत्र चापूर्वभेदः। परामापूर्वेऽन्यानि चापूर्वाणि सहायीभूतानि भवन्ति। तस्मात्साङ्गस्यैवानुष्ठानम्। अन्यथाङ्गवैकल्यात्फलवैकल्पमपि स्यादेव। वैमृधेष्टावप्युभयोर्मत भेदोंदर्शितः। तत एवावगन्तव्यः। अवशिष्टानाञ्च चातुर्मास्यपशुसोपतद्विकृतियागानां सामान्यज्ञानन्तु परिशिष्ट भागात्कर्त्तुं शक्यत इति शम्।

ततश्चावशिष्यते ग्रन्थकारस्य परिचयः। ग्रन्थकारः खलु श्रीमान् जीवदेवः सुप्रसिद्धमीमांसकानां देवकुले लब्धजनिः। तद्वंशपरिचयोऽत्र प्रस्तूयते संक्षेपेण।

तत्र भवान् जीवदेवः महान् मीमांसकः। पूज्यतमे मीमांसादर्शने जैमिनिभारभ्याधुना यावदनेके ग्रन्थकाराः समभूवन्। तत्र केचन मौलिकग्रन्थनिर्मातार आसन्। केचन दुरूहानां ग्रन्थानां तत्त्वस्फोरणाय टीकाग्रन्थानां रचयितारः समजायन्त। केचन चोभयत्र लब्धप्रतिष्ठाः विद्वांसः व्यराजन्त। अस्यामेव मीमांसक शृंखलायां जीवदेवोऽपि देदीप्यमानविभूतिरूपेण समतिष्टत। जीवदेवः खलु मौलिकग्रन्थकर्त्तेति जानन्त्येव मीमांसारसरसिकाः विद्वांसः। अयं किल विश्रुतानां सतामेकनाथमहात्मां सद्वंशे जनिमलभत। एकनाथश्च महान् तपस्वी आसीदिति श्रूयते। भगवत आनन्दकन्दस्य श्रीकृष्णस्य साक्षाद्दर्शनं सञ्जातमेतेषां महामनसाम। भगवान् श्रीकृष्ण एतेषां तपःपरिपूतहृदयानां महात्मना समक्षं सदैव तिष्ठतिस्मेति प्रसिद्धिः। महान् कृष्णभक्तोऽयमिति तत्र कालेऽऽसीत्ख्यातिः। प्रतिदिनं भागवतमहापुराणस्य कथां श्रावयन् भक्तजनान् भगवच्चरणारविन्दमकरन्दमपाययत्। मराठीभाषायां तेषां भागवती कथाद्यापि रसमाधुरीं वितरन्ती सती भक्तानाह्लादयति। मराठीभाषायामेनाथी भागवतग्रन्थः सुप्रसिद्धस्तस्मिन् देशेऽद्यापि। श्रीमद्व्यासविरचितभागवतमहापुराणस्येव तन्निर्मितस्य भागवतस्यापि कथा प्रचलति। श्रुत्वा च तां कथामानन्दानुभूतिं कुर्वन्ति भक्तजनाः। श्रीकृष्णचरणारविन्दासक्तचेतसामेतेषां महात्मनां विषयेऽनेकाः जनश्रुतयः श्रूयन्ते। तत्रैका प्रस्तूयतेऽत्र तस्मिन्नेव प्रान्ते एका काचिद् वृद्धा निवसतिस्म। एकदा तस्याः पुत्रोऽतीव रुग्णः सञ्जातः। सा भगवतः समक्षं प्रति श्रुतिमकरोत्। यदि मम पुत्रः

स्वस्थ: सञ्जायेत, तर्हि शतं ब्राह्मक्षान् भोजयिष्यामि। तदन्तरं भगवदनुग्रहवशात्स बालकः पूर्णरूपेण स्वस्थोऽभूत्। तदा वृद्धा माता चिन्ताकुला समभवत्। कुतोऽहं शतं ब्राह्मणान् भोजयिष्ये इति। अहन्त्वतीव दरिद्रा। मत्सविधे नैव किञ्चिदस्ति। किं करोमीति चिन्तापरा भूत्वा इतस्ततः परिभ्रमन्तीं तां कश्चिदपृच्छत्—भो वृद्धे। किमर्थं भ्रमसि ? का ते चिन्ता ? कथं चोद्विग्ना ? किं शोचसि ? किन्ते मनसि। वर्त्तते ? इति। सा नैव किञ्चिद्वक्तुं प्राभवत्, तथापि धैर्यं धृत्वा अचकथत्। श्रुणु मम चिन्ताकारणम्। कानिचिद् दिनानि व्यतीतानि। ममैक एव पुत्रः कदाचिन्मरणान्तिकं दुःखमवाप्नोत्। तेनातीव चिन्ताकुला अभूवम्। प्रार्थितवती अनेककल्याण गुणगण विशिष्टमानन्दकस्वरूपं भगवन्तं श्रीकृष्णम्। मत्प्रार्थनया सुप्रसन्नो भगवान् पुत्रस्य रुग्णतामपसारयत्। परन्तु नाहं ब्राह्मणान् भोजयितुं प्रभवामि। ब्राह्मणान्न भोजयिष्ये चेत् पुनः श्रीकृष्ण मह्यं क्रुध्यति। ततः किं करिष्यामः। नोपायः कश्चिद् दरीदृश्यते। कथमृणशुद्धिर्भवेदिति चिन्तयाकुलितमानसा कालं याययतिस्म।

श्रीकृष्ण एव शरणं ममेति निर्धारितम्। तदा स प्राश्निकस्तथाविधां तां प्रत्यभाषत। मात ऋणशुद्धये उपायमेकं श्रुणु। अस्मिन्नेव स्थाने सखेति विज्ञायताम्। भगवान् स्वयमागच्छति तस्य गृहे, सहैव तिष्ठति, पिबति खादति, खेलति च। अतस्तत्समीपं गच्छ। तव सर्वाणि दुःखानि स अपनेष्यति। वचनं तस्य श्रुत्वा सा तत्सयीपमगच्छत्। उक्तवती च ममोपरि महत्कष्टमापतितमिति। भवानेव तद्दूरी कर्त्तुं प्रभुः। शरणागतां मां परिपालय। तच्छ्रुत्वा तेन महाभागेन पृष्ठम्। किन्ते कष्टम् ? वद, शीघ्रं वद। तदपनेतुमहं यथाशक्ति प्रयतिष्ये। सापि सर्वं दुःखं न्यवेदयत्। तत्सम्यक् श्रुत्वा तेन कथितम् श्रुणु। मम पुत्रोऽतीव नैष्ठिकः धर्मपरायणश्चास्ति। न स केनचिन्निर्मितं भोजनं करोति, न वा मां कारयति च। अस्मिम् विषये स अतीव दुर्धर्षः। भोजनसमये मम पार्श्वेत्वां प्रक्ष्यति चेत्तुभ्यं कोत्स्यति मह्यमपि। अहं न व वादने निश्चितसमयेऽत्रैव प्रतिदिनं भगवत्प्रसादं गृह्णामि। तस्मिन्नेव समये त्वमागत्य मम भोजनपात्रे यत्किञ्चिदपि स्वल्पमेवान्नंनिक्षिक्षिप्याति द्रुतमेवास्मद्गृहान्निर्गच्छ। अपरस्मिन्दिने सा वृद्धा तथैव कृतवती। तदा स पुत्रः कोपाविष्टः एकनाथ महाराजमवदत्—महाराज ! अहन्तु नियमेन पवित्रतया च पाकं करोमि। दुःखान्यपि सहे। भवाँस्तु नैतत्सर्वं गणयति। न जाने तस्या का जातिः ?

स्नाता अस्नाता वेत्यपि वक्तुं न शक्यते। भर्वास्तु अतीव भ्रष्टः सञ्जातः। नास्ति कश्चिन्नियमः, नैव कश्चिद्धर्मः। यस्याः कस्याश्चिदति हस्तात् भुङ्क्ते भवान् इत्यादि बहु प्रालपत्। महाराजस्तु मौनमालम्ब्य सर्वं भुक्तवान्। न किञ्चिदप्यवदत्। भोजनानन्तरमाचमनादिकं गृहीत्वा मुखप्रक्षालनादिकं विधाय स्वासनमधितिष्ठतिस्म। मुखोपरि नैव हर्षः, नैव च विषादः मालिन्यं वा, क्रोधस्य का कथा? महात्मनामेष एव स्वभावः। तदनन्तरं तेषां पुत्रः उच्छिष्टां पत्रावलिं निक्षेप्तुकामः तां यावन्त् हस्तेनोत्थापयति तावदधः पुनरपरां पत्रावलिं पश्यति। तदा स चिन्तयति यन्मया तु एकैव पत्रावलि स्थापितासीत्, तर्हि कथमिवेयं द्वितीया पत्रावलिस्तथैव दृश्यते। तस्यामुत्सारितायां पुनस्तृतीया, पुनश्चतुर्थीति पत्रावलिपरम्परा, तदनुसारं तदुत्सारणनैरन्तर्येण स विस्मितोऽभवत्। विस्मयमादधानः स मनसाविचारयति, किमेतदिति। मया तु एकस्यामेव पत्रावल्यां भोजनं परिवेषितमासीत्। अत्र पत्रावलिशतं कुतः? अत्र केनापिकारणेन भवितव्यम्। मम पिता नैव सामान्योजनः। अयन्तु महापुरुषः। नाहमेतावत्कालं यावत्स्वजनकम्प्रत्यभिज्ञातवान्। इति निश्चित्य वद्धाञ्जलिः स पितरमुपसृतवान्। तत्पादयोर्निपत्य रुदन् चाह— अतीव मूर्खः, पापात्मा, दुरात्मा चाहम्। भवतां महिमानं नैव ज्ञातवान्। केचन भवन्तं सत्पुरुषं कथयन्ति। अपरे भवन्तं भगवत्स्वरूपं विदन्ति। नास्ति कश्चिदेतादृशः महात्मा सम्प्रतीति। अतएवैक स्वरेणालपन्ति जनास्तथा ते पूजयन्ति। सर्वेषु भवद्भिः कृपा विधीयते। मयि भवतां कृपा कथं नास्ति? क्षमस्व मेऽपराधम्। क्षमस्व माम। उद्धर दुरात्मानमित्यनेकशः रोदं रोदं व्यलपत्। पुत्रस्य दीनतां शोकविह्वलतां वीक्ष्य सञ्जातकरुणः पिता अवादीत्। वत्स! मा शुचः, मा रोदीः, मा विलप। भगवान् श्रीकृष्णस्ते सर्वान् मनोरथान् साधयिष्यति। स भगवान् परमः कृपालुः तस्य कृपयैव सर्वं भवति, पुत्रोऽसि, कथं न त्वयि पुत्रेऽनुकम्पा स्यात्। अवश्यमेवोद्धरिष्यति भगवान्। स्वकर्मपरायणो भव। ततः स सन्तुष्टः सन् पितुः सेवापरायणः समभवत्। अस्तु।

एषामेव महापुरुषाणामन्वये श्रीजीवदेवः जनिमलमत। भगवत्स्वरूपापन्नस्य श्रीमतः एकनाथस्य पुत्रोऽनन्तदेव आसीत् विद्याविनयसम्पन्नस्यात्यन्तपूततमे महति वंशे समुत्पन्नस्य श्रीमतोऽनन्तदेवस्य च पुत्र आपदेवः समभवत्। आपदेवोऽपि मीमांसाद्वयपारदृश्वा विद्वाम् आसीदिति तदुपज्ञ मीमांसान्यायप्रकाश ग्रन्थस्य परिशीलनेन परिज्ञायते। अयञ्च प्रकरण-

ग्रन्थः भाट्टसिद्धान्तान् सम्यक् प्रतिपादयतीति गुरुपरम्परयैव ज्ञातुं शक्यते। तत्र भवतामाप देवमहोदयानां द्वौ पुत्रावास्ताम्। प्रथमोऽनन्तदेव द्वितीयो जीवदेवः। अयञ्च प्रथमानन्तदेवस्य पौत्रः। अपरश्च जीवदेवः। अनन्तदेवेन द्वितोयेन स्वपितृचरणरचितं मीमांसान्यायप्रकाशमधिकृत्य भाट्टालङ्कारटीका व्यरचि। सा चातीव गभीरा विस्तृता च। अस्य प्रगाढं वैदुष्यमनयाः टीकया प्रमाणीभवति। धर्मशास्त्रादिविषयेऽप्यनेके ग्रन्थाः विरचिता इति श्रूयते। जोवदेवोऽपि मीमांसायां धर्मशास्त्रे च ग्रन्थाः विरचितवान्। मीमांसायां भाट्टभास्करनाम्नः मौलिकस्य ग्रन्थस्यायं लेखकः। अयमपि श्रीकृष्णपदारविन्दासक्तचेताः। अतएवोक्तं मगङ्गलपद्ये—

श्रीकृष्णचारुचरणार्पितचित्तवृत्ति।

भाट्टभास्करे स्वपितूरापदेवस्य तथा स्वभ्रातुरनन्तदेवस्य च महता समावदरेण नाम गृह्णाति। मङ्कलपद्ये यथा—श्रीकृष्णप्रणतार्त्तिछून-मापदेवाभिधं गुरुम्। इति। एवमेव 'अधिकन्तु स्वपितृचरणनिर्मिते न्यायप्रकाशे द्रष्टव्यः'। इति। तथा 'विस्तरस्त्वस्मद्‌भातृचरणकृत भाट्टालङ्कारे वोध्यः' इति। यद्यपि भाट्टभास्करस्याधारभूतौ द्वौ ग्रन्थौ स्तः। प्रथमः पार्थसारथिमिश्रप्रणीत शास्त्रदीपिका प्रभृतयो ग्रन्थाः। अपरस्तु भट्टसोमेश्वरविरचितन्यायसुधाग्रन्थः। तथापि न्यायप्रकाश भाट्टालङ्कारयोरपि तत्रानुसरणं वर्त्तत एव। तस्माज्जीवदेवः मीमांसकानां पवित्रतमे कुले प्रादुरभवदिति सिद्धयति। अनन्तदेवविरचितस्य राजधर्मं कौस्तुभस्य भूमिकायामेतद्विषये भवदेव भट्टाचार्योऽपि लिखति—न्याय-प्रकाशकर्त्तुरापदेवस्य पुत्रः, अनन्तदेवस्य पौत्रः, एकनाथस्य प्रपौत्रोऽनन्तदेवो वर्त्तते। अनन्तदेव द्वितीयः जीवदेवस्यग्रज इति। एवमेव तत्त्वविन्दु-भूमिकायां के० राम पिशरोटी महोदया अपि कथयन्ति - आपदेवस्य पुत्र-द्वयमास्ताम्—अनन्तदेवो जीवदेवश्च। जीवदेवश्चापदेवस्य कनिष्ठपुत्रो-ऽस्ति। पी० वी० काणे महोदया अपि धर्मशास्त्रस्येतिहासग्रन्थेऽनन्तदेवं समुद्धरन् महाराष्ट्रीयस्य सत एकनाथस्य वंशोद्भवत्वेनामुं परिचाययन्ति। एवमेवास्मद्गुरुणां गुरवः म० म० चिन्नस्वामिशास्त्रिमहाभागा अपि मीमांसान्यायप्रकाशस्य सारविवेचिनीटीकायाः भूमिकायामनन्तदेव-विरचितात्संस्कार कौस्तुमग्रन्थात्कतिपयान् श्लोकान् प्रमाणत्वेनोद्धृत-वन्तः। तद् यथायथमुदाह्रियतेऽधस्तात्—

आसीद् गोदावरीतीरे वेदवेदिसमन्वितः।
श्रीकृष्णभक्तिमानेकः एकनाथभिधो द्विजः॥

तत्सुतः तद्गुणैर्युक्तः सर्वशास्त्रार्थ तत्त्ववित् ।
आपदेवोऽभवद्दैवात्प्राप्तो यः सकलान् मनून् ।।

मीमांसानयकोविदो मधुरिपोस्सेवासु नित्योद्यतः,
विद्यादानविभावितोत्तमयशा आसीत्तदीयात्मजः ।
यस्यानन्त गुणैरनन्त इति सन्नामार्थवत्तां गतम्,
येनावादि च वादिनां श्रुतिशिरश्शिसद्धान्तस्त्वं मुदे ।।

न्यायप्रकाशकर्त्ता निरवधिविद्यामृतप्रदस्सततम् ।
मीमांसाद्वयनयवित्तनयस्तस्यापदेवोऽभूत् ।। इत्यादि ।

तस्माज्जीवदेवः महतः सत एकनाथस्य तपःपरिपूतवंशे समुत्पन्नः । कुलमिदं मीमांसापारावारपारीणानामासीत् । कुलपरम्परयैव च मीमांसाविद्या समधीता । अतएव ग्रन्थनिर्माणेऽपि कुशल इति ।

**देश** :—अयञ्च विद्वान् स्वजनुषा कं देशं व्यभूषयदिति जिज्ञासायामासीद् गोदावरी तीरे इत्युक्तमेव बोध्यम् । उपर्युक्तविवेचनेनैव स्पष्टी भवति यदयं जीवदेव महाराष्ट्रीयो ब्राह्मण इति । महाराष्ट्रप्रदेशे सुप्रसिद्धे पैठणनामके ग्रामेऽयमेकनाथो न्यवसदिति सर्व जानन्ति । तत्राद्यापि समस्ति ब्राह्मणानां समवायः । स च ग्रामः गोदावर्याः पुण्यतटे वर्त्तते । अतो देश विषये नास्ति कश्चित्सन्देहः ।

**काल** :—ग्रन्थकारस्यास्य जीवदेस्य कालविषयेऽपि नास्ति कश्चित्सन्देहः । पी० वी० काणे महोदयः कथयति—अतन्तदेव द्वितीयः स्वाश्रयदातुर्वाजवहादुरस्य वंशं वर्णयति । तत्प्रेरणयैव स्मृतिकौस्तुभं व्यरचयत् । उक्तमपि स्वयमेव तत्र राजधर्मदीधितिप्रकरणे—

बाजबहादुरचन्द्रभूपतेस्तस्य भूरियशसे प्रतन्यते ।
राजधर्मविषयोऽत्र कौस्तुभोऽनेकदीधितियुतः सुधीसुखः ।।इति

वाजबहादुरश्चन्द्रवंशीयः क्षत्रीय आसीत् । तस्य शासनसमयः ख्रष्टीया सप्तदशशताब्दी वर्त्तते । तस्मादनन्तदेवजीवदेवयोः समयः सप्तदशशताब्द्यास्तृतीयचरण आसीत् । राजधर्मस्य भूमिमालेखकः श्रीभवदेवभट्टाचार्योऽपि लिखति—वाजवहादुरस्य समयः ऐतिह्यविद्द्वाषष्ट्युत्तरषोडशशतमीशवीयवर्षः (१६६२) मन्यते । अनेन चानन्तदेवस्य समयः

पञ्चचत्वारिंशयुत्तरषोडशशताब्दी (१६४५) मारभ्य पञ्चसप्तत्युत्तर-षोडश (१६७५) शताब्दीमन्तरा निश्चीयते। तदनन्तरं जीवदेवस्य समय स्यात्। तस्यानुजत्वात्। अतः सप्तदशशताब्धाः अन्तिमेभागे जीवदेवस्य इति सम्भावना।

एवमेव के० राम पिशरोटीमहोदयेनाप्युदृङ्कितम्—सप्तदशशताब्द्याः प्रारम्भेऽऽपदेवस्य जम्माभूत्। द्वितीयनान्तदेवश्च जीवदेवस्याग्रज इति। म० म० चिन्नस्वामिशास्त्रमहाभागैरपि द्वितीय संस्करणस्य मीमांसान्याय-प्रकाशस्य भूमिकायामुल्लिखितम्—ग्रन्थकारोऽयमापदेवो दक्षिणात्ये महाराष्ट्रप्रदेशे सप्तदशशताब्धाः आदिमे भागे प्रादुरभूदिति। तत्र प्रमाण-यन्ति च—भाट्टदीपिकालेखकः आचार्यखण्डदेवः पञ्चषष्ठ्युत्तरषोडश (१६६५) शतखृष्टीयवर्षे स्वीकीयं भौतिकं शरीरं परिक्तवानिति। भाट्टदीपिका चापदेवीयस्य न्यायप्रकाशस्य नामग्राहं विदधाति। तस्मात्खण्देवात्पूर्वमेवास्यापतेवस्योत्पत्तिरिति। तदनन्तरमेवान्तदेव-जीवदेवयोः समय इति निर्धारयितुं शक्यते। आचार्यो जीवदेवश्चानन्त-देवस्यानुजः। अतस्तदनन्तरमस्य जीवदेवस्य काल इति स्पष्टं भवति। अतएव पञ्चषष्ठ्युत्तरषोडशशततमे खृष्टीये वर्षे खण्डदेवस्य समयः। तत्पूर्वमर्थात् पञ्चषष्ठ्युत्तरषोडशशतमखृष्टीयाब्दात्पूर्वमापदेवस्य समयः। तदन्तरं सप्तदशशताब्द्याः द्वितीयचरणस्यान्तिमे भागेऽथवा तृतीयचरणे वा जीवदेवस्य प्रादुर्भावकाल इति सुनिश्चितं भवति। तस्मात्सप्तदश शताब्द्याः उत्तरार्द्ध एव जीवदेवस्य काल इति।

**कृतयः**—जीवदेवमहोदयाश्चतुरो ग्रन्थान् जग्रन्पुरिति हस्तलेख संग्रहसूचितकातोऽवगम्यते। यथा—

१. भाट्टभास्करः (धर्मप्राणपरिच्छेदो वा)।

२. आशौचनिर्णयः आशौचदीधितिर्वा।

३. गोत्रप्रवरनिर्णयः।

४. तुलसीविवाहः।

राजधर्मस्य भूमिकालेखकः भवदेवभट्टाचार्यः लिखति—अनन्तदेवस्य लघुभ्राता जीवदेवः आशौचनिर्णयनामकः ग्रन्थ विरचितवान्। के० आर०

पिशरोटो महोदयः स्वीकरोति—जीवदेवस्य भाट्टभास्करस्य लेखक आसीत्। गोत्रप्रवरनिर्णयस्यापि लेखकोऽयमेव जीवदेवः। नाम्नैव ग्रन्थस्य विषयोऽपि स्पष्टी भवति। एवमेवाशौचनिर्णय शब्देनापि न तिरोहितं भवति ग्रन्थ-विषयः। आशोचञ्च मुख्यरूपेण द्विविधम्—जननाशौचम, मरणाशौचं चेति। उभयोश्चावान्तर भेदोऽपि वर्त्तते। यथा जननाशौचमध्ये मृताशौच-प्राप्तिः। अथवा मृताशौचमध्ये जननाशौचप्राप्ति र्व्यवस्था च। तस्मादाशौचविषये विविधाविचिकित्सानिवृत्तिसम्पादकोऽयं ग्रन्थ इति। एवमेव तुलसीविवाहोनामा ग्रन्थः तुलसीदेव्याः केनचित्सह कथं वा विवाह कार्य इत्यादयोऽनेके विषयास्तत्र सम्भाव्यन्ते। अयमपि ग्रन्थोऽस्यैव विदुष इति वदन्ति विद्वांस इति।

इदानीयस्य भट्टपादमतप्रकाशकस्य भाट्टभास्कर संज्ञकस्य ग्रन्थस्य मातृकापरिचयः प्रस्तूयते—

तत्र प्रथमा मातृका प्रयागस्थगङ्गानाथझा केन्द्रीयसंस्कृतविद्यापीठीय संग्रहालयस्य विद्यते सङ्ग्रहः। तत एव समुपलब्धेयमिलि। इयमेव च मातृका मूलमातृकात्वेनात्र व्यवहृता। अनयैव प्रतिलिपिः सम्पादिता मया। मातृकेयं पुण्यश्लोक श्रीगङ्गानाथझामहोदयानां करकमलपरिपूता वर्त्तते। यत्र तत्र पाठभेदोऽपि विद्यते सम्पादितः। ते महोदयाअस्य ग्रन्थस्य प्रकाशनाय कृतप्रयन्ना आसन्निति प्रतीयते। अस्मिन्नेव सङ्ग्रहालयेऽन्या मातृकापि वर्त्तते। तयैव च पाठभेदः सम्पादित इति मातृकामेलनेन प्रतीयते। कर्गजाधारे लिखितेयं मातृका। लिपि च देवनागरी विराजते। मातृकेयं सुस्पष्टाक्षरा। पठने न कुत्रापि भवत्यव-रोधः। सम्पूर्णे च ग्रन्थे लिर्पिविद्यते समानैव। तस्मादेकेनैव प्रतिलिपि-कारेण कृता प्रतिलिपिरित्यनुमीयते। चतुरधिमशतपृष्ठान्यत्र विराजन्ते। प्रतिपृष्ठञ्चैकविंशतिसंख्यापरिमिताः पङ्क्तयो विलसन्ति। प्रतिपङ्क्ति च द्वात्रिंशद्वाष्टात्रिंशद्वाक्षराणि विद्यन्ते। ग्रन्थसंख्या ६९२/२१ अङ्किता दृश्यते। दौर्भाग्यादियं मातृकापूर्णैवोपलब्धा। कृतप्रयत्नोऽनैव पूर्णता प्राप्तवती। द्वयधिकनवतिपृष्ठं यावत्प्रमाणपरिच्छेदः। तदन्तरञ्च प्रयोग-परिच्छेदः प्रारब्धः। तत्राग्निहोत्रदर्शपूर्णमासौ व्याख्यातौ त्र्यधिकशत-तमपृष्ठं यावत्। ततश्च चतुरधिकशततमे पृष्ठे 'अथ चातुर्मास्यानि-विविच्यन्ते' इति वर्त्तते लिखितम्। तत्र चतस्रः पङ्क्तय एव सन्ति। पञ्चम्यो पङ्क्तौ चैकशब्दमात्रमेव दृश्यते। प्रतिलिपिकारस्य नाम न

कुत्रापि समवलोकयते। ततश्च मातृका नोपलभ्यते। श्रीमतां गङ्गानाथझा-महोदयानामासीदिच्छास्याः मातृकायाः सम्पादने, परन्तु केनापि कारणेन न सा पूर्णा जाता, 'कालो हि दुरतिक्रम'। सम्प्रति अस्मादेवविद्यापीठादस्य ग्रन्थस्य जायते प्रकाशनमित्यतीव मोदमावहति। तत्प्रतिनिधिभूतेयं संस्था तेषामपूर्णानि कार्याणि पूरयति, तस्मात्तेऽपि तुष्टाः भवेयुरिति मनीषा। यत्र कुत्रापि ते भवन्तु नाम, परन्तु तेषां प्रीतयेऽवश्यमेवेदं कार्यं स्यादिति मन्ये।

अपरापि मातृकास्यैव विद्यापीठस्य सङ्ग्रहालयविभागतः समुपलब्धा। अत्र केवलं चतुर्दशपत्राण्येव सन्ति। अयमपि कर्गजाधारे लिखिता वर्त्तते तथा लिपि च देवनागरी समस्ति। अक्षराणि च सुवाच्यानि सन्ति। पाठभेदस्याधिकयन्तु नास्ति। अनयैव मातृकया मूलमातृकायां यत्र कुत्र पाठभेदो विद्यते। ग्रन्थसंख्या १६८१७ वर्त्तते। प्रतिपृष्ठं द्वादशपङ्क्तयो विद्यन्ते। प्रतिपङ्क्ति च पञ्चाशदक्षराणि सन्ति। पत्रस्योभयतः मिलित्वैकैव संख्या परिगण्यते। केषुचिरपत्रेष्वष्टौ नव वा पङ्क्तयोऽपि भवन्ति। अक्षराणां संख्या क्रमशः एकाधिकषष्ठी वाष्टाधिकत्रिंशद्वा वर्त्तते। यद्यपि प्रतिलिपिकारस्य न कुत्रापि नामोट्टङ्कनमवलोक्यते तथापि लिपिदर्शनेन लिपिकारद्वयेन लिखितमिति प्रतीयते। प्रथमपृष्ठे 'द्वैतीयानि' इति शब्दं लिखित्वा कर्मभेदकानि शब्दान्तरादिप्रमाणानि लिखितानि सन्ति। ततश्च 'तार्तीय' इतिशब्दमुल्लिख्य श्रुत्यादीनि विनियोजकानि प्रमाणानि सन्ति निरूपितानि। सम्पादनकार्येऽस्मिन् मातृकेयं 'क' नाम्ना व्यवहारपदमारोहति।

तृतीया मातृका श्रीरघुनाथमन्दिरसङ्ग्रहालय जम्मूतः 'फोटो कापी' रूपेण समुपलब्धा। नेयमपि पूर्णतामावहति। मातृकायामस्यां पाठभेदानामाक्यं वर्त्तते। 'फोटो कापी' दर्शनेन मूलमातृकायाः दर्शनाभावाच्च कर्गजविषये विशेषरूपेण न किमपि वक्तुं शक्यते तथापि 'फोटो' दर्शनेनैव

कर्गजाधारे लिखितेयं मातृकेत्यनुमीयते । लिपिश्चदेवनागरी वर्त्तते । लिपिश्चान्तं यावत् समानैवावलोक्यते, नास्ति कुत्रचिद्भेदः कलनयैक-षष्ठीसंख्याकानि पत्राणि भवन्ति । एकस्मिंश्च पत्रे नवसंख्यामारभ्य त्रयोदशसंख्यां यावत्पङ्क्तीनां संख्या वर्त्तते। एवमेव प्रतिपङ्क्तिरक्षाणां संख्या द्वाचत्वारिंशत्पञ्चाशद्वा विद्यते । प्रतिलिपिकारस्य न दृश्यते कुत्रापि नाम । प्रथमपृष्ठे किममि लिखितमस्ति, परन्तु सुवाच्यत्वपदवी-मनारूढत्वात् किमपि वक्तुं न शक्यते तस्मिन् विषये। मातृकासंख्या च M.S. No. ४३२८ वर्त्तते। अत्र मातृकेयं 'ख' नाम्ना व्यवनारविषयी-भूता वर्त्तते ।

चतुर्थीमातृकापि श्रीरघुनाथमन्दिरसङ्ग्रहालय, जम्मूत एव सम्प्राप्ता। इयमपि 'फोटोकापी' एव वर्त्तते। मातृकायामस्यां प्रायोऽशुद्धयः स्वल्पः एव वर्त्तन्ते। पाठभेदोऽपि नाधिकः। इयमपि कर्गजाधारे एव लिखिता वर्त्तते तथा लिपिः देवनागरी विद्यते। प्रतिलिपिः सुस्पष्टा, स्वच्छा, सुवाच्या च विद्यते। अन्तं यावल्लिपिः समानैव दृश्यते। तस्माल्लिपिकारस्यैक्यं सिद्ध्यति। अस्यां सप्तसप्ततिः पृष्ठानि सन्ति। प्रतिपृष्ठमेकादशत्रयोदशसंख्याकाः पङ्क्तयो विराजन्ते। प्रतिपङ्क्त च द्वाविंशदष्टात्रिंशद्वाक्षराणि विलसन्ति । मध्ये सप्तममष्टममञ्च पत्रं त्रुटितं वर्त्तते तथापरमपि पत्रमेकं नास्ति । नेयमपि मातृका पूर्णतामाव-हति। कुत्रापि प्रतिलिपिकारस्य न विद्यते नामोल्लेखः। कार्येऽस्मिन्नस्या अपि मातृकायाः जातः सम्यक् समुपयोगः। मातृका संख्या च M. S. No ४३६१ वर्त्तते। अत्रेयं मातृका 'ग' नाम्ना व्यपदेशमर्हति।

पञ्चमातृका विद्याराजधान्यां काश्यां सुप्रतिष्ठितसरस्वतीभवन-सङ्ग्रहालयतः समुपलब्धा । इयमपि 'फोटो कापी' वर्त्तते 'हैण्डमेड' कर्गजाधारे लिखितेयं मातृका । कर्गजपत्रञ्चातीव प्रत्नतामावहति । लिपिश्च 'ग्रन्थम्' वर्त्तते । प्रतिलिपिकारस्य न कुत्रापि विद्यते नामोल्लेखः। मूलमातृकया सह संयोज्य विचार्यमाणेऽधिकपाठभेदप्राप्तिरेवास्याः

वैशिष्टयम् । मध्ये मध्ये ग्रन्थपातोऽपि समवलोक्यते । अस्यां द्विचत्वारिंशत्पत्राणि सन्ति । प्रमाणपरिच्छेदान्तैवेयमपि समुपलब्धा । अतएव नेयमपि पूर्णतापदमधिरोहति । प्रतिपत्रं त्रयोविंशतिः पङ्क्तयो विलसन्ति । प्रतिपङ्क्ति चास्क्षरसंख्या द्वात्रिंशच्चत्वारिंशद्वावर्त्तते । आकारस्चास्या ३१ × १६.५'' विद्यते । अत्रेयं मातृका 'घ' नाम्ना व्यवहृता वर्त्तते ।

षष्ठो मातृकापि काशीस्थसरस्वतीयसङ्ग्रहालयत एवास्ति प्राप्ता । अस्या अपि मातृकायालिपिदेवनागरी तथा आधारस्तु कर्गजमेव वर्त्तते । प्रतिलिपिकारस्य न मिलति कुत्रापि नामसङ्केतः । नेयमपि पूर्णतां धारयति, अपि तु प्रमाणपरिच्छेदपर्यन्तैव लसति । अस्यां पाठभेद स्याधिक्य वर्त्तते तथा महत्त्वमरयाविर्गत्ति । अस्यास्तु पाठोऽतीव विशुद्धः । अतएव ग्रन्थशुद्धावाधिक्येन समुपयोगोऽस्याः समनुभूतः दुरूहशब्दानामर्थवोधनाय प्रान्तटिप्पण्यपि विराजते । प्रतिलिपिकरणे च न दृश्यते कुत्रचिदपि प्रमादः । अस्यां मातृकापरिचयोऽपि सन्नद्धावर्त्तते । मातृकाया आगमनसंख्या—४८०३३ / आगम ६८५१ निर्दिष्टास्ति । पुनश्च क्रमसंख्या १ / ३२ सम्वत् १८५६ लिखितं दृश्यते । अत्रैकपञ्चासत्पत्राणि सन्ति । प्रतिपृष्ठमेकादशपङ्क्तयो विद्यन्ते । पतिपङ्क्ति चैकपञ्चाशदक्षराणि विद्यन्ते । आकारश्चास्या १२.४ × ८.२ अवलोक्यते । इयञ्च मातृकात्र (ङ) संज्ञय व्यपदिष्टा ।

सप्तमीमातृकापि काशीस्थसरस्वतीभवनसङ्ग्रहालयत एव सम्प्राप्ता । अस्या अपि लिपिर्देवनागरी तथाधारः कर्गजमेव विद्यते । अत्र मातृकायां प्रतिलिपिकारः 'रमाकान्त' इति स्वनाम लिखति । नेयमपि मातृका पूर्णा वर्त्तते, अपि तु मूलमातृकामेवानुकरोति । प्रतिलिपिकारः प्रतिलिपिकरणे नैव समाहितचित्तः प्रतिभाति । प्रामादिका अशुद्धयः सन्ति । प्रतिपङ्क्तिप्रमादवाहुल्यम् । अक्षराणां त्रुटिरपि वर्त्तते । विषयाणां पौर्वापर्येऽपि दृश्यते व्यतिक्रमः । वहुषु स्थलेषु पुनरावृत्तिरप्यवलोक्यते । लेखनञ्च भ्रान्तिपूर्णमस्ति । अतएवोभयोस्तोलने महत्वकाठिन्यं समन्व

भूतम् । अस्यामपि महत्त्वपूर्णपाठभेदोऽप्यमिलत् । तस्माद् ग्रन्थशोधने साहाय्यमपि लब्धम् । स्थूलाक्षारेषु लिखितत्वात् प्रतिलिपिपठने नैव काठिन्यं जातम् । प्रतिलिपिसमयः सम्वत् १८१७ वर्त्तते निर्दिष्टः । अत्र १०९३१ / आगम ४६७५ वर्त्तते संख्या निर्दिष्टा । क्रमसंख्या च १३ सम्वत् १८१७ इति दृश्यते । सन्त्यत्र ११८ पत्राणि । प्रतिपृष्ठञ्च पङ्क्तिसंख्या १० वर्त्तते । अक्षराणाञ्च संख्या प्रतिपङ्क्तिषट्त्रिंशत् विद्यते । आकारश्चास्या ९.८ × ४.५ विराजते । सम्पादनकार्येऽत्रेयं 'च' संज्ञया व्यपदेशमर्हति ।

अष्टमी मातृकापि काशीस्थसरस्वतीभवनसङ्ग्रहालय त एव समुपलब्धा वर्त्तते । अस्या अपि लिपिर्देवनागरी तथाधारश्च कर्गजमेव वर्त्तते । यद्यपि हस्तलेखसङ्ग्रहसूच्यां पूर्णत्वेन निर्दिष्टा वर्त्तते तथापि नेयमपि पूर्णा । भ्रमवशात्तथा निर्देश इति ज्ञायते । प्रमाणपरिच्छेदान्तैव मातृका वर्त्तते । लिपिकारस्य नाम न कुत्रापि दृश्यते । लिपिकालोऽपि न निर्दिष्टः । अस्यां मातृकायामनेकस्थलेषु पुनरावृत्तिरवलोक्यते । अन्तिमे च भागे शुद्धता समवलोक्यते । अन्ते रामस्य नाम स्मरति तथा पृष्ठ-संख्यालेखनकालेऽपि न विस्मरति रामम् । अस्याञ्च १९ संख्याकानि पत्राणि सन्ति । प्रतिपृष्ठमष्टसंख्याकाः सन्ति पङ्क्तयः । प्रतिपङ्क्तिषु च प्रायः ३७ संख्याकान्यक्षराणि विद्यन्ते । आगमसंख्या २२२/२९६६३ वर्त्तते क्रमसंख्या च १ / ६४ विद्यते । आकारश्चास्याः १०.८×४.४ समस्ति । अत्र चेयं मातृका 'छ' संज्ञया व्यपदेशभाग्भवति । इति मातृकाणां परिचयसंक्षेपः ।

सम्पादनसत्कर्मण्यत्र ये सहायीभूताः सन्ति, तेषु सर्वप्रथमं विविध-विद्यावदातहृदयाः पाण्डुलिपिविज्ञानेऽतीवनदीष्णाः प्रयागस्थागङ्गानाथझा-केन्द्रीयसंस्कृतविद्यापीठे प्राचार्यपदमलङ्कुर्वाणाः डॉ० गयाचरणत्रिपाठि-महाभागाः स्मरणीयाः विद्यन्ते । अनेकेषु प्रशासनिककार्यव्यासक्तेष्वप्य कार्ये समये समये ममोत्साहं सम्वर्द्धयन्तस्तत्र च सौष्ठवं सम्पादयितुं

सत्परामर्शप्रदानेनोपकृतवन्तः । प्रयागविद्यापीठे प्रथमागमनकालादेव मपि स्निह्यन्ति ते। तत्र कारणं किमिति न जाने। भवेदत्र किञ्चिददृष्टम्। यद्यपीदं कार्यं प्रथमत्वेन गृहीतमासीन्मया, परन्तु तन्निदेशेनैव मध्येऽत्र व्यासक्तत्वान्न यथासपयमिदं कार्यं सम्पन्नम्। स्थानान्तरणसमये निवेदिते मया—यदिदं कार्यं स्वीकृतं मया, किन्तु नैव पूर्णतां प्राप्तम्, तथाप्यहं कर्त्तुमिच्छामि । तदर्थं किं कर्त्तव्यम्? एतच्छ्रुत्वा त्वरित सुप्रसन्नेन चेतसा ते कथितवन्तः, न कापि क्षतिः। भवता यत्कार्यं कृतमद्यावधि तद्विद्यापीठाय गौरवमावहति। इदमपि कार्यं भवद्भिरेव सम्पादनीयम्। तदर्थं यदावश्यकं तत्सर्वं सम्पादयिष्यामि। आचरितमपि तथैव तेषां सत्सहयोगेनैव कार्यमिदं सुसम्पन्नमिति मन्ये।

तदनन्तरं पूज्यपादान् गुरुवर्यान् डॉ० गजाननशास्त्रिमुसलगाँवकर-महाभागान् स्मरामि प्रणमामि च। येषामत्र कार्येऽऽसीत्समुचितनिर्देशः। येन कार्यमिदं विद्वज्जन ग्राह्यं समभूत्। ते च यथासमयमत्र प्रेरयामासुः। तेभ्यो प्रणतितर्ति समर्प्य शुभाशीर्वादं कामये । अत्र प्रेरणास्तोतसां डॉ० किशोरनाथझामहोदयानामपि सहयोगं सत्प्रेरणाञ्च नैव विस्मरामि। तेऽपि सत्सम्मतिं प्रदाय ममोत्साहञ्च सम्वर्द्धितयन्तः । सर्वप्रममहं सम्पादनकार्येऽनभिज्ञ आसम् । अध्यापनकार्यं परित्यज्यात्राहमागतवान्। तस्मिन्नपि समये ते निर्दिष्टवन्तः—अत्र किं कार्यं कर्त्तव्यं भवति तथा कथं वा प्रारभते इत्यादि । तैश्च सम्यग् निर्दिष्टोऽहं तन्निर्देशमनुसृत्यैवात्र प्रवर्त्ते । तस्मात्तेभ्यः श्रीमद्भ्यः सपरिवारेभ्यः सर्वविधं कल्याणार्थं भगवन्तं श्रीमन्नारायणं प्रार्थये। यदाप पाठभेदकार्यं सम्पादयन्नहमासम्, तदा मातृकैका ग्रन्थलिप्या ममिलत्। तत्रास्माकं गतिवरुद्धा सञ्जाता। तल्लिपिविषयकज्ञानाभावात्। तर्हि कथं कार्यं स्यादिति चिन्ता। तत्र डॉ० के० ई० गोविन्दाचार्या स्वामूल्यं समयं प्रदाय मामनुगृहीतवन्तः। प्रतिदिनं पाठभेदकार्यसम्पादने सत्सहयोगं विधाय मामुपकृतवन्त इति। तेभ्योऽपि कल्याणाय भगवन्तं श्रीनिवासं प्रार्थये । स्थानान्तरकालं यावन्न सर्वं कार्यं सम्पन्नम् । हस्तलेखप्रत्यावर्त्तनमय्यावयकम्, तर्हि

क्षिप्रेण कार्यं सम्पादनीयम् । तस्मिन्नसययेऽस्मच्छिष्यभूतौ डॉ० रमाकान्त-मिश्रस्तथा डॉ० चन्द्रशेखरतिवारी हृदयेनाधिकं समयं प्रदाय कार्यमिदं यथासमयं सम्पादितवन्तौ । अतस्ताभ्यां हृदयेन शुभकामना वितराभि तथा विद्यावैभवसम्वर्द्धनाय भगवन्तं श्रीमन्नारायणं निवेदयामि ।

तदनन्तरमस्माकं स्थानान्तरणं सञ्जातम् । तस्मादेवाहं प्रूफ-संशोधनादिकं कार्यं कर्त्तुं पारये । तदर्थं ये ये विद्वांसः प्रयतितवन्तः कार्यञ्च सम्पादिवन्तस्ते सर्वेऽपि धन्याः स्मरणीयाः पूज्याश्च सन्ति । सम्प्रति चापि प्रूफादिसंशोधन कार्ये व्यासक्ताः यद्यपि वैयाकरणत्वेन प्रख्यातास्तथापि विभिन्नधर्मदर्शनादिषु शास्त्रेष्वप्रतिहतगतयः डॉ० रामनारावणमिश्र-महाभागाः समाजनीयाः सन्ति यद्यप्येतेऽपि प्रूफ संशोधने नाम्यस्तास्तथापि यत्नं कृतबन्तः एतेषामनुकम्पयैव कार्यमिदं सम्पन्नं सौष्ठवञ्च समाप्त-मिति । तेभ्यः सपरिजनेभ्यः सपरिवारेभ्यश्च कल्याणं वितरतु भगवान् श्रीहस्तिशैलशिखरोज्ज्वलपारिजातः । मित्रवर्याः मातृकासङ्ग्राध्यक्षाः झोपाह्वश्रीजोवेश्वरशर्माणोऽपि भृशं स्मरणीयाः । ते यथासमयं मातृकादिकं प्रदायोपकृतवन्तः । द्वितीयञ्च परिशिष्टं पौनः पुन्ये न चर्चाफलमेव । यद्यपि कार्येऽस्मिन् विघ्नपरम्परैव दृष्टा तथापि धैर्येण समुत्साहेन सौजन्येन च मुद्रणकार्यसम्पादितवते श्रीमते उपेन्द्रत्रिपाठिने शुभोदयायास्माकं पक्षतेऽनेकशः शुभकामना वर्त्तते ।

ये च विद्वांसोऽत्र प्रूफसंशोधनादिकं कार्यं कृतवन्तः । नाम च तेषां न दृष्टिपथमारोहति, तेऽपि सर्वे समाजनीयः स्मरणीयाश्च सन्ति । यद्यप्यत्र त्रुटिनां सम्भावना विद्यत एव तथापि—

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति साधवः ॥

इति न्यायेन न्यायेन क्षन्तव्योहमिति ।

आश्विन शुक्ल
नवमी
सं० २०५२

विदषामाश्रवः
कमलनयन शर्मा
२-१०-९५

श्रीजीवदेवविरचितः

# भाट्टभास्करः

## मङ्गलाचरणम्

ध्यात्वा[1] जगत्प्रकृतितत्सवितुर्वरेण्यं,
नत्वा गुरून्सदसदर्थविवेकविज्ञान् ।
श्री[2]कृष्णचारुचरणार्पितचित्तवृत्तिः,
कुर्वे [3]प्रबन्धमलसार्भक[4]बुद्धिवृद्धयै ॥१॥

मीमांसार्थं प्रपद्यन्ते[5] व्यूढान्धतमसाः[6] कथम् ॥
[7]इत्येष जीवदेवेन क्रियते [8]भाट्टभास्करः ॥२॥
[9]यथामति यथाशास्त्रं यन्मयोक्तं समासतः ॥
विवेचयन्तु [10]तत्प्राज्ञाः सम्प्रदायविदां वराः[11] ॥३॥

---

१. ध्यात्वेत्यारम्य श्लोकत्रयपर्यन्तं ग छ पुस्तकयोर्नास्ति । 'घ' पुस्तके च ध्यात्वेति श्लोकत्रयात्पूर्वमेव श्रीकृष्णेत्यादिश्लोकद्वयं पठितं वर्त्तते ।

२. श्रीभूम इति च पु० पाठः ।

३. 'निबन्धममलं खलु जीवदेवः' इति च पु० पाठः ।

४. 'मलसार्थक' इति मू० पु० पाठः ।

५. 'प्रवक्ष्यन्ते' इति मू० पु० पा० ।

६. 'गाढान्धतमसाः' इति च पु० पा० ।

७. 'इत्येवम्' इति च पु० पा० ।

८ 'भट्टभास्करः' इति च पु० पा० ।

९. 'सुखं यथामति' इति च पु० पा०

१०. 'तत्सन्तः' इति च० पु० पा० ।

११. यस्याः स्मरणमात्रेण वाग्विशेषो विजृम्भते ।
सा भारती चिरं नित्यं रमतां मन्मुखाम्बुजे ॥१॥
एकादशस्कन्धे—
वैदिकं तान्त्रिकं मिश्रं त्रिविधं तत्र मिश्रकम् ।
उत्तमं सर्वपूजानां विष्णुभक्तस्य माधव ॥२॥
'क' पुस्तके इत्यधिकं दृश्यते ।

[1]श्रीकृष्णं प्रणतार्त्तिघ्नमापदेवाभिधं गुरुम् ।।
प्रणम्य जीवदेवेन क्रियते भाट्टभास्करः ।।४।।
अस्तु मत्सरिणां वार्त्ता सन्तस्तत्त्वार्थदर्शिनः ।।
विवेचयन्तु ग्रन्थार्थमेष तेषु [2]कृतोऽञ्जलिः ।।५।।

## ग्रन्थप्रयोजनम्

इह खलु सुखदुःखप्राप्तिनिवृत्त्यर्थिनां[3] प्रेक्षावतां धर्माधर्मविषये प्रवृत्तिनिवृत्ती दृश्येते तत्र कार्त्स्न्येन धर्माधर्मनिर्णयार्थमयमारम्भः ।

## धर्माधर्मलक्षणम्

धर्मो नाम वेदबोधितश्रेयःसाधनताको[4] यागादिः अधर्मोऽपि वेदबोधिताश्रेयःसाधनताको[5] ब्रह्महत्यादिः तज्जन्यानि चापूर्वाणि[6] पुण्यपापाख्यानि[7] धर्माधर्मशब्दवाच्यानि [8]धर्मं चर, धर्मान्न प्रमदितव्यमिति धर्मः क्षरति कीर्त्तनादिति[9] चोभयत्रापि[10] प्रयोगात् । अत्र चोभयविचारात्तन्निष्कर्षः[11] क्रियते । तत्रादौ[12] धर्माधर्मौ प्रमाणतः स्वरूपतश्च निर्णीयेते ।

---

१. श्रीकृष्णमित्यादिश्लोकद्वयं ङ च मातृकयोर्नास्ति ।
२. कृताञ्जलिरिति मूलमातृकापाठः ।
३. निवृत्त्यर्थिप्रेक्षावतामिति मूलमातृकापाठः ।
४. 'साधनको' इति ग मा० पा० ।
५. 'साधनको' इति ग मा० पा० ।
६. च स्थाने वा इति क मा० पा० ।
७. पापशब्दस्य स्थानेऽपुण्यशब्दः घ मातृकायाम् ।
८. धर्मशब्दात्पूर्वं 'उभयत्रापि' इति पदं ख घ ङ च मातृकासु ।
९. दित्येवमिति ख मा० पा० ।
कर्मनाशाजलस्पर्शात् करतोयाविलंघनात् ।
गण्डकी बाहुतरणात् धर्मः क्षरति कीर्त्तनात् ।।
इति सम्पूर्णः श्लोकः नि० सि० तृ० प० उद्धृत ।
१०. चस्थाने वा इति क० मा० पा० ।
११. तदिति ङ मातृकायां नास्ति ।
१२. 'आदौ' इत्यस्य स्थानेऽऽद्यौ इति ग च छ मातृकासु ।

## तत्र प्रमाणानि, वेदापौरुषेयत्वनिरूपणञ्च

तयोः प्रमाणानि वेदमन्वादिस्मृतिशिष्टाचाराः। तत्र वेदस्यापौरुषेयत्वात्स्वतः प्रामाण्यम् प्रत्यक्षादिप्रमाणान्तरागम्ययागस्वर्गादिसाध्यसाधनभावबोधकस्यानर्थकप्रायार्थवादादिमयस्य[1] वा अवश्यं[2] स्मर्त्तव्यः कर्त्रा ग्रन्थादावन्ते वा नामलिखनादि[3] तदस्मरणादभावनिश्चयः। यत्तु[4] त्रयो वेदा अजायन्ताग्नेर्ऋग्वेदो वायोर्यजुर्वेदः आदित्यात्सामवेद[5] इति वैदिकमर्थवादवाक्यम्। तदुच्चैर्ऋचा क्रियते उपांशु यजुषोच्चैः साम्नेति विधिशेषत्वान्न स्वार्थे प्रमाणमिति वक्ष्यते।

यदि चैते विधयः कर्त्रपेक्षास्स्युस्ततः स्वर्गकामविध्यपेक्षितस्वर्गस्वरूपबोधकार्थवादवद्[6] विध्यपेक्षितकर्त्तृप्रतिपादकतया[7] स्वार्थे प्रमाणं भवेत्।

[8]न चैवं [9]काठकं कालापकमित्यनन्यपरशाखाविशेषसमाख्याभिः [10]कठादय एव कर्त्तारो भवेयुर्नत्वन्यपरवेदसामान्यकर्त्तृवचनादग्न्यादयः। वसिष्ठस्यार्षं विश्वामित्रस्यार्षमिति प्रतिवाक्यं स्मरणाद्वा[11] वसिष्ठादय

१. अनर्थकार्थवाद इति पदं घ ङ मातृकयोः तथा अनेकार्थवाद इति च मातृकायां दृश्यते।
२. अवश्यस्मर्त्त० इति मू० मा० पा०।
३. लिखनस्थाने 'लेखन' इति पदं ग घ ङ च मातृकासु दृश्यते।
४. यत्तु इति पदं मू० मा० नास्ति।
५. 'आदित्याः' इति घ मा० पा०।
६. वदित्यनन्तरं 'रात्रिसत्रविध्यपेक्षितप्रतिष्ठाफलबोधकार्थवादवच्चेदमपि' इति क ग च मातृकासु अधिकः पाठः। एवं ख घ ङ छ मातृकासु च 'विध्यपेक्षि'-कर्त्तृप्रतिपादकत्वेन इत्यपि चाधिकः दृश्यते।
७. विध्यपेक्षित इत्यारभ्य भवेत् पर्यन्तं ङ छ मातृकयोर्नास्ति।
८. न चैवमित्यस्य स्थाने किञ्चेति पाठः छ मातृकायाम।
९. काठकपदात्पूर्वं किञ्चेति पदं ख ग घ ङ च मातृकासु दृश्यते।
१०. काठकादय इति मू० मा० पा०।
११. 'वा' इति पदं घ ङ मातृकयोः नास्ति।

एव कर्त्तारो भवेयुः। न चेष्टापत्तिः कठादीनां शाखाकर्त्तृत्वं वसिष्ठादीनां वाक्यकर्त्तृत्वमित्युभयासम्भवात्। अन्यतरस्य वा[1] प्रामाण्यायोगात् न चार्षस्मरणम्, ऋषिर्दर्शनादिति स्मरणात्। सृष्ट्यादौ तत्तद्वाक्यदर्शन-मात्रेणोपपन्नम्, न वसिष्ठादेः कर्त्तृत्वसाधकमिति वाच्यम्। काठकादि-समाख्यापि तेन प्रवचनादित्येवमुपपन्ना। [2]कठादेः कर्त्तृत्वासाधिकेत्यपि दक्तुं शक्यत्वात्। न च मानवादिसमाख्यानां प्रवचननिमित्तत्वापत्त्या[3] स्मृत्यादेरपि नित्यत्वापत्तिः। अद्यन्तनामलिखन[4]दृढतरकर्त्तृस्मरणवशेन[5] तासां कर्त्तृपरत्वात्। वेदे तु तन्नास्तीति प्रवचननिमित्ता एव सर्वाः समाख्याः।

नन्वीश्वरकर्तृक एवास्तु वेदः, तस्य सर्वज्ञत्वेनातीन्द्रियधर्मादिज्ञान-सम्भवेन[6] कर्त्तृत्वसम्भवात् 'यस्य निःश्वसितं वेदा' इत्यादिश्रुतेश्चेति चेन्न। विकल्पासहत्वात्। स[7] किं यस्मिन्कस्मिंश्चित्कल्पे सृजति उत प्रतिकल्पम्। नाद्यः, तदभाववति कल्पे [8]वेदैकगम्यधर्माधर्मादिज्ञानाभावेन[9] तदनुष्ठानाभावात्कल्पान्तरोत्पन्नप्राणिनां सुखदुःखोत्पत्तिर्न स्यात्। न द्वितीयः [10]एककल्पस्थितं वेदं कल्पान्तरे सर्वज्ञत्वादुपदिशतीत्येवं कल्पना-लाघवे[11] सति[12] प्रतिकल्पं [13]रचनकल्पनागौरवस्यान्याय्यत्वात् तर्ह्येक-

---

१. वा स्थाने च ङ मातृकयोः।
२. काठकादेः' इति च मा० पा०।
३. 'पत्त्या स्मृत्या' इति ङ मातृकायां नास्ति।
४. लेखन इति मू० मा० पाठः।
५ कर्त्तुरिति छ मातृका पठति।
६. अधर्म इत्यपि मूलमातृकायाम्।
७. स इति पदं ङ छ मातृकयोर्नास्ति।
८. एकेति पदं घ मातृकायां नास्ति।
९. 'भावेन' इत्यस्य स्थाने 'भावे' इति घ ङ मातृकयोः दृश्यते।
१०. 'एक' इत्यस्य स्थाने एवमिति पठति छ मातृका।
११. 'लाघवेन' इति घ ङ मातृकापाठः।
१२. ङ मातृकायां सतीति पदं नास्ति।
१३. ख घ मातृकयोः 'रचना' पदं वर्त्तते, च मातृकायाञ्च 'रचनागौरव' पदं दृश्यते।

स्मिन्कल्पे[1] कृत्वा कल्पान्तरेषु [2]पुनस्तमेवोपदिशतीति चेन्न। अनादौ संसारे क्व कल्पे रचनं क्व कल्पे तस्यैवोपदेश इति नियन्तुमशक्यत्वात्। वाक्यरचनस्य च[3] जन्यज्ञानपूर्वकत्वदर्शनेनेश्वरे जन्यज्ञानकल्पनाप्रसङ्गात्। नित्यज्ञानस्य च वेदप्रामाण्याधीन[4]सिद्धिकत्वेनेतरेतराश्रय[5]त्वात्। सति तु वेदप्रामाण्ये तद्बोधितनित्यज्ञानव[6]त्त्वेनेश्वरस्य कर्त्तृत्वम्। तत्कर्त्तृत्वेन च वेदप्रामाण्यमिति। 'यस्य निःश्वसितं वेदा' इति तु निःश्वासवदप्रयत्न-सिद्धत्वं वदन् प्रवक्तृत्वमेवाह, न [7]कर्त्तृत्वम्। तस्मान्नेश्वरः[8] कर्त्ते-त्यन्यत्र विस्तरः। न च [9]प्रावाहणिरित्याद्यनित्यार्थसंयोगात्पौरुषेयत्वम्। [10]नित्यसिद्धवाय्वादिपरत्वेन बबरादिशब्दानां यथाकथञ्चिद् व्याख्यानात्। दधिव्रीह्यादिवद् वा कार्यानादित्वेन बबरादीनां कल्पना। वेदस्यापि नित्यत्वं कार्यानादित्वमेव, न[11] स्वरूपानादित्वम्, गगनादिवत्[12]। स ह्यानुपूर्वीविशेषविशिष्टवर्णात्मकः। तत्र वर्णानां स्वरूपतो[13] नित्यत्वे-ऽप्यानुपूर्वीविशेष[14]विशिष्टस्योच्चारणसामग्रीजन्यत्वादनित्यता। सर्वकालश्च तज्जातीयानुपूर्वी [15]काचिदस्तीति कार्यरूपेणानादित्वम्। न चैवं स्मृत्या-

---

१. 'समये' इति क ग छ मातृकासु पाठः।
२. पुनरिति पदं ङ छ मातृकयोर्नास्ति।
३. 'च' इति छ मातृकायां नास्ति।
४. सिद्धित्वेनेति पदं ख ग च मातृका पठति।
५. श्रयादिति मू० मा० पा०।
६. ज्ञानबलेनेति घ मातृकापाठः। ज्ञानत्वेनेति च ख छ मातृकासु।
७. तत्कर्त्तृत्वमिति ङ मातृकापाठः।
८. नेश्वरादि इति च मातृका पठति।
९. प्रावणि इति घ मा० पाठः।
१०. क च छ मातृकासु सिद्धपदं दृश्यते।
११. न च इति मू० मा० पाठः।
१२. 'गगनादित्व' इति ङ मातृका पठति।
१३. स्वरूपनित्येति मू० मा० पाठः।
१४. विशिष्टपदं मू० मा० नास्ति।
१५. कादाचिदिति ग मातृका पठति।

दीनामपि ब्रह्मयज्ञादिविधिसंयोगात् दध्यादिवत् कार्यानादित्वापत्त्या[1] वेदतुल्यत्वापत्तिः। तेषां प्रमाणान्तरजन्यज्ञानादिवाक्य[2]रचनसामग्रीजन्यत्वेन विशेषादित्यपौरुषेयो वेदः।

## वेदविभागः विधिस्वरूपनिरूपणञ्च

स च विधिनिषेधार्थवादमन्त्रनामधेयात्मा तत्र विधीनां विधायकत्वेन धर्मे प्रामाण्यम्। विधायकत्वं चाज्ञातज्ञापकत्वमनुष्ठापकत्वञ्च। विधयो हि लिङ् लोट् लेट् तव्यश्चाज्ञातभावनाज्ञापकाः, तदनुष्ठापकाश्च। भावना च भाव्यतेऽनयेति[3] व्युत्पत्त्या [4]यागानुकूलो व्यापारः। यजेत, [5]यजताम्, यजति, यष्टव्यमित्युक्ते हि यागानुकूलं व्यापारं कुर्यादित्यादिरूपेण भावनाया अज्ञातज्ञापनमनुष्ठापनञ्च पुरुषप्रवर्त्तनापरपर्यायं भवति। अतो लिङादीनां भावनाविधायकत्वेन[6] मुख्यं विधित्वम् तद् युक्तानि 'स्वर्गकामो यजेते'त्यादिवाक्यान्यप्यज्ञातभावनापेक्षितांशत्रयज्ञापकत्वा[7]द्विशिष्टभावनानुष्ठापकत्वाच्च विधय इत्युच्यन्ते। तेषां विधिवाक्यानामंशत्रयविशिष्टभावनाविधायकत्वेन भावनारूपे धर्मे प्रामाण्यम्।

## भावनाविभागः, शाब्दीभावनानिरूपणञ्च

द्विविधा च भावना—शाब्दी आर्थी च। शब्दगतः शब्दाभिहितो वा पुरुषप्रवृत्त्यनुकूलो व्यापारः शाब्दी। लोके गामानयेत्यादि लिङ् लोट् तव्याख्यविधित्रयश्रवणे एतद्वक्ता मत्प्रवृत्त्यनुकूलव्यापारवानिति बोधो जायते। तत्रावापोद्वापाभ्यां लिङादिशब्दानां वक्तृनिष्ठप्रवृत्त्यनुकूलव्यापारबोधकत्वं

---

१. दित्वापत्तेरिति मू० मा० पाठः।
२. 'रचना' इति पदं ख घ ङ मा० पाठः।
३. ययेति मू० मा० पा०।
४. अन्यानु० मू० मा० पा०।
५. यजति इति क० मा० पा०। यज इति ग० मा० पा०।
६. 'भावनानुविधयः युज्यन्ते, तेनापि' इत्यधिकं पठति ङ मातृका।
७. त्वात्तद' इति घ ङ मातृकयोः पाठः।

कल्प्यते[१]। आज्ञाध्येषणाप्रैषरूपाश्च वक्तुराशयविशेषाः प्रवृत्त्यनुकूलव्यापारत्वेन रूपेण लिङादिभिरभिधीयन्ते। ते[२] शब्दाभिहितत्वाच्छाब्दीभावनेति [३]कथ्यते, प्रवृत्त्यनुकूलत्वात्प्रवर्त्तनेति च। एवं [४]वैदिकलिङादिश्रवणेऽपि मत्प्रवृत्त्यनुकूलव्यापारवानयं विधिरिति बोधो जायते न त्वेतद्वक्तेति, तदभावात्[५] छन्दसि पा० सू० ३.४.६ इत्यधिकृत्य 'लिङर्थे लेट्' पा० सू० ३.४.७ इति विधानाच्च लेट् श्रवणेऽपि तादृशबोधो जायते। तत्र चतुर्णां विधीनामचेतनत्वेन तादृशाशयासम्भवात् [६]तद्गतः प्रेरणाशब्दाभिलप्यः शक्तिविशेषः प्रवृत्त्यनुकूलो व्यापारः कल्प्यते। स च शब्दगतत्वाच्छाब्दीभावना प्रवृत्त्यनुकूलत्वात्प्रवर्त्तनेति कथ्यत इति राणकः।

मण्डन[७] मिश्रास्तु यागादिगतस्येष्टसाधनत्वस्य ज्ञानस्य[८] प्रवृत्त्यनुकूलत्वात्तदेव प्रवृत्त्यनुकूलव्यापारत्वेन रूपेण विधिरभिधीयते। तच्छब्दाभिहितत्वाच्छाब्दी भावना, न तु शब्दगतः शक्तिविशेषः, प्रमाणाभावात्।

पार्थसारथिमिश्राः[९]—अथवा [१०]यदेतैराख्यातत्वांशेनार्थभावनाभिधानं [११]क्रियते। वक्ष्यमाणरीत्या[१२] तस्यानिष्टफलकत्वं विधिभिर्बोध्यते। स एव

१. कल्पिते इति घ० मा० पा०।
२. 'ते' इति पदं च मातृकायां नास्ति।
३. 'उच्यन्ते' क ग छ मा० पा०।
४. वैदिक पदं न पठति छ मातृका।
५. 'तदभाववत्' इति मू० मा० पा०।
६. 'न तद्गतः' इति ङ मा० दृश्यते।
७. मण्डनपदं ग घ च मातृकासु नास्ति।
८. साधनत्वज्ञानस्येति ङ मातृका पठति।
९. 'पार्थसारथि' इति पदं ग घ ङ च छ मातृकासु न दृश्यते।
१०. ''यदेतैः'' इत्यस्य स्थाने भजेत पदं ङ मा०।
११. 'अभिधीयते' इति ख ग ङ मातृकापाठः।
१२. तस्यामित्यारभ्य बोध्यते पर्यन्तं ख घ ङ मातृकासु नास्ति।

प्रवृत्त्यनुकूल एषां व्यापारः। आर्थीभावनानभिधाने[1] फलाद्यन्वयाभावेन पुरुषप्रवृत्त्यभावात्। अतो भावनाभिधानमेव[2] प्रवृत्त्यनुकूलव्यापारत्वेन रूपेण विधिभिरभिधीयते[3]। प्रवृत्त्यनुकूलव्यपारवान्विधिरिति प्रतीतिश्चेदानीमुपपन्ना। भावनाभिधानस्य विधिगतत्वात्। तदेव शब्दगतत्वाच्छब्दाभिहितत्वाच्च शाब्दीभावनेत्याहुः।

## आर्थीभावना, तस्याश्चाख्यातवाच्यत्वनिरूपणम्

आर्थीभावना तु पुरुषगतः फलानुकूलो व्यापारः। अर्थ्यते फल-[4]मनेनेत्यर्थः, पुरुषस्तद्गतत्वादार्थी। वस्तुतस्तु[5] अर्थ्यत इत्यर्थः फलम्, तस्येयमार्थी। अणन्तान्ङीप्। अस्याश्च दशाख्यातवाच्यत्वात्तदन्तर्गतं विधित्रयमाख्यातत्वेन रूपेण तामभिधत्ते। लोके च पचति, [6]पचेदित्याख्यातश्रवणे पाकाद्यनुकूलव्यापारस्य पुरुषगतस्य प्रतीतेः।

एवं वेदेऽपि यजति [7]यजेदित्यादिश्रवणे पुरुषगतफलानुकूल व्यापारात्मकभावना[8]प्रतीतेराख्यातत्वांशेन विधिभिः साभिधीयते। तव्यस्य तु[9] कृत्यत्वेनाख्यातत्वाभावान्नार्थभावनावाचित्वम्। तद् युक्ते तु वाक्ये फलादिश्रवणे सति तदन्वयानुपपत्त्या साक्षिप्यते। तव्येन वा लक्ष्यते। सा चार्थीभावना प्रयत्नात्मिकैव, सर्वाख्यातानां करोतिना विवरणात्। पचति[10] पाकं करोति, यजति यागं करोतीति। करोतेश्च यत्नवाचित्वात्।

१. 'या इष्टफलकत्वा' इत्यधिकं क ख घ ङ मातृकासु।
२. 'या इष्टफलकत्या' इत्यधिकं क ख घ ङ मातृकासु।
३. 'क्रियते' इति ख मातृका पठति।
४. 'येन' इति मू० मा० पा०।
५. 'वस्तुतस्तु' इत्यारभ्याणन्तान्ङीप् पर्यन्तं क ख ग घ च छ मातृकासु न दृश्यते।
६. 'पच' इति पाठः ङ मातृकायाम्।
७. 'यज' इति ङ मातृकापाठः।
८. भावनाया इति ख घ ङ मातृकापाठः।
९. विधेरिति पदं मूलमातृकायामधिकं दृश्यते।
१०. पचतिकरोतीति यावत् ख घ ङ च मातृकासु नास्ति।

अतः फलानुकूलव्यापारत्वेन रूपेणाख्यातेर्यत्नोऽभिधीयते[1]; न तु यत्नत्वेन। रथो गच्छतीत्याद्यचेतनकर्तृकाख्यातप्रयोगे तु यत्नरूपाख्यातार्थासम्भवात् रथादिनिष्ठो गमनाद्यनुकूलो व्यापारः पूर्वदेशविभागोत्तरदेशसंयोगादिरूपो[2] लक्षणया आख्यातार्थः।

वोढृश्वादिगतः प्रयत्नो वा रथादावुपचारेण। न च लक्षणोपचारकल्पनं दोषः बहुचेतनकर्तृकाख्यातप्रयोगानुसारेण लाघवेन च यत्नस्यवाच्यत्वे निश्चितेऽल्पाचेतनकर्तृकाख्यातप्रयोगाणामनेकविधव्यापारेषु [3]तत्तद्व्यापार-कल्पनस्य न्याय्यत्वात्। तस्माद्यत्न आर्थी भावनेति राणकः।

मिश्रास्तु [4]चेतनाचेतनकर्तृकाख्यातानां मुख्यत्वोपपत्तये फलानुकूल-व्यापारमात्रं भावना, न[5] यत्नमात्रम्। पचति पाके व्याप्रियते, रथो गच्छति गमने व्याप्रियते इति तुल्यबोधात्। करोतिरपि न यत्नमात्रवाची, किन्तु व्यापारसामान्यवाची। बीजमङ्कुरं करोतीत्यादिप्रयोगात्। न चास्य मुख्यत्वे सत्यौपचारिकत्वं युक्तम्। अतः करोतिना विवरणं व्यापारसामान्य-वाचित्वमेवाख्यातानां गमयति।

यत्तु लाघवात् यत्नवाचित्वमुक्तम्, तन्न। अनेकव्यापारव्यक्ति-वाच्यत्ववद् यत्नव्यक्तीनामप्यनेकासां वाच्यत्वात्। फलानुकूलव्यापारत्वस्य च वाच्यतावच्छेदकस्य यत्नवादिना[6] तेनाप्यङ्गीकारात्। यत्नत्वस्य च वाच्यतावच्छेदकत्वे तार्किकमतप्रवेशात्। [7]यतिधातुवदकर्मकतापत्तेश्च।

१. 'विधीयते' इति घ ङ मातृकयोः दृश्यते।
२. उपलक्षणयेति मू० मा० पा०।
३. व्यापारकल्पन० इति ङ मातृकापाठः। तत्कल्पनस्या० इति च छ मातृकापाठः।
४. 'चेतना' इति पदं च मातृकायां नास्ति।
५. नेति मू० मातृकायां नास्ति।
६. यत्नवादिनेत्यस्य स्थाने तेनेति पदं ख मातृकायां दृश्यते। तेनेति पदं मू० मा० नास्ति।
७. यतीत्यारभ्य पत्तेश्चेति यावत् ख घ च छ मातृकासु नास्ति।

अतस्तुल्यत्वे सति सर्वप्रयोगाणां मुख्यत्वाय फलानुकूलव्यापारसामान्य भावना आख्यातार्थ[1] इति संक्षेपः ।

## कर्त्तुराख्यातवाच्यत्वाभावनिरूपणम्

इयञ्च भावना क्रियात्वात् कर्त्तारं विना अनुपपन्ना, तमाक्षिपति, न त्वाख्यातानां कर्त्तरि शक्तिः कृतिमान् हि कर्त्ता । एवञ्च कृतिरूपायाः[2] भावनायाः लाघवेन वाच्यत्वे सति [3]तयैव कर्त्तु रविनाभावेनाक्षेपसम्भवान्न वाच्यत्वं कल्प्यम् । अनन्यलभ्यः[4] शब्दार्थ इति न्यायात् । आक्षिप्तस्य च कर्त्तुः परिच्छेदकसंख्याकांक्षायामाख्यातैरेकवचनाद्यंशेनैकत्वादिसंख्या तत्परिच्छेदिकोच्यते । न चाशाब्दस्य कर्त्तुः कथं शाब्दसंख्यया अन्वयः । तस्य लक्षणया शब्दत्वाङ्गीकारात् । [5]यथैव गवादिशब्दानां जातौ शक्ति[6]माश्रित्याविनाभावेन व्यक्तौ लक्षणा आकृत्यधिकरणन्यायसिद्धा; तथाख्यातानां कृतौ शक्तिमाश्रित्य तद्वति लक्षणेति राणकः ।

धातूनामेव क्रियारूपस्वार्थाभिधायिनां कर्त्राक्षेपकत्वात् तल्लक्षकत्वमिति मिश्राः । पक्षद्वयेऽपि भावना धात्वर्थान् प्रति गुणभूतस्य कर्त्तुर्लक्षणा, तद्गतायां संख्यायामाख्यातैरुच्यमानायां कर्त्तृप्रकारकः संख्याविशेष्यको बोध इति मिश्राः ।

राणके तु धात्वर्थभावनयोरिव संख्याया[7] अपि शक्यत्वेनैककालबोधाल्लाक्षणिककर्त्तृबोधः । पश्चादुत्पद्यमानः प्रथमप्रतीत[8]संख्याविशिष्ट-

---

१. इत्याहुरिति पदमधिकं ख ङ च मातृकासु दृश्यते ।
२. रूपायामिति च मा० पाठः ।
३. तथैवेति च मा० पाठः ।
४. लब्ध इति ग मा० पाठः ।
५. तथैवेति च मा० पाठः ।
६. शक्तिपदं छ मा० नास्ति ।
७. 'संख्यायामाख्याया अपि' इत्यधिकं च मातृकायाम् ।
८. 'प्रतीते' इति च मा० पा० ।

कर्त्तृविषय एवोत्पद्यते। एवञ्च 'स्वर्गकामो यजेते'त्यत्र श्रुतसंख्याविशिष्टस्य कर्त्तृत्वबोधे तादृशस्यैवाधिकारित्वबोधादन्यसंख्य[1]स्यानधिकारो भवति। कर्त्तृबोधोत्तरं तु संख्यान्वये [2]शुद्धस्यैव कर्त्तृत्वेनाधिकारित्वादेकस्यां[3] व्यक्तावेकत्वसंख्यामङ्गभूतां विहाय बहूनामप्यधिकारः स्यात्[4]। तस्मात्संख्याविशिष्टकर्त्तृबोध इत्युक्तम्। वार्त्तिके तूभयमुक्तम्। तस्माद्भावनाक्षिप्तकर्त्तृगतैकत्वादिसंख्या आख्यातैरेकवचनाद्यंशेनोच्यत इति संक्षेपः।

## संख्यादीनामन्वयप्रकारनिरूपणम्

इत्थमेकत्वादिसंख्या कर्त्रन्विता भावना फलविशेषमपेक्षते। फलानुकूलव्यापाररूपत्वात्। तच्च फलमिष्टत्वेनेष्टसाधनत्वेन वा ज्ञातमेव भावनया सम्बध्यते। भावना ह्येकविध्युपात्तत्वाच्छाब्दीभावनाख्या प्रवर्त्तनान्वितैव गम्यते। प्रवर्त्तनान्वयश्च [5]तज्जन्यपुरुषप्रवृत्तिविषयत्वेनेति वक्ष्यते। इयञ्च तदैव [6]पुरुषप्रवृत्तिविषया भवति, यदि पुरुषेष्टफलिका[7] भवति। पुरुषस्य च साक्षादिष्टं[8] स्वर्गादितत्साधनत्वेन वा ज्ञातमिष्टमिति[9]। तदेव भावनाभाव्यत्वेन सम्बद्ध्यते। तत्र लोके [10]पचेदित्यादौ यदि धात्वर्थ [11]एवेष्टसाधनत्वेन प्रमाणान्तरेण [12]ज्ञातो भवति, तदा[13] स एवैकपदोपात्त-

---

१. संख्यस्येत्यारभ्य एकस्यामिति यावत् छ मातृकायां नास्ति।
२. बुद्धस्यैवेति मू० मा० पा०।
३. शक्ताविति मू० मा० पाठः।
४. स्यादिति पदं घ ङ मातृकयोर्नास्ति।
५. तज्जन्यस्य स्थाने तज्जनकत्वेनेति ख मातृकायां दृश्यते।
६. 'पुरुष' इत्यस्य स्थाने प्रवर्त्तना पदं ख मातृका पठति।
७. इष्टपदस्य स्थाने प्रवृत्तिपदं पठति च मातृका।
८. इष्टमित्यस्य स्थाने फलमिति ङ मा० पा०।
९. इष्टमिति पदं मू० मा० नास्ति।
१०. यजेतेति च मातृका पठति।
११. प्रमाणान्तरेणेष्ट० इति ख घ ङ मा० पा०।
१२. अवगत इति ख ङ मातृकापाठः। घ मातृकायां 'इष्टसाधनत्वेन' इत्यप्यधिकः।
१३. तदेति पदं ङ मातृकायां नास्ति।

त्वाद् भावनाभाव्यो भवति, पाकं कुर्यादिति । [1]यदि तु तथा न ज्ञातः स्वयं च नेष्टस्तदान्यदेव भाव्यं भवति, पाकेनोदनं कुर्यादिति । एवञ्च 'स्वर्गकामो यजेते' त्यादौ भावनायाः भाव्याकाक्षायां यद्यपि धात्वर्थ एवैकपदोपात्तत्वाद् भाव्य इति प्रतीयते यागं कुर्यादिति; तथापि तस्य द्रव्यव्यया-यासस्साध्यत्वेन स्वयमनिष्टत्वान्मानान्तरेणानवगमान्न[2] भाव्यत्वं[3] युक्तमित्यन्यदपेक्षते । तच्च स्वर्गकामपदोपात्तः स्वर्ग एव स्वर्गं कुर्यादिति सम्बद्धयते । यद्यपि [4]यत्नात्मकभावनायाः[5] भाव्यो याग एव, न तु स्वर्गादिः[6] । यत्नेन याग एव साध्यते । साधिते च[7] यागे स्वर्गो भवति, न तु[8] तत्सिद्धयै यत्नान्तरमस्ति; तथापि नासौ यत्नं प्रत्युद्देश्यः । अपुरुषार्थत्वात् । तेन यागानुकूलयत्नात्मिकायामपि भावनायामुद्देश्यविषयतास्वरूपं भाव्यत्वं स्वर्गस्य । यथा 'वेतनकामः पचती'ति लोके पाकानुकूलयत्नात्मिकायां [9]भावनायामुद्देश्यत्वं वेतनस्य, तद्वत् । न स्वर्गकामपदं पुरुषपरं तं कर्त्तृत्वेन बोधयेत्, न[10] स्वर्गं [11]भाव्यत्वेनेति वाच्यम् । भावनाक्षेपादेव कर्त्तुरवगमात्तद्वोधनवैयर्थ्यात्[12] । न च स्वर्गकामनावान् कर्त्तेति कर्त्तृविशेषणतया कामनां वोधयति । यागकर्त्रा स्वर्गकामना कर्त्तव्येत्यर्थः । यथा बृहति प्रस्तूयमाने [13]समुद्रं मनसा ध्यायेदिति

---

१. यदीत्यारभ्य कुर्यादित्यन्तं ङ घ मातृकायां नास्ति ।
२. अवगमामिति मूलमातृकापाठः ।
३. भावनात्वमिति मूलमातृकापाठः ।
४. 'यत्नात्मिक' इति ग ङ मा० पा० ।
५. 'भावनया' इति घ मा० पा० ।
६. आदिपदं मू० मा० नास्ति ।
७. 'च' इति घ ङ मा० नास्ति ।
८. 'तु' इति मू० मा० नास्ति ।
९. भावनायामिति पदं च मातृकायां नास्ति ।
१०. नेति च मातृका न पठति ।
११. अत्रोपसर्जनपदं क ग ङ छ मातृकासु दृश्यते ।
१२. बोधन वै० इति ख ग घ ङ मातृकासु दृश्यते ।
१३. 'मनसा समुद्रम्' इति ङ मातृकायां व्यत्ययः ।

बृहत्सामारम्भकर्त्रा समुद्रस्य मनसा ध्यानं कर्त्तव्यम्, तद्वदिति वाच्यम्। तथा सति कामनातोऽदृष्टभावनायाश्च भाव्यमिति द्वयं कल्प्येत, तद्वरं काम्यमानत्वेनोपात्तस्य स्वर्गस्य भाव्यमेकं कल्पितम्। [1]धर्मद्वयकल्पनातो हि वरमेकधर्मकल्पना। किञ्च यथैव कर्त्तुर्भावनाक्षेपादेव प्राप्तेर्नेदं पदं तत्परम्, तथैव पुरुषाणां स्वरसादेव स्वर्गकामनाप्राप्तेस्तामनूद्य तदुपबद्धः कामनाविषयः स्वर्ग एव भावनाया [2]अपेक्षितो योग्यः सन्निहितश्चेति भाव्यत्वेन सम्बद्धयते।

एतेन स्वर्गकामनानिमित्तत्वेन कर्त्तृविशेषणं यदि स्वर्गकामस्तदा यजेतेति, परस्त्रीकामः प्रायश्चित्तं कुर्यादितिवदिति प्रत्युक्तम्। यदिशब्दोपबन्धाद्यभावेन कामनायाः निमित्तत्वाप्रतीतेश्च[3] परस्त्रीकामनादेः[4] निषिद्धत्ववत्स्वर्गकामनाया निषिद्धत्वाभावान्न तद्वन्निमित्तत्वम्। नापि विहितस्य यागादेः प्रायश्चित्तसंज्ञा, येन निमित्तभूतस्वर्गकामनाया निषेधः कल्प्येत। तस्मान्न कामनाया निमित्तत्वम्। न च कामनोपसर्जनस्य स्वर्गस्य कथं भावनाभाव्यत्वेनान्वय इत्यपि शङ्क्यम्। यतः कामनोपसर्जनत्वं भाव्यत्वान्व[5]यस्यानुकूलमेव, न ह्यकाम्यमानं भावनाभाव्यं भवतीत्युक्तम्। [6]अन्योपसर्जनमन्येन नान्वेतीति न्याये तु कामनोपसर्जनफलातिरिक्तत्वे सतीति सत्यन्तं निवेशनीयमिति भावः निष्कृष्योपस्थित्या वा स्वर्गस्य भाव्यत्वान्वयः।

ननु स्वर्गशब्दश्चन्दनं स्वर्ग इत्यादि लोके प्रयोगात् प्रीतिसाधनद्रव्यवाची। यागश्च द्रव्यापेक्ष इति तत्साधनत्वेन स्वर्गाख्यं द्रव्यं विधीयते।

---

१. धर्मिद्वय० इति मूलमातृका पठति।
२. भावनोपेक्षित इति क मातृका पठति। भावनापेक्षित इति च घ मा० पा०।
३. °त्ताप्र° इति ख मातृकापाठः।
४. °नादेः इत्यस्य स्थाने° 'नायाः' छ मातृका पठति।
५ 'अन्वयस्य' इति पदं ङ मातृकायां न दृश्यते।
६. 'अन्योपे° इत्यारभ्य निवेशनीयमिति भावः पर्यन्तं घ च छ मातृकासु नास्ति।

साधनमपि चार्जयितुं काम्य एवेति कामनानुवादोऽप्युपपन्नः तेन । स्वर्गं यः साधनत्वेन कामयते, स यजेत, स्वर्गेण यागं कुर्यादित्यर्थः । एवञ्चैकपदोवात्तत्वाद् याग एव भावनाभाव्यः । पशुकाम इत्यादौ तु पश्वादीनामसन्दिग्धं द्रव्यवाचित्वम् । अतो न फलपरत्वमिति चेन्न । स्वर्गशब्दस्य द्रव्यवाचित्वाभावात् । प्रीतिमति द्रव्ये प्रयोगात् । प्रीतिरहिते च[1] तस्मिन्ने[2]वाप्रयोगाद्व्यभिचारात्प्रीतिर्वाच्या, न द्रव्यम् । 'नागृहीतविशेषणा बुद्धिर्विशिष्टे' शा० भा० १.३.९ इति न्यायाच्च । एवं चन्दनादिजन्या प्रीतिर्वाच्येति प्राप्ते 'ज्योतिष्टोमेन स्वर्गकामो यजेते' ति [3]विधिवाक्यशेषात्—

**यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ।**
**अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पदम् ।।** सा० त० कौ०

इत्यस्माद् दुःखादसम्भिन्ना[4] अविच्छिन्ना[5] सर्वेष्टा पारलौकिकी प्रीतिः स्वर्गपदवाच्येति[6] गम्यते । सा च न साधनत्वयोग्येति भाव्यत्वमस्याः प्रतीमः । कामना च[7] फले मुख्या सती न साधने गौणी युक्ताङ्गीकर्त्तुम् पश्वादिशब्दानाञ्च[8] सत्यपि प्रीतिमद्द्रव्यवाचित्वे कामनोपबन्धाद्भावनायाश्च भाव्यापेक्षत्वाद्[9] द्रव्यस्यच च शास्त्रान्तरेण प्राप्तेर्भाव्यपरत्वमेव[10] युक्तम् । तस्मात्स्वर्गकामादिपदश्रवणे स्वर्गादिकमेव भावनाभाव्यमिति सिद्धम्[11] यत्रापि फलपदं न श्रूयते, यथा 'विश्वजिता यजेते'त्यादौ, तत्राप्य-

---

१. च इति पदं घ मातृकायां नास्ति ।
२. °न्नप्रयो° इति ग मातृकापाठः ।
३. विधिपदं ख ग ङ मातृकासु नास्ति ।
४. दुःखासम्भिन्न° इति मू० मा० पा० ।
५. 'विच्छेदरहिता' इति क ख ङ छ मातृकासु दृश्यते ।
६. पदस्थाने शब्द पदं ख घ ग घ छ मातृकासु दृश्यते ।
७. च पदं ङ मातृकायां नास्ति ।
८. च पदं ङ मातृकायां नास्ति ।
९. अपेक्षितत्वादिति मू० मा० पा० ।
१०. भाव्यत्वमेवेति मू० पा० पा० ।
११. सिद्धमिति पदं ख मातृकायां नास्ति ।

ध्याह्रियते। न तु तत्र[1] यागस्य[2] भाव्यत्वम् उक्तयुक्तेः। तत्र किं पदमध्याहर्त्तव्यमित्याकाङ्क्षायां[3] विधिस्वारस्यावगतसर्वपुरुषप्रवर्त्तकत्वाबाधाय[4] सर्वाभिलषितः स्वर्ग एव भाव्य[5] उचित इति स्वर्गकामपदं[6] कल्प्यते। पापक्षयस्तु सर्वाभिलषितोऽपि प्रतियोगिज्ञानाधीनं ज्ञानं[7] विलम्वोपस्थितिकम्; स्वर्गस्तु भावरूपः शीघ्रमुपतिष्ठते।

न चैवमुपस्थितोऽर्थ एवान्वीयताम्, किं तद्वाचिपदाध्याहारेणेति वाच्यम्। शाब्दी ह्याकाङ्क्षा शाब्देनैव शाम्यतीति न्यायात्। ननु स्वर्गायेति पदं कल्प्यताम्, किमिति कामनापुरुषानुवादकमुपसर्जनस्वर्गपरं स्वर्गकामपदं कल्प्यते। न च भावनाभाव्यं कामपदेनैवार्प्पणीयमिति नियमः। 'वेतनाय पचति', 'सर्वेभ्यः कामेभ्यो ज्योतिष्टोम'[8] इति लोकवेदयोश्चतुर्थ्यापि तदर्पणादिति चेन्न। सम्प्रदाने हि चतुर्थी मुख्या, लाक्षणिकी तादर्थ्यादौ। अतएव 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'[9] व्या० परि० १०३। प्रकृते च सम्प्रदानत्वायोगात् तादर्थ्ये चतुर्थी कल्प्या।' स्वायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयोक्ष्यामहे'[10] शा० भा० ६.३.१५ तुलनीयं शा० दी० ६.३.४.४ इति न्यायाच्च[11] लाक्षणिकी सा न कल्पयितुमुचिता। स्वर्गकाम-

१. तत्र इत्यस्य स्थाने 'अत्र' पदं ख घ ङ मातृकासु दृश्यते।
२. यागभाव्य० इति छ मा० पा०।
३. 'आशङ्कायाम्' इति क मा० पाठः, तथा ख ग घ ङ मातृकासु 'अपेक्षायाम्' इति दृश्यते।
४. 'त्वाबाधाय' इत्यारभ्य कदाचिन्मोक्षेच्छया द्वेषस्यापि सम्भवादित्यन्तं ग मातृकायां ग्रन्थपातः।
५. 'भाव्यमुचितम्' इति मू० पा०।
६. कामपदं छ मातृकायां नास्ति।
७. 'ज्ञानः विलम्बोपस्थितिकः' इति ख च मातृकायां पाठः। ज्ञानपदञ्च घ ङ मातृकयोर्नास्ति।
८. 'दर्शपूर्णमासौ' इति ख ङ मातृकयोः पाठः।
९. 'बलवती' इति मूलमातृकापाठः।
१०. 'प्रयोक्ष्यामः' इति मूलमातृकापाठः।
११. च इत्यस्य स्थाने बलादिति पदं दृश्यते।

त्वनुवादद्वयं[1] लक्षणातो ज्यायः। अतएव श्रुतेः स्वर्गकामपदेऽनुवादद्वयमाश्रीयते न तु कृत्स्ने[2] पदे स्वर्गलक्षणा। तस्मात्स्वर्गकामपदं[3] कल्प्यम्। किञ्च न वेदे स्वर्गायेति पदं फलपरं दृष्टम्, अपि तु स्वर्गकामपदम्। एवञ्च पुंकल्पितत्वेन[4] प्राप्तस्याप्रामाण्यस्य[5] निराशे मुख्यो हेतुर्वेदान्यथानुपपत्त्या कल्पितत्वरूपो यद्यपि द्वयोरविशिष्टः, तथापि वेददृष्टत्वरूपोऽभ्युच्चयहेतुः[6] स्वर्गकामपद एवास्ति। उक्तश्चायं हेतुर्भाष्यकृता प्रदेशान्तरे स्थितमानीयत इति वदता, न त्वनेन भाष्येणानुषङ्ग उक्तः। असम्बद्धव्यवधानेऽनुषङ्ग उक्तः। असम्बद्धव्यवधानेऽनुषङ्गाभावात्। तस्माद्विश्वजिदादौ स्वर्गकामपदमध्याहृत्य[7] स्वर्गो भावनाभाव्यत्वेनान्वेतीति सिद्धम्। क्वचित्त्वार्थवादिकं[8] भावनाभाव्यं भवति[9]। यथा रात्रिसत्राख्यकर्मविधिशेषे 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ती' त्यस्मिन् श्रुता प्रतिष्ठा रात्रिसत्रकर्मभावनाया भाव्यत्वेन कल्प्यते। यद्यप्ययमर्थवादो वक्ष्यमाणरीत्या स्तावकत्वान्न स्वार्थे प्रमाणम्, तथापि स्तुत्यर्थमप्युपस्थितं[10] प्रतिष्ठाफलं भावनयापेक्षितं योग्यं सन्निहितं चेति[11] तद्वाचिप्रतिष्ठाकामपदं विधावध्याहृत्य भाव्यत्वेनान्वीयते। अनुपस्थितस्वर्गकल्पनातो ह्युपस्थितस्य फलत्वकल्पना लघीयसी।

---

१. अनुवादः। अयमिति च मातृकापाठः।
२. कात्स्न्ये इति घ ङ मातृकापाठः।
३. कामपदं छ मातृकायां नास्ति।
४. 'पुंतस्कल्पितत्वेन' इति च मा० पाठः।
५. प्रसक्तस्येति ख घ ङ मातृकापाठः।
६. अधिको हेतुरिति घ मातृकापाठः।
७. 'हारेण' इति च मातृकापाठः।
८. 'कमपि' इति घ ख ङ मातृकापाठः।
९. 'सम्भवति' इति ङ मा० पा०।
१०. 'अपि' पदं घ मातृकायां नास्ति।
११. 'वेति' इति क छ मातृकयोः दृश्यते।

यद्वा विपरिणामेनेदमेव वाक्यं फलसम्बन्धं बोधयति। प्रतितिष्ठन्तीति सन्नन्तत्वेनोपयन्तीति च विधित्वेन विपरिणम्य यदेच्छशब्दौ च व्यत्स्येते[1]। ये[2] प्रतितिष्ठासन्ति त[3] एता रात्रीरुपयेयुरित्यर्थ इति मिश्राः।

राणके लृङन्तत्वेन विपरिणामः प्रतिष्ठास्यन्तीत्युक्तम्। एवं सुवर्णं हिरण्यं भार्यं दुर्वर्णोऽस्य भ्रातृव्यो भवती'त्यत्र विहितस्य हिरण्यधारणस्य [4]भ्रातृव्यदुर्वर्णतारूपं फलमत्र भविष्यतीति लृङन्तत्वेन राणकोक्त एव विपरिणामः। क्वचिन्मान्त्रवर्णिकं भाव्यं भवति। यथा 'स्वाहाकारं [5]यजती'ति विहिते पञ्चमप्रयाजे 'स्वाहाग्निं स्वाहा सोम' मित्यादिमंत्रप्रकाशितानामङ्गप्रधानयागाङ्गभूतानामग्न्यादिदेवतानां मन्त्राङ्गत्वानुप-[6] पत्त्या देवतात्वं कल्प्यते। [7]अङ्गप्रधानदेवतोद्देशेन च क्रियमाणो यागस्ताः देवताः प्रकाशति। इष्टश्च देवताप्रकाशनमविस्मरणायेति, तदेव[8] यागभाव्यत्वेन कल्प्यते। स्वाहाकारयागेनाङ्गप्रधानदेवताप्रकाशनं[9] कुर्यादिति। देवतोद्देश्यकद्रव्यत्यागात्मकस्य च यागस्य देवतोद्देशांशेन[10] भाव्यमिष्टं द्रव्यत्यागांशेन त्वदृष्टं कल्प्यते। तदेतदग्रे वक्ष्यामः।

एवं 'सूक्तवाकेन प्रस्तरं प्रहरती'त्यत्र प्रस्तराख्यदर्भमुष्टिप्रहरण-

---

१. 'व्यत्यस्येते' इति घ मातृकापाठः।
२. 'ये' इति पदं ख मातृकायां नास्ति।
३. 'एते' इति पदं ख मातृकायां दृश्यते।
४. घ ङ मातृकयोरिदं पदं नास्ति। ख मातृकायाञ्च 'वैरि' पदं दृश्यते।
५. जपन्तीति घ मातृकापाठः।
६. मन्त्र मन्त्रस्य याग।० इति ङ मातृकापाठः।
७. 'अङ्गप्रधान' इति मूलमातृकायां नास्ति।
८. 'तदेव न देवता' इति च मातृकापाठः।
९. 'यागेन यक्ष्यमाणम्' इति क छ मातृकापाठः।
१०. 'अंशेन' इति पदं मूलमातृकायां नास्ति।

करणत्वेनेदं[1] 'द्यावापृथिवीत्यादिर्नमोदेवेभ्यः' इत्यन्तः सूक्तवाकमन्त्रो विहितः। मन्त्रस्य क्रियाङ्गत्वं क्रियाप्रकारानेन क्रियासम्वन्धप्रकारानेन वा। अयञ्च मन्त्रः न प्रहरणक्रियां प्रकाशयति; किन्तु अङ्गप्रधानयागाङ्गभूताग्न्यादिदेवताः[2] प्रस्तरद्रव्यमायुरादीनि च फलानि प्रकाशति। एतानि यदि क्रियासम्वन्धीनि भवन्ति, ततस्तत्प्रकाशकमन्त्रस्याङ्गत्वमुपपद्यत इति प्रहरणक्रियासम्वन्ध एषां कल्प्यते। अग्न्यादिदेवतानाञ्च तत्सम्वन्धो न यागमन्तरेण, त्यज्यमानद्रव्योद्देश्यत्वाद्देवतात्वस्य। अतः प्रस्तरद्रव्यकोऽग्न्यादिदेवताक आयुरादिफलकः सूक्तवाककरणकः प्रहरणविशिष्टो याग एव विधीयते। स च प्रक्षेपाधिक्यात् होमो भवति। तस्य भाव्याकांक्षायां[3] देवतोद्देशांशेनेष्टदेवताप्रकाशनम्, त्यागांशेनादृष्टद्वारकमायुरादिफलं, प्रक्षेपांशेन प्रस्तरप्रतिपत्तिरिति[4] भाव्यानि कल्प्यन्ते। तत्र द्वे भाव्ये मन्त्रबलेन, तृतीयं सामर्थ्यादिति विवेकः।

एवं समस्ताङ्गभावनानां सामर्थ्यादिवशेन दृष्टादृष्टक्रतूपकाररूपभाव्यकल्पनमग्रे[5] प्रपञ्चयिष्यते, न तु तत्रापि यागस्य भाव्यत्वम् एवं नित्यनैमित्तिककर्मभावनानां निमित्तश्रुत्यन्यथानुपपत्त्या[6] पापक्षयरूपभाव्यकल्पना। यथा 'यावज्जीवमग्निहोत्रं जुहुयादि'त्यादौ धातुसम्वन्धाधिकारविहितणमुलप्रत्ययान्तेन यावज्जीवपदेन यावच्छब्दोपवन्धात् साकल्येन जीवनस्य धात्वर्थसम्वन्धः प्रतीयते। स च नाङ्गाङ्गिभावरूपः[7]। सकलजीवनस्यैकहोमाङ्गत्वासम्भवात्। होमाभ्यासकल्पने धातुनाभ्यासो[8] लक्ष्यते। न च मुख्ये सम्भवति सा युक्ता। तेन निमित्तनैमित्तिकभावः

---

१. 'करण' पदं घ मातृकायां नास्ति।
२. क ख मातृकायां कृताङ्ग इति पाठः घ मातृकायां कृत पदं नास्ति।
३. 'अपेक्षायाम्' इति क घ मातृकापाठः।
४. 'प्रस्तर' इति पदं ख मातृकायां नास्ति।
५. 'इत्यग्रे' इति क ङ मातृकयोः दृश्यते।
६. श्रुतिरित्यस्य स्थाने सम्बन्धविधिरिति पदं छ मातृका पठति।
७. 'रूप' इति पदं मूलमातृकायां नास्ति।
८. 'उपलक्ष्येत' इति ङ मातृकापाठः।

कल्प्यते। तथा सति यावन्निमित्तं नैमित्तिकानुष्ठानं न्यायप्राप्तमिति न धातावभ्यासलक्षणा। तत्र यावज्जीवं सन्ततानुष्ठाने प्राप्ते 'सायं जुहोति' 'प्रातर्जुहोती'ति कालशास्त्रैकवाक्यत्वेन[1] सायंकालावच्छिन्ने प्रातःकालावच्छिन्ने सकले जीवने निमित्ते होमः कार्य इत्यर्थः सम्पन्नः। अयञ्च होमो नियतनिमित्ते विहितत्वान्नित्य इत्युच्यते। तद्भावनाया[2] भाव्याकाङ्क्षायां न[3] विश्वजिन्न्यायेन स्वर्गकल्पनम्। नित्यानित्यसंयोगविरोधप्रसङ्गात्। स्वर्गो हि न सर्वदः[4] सर्वेषामिष्टः। कदाचिन्मोक्षेच्छया तद्द्वेषस्यापि[5] सम्भवात्। न चानिष्टं भावनाभाव्यं भवतीत्युक्तम्। तत्र नित्यहोमभावनाया अनियतेष्टसंयोगो विरुद्धः। अर्थवादमन्त्रयोः फलाश्रवणाच्च। न च तद्वशेनापि[6] भाव्यकल्पनम्। अतः सर्वदा सर्वेषामिष्टः पापक्षय इति स एव भाव्यं कल्प्यते। कामिनां मुमुक्षूणाञ्च दुःखं द्वेष्यमिति तज्जनकपापस्यापि[7] द्वेष्यत्वात् तत्क्षयः सर्वेषामिष्टः। एवं निमित्तश्रुत्यवगतं नित्यत्वमुपपद्यते। क्वचिन्नित्ये कर्मण्यर्थवादे[8] मन्त्रे[9] च पापक्षयः श्रूयते। यथा प्रजापतिव्रते 'एतावता हैनसा[10] मुक्तो भवती'त्यर्थवादे एतन्निषेधाधिकारे वक्ष्यामः। सन्ध्यावन्दने च यदह्ना पापमकार्षमित्यादिमन्त्रे[11]।

---

१. सकलशा० इति च मातृकापाठः।

२. 'भावना उद्देश्य' इति ख मा० पा०। 'उद्देश्यभाव्या' इति ङ मा० पा०। °यामुद्देश्य मा० इति च मा० पाठः।

३. 'न' इति पदं घ मातृकायां नास्ति।

४. सदा इति घ मा० पा०।

५. तदिति पदं मूलमातृकायां नास्ति।

६. 'तादृशेनापि द्वेष्यत्वान्न तत्क्षयः सर्वेषामिष्टः' इति च मातृकायां वाक्यविन्यासः।

७. पाप इति पदं घ ङ मातृकायां नास्ति।

८. 'कर्मार्थवादे' इति क ग मातृकयोः दृश्यते।

९. 'मन्त्रे' इति पदं ख मातृकायां नास्ति।

१०. 'न हैनसा' इति मू० मा० पा०। घ छ मातृकयोः 'न युक्त' इत्यस्य स्थाने 'मुक्त' पदं दृश्यते।

११. 'पापक्षयं कार्यम्' इति मू० मा० पा०।

एवं[1] सर्वनित्यकर्मसु पापक्षयो भाव्यः । एवं नैमित्तिकेषु[2] जातेष्टौ 'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते' इत्यारभ्य 'यस्मिञ्जाते एतामिष्टिं निर्वपति पूत एव स तेजस्व्यन्नाद इन्द्रियावी[3] पशुमान् भवती'त्यन्तेन वाक्येन विहितायाम् । इयं हि कादाचित्के[4] पुत्रजन्मनि निमित्ते विहितत्वान्नैमित्तिकीत्युच्यते । अस्यां भाव्याकाङ्क्षायां निमित्तश्रुत्यन्यथानुपपत्त्या पापक्षयोऽप्यर्थवादवाक्याच्च[5] पुत्रगतपूतत्वादिसमुच्चितं भाव्यद्वयं कल्प्यत इति मिश्राः ।

राणके तु पुत्रगतपूतत्वाद्येव फलम्, तस्य तु फलं पापक्षयः पुत्रान्सुरक्षितान्कुर्यादित्यादिविधिकल्प्यः । तेनैव जातेष्टेरावश्यकताप्युपपन्नाः; न तु जातेष्टेर्भाव्यद्वयमित्युक्तम्[6] । सर्वथाप्यस्ति पापक्षयो भाव्यः । एवमितरनैमित्तिकेष्वपि । तस्मान्नित्यनैमित्तिकेष्वपि पापक्षयो भाव्यः ।

अकरणे च प्रत्यवायो 'कुर्वन्विहितं कर्मे'त्यादि वचनादिति मिश्राः । राणके त्वकरणजनितप्रत्यवायपरिहार एव फलम्[7]; न तु पापक्षयः, विकल्पासहत्वात् । सर्वपापक्षयस्य फलत्वे एकेनैव तत्सिद्धेरितरवैयर्थ्यम् । यत्किञ्चित्पापक्षयस्य[8] फलत्वे कियतां पापानां[9] क्षयः, कियतां नेति नियामकाभाव इत्युक्तम् । सर्वथा न यागस्य भाव्यत्वम् तस्मात्सर्वभावनानां भाव्याकाङ्क्षायां धात्वर्थं विहायेष्टं भाव्यमन्वेतीति[10] सिद्धम् । यत्र तु धात्वर्थ एवेष्टसाधनत्वेन ज्ञातो भवति, तत्र स एव भाव्यत्वेनान्वेति ।

---

१. तस्मादिति पदं ख मातृकायां दृश्यते ।
२. '°षु यथा जाते' इति ख छ मातृकापाठः ।
३. 'इन्द्रियवान्' इति घ मातृकापाठः ।
४. 'कदाचित्' इति क छ मातृका पठति ।
५. वाक्यपदं क ङ छ मातृकासु नास्ति ।
६. जातेष्टेरिति पदं क ग मातृकयोः नास्ति ।
७. भाव्यमिति घ ङ मातृकापाठः ।
८. 'यत्किञ्चित्' इत्यस्य स्थाने 'किञ्च' इति क घ ङ मातृकासु दृश्यते ।
९. पापानामिति पदं मूलमातृकासु नास्ति ।
१०. भाव्यं भाव्यत्वेनेति ख मातृकापाठः । भाव्यत्वेनेति घ ङ मातृकयोः दृश्यते ।

यथा 'व्रीहिभिर्यजेत', 'दध्ना[1] जुहोतीत्यादौ[2] गुणविधौ व्रीहिभिर्यागं कुर्यात् दध्ना होमं भावयेदिति[3] संक्षेपः ।

इत्थं भाव्यविशेषान्विता भावना करणमपेक्षते, केन कुर्यादिति । तत्रैकपदोपात्तत्वात्[4] धात्वर्थः करणत्वेन सम्वद्धचते । यद्यपि यागानुकूलयत्नात्मिका भावना न यागेन जन्यते, प्रत्युत तया याग एव जन्यते; तथापि कृते यागे फलोपहिता[5] सा भवतीति फलोपहितायां तस्यां यागः करणत्मित्युच्यते । तदीयफलकरणं याग इति यावत् । अतएव भावनाभाव्यनिर्वर्त्तकत्वं भावनाकरणत्वमिति[6] साम्प्रदायिकाः ।

## मत्वर्थलक्षणानिरूपणम्

ननु 'स्वर्गकामो यजेते'त्यत्रास्तां यागः करणम् । यत्र वाक्ये द्रव्यपदं श्रूयते, 'सोमेन यजेते' त्यादौ तत्र द्रव्यमेव करणत्वेनान्वीयताम् । तृतीयया[7] तस्य करणत्वोक्तेः । यागस्तु द्रव्याङ्गः यथा[8] संस्कृतेन सोमेनेष्टं भावयेदिति । मैवम् ।[9] तत्राप्येकपदोपात्तत्वात् यागः करणत्वेन शीघ्रं प्रतीयते; पदान्तरोपात्तत्वात्सोमो विलम्वेन । तृतीयया तु यागगतमेव करणत्वमुच्यते । सोमप्रातिपदिकेन सोमवत् यागलक्षणया सोमविशिष्टो यागः करणत्वेन विधीयते । अन्यथा यागस्य सोमाङ्गत्वे सोमसंस्काररूपमदृष्टं[10] कल्पेत । वरश्चादृष्टकल्पनातः शक्यसम्वन्धेन दृष्टरूपा लक्षणा कल्पना । सोमस्य

---

१. 'दूर्व्वा' इति छ मातृकापाठः ।
२ 'इत्यादि' इति मूलमातृकापाठः ।
३. कुर्यादिति पदं मूलमातृकायां दृश्यते ।
४. °पात्तधात्वर्थ इति क मातृकापाठः ।
५. फलोपहिता सा भवतीति छ मातृकायां नास्ति ।
६. ०त्वमिति घ मातृकायां नास्ति ।
७. तृतीयान्तस्येति मूलमातृकापाठः ।
८. याग इति च छ मातृकयोः दृश्यते ।
९. तत्रेति पदं ख मातृकायां नास्ति ।
१०. 'सोमे' इति ख मातृकायां दृश्यते ।

तु यागार्थत्वं दृष्टद्वारेणेति मत्वर्थलक्षणया सोमविशिष्टो[1] यागः करणम्, सोमवता यागेनेष्टं भावयेदिति। यत्तु[2] तृतीययैव करणत्वविशिष्टो यागो लक्ष्यते। सोमकरणकेनेति तद्धितचतुर्थ्यन्ताद्युपपदेषु हि 'आग्नेयोऽष्टाकपालो भवति' 'वसन्ताय कपिञ्जलानालभेते' त्यादिषु प्रकृत्या मत्वर्थलक्षणायां प्रत्ययार्थदेवतात्वादेर्मत्व[3]र्थयागान्वयः प्राप्नोति, स चानुपपन्न इति। तत्र प्रत्यये मत्वर्थलक्षणा वाच्या। अग्निदैवत्येन वसन्तदैवत्येन[4] यागेनेति। तथा सोमेनेत्यादावपीत्याहुः। तेषां लक्षणाद्वयं प्रसज्येत।[5] तृतीयाद्यभिहितं हि करणादिकारकं क्रिययैवान्वेति। नहि भवति दण्डेन घट इति।

एवञ्च सोमेनेति तृतीयोपात्तस्य करणकारकस्य[6] क्रियान्वययोग्यस्य यागान्वययोग्यतयोपस्थितिर्लक्षणया स्यात्। पुनश्च तेन यागलक्षणेति। तच्चैतत्तद्धितान्तादावगत्याश्रितम्, न तु तृतीयान्ते स्वीकार्यम्। प्रकृत्यैव मत्वर्थलक्षणा सम्भवादिति संक्षेपः।

## धात्वर्थस्य करणत्वेनैवान्यनिरूपणम्

तस्माद् द्रव्याद्युपपदश्रवणेऽपि धात्वर्थश्चेदप्राप्तकालः, स एव भावनाकरणम्; द्रव्यादि तु[7] प्रकृतौ प्रत्यये वा धात्वर्थलक्षणया तद्विशेषणम्। यत्र तु वाक्यान्तरेण प्राप्तो धात्वर्थस्तत्र तस्य भाव्यत्वात् द्रव्याद्येव करणम्। यथा 'दध्ना जुहोती' त्यादावित्युक्तम्।[8] क्वचित्तु द्रव्यदेवतासम्बन्धलक्षितो

१. 'विशिष्टो' इत्यारभ्य 'लक्ष्यते' पर्यन्तं छ मातृकायां पाठः।

२. ये तु इति ख ग घ ङ मातृकासु दृश्यते।

३. 'मत्वर्थयागे' इति क ङ मातृकयोः दृश्यते।

४. वसन्तदैवत्येनेति पदं च मातृकायां नास्ति।

५. 'प्रसज्येत' इति च मातृकापाठः।

६. करणपदं ङ मातृकायां नास्ति।

७. तु पदं घ मातृकायां नास्ति।

८. क्वचिच्चेति घ ङ मातृकापाठः।

याग: करणम्, न यथाश्रुतो धात्वर्थः। यथा सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकाम इत्यादौ। अत्र हि ब्रह्मवर्चसभाव्यिकायां[1] भावनायां न निर्वापः करणम्, तस्य द्रव्यदेवतान्वयासम्भवात् 'त्यज्यमानद्रव्योद्देश्या हि देवता' अतो द्रव्यदेवतान्वयस्त्यागरूपयागक्रियागर्भो, न निर्वापादिक्रियागर्भः।[2] 'सास्य[3] देवता' पा० सू० ४.२.२४ इत्यधिकृत्य' सूक्तहविषोश्च' इति देवतातद्धितानुशासनेन सूक्तदेवतयोः प्रकाशनक्रियागर्भस्य[4] द्रव्यदेवतयोश्च[5] कर्मव्युत्पन्न[6]हविष्पदोक्त[7]प्रक्षेपाधिकयागरूपहोमक्रियागर्भस्य सम्बन्धस्योक्तेः। अतः सौर्यपदेन द्रव्यदेवतान्वयं बोधयता[8] तदनुपपत्त्या यागो लक्ष्यते। स भावनाकरणं धातुस्तु चोदकप्राप्तनिर्वापानुवादः। स[9] एव वा धात्वर्थकरणत्वसिद्धान्तानुरोधेन[10] चाङ्गाङ्गिरूपस्वार्थसम्बन्धेन[11] द्रव्यदेवतासम्बन्धाक्षिप्तं[12] यागं लक्षयति। एवञ्च धातुनोपपदेन वा लक्षितो यागः करणम्, न तु निर्वाप इति। क्वचित्तु फलकर्मिकायां भावनायां[13] गुण एव करणम्, धात्वर्थस्तु तस्याश्रयत्वेनान्वेति। यथा

---

१. भाव्याकाङ्क्षायामिति मूलमातृकापाठः। भाव्यकर्मिकायामिति ग मातृका पाठः।

२. गर्भः भवतीति घ ङ मातृकयोः दृश्यते।

३. सास्येत्यारभ्य० धिकृत्यपर्यन्तं च मातृकायां नास्ति।

४. ०गर्भस्येत्यनन्तरं हविर्देवतयोर्यागरूपक्रियागर्भस्य सम्बन्धस्य चोक्तेः पर्यन्तं ग छ मातृकायां नास्ति। तथा छ मातृकायां द्रव्यइत्यारभ्य चोक्तेः पर्यन्तमस्ति। क मातृकायाञ्च।

५. हविर्देवतयोर्यागरूपक्रियागर्भस्येति पाठः दृश्यते क मातृकायाम्।

६. 'व्युत्पत्ति' इति च मातृकायां दृश्यते।

७. पदादिति ङ मातृकापाठः।

८. तदन्वयानुपपत्त्येति घ मातृकापाठः।

९. स एव वेति मूलमातृकायां नास्ति।

१०. च स्थाने 'न' इति च मातृकायाम्।

११. द्रव्येत्यारम्य ०क्षिप्तं पर्यन्तं ङ च मातृकयोर्नास्ति।

१२. सम्बन्ध इति पदं क ग मातृकयोर्नास्ति।

१३. भावनायामिति छ मातृकायां नास्ति।

दध्नेन्द्रियकामस्य जुहुयादित्यादौ ।[1] अत्र हीन्द्रियकर्मिकायां भावनायां [2]दधिकरणम्, न तु होमः । तस्याग्निहोत्रं जुहोतीति वाक्यविहितस्याग्निहोत्रं जुहुयात्स्वर्गकाम इति वाक्यविहितफसम्वन्धस्य[3] दध्ना जुहोतीति वाक्यविहितदधिसम्बन्धस्य[4] च[5] विधानावच्च[6] पुनः गुणफलसम्वन्धानाकाङ्क्षणात् । फलान्तरसम्वन्धे वा[7] पक्षेऽप्राप्तस्य नियमोऽपि विधेयः । अन्यथा पय आदिद्रव्यैर्विकल्पितस्य दध्नः पक्षेऽप्राप्तस्य पाक्षिकानुवादोऽनर्थकः स्यात् । एवञ्च प्राप्तहोमद्वयवोधने[8] विध्यावृत्तेर्वाक्यभेदः । होमेनेन्द्रियं[9] भावयेत्[10] दध्नैव[11] होमं भावयेदिति ।[12] यदि ह्यत्र होमो[13] विधीयेत, ततो[14] दधिविशिष्टमेव[15] भावनाकरणं स्याद्दधिमता होमेनेन्द्रियं भावयेदिति । स च[16] प्राप्तत्वादत्र[17] न विधीयते । कर्मान्तरन्तु सन्निहिते

१. इत्यादाविति पदं घ ङ मातृकयोर्नास्ति ।

२. दधिस्थाने गुण इति पदं छ मातृका पठति ।

३. '०फल' इत्यारभ्य वाक्यविहितपर्यन्तं नास्ति ।

४. दधिस्थाने गुणपदं दृश्यते घ मातृकायाम् ।

५. ०स्य इत्यनन्तरं विधानादितिपदं ङ मातृका पठति ।

६. पुनरुत्पत्तिरिति क ख ग मातृकापाठः ।

७. 'पक्षप्राप्त' इति क ग च मातृकासु दृश्यते ।

८. होमे द्वय० इति क घ ङ मातृकासु दृश्यते ।

९. इन्द्रियमित्यस्य स्थाने इष्टमिति पदं ख मातृकायां दृश्यते ।

१०. कुर्यादिति मूलमातृकापाठः ।

११. एवेति ङ मातृकायां नास्ति ।

१२. कुर्यादिति मूलमातृकापाठः ।

१३. विधास्यत इति च मातृकापाठः ।

१४. 'दधिविशिष्ट' इत्यस्य स्थाने 'स एव' इति क ग छ मातृकासु दृश्यते ।

१५. विशिष्ट एवेति ङ मातृकापाठः ।

१६. तु स्थाने च इति ङ मातृका पठति ।

१७. अत्रेति पदं क ख घ ङ मातृकासु न दृश्यते ।

होमे तत्कल्पकशब्दान्तरादिप्रमाणाभावान्न[1] युक्तम्। तस्मात् दध्येव करणम्, दध्नेन्द्रियं[2] भावयेदिति।[3] तस्य च सिद्धरूपस्य व्यापारनाविष्टस्य[4] करणत्वानुपपत्तौ प्रकरणात् होमरूपव्यापाराविष्टं करणमिति गम्यते। इदञ्च होमस्याश्रयत्वं यत्तत्सम्बन्धेन दधिफलकरणं भवति। [5]यद्व्यापार-सम्बद्धोऽपि[6] गुणः फलाय विधीयते, स व्यापार आश्रय इत्युच्यते। एवञ्च जुहोतिः प्रकरणादाश्रयत्वेन प्राप्तं होममनुवदति, न तु स्वयमाश्रयत्वेन होमं समर्पयति। दध्नः फलसम्बन्धबोधनेऽऽश्रयसम्बन्धबोधने च विध्यावृत्तेर्वाक्यभेदः[7] स्यात्। दध्नेन्द्रियं कुर्याद् होमं कुर्यादिति। तेन [8]प्रकरण-कल्पितेन विधिना आश्रयत्वसम्बन्धे[9] प्राप्ते दधिफलभावनाकरणं विधीयत इति राणकः।

मिश्रास्तु तृतीययोक्तं दधिगतं करणकारकमेव फलभावनाकरणम्। दधिगतेन करणत्वेनेन्द्रियं [10]भावयेदिति, 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्राधान्येनेत्यभियुक्तोक्तेस्तस्य प्राधान्यात्। तृतीयोक्तस्य च तस्य कारकान्तरान्वयायोग्यत्वेऽपि लक्षणया करणत्वान्वययोग्योपस्थिति-र्भवति।[11] कारकञ्च सर्वक्रियानिरूपितमेवेति[12]। करणत्वं किं क्रिया-

---

१. कल्पनागौरवादित्येव मूलमातृकायां पाठः।
२. इन्द्रियं कुर्यादित्यारभ्य स व्यापारआश्रय इति यावत् ख मातृकायां ग्रन्थपातः।
३. कुर्यादिति मूलमातृकापाठः।
४. आविष्टमिति क घ ङ मातृकासु दृश्यते।
५. 'सम्बन्धो' इति मूलमातृकापाठः।
६. अपिपदं मूलमातृकायां न दृश्यते।
७. 'वृत्तिवाक्य' इति ङ मातृकापाठः।
८. 'प्रकरणकल्पितेन विधिना' इत्यस्य स्थाने सन्निधिना इति ग मातृकापाठः।
९. 'त्व' इति ङ मातृकायां न दृश्यते।
१०. कुर्यादिति मूलमातृकापाठः, विधीयते इति छ मातृकापाठः।
११. भवतिपदं ङ च मातृकयोर्नास्ति।
१२. एवेति ङ मातृकायां न दृश्यते।

निरूपितमित्याकाङ्क्षायां[1] प्रकरणाद्धोमक्रियानिरूपितमिति गम्यते, न[2] तु प्रकरणाद्विधिः कल्प्यते। जुहोतिश्चानुवादः प्रत्ययसाधुत्वार्थं प्रयुज्यते। एवञ्च दधिगतेन करणत्वेन होमनिरूपितेनेन्द्रियं भावयेदित्याहुः। भाष्य-वार्त्तिकयोरुभयमुक्तम् तस्मात्सर्वभावनानां धात्वर्थः[3] करणम्। क्वचिद् गुणोऽपि। तत्र धात्वर्थो भाव्य आश्रयो वेति संक्षेपः।

## इतिकर्त्तव्यताकाङ्क्षानिरूपणम्

इत्थं 'स्वर्गकामो यजेतेत्यत्र' करणान्विता भावनेतिकर्त्तव्यतामपेक्षते। यागेन स्वर्गं कुर्यात्कथमिति कर्त्तव्यतायाः विशेष इतिकर्त्तव्यता। मिश्रमते फलानुकूलव्यापारात्मिका भावना कर्त्तव्यतारूपेणोक्तविशेषरूपमपेक्षते, कथमिति, कोऽसौ व्यापार इत्यर्थः। किम् प्रश्ने, थमुः प्रकारे। सामान्यस्य च भेदको विशेषः प्रकारः। भावनारूपस्य व्यापारसामान्यस्याख्यातोक्तस्य[4] परिच्छेदको विशेष[5] आकाङ्क्ष्यमाणः प्रकार इत्युच्यते। यथा पचेत पाकं कुर्यादित्युक्ते कथं कः प्रकार इत्याकाङ्क्षा भवति। तत्र[6] फूत्करणादि-व्यापारविशेषोऽन्वेति, तथा यागेन स्वर्गं कुर्यादित्युक्ते[7] कथं कः प्रकार इति व्यापारविशेषात्मकप्रकाराकाङ्क्षा भवति। सेयमिति कर्त्तव्यताकाङ्क्षा। तस्याञ्च सन्निहितोऽन्वाधानादिः ब्राह्मणतर्पणान्तो व्यापारः दर्शपूर्णमा-सयोर्दीक्षणीयाद्युदवसानीयान्तो ज्योतिष्टोम इत्येवं स व्यापारविशेषोऽन्वेति। अयमसौ व्यापारो येनानुष्ठितेन यागेन स्वर्गो भवतीति।

---

१. 'अपेक्षायाम्' इति ख घ मातृकयोः दृश्यते।

२. न तु इत्यारभ्य कल्प्यते पर्यन्तं क ग मातृकयोः नास्ति।

३. धात्वर्थकरणमिति समस्तं पदं ङ मातृकायां दृश्यते।

४. भेदक इति ख घ ङ मातृकापाठः।

५. विज्ञेय इति च मातृकापाठः।

६. तत्रेत्यादिः भवतिपर्यन्तं छ मातृकायां ग्रन्थपातः।

७. 'इत्युक्ते' इति मूलमातृकायां नास्ति।

राणकमते यागानुकूलयत्नात्मिका भावना कर्त्तव्यतारूपेणोक्ता, सा[1] स्वकरणानुग्राहकं व्यापारविशेषमपेक्षते । यागेन स्वर्गं कुर्यात्कथं किं व्यापारानुगृहीतेनेति ।[2] न ह्यनुग्राहकव्यापारं विना करणत्वं सम्भवति । यथा कुठार उद्यमननिपातनव्यापारानुगृहीतः[3] छिदाकरणं भवति ।[4] यद्यप्युत्पत्तिमात्रेण करणं यथा क्रियाविभागे[5] बुद्धेर्वा विषयव्यवहारे तत्राप्युत्पत्तिरेवानुग्राहको व्यापारः । अनुत्पन्नस्य करणत्वासम्भवात् । उक्तञ्च ।

'तेन जन्मैव विषये बुद्धेर्व्यापार इष्यते श्लो० वा० १.१.४ श्लो० ५६ इति ।[6] तथाप्यनुग्राहकव्यापाराकाङ्क्षायां सान्निध्याम्नातमारादुपकारकं पदार्थजातमन्वेति, न सन्निपत्योपकारकमित्यग्रे वक्ष्यते । तस्मादस्तीति-कर्त्तव्यताकाङ्क्षा ।

## प्रकृतिविकृत्यादिस्वरूपम्

एवं[7] सति क्वचिदुपदेशेनानुग्राहको व्यापारः सम्वद्ध्यते क्वचि-दतिदेशेन, क्वचिदुपदेशातिदेशेनैव । तथाहि—तस्याञ्च सन्निध्युपदिष्टं दर्श-पूर्णमासादौ प्रकृतिरूपे कर्मणि सम्वद्ध्यते । विकृतिरूपे तु सौर्यादिकर्मणि तद्ववदिति[8] कल्पितेनातिदेशवाक्येन प्राप्तमङ्गजातं[9] सम्वद्ध्यते । प्रकृति-विकृतिरूपे त्वग्नीषोमीयपशुयागादिकर्मण्युपदेशेनातिदेशेन च प्राप्तं सम्वद्ध्यते । यत्रोपदेशेनैव दृष्टादृष्टार्थयावदपेक्षिताङ्गान्वयः, सा प्रकृतिः ।

---

१. 'सा' इति पदं ख ग ङ मातृकासु नास्ति ।
२. तेनेत्यारभ्य 'अनुगृहीतः' इति यावत् छ मातृकायां नास्ति ।
३. 'निपतन' इति ख ग च मातृकापाठः ।
४. 'यदपि' इति मूलमातृकापाठः ।
५. बुद्धिरिति क ख ग ङ मातृकापाठः ।
६. तथात्रा० इति मूलमातृकापाठः ।
७ एवमित्यारभ्य 'तथाहि' यावत् क ख ग ङ मातृकासु न दृश्यते ।
८. 'इति' पदं ङ मातृकायां नास्ति ।
९. अङ्गजातमिति ङ मातृकायां नास्ति ।

यथा दर्शपूर्णमासौ, ज्योतिष्टोमः, सर्वे च होमाः । यत्रातिदेशेनैव तादृशाङ्गान्वयः, सा विकृतिः । यथा सौर्यादिः । यद्यपि विकृतिष्वपि कासुचिदुपदेशेनाङ्गान्वयो भवति । यथा नक्षत्रेष्टिषूपहोमानाम्, तथापि यथोक्ताङ्गान्वयस्तत्राप्यतिदेशेनैव ।[1] अग्नीषोमीयपशुयागे तूपदेशेन पशुधर्मा उपाकरणादयोऽतिदेशेन च दर्शपूर्णमासान्तर्गतपयोयागधर्माः प्रयाजादयो दृष्टादृष्टार्थाः सम्बद्ध्यन्त[2] इति तस्य प्रकृतिविकृतिरूपत्वम् । किञ्चित्त्व-नुभयरूपं कर्म । यथा गृहमेधीयादि । 'मरुद्भ्यो गृहमेधिभ्यः[3] सर्वासां दुग्धे सायमोदनं निर्वपेदि'ति वाक्ये द्रव्यदेवतासम्बन्धकल्पितो यागः सामकालादि-विशिष्टो[4] विधीयते । सोऽयं गृहमेधीय इत्युच्यते । तत्करणिकाया भावनाया भाव्यं चातुर्मास्यैः स्वर्गकामो यजेते'ति वाक्यार्थः ।[5]

एवञ्च स्वर्गकर्मिकायाः यागकरणिकायाः भावनाया इतिकर्त्तव्यता-काङ्क्षायां सन्निधौ 'आज्यभागौ यजति, स्विष्टकृतं यजती'ति विहित-माज्यभागादि सम्बद्ध्यते। तच्च दर्शपूर्णमासयोर्विहितं क्लृप्तोपकारकमत्र श्रुतं झटित्याकाङ्क्षां निवर्त्तयति । निवृत्तायां च तस्यां न[6] दार्शपौर्णमासिक-धर्माणामिष्टित्वसामान्येनातिदेशः कल्प्यते । सर्वत्र हि भावनोपकारकं व्यापारमपेक्षते, न तु[7] व्यापारमात्रम् । स चात्र सन्निहित एव लब्ध इति किमतिदेशकल्पनया । अतएव[8] नक्षत्रेष्ट्यादिषु प्रभृतिषूपहोमाद्यपूर्वाङ्ग-पाठेऽपि इष्टित्वसामान्यकल्पितातिदेशेन[9] दार्शपौर्णमासिकधर्मा[10] एवादा-वन्वीयन्ते ।

---

१. °न्वयानन्तरमिति ङ मातृकापाठः ।
२. सम्बद्ध्यन्त इति मूमा० पा० घ मातृकायाञ्च 'सम्पद्यन्ते' इति पाठः ।
३. 'सर्वासां दुग्धे' इति च मातृकायां नास्ति ।
४. आदिपदं मूलमातृकायां नास्ति ।
५. वाक्यात्स्वर्ग इति ङ मातृकापाठः ।
६. दर्शपूर्णमासिक इति घ मातृकापाठः ।
७. तु पदं घ मातृकायां नास्ति ।
८. 'नक्षत्रेष्ट्यादिषु प्रभृतिषु' इति मूलमातृकायां नास्ति ।
९. दर्शपूर्णमास इति ङ मातृकापाठः ।
१०. आदावित्यस्य स्थाने प्रथममिति घ ङ मातृकयोः दृश्यते ।

पश्चात्त्वक्लृप्तोपकारोपहोमादिग्रहणम् ।[1] प्रकृतिषु त्वगत्या व्यापारान् गृहीत्वा पश्चात्तज्जन्योपकारकल्पना । अन्यदीयक्लृप्तोपकारव्यापारग्रहणासम्भवात् । तेन गृहमेधीयोऽपूर्व इत्युच्यते । नास्ति पूर्वा प्रकृतिर्यस्येत्यर्थः । एवञ्चातिदेशाभावान्मास्य[2] विकृतित्वम् ।[3] उपदेशेनापि न यावदपेक्षिताङ्गप्राप्तिः ।[4] आज्यभागाद्यङ्गद्रव्यदेवतासंस्काराणां[5] दार्शपौर्णमासिकानामग्निवेदिर्बर्हिःसंस्काराणामन्वाधानखननलवनादीनां[6] जुह्वादिपात्राणां तत्साधनपर्णत्वादीनां सम्मार्गादितत्संस्काराणाञ्चाङ्गप्रधानसाधारणानां[7] 'प्रधानं नीयमानं हि तत्राङ्गान्यपकर्षती'त्यनेन न्यायेनाज्यभागादिवशेनेहानुष्ठेयत्वात् । प्रधानद्रव्यसम्पादकव्यापारस्य चाक्षेपलभ्यत्वात् । अतो न प्रकृतित्वं न[8] विकृतित्वमित्यनुभयरूपता । यदि त्वाज्यभागाद्युपदेशेनाक्षिप्तं सर्वमुपदिष्टमेवेति मत्वा प्रकृतित्वं व्यवह्रियते तत ओम् । सर्वथा त्वितिकर्त्तव्यताकाङ्क्षायां यावदुक्ताज्यभागाद्यन्वय इति सिद्धम् ।

अङ्गभावनानां[9] त्वितिकर्त्तव्यताकाङ्क्षायां वाचनिकधर्माणां तत्सदंशपठितधर्मान्तराणां[10] चान्वयः ।[11] यथा 'समिधो यजती'त्यादिपञ्चवाक्यविहितानां दर्शपूर्णमासाङ्गपञ्चप्रयाजभावनानां प्रधानोपकारभाव्यानां यागकरणिकानामितिकर्त्तव्यताकाङ्क्षायाम्अतिहायेडो बर्हिः प्रतिसमानयते जुह्वामौपभृतमि'ति वाक्येनेडाख्यतृतीयप्रयाजानन्तरं बर्हिराख्यचतुर्थप्रयाजं

१. आदिपदं घ च मातृकयोः नास्ति ।
२ 'न' इत्यस्य स्थाने 'मा' इति पदं ग ङ मातृकयोः दृश्यते ।
३. 'उपदेशे सत्यपि' इति च मातृकापाठः ।
४. 'अपेक्षाङ्ग' इति घ मातृकापाठः ।
५. आदिपदं घ ङ मातृकयोर्नास्ति ।
६. लवनालवनादीति च मातृकापाठः ।
७. संस्काराणामिति च मातृकापाठः ।
८ न विकृतित्वमिति क ख ग ङ मातृकासु न दृश्यते ।
९. भावनायामिति च मातृकापाठः ।
१०. धर्मान्तरपदं घ ङ मातृकयोर्नास्ति ।
११. च स्थाने 'वा' इति च मातृकायाम् ।

प्रति जुह्वामौपभृतचतुर्गृहीतानयनरूपो धर्मो विहितः । ततो 'अभिक्रामं जुहोती' ति वाक्येनाभिक्रमणरूपो धर्मो विहितः । ततो 'यो वै प्रयाजानां मिथुनं वेदे'त्यादिना[१] स्तुतिः कृता । तत्र पूर्वोत्तरयोर्धर्मयोर्वाचनिकं[२] प्रयाजानामङ्गत्वम् । [३]मध्यपतितस्य[४] तु सन्दंशपाठेन जुहोतिना प्रयाजहोमानेवानूद्याभिक्रमणमाहवनीयप्रत्यासन्नदेशे एकैकप्रयाजानन्तरमेकैकपदप्रक्षेपरूपं[५] विधीयते । अभिक्रम्याभिक्रम्येत्यभिक्रामम् । आभीक्ष्ण्ये णमुल् वचनात् ।[६] यासु त्वङ्गभावनासु वाचनिकाः सन्दंशपठिताश्च[७] न सन्ति, तास्वाचमनबद्धशिखत्वादीनां[८] स्मार्त्तधर्माणां[९] सर्वकर्माङ्गसाधा-[१०]रणानामन्वयः । आचमनादीनामपीतिकर्त्तव्यताकाङ्क्षायां स्मार्त्तधर्माणा-[११]मन्वयः । तेषामप्याकाङ्क्षायां स्वरूपसम्पादनस्यान्वयः[१२] क्रियाया इव विभागे । एवं ये प्रधानभूता दर्विहोमा अनुक्तेतिकर्त्तव्यताकास्तेष्वपि[१३] स्वरूपसम्पादनमितिकर्त्तव्यता क्वचित्[१४] । न च तेष्वतिदेशः किन्न स्यादिति वाच्यम् । यागधर्माणां यागहोमयोः सादृश्याभावेनातिदेशायोगात् । होमेष्वपि क्वचित्[१५] किञ्चिद्धर्मोपदेशेन का प्रकृतिः का वा विकृतिरित्यनिर्धा-

---

१. आदिपदं ख मातृकायां नास्ति ।
२. पूर्वोत्तधर्म० इति ख मातृकापाठः ।
३. प्रयाजार्थमिति मूलमातृकायां ख मातृकायां च ।
४. पतितस्येति घ ङ मातृकयोः दृश्यते ।
५. एकैकपदं मूलमातृकायां नास्ति ।
६. वचनादिति पदं ख घ ङ च मातृकासु न दृश्यते ।
७. 'उपहिताः' इति क मातृकायाम् ।
८. बद्धेत्यारभ्य उत्पत्तिपदपर्यन्तं ख मातृकायां ग्रन्थपातः ।
९. अङ्गपदं च मातृकायां नास्ति ।
१०. साधारणेति पदं क ग ङ मातृकासु न दृश्यते ।
११. '°र्त्तंतद्' इति च मातृका पठति ।
१२. सम्पादनान्वय इति समस्तपाठः घ ङ मातृकयोः ।
१३. '°ताकास्ते°' इति क घ मातृकापाठः ।
१४. क्वचिदिति पदं क ग घ ङ मातृकासु नास्ति ।
१५. क्वचिदिति पदं घ च मातृकयोर्नास्ति ।

रणात्। अतो ये यावदङ्गोपेतास्ते तथा कार्याः। ये त्वनङ्गास्तेषूक्तेतिकर्त्तव्यता। तस्मात्सर्वभावनानामितिकर्त्तव्याकाङ्क्षायां क्वाचिदुपदिष्टनां क्वचिदतिदिष्टानां क्वचिदुभयेषां क्वचित्स्मार्त्तानां क्वचित्स्वरूपसम्पादनस्यान्वय इति संक्षेपः[1]।

## विधिप्रामाण्यनिरूपणम्

एवं[2] साध्यसाधनेतिकर्त्तव्यतारूपांश[3]त्रयविशिष्टभावनाविधायकत्वेन विधीनां धर्मे प्रामाण्यम्। यद्यपि कर्त्रंशः सर्वत्र भावनयापेक्षितस्तत्समर्पकश्च ब्राह्मणादिपदं क्वचिच्छ्रूयते, तथापि न स[4] चतुर्थांशो व्यवह्रियते। भावनां विनापि भवनमात्रे[5] घटो भवतीत्यादौ तदपेक्षणात्। अंशत्रयं तु भावनयैवाकाङ्क्ष्य इति तथा व्यवहारः। वस्तुतस्तु[6] कर्त्रंश इति कर्त्तव्यतान्तःपाती। अंशत्रयोपेतत्वन्तु भावनया अन्योत्पत्त्यनुकूलव्यापारत्वान्निर्व्यूढम्। तदित्थं फलमन्यांशपाति। करणत्वन्तु निरवच्छिन्नभावनाया अनुकूलव्यापारत्वासम्भवादनुकूलव्यापारान्तःपाति। इतिकर्त्तव्यतापि व्यङ्गस्य करणत्वासम्भवादनुकूलव्यापारान्तःपातिनीति।

## विधिभेदनिरूपणम्

स च विधिस्त्रिविधः—अपूर्वविधिर्नियमविधिः परिसंख्याविधिरिति[7]। तत्रात्यन्ताप्राप्तबोधको विधिरपूर्वविधिः। यथा अग्निहोत्रं जुहोतीत्यादिः। स चतुर्विधः—उत्पत्तिविधिर्विनियोगविधिरधिकारविधिः प्रयोगविधिश्चेति।

---

१. सिद्धमिति घ ङ मातृकयोः दृश्यते।
२. 'सर्व' इति च मातृका पाठः।
३. रूपपदं छ मातृकायां न दृश्यते।
४. 'स' इति ङ मातृकायां नास्ति।
५. 'मात्रेण' इति घ मातृकापाठः।
६. वस्तुतस्तु रान्तःपातिनीपर्यन्तं ग घ ङ च छ मातृकासु नास्ति।
७. विधिश्चेति घ ङ मातृकयोः दृश्यते।

## उत्पत्तिविधिनिरूपणम्

तत्र[1] कर्मण उत्पत्तिं प्रथमज्ञप्ति[1] यः करोति स प्रथमः। यथा पूर्वोक्त एव स हीष्टसामान्यकर्मिकां होमकरणिकां भावनां प्रथमं ज्ञापयति। एतस्य विधेः सहकारीणि षट् प्रमाणानि—शब्दान्तराभ्याससंख्यासंज्ञागुण-प्रकरणान्तराणि। एतत्सहकृतेनोत्पत्तिविधिना[3] कर्मोत्पाद्यते यथा, तथाग्रे वक्ष्यामः।

## विनियोगविधिनिरूपणम्

विनियोगम[4]ङ्गाङ्गिभावसम्बन्धं यो[5] बोधयति, स विनियोगविधिः। यथा स एव होमफलयोर्भावनाद्वारकमङ्गाङ्गिभावं बोधयति। भावना हि फलोपहिता येन भवति तत्करणमित्युक्तम्[6]। यदि च तत्फलार्थं भवति तथा[7] सति तद्वशेन[8] भावनाफलोपहिता भवतीति करणस्य फलार्थतां बोधयन् विनियोगविधिर्भवति। व्यापारभेदाच्चैकस्य[9] संज्ञाद्वयविरुद्धम्। शुद्धोऽपि सोऽस्ति 'दध्ना जुहोती'ति दधिहोमयोर्लोकिवाक्यान्तरप्राप्तत्वेनो-त्पत्त्यनपे[10]क्षणादङ्गाङ्गिभावमात्रबोधकत्वात्। अस्यापि सहकारीणि षट प्रमाणानि—श्रुतिलिङ्गवाक्यप्रकरण—स्थानसमाख्यारूपाणि। एतत्सह-

---

१. तत्रेतिपदात्पूर्वं 'तत्र उत्पत्तिविधिः' इति मूलमातृकायामधिकं दृश्यते। तथा तत्रे-त्यारभ्य सामान्यकर्मिकां यावत् च मातृकायां ग्रन्थपातः।

२. 'प्रथमतः' इति ङ मातृकापाठः।

३. '°ना यथा' इति घ० म० पा० अत्रैवेति ङ मातृका पाठः।

४. अङ्गसम्बन्ध इति च मातृकापाठः। 'भाव' इति पदं मूलमातृकायां ख मातृ-कायाञ्च नास्ति।

५. 'यो' इति पदं ङ मातृकायां नास्ति।

६. 'समप्युक्त' इति च मातृकापाठः।

७. तदातद्वशेनेति ङ मातृका पाठः।

८. तदंशेनेति च मातृकापाठः।

९. एकस्येतिपदं च मातृकायां नास्ति।

१०. °अनपेक्षत्वादिति मूलमातृकापाठः।

क्तेन [1]विनियोगविधिनाङ्गत्वं बोध्यते। एकस्य चाङ्गत्वे[2] परस्याङ्गित्वमर्थात्सिध्यति न तु, तद्विधिगम्यम्। अङ्गत्वञ्च परोद्देशप्रक्रत-[3] पुरुषकृतिसम्बन्धित्वम् भवति हि होमस्य फलोद्देशप्रवृत्तपुरुषकृति-[4] सम्बन्धित्वात् फलाङ्गत्वम्। फलस्य च[5] स्वात्मोद्देशप्रवृत्तपुरुषकृत्युद्देश्यत्वात् पुरुषार्थत्वम्। पुरुषस्य च कर्मोद्देशप्रवृत्तस्यात्म-[6] कृत्याश्रयत्वात् कर्मार्थत्वम्[7]। तथा च कर्म फलार्थम्, फलञ्च पुरुषार्थम्, पुरुषश्च कर्मार्थ इति चक्रकम्। द्रव्यगुणसंस्काराणामपि[8] कर्मोद्देशप्रवृत्तपुरुषकृतिसम्बन्धित्वात् कर्मार्थत्वम् न तूपकारकत्वमङ्गत्वम्, मक्षिकार्थो धूम इत्यादावपकारकेऽप्यङ्गत्वदर्शनात्। जामात्रर्थे[9] कृतदीपस्य शिष्योपकारकत्वेऽपि[10] तदङ्गत्वाभावात्। ज्ञाताङ्गत्वस्य[11] च प्रयाजादेरुपकारकत्वकल्पनातः[12] प्राक् [13]क्रत्वङ्गत्वज्ञानं[14] विना स्वर्गादिककल्पनैव न स्यात्।[15] तस्मादुक्तविधं पारार्थ्यमेवाङ्गत्वम्। तच्च श्रुत्यादिसहकृतविधिगम्यमिति श्रुत्यादीनि निरूपयामः।

---

१. विनियोगपदं ख घ ङ मातृकासु न दृश्यते।

२. चेतिपदं घ ङ मातृकयोर्न दृश्यते।

३. मूलमातृकायां ख मातृकायाञ्च प्रकृति शब्दः दृश्यते। घ ङ च मातृकासु कृति शब्द एव पठ्यते। अग्रिमपङ्क्तिसमन्वयदृष्ट्या 'प्रवृत्त' इति पाठः मया कल्पितः।

४. साध्यत्वादिति क ख ग घ ङ मातृकासु दृश्यते।

५. चेति ङ मातृकायां नास्ति।

६. °स्वात्म' इति घ ङ मातृकयोः दृश्यते।

७. कर्माङ्गत्वमिति घ मातृकापाठः।

८. गुणस्य स्थाने कर्म पदं ङ मातृका पठति।

९. जामाऽर्थकृतदीपकस्येति ङ मातृकापाठः।

१० 'कारत्वेऽपि' इति घ मातृकापाठः।

११. 'ज्ञानाङ्गत्व०' इति मूलमातृकापाठः।

१२. 'कल्पनात्। प्राक् त्वङ्गत्वज्ञानात् स्वर्गादिकल्पनैव न स्यादिति वाक्यविन्यासः ङ मातृकायाम्।

१३. क्रत्वङ्गत्व० इति घ मातृकापाठः।

१४. ज्ञानादिति मूलमातृकापाठः।

१५. न स्यादिति घ मातृकापाठः।

—५—

## श्रुतिनिरूपणम्

तत्र लिङ्गादिकल्पनामन्तरेणाङ्गत्वबोधकः शब्दः श्रुतिः। यथा 'दध्ना जुहोती'त्यत्र तृतीयया दध्नः करणत्वे होमकर्मिकायां भावनायां बोधिते ततो होमकरणत्वे बुद्धे[1] विधिहोमार्थं दधीति बोधयति। सोऽयं तृतीयाश्रुत्या अङ्गत्वबोधः 'एवं' अरुणया[2] एकहायन्या पिङ्गाक्ष्या गवा[3] सोमं क्रीणाती'त्यत्र सोमकर्मिका क्रयकरणिका भावना विधीयते। क्रयेण सोमं भावयेदिति। अरुणाशब्दश्चाकृत्यधिकरणन्यायेन गुणमात्रवचनः[4]। एकहायनीशब्दस्तु[5] एकहायनसम्बन्धविशिष्टगोद्रव्यवाची। पिङ्गाक्षीशब्दोऽपि पिङ्गाक्षसम्बद्धं[6] तदेव[7] ब्रूते। न चैतावताप्याकृत्यधिकरणन्यायेन सम्बन्धमात्रं वदेताम्; द्रव्यन्तु लक्ष्येतामिति[8] वाच्यम्। सम्बन्धप्रतीतेः सम्बन्धिद्वयप्रतीतिपूर्वकत्वेन द्रव्याभिधानं विना सम्बन्धाभिधानासम्भवात्। प्रकृत्यैकहायने 'दामहायनान्ताच्च' (पा० सू० ४.१.२७) इत्यनेन ङीप्[9] प्रत्ययेन बहुव्रीहिणा वा द्रव्येऽभिहिते तयोः सम्बन्धः संसर्गविधयैव भासत इति नाभिधानशक्तिं प्रयोजयति। जातिगुणयोस्तु पूर्वप्रतीतयोर्द्रव्यलक्षकत्वं युक्तमिति। तावेवाकृत्यधिकरणन्यायविषयौ[10], न सम्बन्धः। एवं सर्वत्र[11] यौगिकशब्दानां द्रव्यवाचित्वम्। उक्तञ्च—

---

१. 'बुद्धे' इत्यस्य स्थाने तु पदं पठति ङ मातृका।
२. अरुणैक० इति मूलमातृकापाठः।
३. 'गवा' पदं घ ङ मातृकयोर्नास्ति।
४. मात्रपदं घ ङ मातृकयोः दृश्यते।
५. 'शब्दस्तु' इति घ ङ मातृकापाठः।
६. सम्बन्धमिति घ मातृकापाठः।
७. सम्बन्धं तद्वदेवेति ङ मातृकापाठः।
८. लक्षयेतामिति मूलमातृकापाठः।
९. ङीष् बहुव्रीहिणेति पदं ख मातृकायां नास्ति। च मातृकायाञ्च °ङीष् इत्यारभ्य वा यावन्नास्ति।
१०. 'सिद्धौ' इति पदं घ ङ मातृकयो दृश्यते।
११. सर्वं इति च मातृका पठति।

सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते ।
न हि सम्बन्धवाच्यत्वं सम्भवत्यतिगौरवात् ।।
(त० वा० ३.१.१२) इति

तथा चारुणगुणः[१] पदद्वयाभिहितं द्रव्यञ्च तृतीयाश्रुत्या करणत्वेन गम्यते[२]। भावनायाश्च क्रयकरणियां[३] नैतयोरन्वय इति मत्वर्थलक्षणया क्रयान्वयो भवति । अरुणगुणकरणकेनैकहायनीकरणकेन पिङ्गाक्षीकरणकेन क्रयेण सोमं भावयेदिति । न चामूर्त्तस्य गुणस्य कथं क्रयणकरणत्वम्[४] । द्रव्यपरिच्छेदद्वारोपपत्तेः । अतएवास्य परिच्छेद्यद्रव्याकाङ्क्षायां[५] करणस्य गोद्रव्यस्य परिच्छेदकगुणाकाङ्क्षायां [६]क्रयाक्षेपेणार्थात्परस्परं नियमः पार्ष्णिकान्वय[७] इत्युच्य`ते तेन तृतीयाश्रुत्या क्रयकरणत्वे दव्यगुणयोर्बोधिते तादर्थ्यं विधिर्बोधयतीति श्रौतोऽङ्गत्वबोधः[८]। यदा तु[९] प्रकृत्या मत्वर्थो लक्ष्यते। तृतीया[१०] च मत्वर्थस्य क्रयस्य[११] करणत्वं वदति[१२] । अरुणगुणवतैकहायनीवता[१३] पिङ्गाक्षी मता[१४] क्रयेणेति, तदापि मत्वर्थलक्षणातः प्राक् 'अरुणया क्रीणाती'ति श्रवण एव क्रयकरणं गुण इत्यापातबोधो जायते । स तृतीयाश्रुतिकृतः पश्चादपि न बाध्यत [१५]इत्यविहितश्रौताङ्गत्वव्यवहारः । न च

१. 'गुणस्य क्रमाङ्गत्वं द्रव्यस्य च तृतीया श्रुत्या' इति वाक्यविन्यासः च मातृकायाम् ।
२. 'गम्यते' भावनायाञ्च'इति च मातृकायां नास्ति ।
३. नेति पदं च मातृकायां नास्ति ।
४. क्रय इति ख मातृका पठति ।
५. द्रव्यपदं छ मातृकायां न दृश्यते ।
६. क्रियापेक्षेणेति घ मातृका पठति ।
७. अन्वयपर इति घ मातृका पठति ।
८. अङ्गत्वाबोध इति च मातृकापाठः ।
९. तु स्थाने अपि पदं मूलमातृकायाम् ।
१०. 'तृतीयया' इति ख घ ङ मातृकासु ।
११. क्रयकरणत्वमिति समस्तं पदं घ मातृकायाम् ।
१२. 'उच्यते' इति ख ङ मातृकयोः दृश्यते ।
१३. 'वता' इति घ मातृकायां नास्ति ।
१४. 'वता' इति ख ग ङ मातृकासु दृश्यते ।
१५. 'न विहित' इति घ मातृकापाठः । ङ मातृकायाञ्च 'इत्यभिहित' इति दृश्यते ।

क्रयकरिणकां भावनां बोधयन् क्रये च द्रव्यगुणयोः करणत्वेनाङ्गत्वं बोधयन् विधिरावर्ततेति[1] वाच्यम् । द्रव्यगुणयोः क्रमाङ्गत्वबोधकविध्यन्तर-कल्पनाङ्गीकारात्[2] । सर्वेषु विशिष्टविधिषु 'सोमेन यजेते'त्यादिषु विशेषविधिरर्थात्कल्प्यते । गुणस्य धात्वर्थाङ्गत्वबोधायेति न श्रुतिविध्या-वृत्तिनिमित्तवाक्यभेदप्रसङ्गः ।

अथवा श्रुतस्यैवानेकत्र तात्पर्यकल्पनेऽपि । विशिष्टस्यैव[3] वाक्यार्थस्यैक्यान्न विध्यावृत्तिप्रसङ्गः । तस्माद्विशिष्टविधिषु श्रौत एव द्रव्यगुणयोर्धात्वर्थाङ्गत्वबोधः । एवं 'ग्रहं सम्मार्ष्टि' इत्यत्र द्वितीयाश्रुत्या सम्मार्गस्य ग्रहार्थत्वम् । द्वितीया हि ग्रहस्य कर्मत्वमाह । 'ग्रहैर्जुहोती'ति वाक्येन ग्रहस्येष्टहेतुत्वावगतेः सम्मार्ष्टीति विध्युक्तभावनायाः ईप्सिकतर्मत्वेन ग्रहो विधिना बोध्यते, ग्रहं भावयेदिति । यत्त्विष्टहेतुत्वेनाज्ञातं द्रव्यं तद् द्वितीयया कर्मत्वेनोक्तमपि विधिनानीप्सितकर्मत्वेन बोध्यते । यथा 'सक्तून् जुहोती'ति ज्योतिष्टोमप्रकरणाधीते वाक्ये सक्तूनां वाक्यान्तरेण तत्र[4] फलवत्त्वाज्ञानादनीप्सितकर्मत्वम्, सक्तुकर्मकेन होमेनेष्टं भावयेदिति । तेनेप्सितानीप्सितानुवर्त्तिकर्मत्वमात्रं द्वितीयार्थ इति मिश्राः ।

राणके तु ईप्सितकर्मत्वमेव द्वितीयार्थः । अनीप्सितकर्मत्वे कर्मत्वे तु लक्षणेत्युक्तम् । तन्मते सक्तूनामनीप्सितकर्मत्वं साधनत्वं वा लक्ष्यते । ग्रहस्य त्वीप्सितकर्मत्वेनान्वये द्वितीयया बोधिते सम्मार्गस्य करणत्वेनान्वयो भवति । सम्मार्गेण ग्रहं भावयेदिति ग्रहस्य चोत्पाद्यत्व[5]प्राप्यत्वविकार्यत्व-रूपकर्मत्वासम्भवात् संस्कार्यत्वरूपं सम्मार्गं प्रति कर्मत्वम् । ग्रहशब्दः

---

१. °रावर्त्त्ये' इति घ मातृकापाठः ।

२. स्वीकारादिति ख घ ङ मातृकापाठः ।

३. एवकारः मूलमातृकायां नास्ति ।

४. तत्रेति पदं छ मातृकायां नास्ति ।

५. 'आप्यत्व' इति घ मातृकापाठः ।

सोमाधारोलूखलाकारपात्रवाची। गृह्यतेऽस्मिन्निति व्युत्पत्त्येति मिश्राः। तन्मते तत्र[1] दशापवित्रकरणकः सम्मार्गः पात्रसंस्कारः।

राणके तु गृह्यत इति व्युत्पत्त्या सोमरसवाची। तस्य ग्रहणकाले वहिर्लग्नविप्रुषां प्रोञ्छनरूपः संस्कारः सम्मार्गेण भवतीत्युक्तम्। एवञ्च सम्मार्गस्य संस्कारकत्वेन[2] तदङ्गत्वं[3] विधिना बोध्यत इति श्रौतो विनियोगः। एवं 'स्रुचः सम्मार्ष्टि' 'व्रीहीन् प्रोक्षती'त्यत्र द्वितीयाश्रुत्या सम्मार्गप्रोक्षणयोः स्रुग्व्रीह्यङ्गत्वम्। [4]तथैव 'मैत्रावरुणाय दण्डं प्रयच्छती'त्यत्र चतुर्थीश्रुत्या दण्डकर्मकदानस्य मैत्रावरुणार्थत्वम्। चतुर्थी मैत्रावरुणस्य सम्प्रदानत्वमाह, 'सम्प्रदाने[5] चतुर्थी' इति[6] स्मरणात्। तच्च[7] कर्मणा यमभिप्रैति सन्तोषयति स सम्प्रदानमिति प्रसिद्धम्। तेन तस्य प्राधान्यं गम्यते। मैत्रावरुणस्य[8] प्रयोजनवत्त्वमिति तादर्थ्यं दण्डदानस्य विधिर्बोधयति। यत्र सम्प्रदानं निष्प्रयोजनम्, न तत्र तादर्थ्यं क्रियायाः। यथा—'वेदविदे गां ददाति, 'हिरण्यमात्रेयाय ददाती'त्यादौ। अत्र तु 'मैत्रावरुणः प्रेष्यति[9] चान्वाह[10]' इति वाक्येन मैत्रावरुणस्य प्रैषानुवचनरूपप्रयोजनत्वावगते-

१. तत्रेति पदं च मातृकायां न दृश्यते।
२. संस्कारत्वेनेति घ ङ च छ मातृकासु दृश्यते।
३. तदङ्गत्वेनेति च मातृकापाठः।
४. एवमिति मूलमातृकापाठः।
५. चतुर्थीत्यारभ्य स्मरणादिति यावत् च मातृकायां नास्ति।
६. इति पदं घ मातृकायां नास्ति।
७. पुरुषत्वदानक्रिया स्वकर्मणा यमभिप्रैति व्याप्नोति, स सम्प्रदानमिति मूलमातृकापाठः। 'पुरुषश्च दानकर्मणा' इति ख मातृकापाठः। 'पुरुषश्च दानकर्मणा यमभिप्रैति सन्तोषयति' इति ग घ मातृकापाठः। च मातृकायां 'पुरुषस्य' इत्येव भिन्नः पाठः।
८. तस्य हि प्रयोजनवतस्तद्युक्तमिति क घ ङ मातृकापाठः। ख मातृकायां 'तस्य हि' स्थाने 'मैत्रावरुणस्य च' इति भेदः दृश्यते। प्रयोजनकर्मप्रयुक्तत्वमिति च मातृकापाठः।
९. 'प्रैष्यति' इति घ मातृकापाठः।
१०. 'अनुचाह' इति घ मातृकापाठः।

दण्डी प्रैषानन्वाहे'ति वाक्याच्च दण्डापेक्षत्वात्तादर्थ्येन युक्तो दानविधिः। दण्डस्त्वनीप्सितं कर्म दाने इति । एवमग्नेस्तृणान्यपचिनोती'त्यत्र[१] पञ्चमीश्रुत्या [२]तृणापचयस्याग्न्यर्थत्वम् । अग्न्यपादानकेन हि[३] तृणा[४]-पचयनेनाग्नेरवहिः पातरूपसंस्कारो भवतीति तादर्थ्यं तृणापचयस्य विधिर्बोधयति। वस्तुतस्तु[५] तृणापचयस्याग्न्यङ्गत्वात् पञ्चम्याग्नेः प्राधान्यं लक्षणयोच्यते नत्वङ्गत्वमित्यस्वरसादुदाहरणान्तरम्। यद्वा[६] 'मध्याद्धाद-वद्यति' 'पूर्वार्द्धादवद्यति', शेषात् स्विष्टकृते समवद्यति' इत्येवमादीनि द्रष्टव्यानि । 'आहवनीये जुहोती'त्यत्र सप्तमीश्रुत्या आहवनीयस्य होमाङ्गत्वम्। एवं कारकविभक्तयः स्वार्थं बोधयन्त्यः तादर्थ्यबोधे:[७] विधेः सहायीभवन्तीति श्रुतय इत्युच्यन्ते। षष्ठी तु सम्बन्धसामान्यवाचिनी। क्वचित्प्राधान्यं क्वचिद् गुणत्वं बोधयतीति श्रुतित्वेन व्यवह्रियते। दध्ने-न्द्रियकामस्येति प्राधान्यमिन्द्रियकामस्य शुक्लानां व्रीहीणां चरुमि'त्यत्र[८] साधनत्वं व्रीहीणां षष्ठीश्रुत्या गम्यते। प्रथमा तु प्रातिपदिकार्थमात्र-परत्वान्न स्वतन्त्रा श्रुतिरित्युच्यते[९]।

## श्रुतिभेदनिरूपणम्

प्रकृत्यर्थगतलिङ्गसंख्याभिधायित्वाद्वा अभिधात्री श्रुतिः। अभिधायको हि सर्वः शब्दः स्वार्थं[१०] गुणत्वेन प्रधानत्वेन[११] वा बोधयतीत्यभिधात्री

१. उपचिनोतीति मूलमातृकायां दृश्यते ।
२. तृणोपचय० इति मूलमातृकापाठः ।
३. 'हिरण्यचयनेन' इति घ मातृकापाठः ।
४. 'तृणोपचय०' इति मूलमातृकापाठः ।
५. 'वस्तुतस्तु' इत्यारभ्य ०दुदाहरणान्तरं यावत् मूलमातृकायां न दृश्यते ।
६. यद्वेत्यारभ्य द्रष्टव्यानि यावत् मूलमातृकायां नास्ति क घ मातृकयोश्चास्ति ।
७. 'तादर्थ्याबोधेन' इति च मातृकापाठः ।
८. अत्रेति पदं मूलमातृकायां नास्ति ।
९. 'इत्युच्यते' इति मूलमातृकायां नास्ति ।
१०. तादर्थ्यमिति च मातृकापाठः ।
११. प्राधान्येनेति ख घ ङ मातृकासु दृश्यते ।

श्रुतिरित्युच्यते। एवं विधायको लिङ्गादिः कर्मफलपुरुषाणां गुणप्रधानभावं बोधयतीति विधात्री श्रुतिरित्युच्यते। एवमेकपदे प्रकृतिप्रत्यार्थयोर्गुणप्रधानत्वावगतेः पदश्रुतिरित्युच्यते। एवमेकप्रत्यये[1] शब्दार्थभावनयोर्गुणप्रधानत्वावगतेरेकाभिधानश्रुतिरित्युच्यते। 'देवस्य त्वेति निर्वपति' इत्यादावितिकरणस्य श्रुतित्वम्। 'अभिक्रामं जुहोती'त्यादौ णमुल्प्रत्ययस्य च श्रुतित्वमुक्तं राणके

मिश्रास्तु वाक्यीयोऽत्र[2] विनियोगो न श्रौत इत्याहुः।

## लिङ्गनिरूपणम्

लिङ्गं नामार्थगतं शब्दगतं[3] वा सामर्थ्यम्। तच्च श्रुतिकल्पनेनाङ्गत्वबोधकम्। [4]यथा—'स्रुवेणावद्यति' स्वधितिना[5] अवद्यति' 'हस्तेनावद्यति' इत्यनारभ्याधीतेषु वाक्येषु स्रुवादीनां सामर्थ्यमालोच्य द्रवं[6] मांसं कठिनमित्यभिधात्रीं श्रुतिं कल्पयित्वा स्रुवस्य द्रवावदाने स्वधितेर्मांसावदाने[7] हस्तस्य कठिनावदानेऽङ्गत्वं विधिर्बोधयति। एवं वेदाध्ययनसिद्धार्थज्ञानस्य प्रयोजनाकाङ्क्षायां ज्ञानमन्तरेणार्थानुष्ठानाशक्तेः सामर्थ्यमालोच्य ज्ञात्वार्थं[8]मनुतिष्ठेदिति विधात्रीं श्रुतिं कल्पयित्वा कर्मानुष्ठानाङ्गत्वं ज्ञायते। तेनाध्ययनसिद्धमेवार्थज्ञानं कर्मानुष्ठानाङ्गम्, नान्यथा[9] सिद्धम्। अध्ययनस्य चार्थज्ञानं फलमिति वक्ष्यते।

---

१. एकप्रत्यययोः शब्दार्थभावनयोरित घ मातृकापाठः।
२. वाक्येनेति पदं घ मातृका पठति।
३. शब्दगतमिति पदं छ मातृकायां नास्ति।
४ यथेत्यारभ्य द्रवं यावत् छ मातृकायां नास्ति।
५. हस्तेनेति वाक्यं पूर्वं स्वधितिनेति वाक्यपरमिति ख मातृकावाक्यविन्यासः।
६. द्रवं कठिनं मांसमिति ख मा० पा०।
७. 'हस्तस्य कठिनावदाने' इति पूर्वं स्वधितेर्मांसावदाने' इति परमिति ख मातृकायां वाक्यविन्यासः।
८. अर्थस्थाने कर्मपदं ख घ ङ मातृकासु दृश्यते।
९. °'थेति' इति छ मातृकापाठः।

एवम् 'अविनाशी वा अरेऽयमात्मा' इत्याद्युपनिषज्जन्यस्य नित्यसंसारिकर्तृभोक्त्रात्मज्ञानस्य साम्परायिकफलकर्मानुष्ठानाङ्गत्वं सामर्थ्यादेव तादृशमात्मानं ज्ञात्वा कर्माणि [1]कुर्वीतेति श्रुतिकल्पनेन ज्ञायते। तादृशकर्मानुष्ठानासम्भवात्।

राणके तु 'यदेव श्रद्धया करोति, विद्ययोपनिषदा[2] तदेव वीर्यवत्तरं भवती'ति छान्दोग्योपनिषद्गतेन वाक्येन विद्याशब्दोक्तार्थज्ञानस्योपनिषच्छब्देन च लक्षणयोक्तस्य तज्जन्यनित्यात्मज्ञानस्य श्रद्धायाश्च कर्मानुष्ठानाङ्गत्वं बोध्यत इत्युक्तम्।

तत्तूपनिषद्गतेन[3] वाक्येन [4]तद्विधेयोपासनादिकर्माङ्गविधानौचित्यात्पूर्वकाण्डगतकर्माङ्गविधानाप्रतीतेः। प्रतीतौ वा तरपा[5] कर्मफलातिशयार्थता बोधात् तदकामैरननुष्ठानापत्तेरर्थज्ञानवत एव कर्मण्यधिकार[6] इति सिद्धान्तविरोधात् श्रद्धायाश्चादृष्टार्थकर्मस्वेवाङ्गत्वम्, न दृष्टार्थेष्वित्यभ्युपगमात्तत्तुल्यनिर्देशादर्थज्ञानस्यापि [7]सर्वकर्मानङ्गत्वापत्तेरुत्तरमीमांसायाश्च 'असार्वत्रिकी वे० सू० ३.४.१०.१२ इति सूत्रेण[8] प्रकृतोद्गीथविद्याविषयेयं श्रुतिर्न सर्वविद्याविषयेत्यभिधानान्नातीवयुक्तमिति[9] सामर्थ्यदिवार्थज्ञानात्मज्ञानयोः कर्माङ्गत्वमिति मिश्राः।

---

१. कुर्यादिति क ख ग घ ङ च छ मातृकासु दृश्यते।
२. विषयोप० छ मातृकापाठः।
३. °गत वा० इति मूलमातृकापाठः।
४. 'विधया' घ मातृकापाठः।
५. 'तया' इति घ ङ मातृकापाठः। च मातृकायाञ्च तरण इति पाठः।
६. कर्माधि० इति ग मातृकापाठः।
७. सर्वपदं छ मातृकायां नास्ति।
८. 'सूत्रे' इति घ ङ मातृकयोः दृश्यते। च मातृकायाञ्च 'सूत्रकृता' इति पाठः।
९. नेति पदं च मातृकायां नास्ति।

श्रद्धायास्तु 'अश्रद्धया हुतं [1]दत्त'मित्यादिगीता १७/२८ स्मृतेः[2] सकलकर्माङ्गत्वं दृष्टार्थेष्वपि नियमादृष्टसिद्धौ तदुपयोगात्[3]। शब्दगतं सामर्थ्यम्[4]—यथा 'वर्हिर्देवसदनं दामी'ति मन्त्रस्य दर्शपूर्णमासप्रकरणाम्नातस्य प्रकरणात्कर्मसम्वन्धे ज्ञाते कथमनेनोपकर्त्तव्यमित्यपेक्षायां[5] वर्हिर्लवनप्रकाशनसामर्थ्यमालोच्य लवनमनेन प्रकाशयेदिति[6] श्रुतिं कल्पयित्वा लवनाङ्गत्वं ज्ञायते। लवनस्वरूपे च मन्त्रस्य वैयर्थ्ये[7] प्राप्ते प्रकरणावगतक्रतुसम्वन्धवलादेवं ज्ञायते। क्रतुसम्वन्धिलवनं यदि मन्त्रेण क्रियते, तदा क्रत्वपूर्वं[8] भवति। विहितं च क्रतौ वर्हिर्लवनमिति[9] तदङ्गं[10] मन्त्रः। अतएव मन्त्रगतं लिङ्गं क्रतुसामान्यसम्वन्धवोधकं प्रमाणमपेक्ष्य स्वयं विशेषसम्वन्धं वोधयति। तत्रेह प्रकरणम[11]पेक्षते। क्वचित्तु समाख्याम्। यथा [12]दार्शपौर्णमासिके यागानुमन्त्रणसमाख्याते[13] काण्डे 'पूष्णोऽहं देवयज्यया' इत्यादिः पूषानुमन्त्रणमन्त्रः। पठितस्य तस्य काण्डसमाख्या यागसम्वन्धे ज्ञाते लिङ्गात् पूषदेवत्ययागाङ्गत्वम्। तेन यत्र पूषदेवत्यो यागस्तत्रायं मन्त्रो नीयते। क्वचित्तु क्रमसमाख्येऽपेक्ष्य लिङ्गं विनियोजकम् यथा काम्येष्टिकाण्डे 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्' इत्यादि-

१. दत्तमिति पदं क मातृकायां नास्ति।
२. आदिपदं घ मातृकायां नास्ति।
३. तदयोगादिति च मातृकापाठः।
४. 'सा' इत्येव ङ मातृकायां दृश्यते।
५. आकाङ्क्षायामिति घ ङ मातृकयोः दृश्यते।
६. कुर्यादिति ख ङ मातृकयोः दृश्यते।
७. 'वैयर्थ्यापत्तेः' इति ख घ ङ मातृकासु पठ्यते।
८. क्रत्वफलमिति च मातृकापाठः।
९. वर्हिरिति पदं मूलमातृकायां नास्ति।
१०. तदयमिति च मातृकापाठः।
११. 'अपेक्ष्यते' इति ङ मातृकापाठः।
१२. दर्शपूर्ण० इति घ मातृकापाठः।
१३. समाख्याके इति ङ मातृकापाठः।

वाक्यैः काम्येष्टयोर्विहिताः[1]। तत्सन्निधौ [2]काम्ययाज्यानुवाक्याकाण्डे इन्द्राग्न्यादिदैवत्यानि याज्यानुवाक्यायुगलान्याम्नातानि। तानि समाख्यया काम्येष्टचङ्गम्। क्रमेण च प्रथमायाः[3] प्रथमं द्वितीयस्याः द्वितीयमित्यादौ ज्ञाते[4] लिङ्गेन देवताप्रकाशनार्थत्वं[5] ज्ञायते। समाख्याभावे ह्याग्नेयमन्त्र-द्वयस्याग्नेयेष्टिक्रमपाठेनाग्नेयेष्टचङ्गत्वेऽवगते लिङ्गेनाग्निप्रकाशकत्वे च तदङ्गसामिधेनीषु विहिताधिकसंख्यापूरणार्थमिदं मन्त्रद्वयं यागाङ्गदेवता-प्रकाशकत्वेन याज्यानुवाक्यारूपं वेति सन्देहः स्यात्। स[6] च समाख्यया वार्यते। क्रमाभावेऽप्यैन्द्राग्नकर्मद्वयक्रमपठितस्य[7] ऐन्द्राग्नयाज्यानुवाक्या[8] युगलद्वयस्य समाख्यया याज्यानुवाक्यात्वे लिङ्गेन च देवताप्रकाशकत्वेऽव[9] गते प्रथमस्य द्वितीयं द्वितीयस्य प्रथममिति व्यत्ययोऽपि स्यात्, स क्रमेण वार्यते। तेन क्रमसमाख्ययोरपेक्षा। एवं सर्वत्र सामान्यसम्वन्धवोधकं किञ्चित्प्रमाणमपेक्ष्य लिङ्गं विशेषाङ्गत्ववोधकम्। तच्च मुख्ये एवार्थे विनियोजकम्, न गौणे मुख्यसादृश्यात्प्रतीयमानोऽर्थो गौणः तेन प्रथमोप-स्थिते मुख्य एव मन्त्रविनियोगः। यथा[10]—दर्शपूर्णमासयोः कुशलवने, उलपतृणलवने[11] च[12] विहितेऽपि[13]। 'वर्हिर्देवसदनं दामी'तिमन्त्रः कुशल-वनाङ्गम्, कुशानां वर्हिःपदवाच्यत्वात्, नोलपलवनाङ्गम्।

१. अत्र रेफः घ मातृकायां न दृश्यते।
२. 'काम्या' इति ङ मातृकापाठः।
३. 'प्रथमस्याः' इति ख ङ मातृकयोः पाठः।
४. ज्ञातलिङ्गेनेति छ मातृका पठति।
५. °प्रकाशना° इति ख मातृकायां नास्ति।
६. स इति पदं क मातृकयां नास्ति। मूलमातृकायाञ्च 'च' पदं नास्ति।
७. 'क्रमे' इति मूलमातृकापाठः। 'क्रमेण' इति ङ मातृकापाठः।
८. 'ऐन्द्राग्नया' इति घ मातृकापाठः।
९. 'प्रकाशत्वे' इति मूलमातृकायाञ्च दृश्यते।
१०. यदेति क छ मातृकयोः दृश्यते।
११. 'लवनोपलवने' इति ङ मातृकापाठः।
१२. च पदं ङ मातृकायां नास्ति।
१३. अपि पदं घ मातृकायां नास्ति। अपिस्थाने तत्र पदञ्च ख मातृकायां दृश्यते। ङ मातृकायां तत्र पदं नास्ति।

## वाक्यनिरूपणम्

वाक्यं नाम—पदानां वाक्यानां चैकवाक्यता[1]। तच्च लिङ्गश्रुतिकल्पनेनाङ्गत्वबोधकम्। तत्र यावतां पदानामेकोऽर्थः प्रयोजनं विभागे च साकाङ्क्षता[2], तत्र पदैकवाक्यता। सूत्रञ्च—'अर्थैकत्वादेकं साकाङ्क्षं चेद्विभागे स्यात्' (मी० सू० २.१.४६) इति अर्थशब्दः प्रयोजनपर इति मिश्राः। वाक्यार्थपर इति राणके। तयाङ्गत्वं यथा—'त्रयो वेदा अजायन्त' इत्यादिवेदस्तावकमर्थवादवाक्यमुपक्रम्य 'उच्चैर्ऋचा क्रियते' इत्यादयो ये ऋगादिमन्त्र[3]धर्मोच्चैस्त्वादिविधयः पठिताः। तत्र ऋगादिशब्दाः वेदावयवमन्त्रवचनाः, न तु वेदवचनाः। 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' (आप० परि० १।३३) इति [4]आपस्तम्बस्मृतेः। समूहो वेदः। 'वेदमधीत्य स्नायात्' इत्येतच्छास्त्रार्थश्च नैकदेशाध्ययने भवति। यस्तु 'न वेदं श्रृणुयाच्छूद्र' इत्यादावेकदेशेऽपि प्रयोगः। स क्वाचित्कत्वात् लक्षणया नेयः। तस्मात्समूहो वेदः। ऋगादिशब्दास्त्ववयववाचिनः। 'यत्रार्थवशेन पादव्यवस्था सा ऋक्[5]। प्रश्लिष्टपठितं यजुः यत्राप्यर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्। गानं सामेति स्मरणात्। एवञ्च वेदस्तावकार्थवादस्य ऋगादिधर्मोच्चैस्त्वादिविधीनाञ्च भिन्नविषयत्वान्नैकवाक्यतोपपद्यते। भवितव्यं च तयेति वक्ष्यामः। तत्सिद्ध्यर्थमन्यतरत्र लक्षणा आश्रयणीया। तत्रोपक्रमस्यार्थवादस्यासञ्जातप्रति[6]पक्षत्वेनानुपत्त्यभावादुपसंहारस्थविधीनामुपपत्तेः[7]। तत्रैव[8] ऋगादिपदैर्वेदलक्षणा। ऋग्वेदेन यत् क्रियते तदुच्चैरिति। क्रियत

१. '°ता' इत्यस्यस्थाने 'त्व' ख ङ मातृकयोः दृश्यते।

२. साकाङ्क्षमिति क मातृकायाम्।

३. मन्त्रपदं क मातृकायां नास्ति।

४ 'गौतम' इति मूलमातृकापाठः। परन्तु सम्प्रति मुद्रितगौतमसूत्रे न मिलति, अन्यत्र च मिलति।

५. 'सर्क्' इति ख मातृकापाठः। ङ मातृकायाञ्च ऋक् इति पाठः।

६. 'प्रतिवक्तृत्वेन' इति ङ मातृकापाठः।

७. अनुपपत्तेरिति क ख घ ङ मातृकासु दृश्यते।

८. तत्रैवर्गादि० इति ख मातृकापाठः।

इति प्रयुज्यत[1] इत्यर्थः। तेन यद्वेदान्तरोत्पन्नमङ्गम्, वेदान्तरस्थ[2] प्रयोगविधिना प्रयुज्यते। यथा सामवेदोत्पन्नं वारवन्तीयं साम याजुर्वैदिकेनाधानप्रयोगविधिनानुष्ठाप्यते। तद्यजुर्वेदेन प्रयुज्यत इत्युपांशु कार्यम्, न तु सामवेदोत्पन्नत्वादुच्चैः[3]। प्रयोगे हि स्वरोऽपेक्ष्यते, नोत्पत्तौ। एवञ्चात्र विध्यर्थवादपदैकवाक्यतालक्षणेन वाक्येन यत्र ऋग्वेदादिविहिते कर्मण्युच्चैस्त्वादिकं कर्त्तुं[4] शक्यमिति सामर्थ्यमालोच्योच्चैः कार्यमिति[5] श्रुतिं कल्पयित्वा उच्चैस्त्वादेः कर्माङ्गत्वं बोध्यते[6]। एवं प्रजापतिर्वरुणायाश्वमनयत्, स स्वां देवतामार्च्छत्' इत्यादिकमश्वदातुर्दोषकीर्त्तकमर्थवादमुपक्रम्य 'यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेत् इति प्रतिग्रहीतुर्वारुणीष्टिविधिः[7] श्रुतः। तत्रोपक्रमस्वार्थवादस्यासञ्जातप्रतिपक्षत्वेनानुपपत्त्यभावात् तदनुरोधेनोपसंहारस्थविधौ प्रतिग्राहयेदिति णिजर्थलक्षणया दानमिष्टेर्निमित्तं स्वीक्रियते। अतश्च[8] दातुरियमिष्टिः। तस्य प्रतिग्रहं प्रति प्रयोजकत्वेन कर्त्तृत्वात् *'तत्प्रयोजको' हेतुश्च पा० सू० १.४.५५ इति स्मृतेर्दातुः प्रतिग्रहप्रयोजककर्त्तृत्वात् णिजर्थकल्पनोपपत्तिः। तच्च दानं ज्योतिष्टोमपौण्डरीकादौ[9] विहितमेवेष्टेर्निमित्तम्, न तु

---

* 'तत्प्रयोजको' इत्यतः पूर्वं ग मातृकायामेवं दृश्यते—००००० कर्त्ता धात्वर्थव्यापाराश्रयः कर्त्ता स्यात्। तस्य प्रयोजको हेतुश्च। धात्वर्थव्यापारस्य योऽनुच्चारयिता स हेतुः ००००० कारात्कर्तृ ००००० श्च।

१. 'अनुष्ठाप्यते' इति छ मातृकापाठः।
२. °स्या' इति घ मातृकापाठः।
३. °वेदोक्तत्वादिति च मातृकापाठः।
४. °त्वादिकर्म० इति च मातृकापाठः।
५. कुर्यादिति क छ मातृकयोः दृश्यते।
६. 'बोध्यते' इति क ख ग घ ङ छ मातृकासु दृश्यते। च मातृकायां 'अवाप्यते' इति पाठः।
७. 'वारुणेष्टि०' इति घ मातृकापाठः।
८. अतश्चेत्यारभ्य कर्त्तृत्वादिति यावत् क ख घ ङ च मातृकासु न दृश्यते।
९. पौण्डरीकपदं ख ङ मातृकयोर्नास्ति।

लौकिकम् । तन्निमित्तेष्टेः फलकल्पनाप्रसङ्गात् । वैदिक[1]त्वसामान्येन वैदिके[2]ष्टिनिमित्तत्वेन वैदिकाश्वदानस्य[3] शीघ्रोपस्थितेश्चेति मिश्राः ।

राणके तु 'प्रतिगृह्णीयात्' इति विधिना[4] विहितत्वेन निमित्तभूतं दानं विशेष्यत इत्युक्तम् एवञ्चात्र विध्यर्थवादपदैकवाक्यतारूपवाक्येन विहिताश्वदाने निमित्ते वारुणीष्टेः[5] क्रत्वङ्गत्वं लिङ्गश्रुतिकल्पनेन बोध्यते । वाक्यैकवाक्यता नाम—स्वार्थबोधे समाप्तानां वाक्यानां पुनराकाङ्क्षावशेनैकवाक्यता । उक्तञ्च—

**स्वार्थबोधे समाप्तानामन्योन्यस्य व्यपेक्षया ।**
**वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ॥** तं० वा० १.४.२४ इति ।

तयाङ्गत्वं यथा—'आहवनीये जुहोति', 'गार्हपत्ये हवींषि श्रपयति', दक्षिणाग्नावन्वा[6]हार्यं पचति' इत्यनारभ्याधीतवाक्यानां 'स्वर्गकामो यजेते'-त्यादिक्रतुविधीनां चैकवाक्यतया आहिताग्नेरेव कर्त्तुः क्रत्वङ्गत्वं लिङ्ग-श्रुतिकल्पनेन ज्ञायते । चातुर्मास्यप्रकरणपठितस्य 'द्वयोः प्रणयन्ती'ति वाक्यस्य शाखान्तरीयस्य चाहवनीयादध्वर्युप्रतिप्रस्थातारौ सहाग्नी प्रणयत इति वाक्यस्यैकवाक्यतया चातुर्मास्यान्तर्गतयोर्वरुणप्रघाससाकमेधसंज्ञयोः पर्वणोरीदृशं प्रणयनमङ्गत्वेन ज्ञायते । द्वयोरित्यस्यैतत् पर्वद्वयविषयत्वम् । तस्माद्[7] द्वाभ्यामेति । 'उरू वा एते यज्ञस्य यद् वरुणप्रघासाः साकमेधाश्चेति शा० भा० ७.३.२४ गतिसाधनत्वेन[8] पर्वद्वयस्तावको योऽर्थवादस्त-

---

१. नैमित्तिकेष्टिवैदिकत्व० इति ग मातृकापाठः ।
२. वैदिके···त्तत्वेनेति ग मातृकायां कोष्ठके वर्त्तते ।
३. दानस्य निमित्तस्येति ग मातृकापाठः । दानस्यैवेति च मातृकायां दृश्यते ।
४. °ना' इति ख मातृकायां नास्ति ।
५. वारुणेष्टेः इति घ मातृकापाठः ।
६. °नाग्न्या० इति मूलमातृकापाठः ।
७. तस्मादाभ्यामिति च मातृकापाठः ।
८. साधनत्वं न पर्व० इति च मातृकापाठः ।

देकवाक्यतया ज्ञायते। तेन चतुः पर्वात्मकेषु चातुर्मास्येषु प्रथमोत्तमयोः वैश्वदेवशुनासी[1]रीयसंज्ञयोः पर्वणोः दार्शपौर्णमासिकं गार्हपत्यादाहवनीये प्रणयनमतिदिष्टं कार्यम्। मध्यमयोस्त्वतिदिष्टं कृत्वा आहवनीयादुत्तरवेद्यां दक्षिणविहारे च प्रणयनान्तरं कार्यमिति वाक्यैकवाक्तया ज्ञायत इति।

## प्रकरणप्रमाणं तद्भेदनिरूपणम्

साकाङ्क्षधर्मसन्निधौ भावनायाः कथमित्याकाङ्क्षा प्रकरणम्। सा च प्रधानभावनायाः महाप्रकरणमित्युच्यते। अङ्गभावनायास्त्ववान्तरप्रकरणमिति। तच्च वाक्यलिङ्गश्रुतिकल्पनेन विनियोजकम्। तत्राद्यं[2] यथा—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति वाक्ये स्वर्गकर्मिकायाः दर्शपूर्णमासयागकरणिकायाः भावनायाः कथमित्याकाङ्क्षास्ति[3] तथा सन्निहितेष्वनिर्दिष्टफलेषु 'समिधो यजती'त्यादिवाक्येषु समिद्यागेनेष्टं भावयेत्किमित्यस्ति फलविशेषाकाङ्क्षा। एवं[4] साकाङ्क्षाणां समिदादिवाक्यानां[5] दर्शपूर्णमासवाक्यैकवाक्यतां कल्पयित्वा समिदाद्यङ्गजातानां[6] प्रधानोपकारकत्वसामर्थ्यञ्च कल्पयित्वैतैः प्रधानोपकारं कुर्यादिति श्रुतिं प्रकल्प्य समिदादीनां दर्शपूर्णमासयागाङ्गत्वं ज्ञायते। क्रियाया एव चेदं विनियोजकम्, न सिद्धस्य वस्तुनः।

मिश्रमते—व्यापारात्मकभावनायाः कथमिति विशेषोऽपेक्षते[7]। स व्यापारात्मक एव भवितुमर्हति।

---

१. °सीर० इति मूलमातृकापाठः।

२. तत्रायमिति घ ङ मातृकयोः दृश्यते।

३. अस्तिपदं घ ङ मातृकयोर्नास्ति। तत्स्थाने तथा पदं वर्त्तते मूलमातृकायां तथा पदं नास्ति। ख मातृकायां 'अस्ति तथा' इति पाठः।

४. स्वार्थमिति ङ मातृकापाठः।

५. 'वाक्येन' इति क मातृकापाठः।

६. °जात० इति क ख ग घ ङ मातृकासु नास्ति।

७. 'अपेक्ष्यते' इति क ख ग ङ मातृकापाठः। च मातृकायाञ्च 'अपेक्षेत' इति दृश्यते।

राणकमते—यत्नात्मकभावनायाः अनुग्राहको व्यापार एवाकाङ्क्ष्यते, न सिद्धं वस्तु। लोके व्यापारस्यैवानुग्राहकत्वेनान्वयदर्शनात्। कुठारेण छिन्द्यात् कथमित्यपेक्षिते हस्तेनोद्यम्य निपात्येत्यन्वेति, न तु हस्त इति। क्रियाद्वारेण तु[1] सिद्धमपि गृह्यते। यथोद्यमननिपातनादिद्वारेण[2] हस्तः। तेन द्रव्यदेवतादीनां यागसम्पादनादिक्रियाद्वारेण प्रकरणग्रहणादितिकर्त्तव्यतात्वव्यवहारः, न तु वस्तुन इतिकर्त्तव्यतात्वम्[3]। कर्त्तव्यताया विशेष इति व्युत्पत्त्या कथम्भावाकाङ्क्षाग्राह्यव्यापारविशेषस्येतिकर्त्तव्यतात्वात्। तेन क्रियाया एव प्रकरणेन ग्रहणम्। तत्राप्यारादुपकारिकाया एव प्रयाजादिरूपायाः, यस्याः श्रुतिलिङ्गवाक्यैर्नान्यिसंयोगः। सन्निपत्योपकारिकायास्त्ववघातादिरूपायाः द्रव्यदेवतार्थत्वेन श्रुतिलिङ्गवाक्यैर्विनियोगान्न प्रकरणग्रहणम्। द्रव्यादिस्वरूपे तु क्रियानर्थक्ये प्राप्ते द्रव्यादिपदेनापूर्वसाधनत्वं लक्षयित्वा तादर्थ्येन क्रिया विधीयते। अपूर्वसाधनं द्रव्यमवघातेन संस्कुर्यादिति राणके।[4]

मिश्रास्तु—सर्वापि क्रिया प्रकरणेन[5] गृह्यते[6]। सन्निपत्योपकारिकायाः श्रुतिलिङ्गवाक्यैर्द्रव्याद्यर्थत्वेनावगताया अपि तत्स्वरूपे वैयर्थ्यात् प्रकरणेन क्रत्वङ्गता ज्ञायते। दर्शपूर्णमासाभ्यां स्वर्गं भावयेत् कथमित्या[7]काङ्क्षायां प्रयाजादिभिरदृष्टोपकारं कृत्वा अवघातादिभिर्द्रव्य[8]देवतासंस्कारं कृत्वा द्रव्यदेवताभ्यां यागं सम्पाद्येत्यन्वयः। इत्थं क्रत्वङ्गत्वेनावगतास्यावघातादेर्न व्रीह्यादिस्वरूपद्वारा क्रत्वङ्गता, किन्त्वपूर्वसाधनरूपद्वारेति तदर्थं लक्षणेत्याहुः। इदञ्च प्रकृतिष्वेव धर्माणां विनियोजकम्, न

---

१. तु पदं मातृकायां नास्ति।
२. 'निपात' इति मूलमातृकायां नास्ति।
३. °कत्वमिति क ग मातृकापाठः।
४. राणक इति ख घ मातृकयोः दृश्यते।
५. 'प्रकारेण' इति ग मातृकापाठः।
६. 'सङ्गृह्यते' इति घ ङ मातृकापाठः।
७. अपेक्षायामिति ख मातृकापाठः।
८ 'द्रव्यदेवतासंस्कारं कृत्वा' इति क ग मातृकयोर्नास्ति।

विकृतिषु । सौर्यादिवाक्येषु हि[1] कथम्भावाकाङ्क्षायां सन्निधौ धर्मानाम्नानात् सादृश्येन प्रकृतिवाक्यमुपमीयते[2] । यथा[3] सौर्यवाक्यमेकदेवतायोग्यौषधद्रव्ययोगितया[4] दर्शपूर्णमासयोराग्नेयवाक्यमिति । उपमितेन च[5] तेन स्वार्थे[6] उपस्थाप्यते त्र्यंशा भावना । तत्र सौर्यवाक्येऽपेक्षितः इतिकर्त्तव्यतांशो गृह्यते[7] । स चोपकारपृष्ठभावेन कथमिति [8]ह्युपकारकपदार्थानामाकाङ्क्षा, न पदार्थमात्रस्य । प्रकृतौ तूपकारकपदार्थानां क्वाप्यक्लृप्त[9]त्वात् पदार्थान् गृहीत्वा पश्चादुपकाराः कल्प्यन्ते । सौर्यवाक्ये तु कथमित्याकाङ्क्षायां यथा आग्नेये[10] उपकृतं तथा सौर्येऽप्युपकर्त्तव्यमित्युपकारेष्वन्वितेषु तत्साधनत्वेन च[11] पदार्थान्वयः । तेनाग्नेयवत् प्रयाजादिभिरुपकृत्य यागेन फलं कुर्यादिति कल्पिता[12]तिदेशसहितश्रुतवाक्यार्थः । एवं[13] द्विदैवत्येष्वौषधद्रव्यकेषु 'आग्नावैष्णवमेकादशकपालं निर्वपेदधिचरन्नि'त्यादिषु दार्शपौर्णमासिकाग्नीषोमीयपुरोडासयागस्य धर्मा अतिदिश्यन्ते, सादृश्यात् । 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकाम' इत्यादि । एवं सर्वाः विकृतयोऽतिदेशेन प्राकृतान् पदार्थान् गृह्णन्ति । [14]यत्राप्यपूर्वधर्माः[15] सन्निधौ सन्ति

---

१. 'हि' इति मूलमातृकायां नास्ति ।
२. 'उपगीयते' इति मूलमातृकापाठः ।
३. यथेत्यारभ्य तत्र पर्यन्तं छ मातृकायां नास्ति ।
४. 'तया' इत्यस्य स्थाने 'तथा' इति दृश्यते घ मातृकायाम् ।
५. तेनेति पदं घ मातृकायां नास्ति । ङ मातृकायाञ्च च इत्यपि नास्ति ।
६. स्वार्थमिति च मातृकापाठः ।
७. 'गृह्यते' इति पदं ङ मातृकायां नास्ति ।
८. 'हि' पदं ङ मातृकायां नास्ति ।
९. त्वक्लृप्तत्वादिति च मातृकापाठः ।
१०. आग्नेयत्र्यकृतमिति घ ङ मातृकापाठः ।
११. °त्वेन च इति ङ मातृकापाठः ।
१२. कर्त्तव्यातिदेश इति ङ मातृकायाम्, कल्पनातिदेश इति च मातृकापाठः ।
१३. एवमित्यारभ्य प्रजाकाम इति यावत् क ख ङ मातृकासु नास्ति ।
१४. यत्रेत्यारभ्य विनियोजकमिति यावत् च मातृकायां ग्रन्थपातः ।
१५. अपूर्वा धर्मा इति ङ मातृकापाठः ।

तेऽप्यक्लृप्तोपकारक[1]त्वान्न पूर्वं गृह्यन्ते प्राकृतग्रहणोत्तरं तु तदाकाङ्क्षया गृह्यन्ते। तत्र प्राकृताः पदार्थाः प्रकृतौ निराकाङ्क्षा एव विकृत्याकाङ्क्षया सम्बद्ध्यन्त इति न[2] तेषां यथोक्तं प्रकरणं विनियोजकम्। अपूर्वधर्माणां तु साकाङ्क्षत्वेऽपि विकृतेः प्राकृतधर्मनिराकाङ्क्षत्वान्न तद्विनियोजकम्। यत्तु प्राकृताङ्गस्थाने विकृतावङ्गं[3] विधीयते, तत्प्रकरणेन गृह्यते। यथा 'सोमापौष्णं त्रैतमालभेत पशुकाम' इति विहिते सोमापूषदेवत्ये [4]त्रिवर्ण-पशुद्रव्यके यागे प्रकृतेरग्नीषोमीयपशुयागात् यूपसाधनखादिरत्वादिप्राप्तौ तत्स्थाने 'औदुम्बरो यूपो भवती'ति औदुम्बरत्वं विहितम्। तद् यूपोद्देशेन निहितमपि यूपस्वरूपे वैयर्थ्यात् साकाङ्क्षम्[5]। खादिरत्वं प्रति साकाङ्क्षया विकृत्या तत्स्थानपतितत्वाद् गृह्यत इति प्रकरणेन विनियुज्यते। यदपि[6] प्राकृताङ्गानुवादेन विधीयते, यथा पशौ—'पृषदाज्येनानूयाजान्[7] यजती-त्यनुयाजानुवादेन पृषदाज्यम्, तदपि प्रकरणेन गृह्यते। अनूयाजानां[8] साधनाकाङ्क्षत्वात् विकृतेर्विहितस्य च पृषदाज्यस्य तदुपकाराकाङ्क्ष-त्वादिति राणके[9]।

मिश्रास्तु—अनूयाजसाधनाज्यप्राप्त्या[10] विकृतेर्निराकाङ्क्षत्वात् पश्चादाज्यगतः पृषत्तागुणो दधिमिश्रत्वरूपो विधीयमानो न प्रकरणग्राह्य

१. उपकारत्वादिति ख मातृकापाठः।

२. नैषामिति घ ङ मातृकयोः दृश्यते।

३. विकृतावङ्गमिति मूलमातृकायां च मातृकायाञ्च नास्ति।

४. त्रैवर्णिक इति खमातृकापाठः।

५. साकाङ्क्ष्यमिति ङ मातृकापाठः। च मातृकायाञ्चेदं पदं नास्ति।

६. 'यत्तु' इति क ख ग घ ङ मातृकासु दृश्यते।

७. अनुयाजान्यजतीत्यनु॰ ङ मातृकायां नास्ति।

८. अनुयाजसाधन॰ इति क ख ग घ ङ छ मातृकासु पाठः।

९. राणक इति घ मातृकापाठः। च मातृकायां चेदं पदं न दृश्यते।

१०. मूलमातृकायामिदं पदं न दृश्यते। ख मातृकायां प्रास्या इति वर्त्तते।

इत्याहुः। यदपि[1] प्राकृताङ्गानुवादेन विहितयोरङ्गयोर्मध्ये विहितमपूर्वमङ्गम्, तदपि प्रकरणेन गृह्यते। यथा—'वैश्वदेवीं साङ्ग्रहणीं निर्वपेत् ग्रामकामः। इत्यनेन विश्वेदेवदेवत्ये सजात[?]सङ्ग्रहरूपग्रामफलक[2]त्वेन साङ्ग्रहणीसंज्ञके यागे विहिते तत्रै[3]ष्टिधर्मातिदेशे सति प्रयाजानुयाजानुवादेन विहितयोर्धर्मयोरन्तरा 'आमनमस्यामनस्य देवा' इति तिस्र आहुतीर्जुहोती'त्यामनहोमा विहितास्ते साकाङ्क्षाः पूर्वोत्तरधर्मग्रहणार्थमनुवर्त्तमानाकाङ्क्षया विकृतया गृह्यन्त इति।

## अवान्तरप्रकरणनिरूपणम्

अङ्गभावनायाः कथम्भावाकाङ्क्षावान्तरप्रकरणम्। तद् वाचनिकानां तत्सन्दंशपठितानाञ्च ग्राहकम्। तदभावे स्मार्त्ताचमनादीनामिति प्रागुक्तम्। क्वचित्त्वसम्बन्धिव्यवधानात्तद् व्यवच्छिद्यते। यथा—दर्शपूर्णमासयोः। 'पञ्चदशसामिधेनीरनुब्रूयादि'ति विधाय तासां त्रिः प्रथमामन्वाह त्रिरुत्त[4]मामिति गुणं विधाय 'देवे[5]द्धोममन्विद्ध' इत्यादयो निविन्मन्त्राः पठिताः, तत 'एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्ये'ति काम्यसामिधेनीकल्पान् विधाय 'उपव्ययते देवलक्ष्यमेव तत्कुरुते' इति यज्ञोपवीतं विहितम्। ततोऽन्तरानूच्य[6] 'स देवत्वाये'ति सामिधेनीगुणो विहितः। तत्रोपीवतस्य सामिधेनीगुणसन्दंशपाठेऽपि न तदवान्तरप्रकरणेन ग्रहणम्। निविन्मन्त्रैस्तद्व्यवच्छेदात्। ते हि समिधाग्निप्रकाशकाः। सामिधेनी च[7] दर्शपूर्णमासाङ्गम् न सामिधेन्यङ्गम्। उक्तञ्च 'गुणानाञ्च परार्थत्वादसम्बन्धः

---

१. घ मातृकायां अविपदं नास्ति। ङ मातृकायाञ्च 'यदपि' इति पूर्णमेव नास्ति।
२. फल-त्वेनेति मूलमातृकापाठः। ङ मातृकायाञ्च 'ग्रामफलके' इति पाठः।
३. 'तत्रेष्टिक' इति ग मातृकायां। 'तत्रैष्टिक' इति ङ च मातृकयोः दृश्यते।
४. त्रिरुत्तमामिति पदं वारद्वयं ख मातृकायां पठितं दृश्यते।
५. देवे होम० इति मूलमातृकापाठः। देवेद्धोम० इति ङ मातृकापाठः।
६. °नोच्यमिति घ मातृकापाठः।
७. °वद इति 'मूलमातृकापाठः।

समत्वात्स्यादि'ति (मी० सू० ३.१.२२)। तेनोपवीतं महाप्रक[1]रणाद्दर्शपूर्णमासाङ्गम्। न च सामिधेनीकल्पानां फलार्थानां कथम्भावाकाङ्क्षयोपवीतं गृह्यतामिति वाच्यम्। तेषां क्लृप्तोपकारप्राकृताङ्गनिराकाङ्क्षत्वात्। अत्र[2] हि न सामिधेन्याश्रितैकविंश[3]त्यादिसंख्या फलाय विधीयते। निविद्भिर्विच्छेदात् प्रकरणादाश्रयलाभायोगात्। वाक्येनाश्रयदाने वाक्यभेदात्, किन्तु संख्याविशिष्टान्यनुवचनान्तराणि फलाय विधीयन्ते। तानि च संख्यायुक्तानुवचनत्वसामान्यात् नित्यसामिधेन्यनुवचनवि[4]कृतिभूतानीति तदीयधर्मैर्निराकाङ्क्षाणि नोपवीतं गृह्णन्ति। न चैवं कथन्तिराण्यनुवच[5]नानि प्राकृता[6]श्रयासम्बद्धानि बहिःप्रयोगमपि स्युरिति वाच्यम्। अनुशब्दार्थस्य 'नमः प्रवक्त्रे[7]' इति निगदान्तर्यस्य मिश्रोक्तस्य 'अग्नये समिध्यमानायानुब्रूहि' इति प्रैषानन्तर्यस्य राणकोक्तस्य वा नित्यानु[8]वचनाच्चोदकप्राप्तस्य बहिः प्रयोगासम्भवात्। निगदप्रैषयोर्दर्शपूर्णमासाङ्गत्वेन सामिधेन्यनुवचनेन प्रयुक्त्यसम्भवात्। तेनैषामन्तः[9]प्रयोगेऽनुष्ठानम्। तेन निविन्मन्त्रैः काम्यसामिधेनीकल्पैश्च विच्छिन्नं सामिधेनीनां प्रकरणमिति महाप्रकरणेनोपवीतं दर्शपूर्णमासाङ्गम्। इदञ्च वासोविन्यासविशेषात्मकमिति राणके। त्रिवृन्नवतन्तुकं यज्ञोपवीतमेवेति मिश्राः। एवाश्वासम्बन्धिव्यवधानाभावेऽवान्तरप्रकरणं विनियोजकमिति संक्षेपः।

---

१. दर्शपूर्णमासाङ्गं महाकरणमिति ख ङ मातृकयोः व्यत्ययेन पाठः।
२. तत्रेति च मातृकापाठः।
३. 'विशंति' पदं च मातृकायां नास्ति।
४. 'विकृतीनि' इति मूलमातृकायां ख ग ङ मातृकासु च दृश्यते।
५. अनुवचनानीतिपदं ख च मातृकयोर्नास्ति।
६. प्राकृत ''''सम्बद्धानि यावत् क मातृकायां नास्ति। मातृकायां 'प्रकृत' इति पाठः विद्यते।
७. प्रवक्तुरिति मूलमातृकापाठः।
८. नित्यानुवचनादिति पदं ख ङ च मातृकासु नास्ति। मूलमातृकायां ०वचना०। इत्यस्य स्थाने 'वदना' इति पाठः।
९. प्रयोगमिति मूलमातृकापाठः।

## स्थाननिरूपणम्

देशसामान्यं स्थानम्। द्वेधा तत्—पाठदेशसामान्यमनुष्ठानदेशसामान्यञ्च[1]। आद्यं द्वेधा—[2]यथासङ्ख्य[3]पाठरूपं सन्निधिपाठरूपञ्च[4]। तत्र पञ्चानां प्रयाजानां 'समिधः समिधोऽग्न आज्यस्य व्यन्तु'इत्यादयः पञ्चमन्त्राः यथासङ्ख्यपाठरूपदेशसामान्येन प्रथमस्य प्रथमो द्वितीयस्य द्वितीय इत्येवमङ्गं भवति। काम्येष्ट्युदाहरणं तूक्तं प्राक्। 'अग्नये कृतिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेत्' इत्यादिवाक्यविहितासु नक्षत्रेष्टिषु 'सोऽत्र जुहोत्यग्नये स्वाहा, कृत्तिकाभ्यः स्वाहे'त्यादि वाक्यविहितोपहोमानां सन्निधिपाठरूपदेशसामान्येन नक्षत्रेष्ट्यङ्गत्वम्। ज्योतिष्टोमे चतुर्थे औपवसथ्येऽह्नि पशुधर्मा उपाकरणनियोजनादयः पठिताः। दीक्षाकाले तु 'अग्नीषोयीयं पशुमालभेते'त्यग्नीषोमीयपशुयागो विहितः। 'स एव द्विदेवत्यः पशुरौपवसथ्येऽहन्यालब्धव्य' इति वचनात्तु चतुर्थेऽहन्यनुष्ठीयते। तस्याङ्गमनुष्ठानदेशसामान्येन पशुधर्माः। [5]अत्रोपहोमादीनां फलाकाङ्क्षायां[6] प्राकृताङ्गनिराकाङ्क्षाणामपि विकृतीनां कथम्भावाकाङ्क्षारूपं प्रकरणं[7] प्रकल्प्योपहोमादिविधीनां विकृतिविध्येकवाक्यतारूपं वाक्यञ्च प्रकल्प्य फलवदुपकारकत्वरूपं[8] सामर्थ्यम्। निष्फलानामुपहोमादीनामालोच्यैभि[9]रुपकुर्यादिति श्रुतिं प्रकल्प्याङ्गत्वबोधात्प्रकरणादिचतुष्टयकल्पनेन स्थानं विनियोजकम्।

---

१. साम्यमिति मूलमातृकापाठः।

२. यथेत्यारभ्य पञ्चमन्त्रा इति यावत् छ मातृकायां नास्ति।

३. 'संख्या' इति ङ मातृकापाठः।

४. 'रूपे' इति ङ मातृकापाठः।

५. अतश्चोप० इति ग मातृकापाठः।

६. ०'काङ्क्षया' इति ख च मातृकयोः नास्ति।

७. प्रकरणमिति पदं ख मातृकायां नास्ति।

८. रूपमिति पदं मूलमातृकायां नास्ति।

९. नक्षत्रेष्टिमुप० इति ग मातृकापाठः।

## समाख्यानिरूपणम्

समाख्या यौगिकः शब्दः। सा द्विविधा—लौकिकी वैदिकी च। लौकिक्याध्वर्यवादिसमाख्या स्ववाच्यपदार्थानामध्वर्योश्चोप[1]स्थितिं सन्निधिं कल्पयन्ती सन्निहितयोश्च परस्पराकाङ्क्षयैकवाक्यत्वं प्रकल्प्य सामर्थ्य[2]-मालोच्याध्वर्युरिमान् कुर्यादिति श्रुतिकल्पनेनाध्वर्योः[3]स्तत्तत्पदार्थाङ्गत्वं बोधयति। एवं हौत्रादिसमाख्यापि।

वैदिकी तु होतृचमसादिसमाख्या चमसपदवाच्या[4]। पात्रस्थसोम-रसभक्षणाङ्गत्वं होत्रादेः स्थानादिकल्पनद्वारा बोधयति। इयञ्च न सम्बन्ध-वाचिनी किन्तु [5]विशेषवाचिनीत्युक्तं प्राक्। एवञ्च श्रुत्यादीनां पूर्वं [6]परस्माद्बलीयः। यथा 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यत्र 'निवेशनः सङ्गमनो वसूनाम्' इति भाष्योक्तायाः 'कदाचन स्तरीरसि' इति वार्तिको-क्तायाश्च ऐन्द्र[7]प्रकाशकत्वरूपसामर्थ्याद् दर्शपूर्णमासप्रकरणगतेन्द्राभिधाना-ङ्गत्वे प्राप्ते तृतीयया[8] श्रुत्या गार्हपत्योप[9]स्थानाङ्गत्वम्। लिङ्गस्य श्रुतिकल्पनद्वारा विनियोजकत्वेन दौर्बल्यात्। 'स्योनं ते सदनं [10]कृणोमि, घृतस्य धारया सुशेवं कल्पयामि, तस्मिन् सीदामृते, प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः' इति दर्शपूर्णमासप्रकरणपठित[11]मन्त्रस्य पदैकवाक्यतारूप-

---

१. उपस्थिति पदं ग ङ च मातृकासु नास्ति।
२. 'चालोच्य' इति ङ छ मातृकयोः पाठः।
३. तत्तदिति ङ मातृकापाठः।
४. 'वाच्यपात्रस्थ' इति ग ङ मातृकयोः पाठः।
५. विशेष इत्यारभ्य निवेशनः पर्यन्तं ङ मातृकायां नास्ति।
६. परत्वादिति च मातृकापाठः।
७. प्रकाशक मात्रं ग मातृकायां वर्त्तते। प्रकाशकत्वरूप ङ छ मातृकयोः दृश्यते। च मातृकायां प्रकाशकत्वा' इति पाठः।
८. 'तृतीया' इति मूलमातृकापाठः।
९. °पत्याभिधाना°' इति च मातृकापाठः।
१०. 'करोमि' इति च मातृकापाठः।
११. 'पठितस्य' घ ङ मातृकयोः दृश्यते।

वाक्येन पुरोडाश[1]सदनविशिष्ट[2]सादनाङ्गत्वे प्राप्ते लिङ्गेन पूर्वो भागः सदनाङ्गत्वमुत्तरः सादनाङ्गमिति विभज्य विनियोगः। वाक्यस्य लिङ्ग-श्रुतिकल्पनद्वारा विनियोजकत्वेन श्रुति[3]मात्रकल्पका[4]ल्लिङ्गाद्दौर्ब-ल्यात्। एवं 'हविष्कृदेहीति त्रिरवध्नन्[5] आह्वयती'ति दर्शपूर्ण[6]मासयो-र्वाक्ये हविष्कृदेहीति मन्त्रस्य वाक्यादवघाताङ्गत्वं लैङ्गिकेनाह्वानाङ्गत्वेन वाध्यते। आह्वयतीति तु लिङ्गप्राप्तानुवादोऽवघातसम्वन्धि त्रिरभ्यास-मात्रविधिपरत्वाद्वाक्यस्य। येषां त्वितिकरणः [7]श्रुतिस्तेषाममि न श्रौत-मवघाताङ्गत्वम्। त्रिरभ्यासविधिपरे वाक्ये तस्य विधौ[8] वाक्यभेदात्। लैङ्गिकाह्वान[9]सम्वन्धानुवादिनी[10] श्रुतिरिति। दर्शपूर्णमासयोः सूक्त-वाकनिगदे 'इन्द्राग्नी इदं हविरजुषेतामवीवृधेता[11] महोज्यायोऽक्राताम्' इति मन्त्रे इन्द्राग्नीपदस्य[12] लिङ्गाद्दर्शार्थत्वे सति तदेकवाक्यतारूप-वाक्येनेदं हविरित्यादीनामपि दर्शाङ्गत्वम्, न तु प्रकरणात् पूर्णमासाङ्ग-त्वमपि। प्रकरणस्य वाक्यादित्रयकल्पनेन[13] विनियोजकत्वेन दौर्बल्यात्। अस्ति राजसूयो नामेष्टिपशुसोमयागसमूहः। अनुमत्याद्या इष्टयः मन्दादयः पशवः पवित्राद्याः सोमयागाः। स च 'राजसूयेन स्वाराज्यकामो यजेते'ति

---

१. 'पुरोडाशस्य' इति ङ मातृकापाठः।
२. विशिष्टपदं छ मातृकायां नास्ति।
३. मात्र पदं मूलमातृकायां नास्ति।
४. कल्पनादिति च मातृकापाठः।
५. त्रिरवघ्नन्नाहूयतीति मूलमातृकापाठः।
६. दर्शपूर्ण° इत्यारभ्य आह्वयतिपर्यन्तं ख मातृकायां नास्ति। ङ मातृकायाञ्च दर्श-पूर्णमासस्येति पाठः।
७. 'श्रुतः' इति च मातृकापाठः।
८. विधावित्यारभ्य वादिनीपर्यन्तं च मातृकायां न दृश्यते।
९. °हूतो°' इति मूलमातृकापाठः।
१०. '°'वदिनी तु'इति ख ग मातृकापाठः।
११. °द्वतां'इति मूलमातृकापाठः।
१२. °'वदस्य' इति मूलमातृकापाठः।
१३. 'कल्पनद्वारा' इति ख ग ङ छ मातृकासु दृश्यते।

फलाय विधीयते । तत्प्रकरणे चाभिषेचनीयाख्याः सोमयागसन्निधौ विदेवनादयो धर्माः विहिताः । 'अक्षैर्दीव्यति', राजन्यं जिनाति'[1], 'शौनः शेपमाख्यापयति' अभिषिच्यत इति । तेन[2] सन्निधिपाठरूपात्स्थानात् [3]नाभिषेचनीयाङ्गम्, किन्तु प्रकरणाद् राजसूयाङ्गम् । स्थानस्य प्रकरणादि-चतुष्टय[4]कल्पनेन विनियोजकत्वेन दौर्बल्यात् । न च राजसूयस्य न प्रकरणमस्ति । इष्टीनां दर्शपूर्णमासविकृतित्वेन पशूनामग्नीषोमीयविकृति-त्वेन सोमानां ज्योतिष्टोमविकृतित्वेन क्लृप्तोपकारप्राकृताङ्गनिराकाङ्क्ष-त्वादिति वाच्यम् । राजसूयत्वेन रूपेण यानि वाचनिकान्यङ्गानि विहितानि 'राजसूयाय [5]ह्येनामुत्पुनाती'त्यादीनि तद्ग्रहणायोद्भूतयाकाङ्क्षया तन्म-ध्यपातिनां विदेवनादीनामपि ग्रहणात् । दर्शपूर्णमासयोः पौरोडाशिके काण्डे सान्नाय्यपात्रशुन्धनक्रमे 'शुन्धध्वं दैव्याय कर्मणे' इति मन्त्रः समाम्नातस्तस्य क्रमात्सान्नाय्यपात्रप्रोक्षणाङ्गत्वम्, न तु पौरोडाशिक-समाख्यया पुरोडाशपात्रप्रोक्षणाङ्गत्वम् । तस्याः स्थानादिपञ्चक[6]कल्पनेन दौर्बल्यात् । एवं श्रुत्यादिभिर्लिङ्ग[7]वाक्यादि बाध्यते । तद्यथा[8] अरुणादि-वाक्ये आरुण्यस्य लिङ्ग[9]वाक्याभ्यामेकहायन्यङ्गत्वं श्रौतेन क्रमाङ्गत्वेन[10] बाध्यते । ज्योतिष्टोमे 'तिस्रः साह्नस्योपसदो, द्वादशाहीनस्य' इति श्रुतम् । तत्राह्ना समाप्यमानत्वात् साह्नो ज्योतिष्टोमः । तस्य[11] तिस्रः उपसदो-

१. 'क्रीणाति' ङ मातृकापाठः ।
२. 'ते' इत्येव ङ छ मातृकयोः दृश्यते ।
३. अभिषेचनी° इति मूलमातृकापाठः ।
४. °'कल्पनविनियो°' ख मातृकापाठः । 'चतुष्टयं प्रकल्प्य' इति ग ङ मातृकयोः दृश्यते ।
५. 'ह्येना' इति मूलमातृकापाठः ।
६. 'पञ्चलिङ्ग' इति ङ मातृकापाठः ।
७. 'लिङ्गवा°' इति ग घ ङ मातृकासु पाठः ।
८. 'तद् यथा इत्यस्य स्थाने 'तथा' ख मातृकापाठः ।
९. लिङ्गपदं ख च मातृकयोः न दृश्यते ।
१०. 'त्र्याङ्ग°' इति ख मातृकापाठः । 'क्रियाङ्ग°' इति मूलमातृकापाठः ।
११. 'तस्येति तस्य' इति घ मातृकापाठः ।

ऽङ्गम्[१]। अहीनस्तु[२] 'अह्नः[३] खः क्रतौ' इति वार्त्तिकेन (२७२२) अहर्गणो[४] द्विरात्रादिद्वादशाहान्तः। तत्र द्वादशोपसत्त्वस्य लिङ्गप्रकरणाभ्यां ज्योतिष्टोमाङ्गत्वं[५] षष्ठीश्रुत्यवगतेन द्वादशाहाङ्गत्वेन[६] बाध्यते। यदा तु द्वादशाहप्रकरणविहितस्य द्वादशोपसत्त्व[७]स्यायमनुवादस्त्र्युपसत्त्वं स्तुत्यर्थ इष्यते, तदान्यदुदाहरणम्[८]। तत्रैव 'भुवं हि स्थ स्वपती'ति द्वयोर्यजमानयोः प्रतिपदं कुर्यादि'ति श्रुतम्। ज्यौतिष्टोमिके द्वियजमानकप्रयोगे प्रकरणेन स्तोत्राद्या ऋगियमङ्गं प्रतीयते। ज्योतिष्टोमे च कर्त्तुरेकत्वात् द्वियजमानकप्रयोगाभावात् विकृतौ एतेन राजपुरोहितौ सायुज्यकामौ यजेयातामि'ति कुलायाख्ये[९] यागे श्रुत्या प्रकरणं बाधित्वाङ्गम्। तत्रैवाग्नीषोमीयपशुयागसन्निधौ यूपपरिव्याणार्था रशना तद्धर्माश्च दर्भमयीत्वादयः श्रुतास्ते स्थानादग्नीषोमीयाङ्गम्[१०]। 'रशनया यूपं परिव्ययते' इति द्वितीयाश्रुत्या[११] तु रशनाया[१२] यूपार्थत्वात् तद्धर्माणामपि यूपार्थत्वात् यूपस्य च दीक्षासु 'यूपं छिनत्ती'ति दीक्षाकालेऽग्नीषोमीयप्रयोगात्[१३] बहिरुत्पन्नत्वेन

---

१. °'ङ्गत्व ' इति ङ मातृकापाठः।

२. 'अहीनशब्दस्तु तस्य समूहः' इत्यधिकृत्य 'अह्नः ख क्रतौ' इत्यनुशासनादनुशिष्टोऽहर्गणवाची 'स च द्विरात्रादिद्वादशाहान्तः' इति ग घ छ मातृकासु वाक्यविन्यासः।

३. 'अह्नः ख' इत्यारभ्य अहर्गणपर्यन्तं ङ मातृकायां नास्ति। अनेन वार्त्तिक समूहेऽर्थे ख प्रत्ययो भवति।

४. 'तत्र द्विरात्रा०' इति ङ मातृकापाठः।

५. ' माङ्गत्वमभिधातृ श्रुतिसहित' इति ग छ मातृकयोः दृश्यते।

६. नाहीनाङ्गत्वेनेति ख मातृकापाठः। अहीनाङ्गत्वेनेति घ ङ मातृकयोः पाठः दृश्यते।

७. °सत्वस्येत्यनन्तरं 'प्रकरणाज्ज्योतिष्टोम' इति पदं मूलमातृकायां दृश्यते।

८. 'तदाहीनतदु०' इति च मातृकापाठः।

९. °'आख्य' पदं घ ङ मातृकयोर्नास्ति।

१०. "°याङ्गं प्रतीयते' इति मू० मा० पा०

११. 'श्रुत्यास्तु' इति मू० मा० पा०।

१२. 'रशनया' इति ग मा० पा०।

१३. प्रयोगादित्यारभ्य ज्योतिष्टोमाङ्ग इति यावत् ख मातृकाया नास्ति।

ज्योति[१]ष्टोमाङ्गाग्नीषोमीयसवनीयानुवन्ध्याख्यपशु[२]यागत्रय[३]साधारण्यात् रशना[४] तद्धर्मा अपि साधारणाः दर्शपूर्णमासयोः पौरोडाशिके काण्डे 'इषे त्वे'ति मन्त्रः श्रुतस्तस्य समाख्यया पुरोडाशयागाङ्गत्वम् ।

## श्रुत्यादीनां प्रावल्यदौर्बल्यनिरूपणम्

'इषे त्वे'ति शाखां छिनत्ती'ति द्वितीयाश्रुत्या तु सान्नाय्याङ्गशाखार्थत्वावगमात् वाध्यते। लिङ्गेन प्रकरणवाधस्तु पूषानुमन्त्रणमन्त्रस्य प्रकरणाद् दर्शपूर्णमासाङ्गत्वम्[५]। लिङ्गात्तु पूषयागाङ्गता। 'उपहूत उपहूयस्वे'ति ज्योतिष्टोमे श्रुतयोर्मन्त्रयोः क्रमादाद्यस्यानुज्ञापनार्थता द्वितीयस्यानुज्ञार्थता प्रतीयते[६]। लिङ्गात्तु द्वितीयोऽनुज्ञापनार्थः, आद्यस्त्वनुज्ञानार्थ[७] इति लिङ्गेन स्थानवाधः। तत्रैव 'भक्षे[८] हि मा विश' इत्यादि'र्मधुमत उपहूतस्योपहूतो भक्षयामी'त्यन्तो भक्षानुवाकः श्रुतः। स लिङ्गसमाख्याभ्यां सोमभक्षणाङ्गम्। तत्र च 'अश्विनोस्त्वा वाहुभ्यां[९]सध्यासमि'ति ग्रहणामिधाय्यवयवः 'सुचक्षा[१०] अवख्येषमि'त्यवेक्षणाभिधायी 'हिन्व मे गात्राणि[११] हरिव' इत्यादि'र्मामेवाङ्नाभिमतिगा' इत्यन्तः सम्यग्ज[१२]रणाभिधायी। तत्र ग्रहणादीनामविहितानां मन्त्रप्रकाश्यत्वा-

१. अत्र ङ मातृकायां त्रुटिः ।
२. पशु इत्यारभ्य समाख्यया पर्यंतं छ मातृकायां नास्ति ।
३. 'त्रय' इति पदं ख ङ मातृकयोः नास्ति ।
४. रशनामिति च मा० पा० ।
५. ङ्गत्वं बाधितमिति घ मातृकापाठः ।
६ प्रतीयते इत्यारभ्य अनुज्ञापनार्थ इति यावत् छ मातृकायां नास्ति ।
७. अनुज्ञार्थ इति च मा० पा० ।
८. 'भक्षेद्धि' इति मू० मा० पा० ।
९. 'सद्धि' इति घ मातृकायां तथा सव्यासमिति ङ मातृकायां दृश्यते ।
१०. 'सुचख्ये' इति घ ङ मातृकयोः दृश्यते ।
११. 'गात्र' इति ङ मा० पा० ।
१२. 'जुषाणा' इति छ मा० पा० ।

सम्भवात् समाख्यया ग्रहणादिप्रकाशनद्वारा भक्षणाङ्गमेवायं प्रतीयते। लिङ्गात्तु तत्तदर्थता । सत्यपि ग्रहणादीनामविधाने[१] भक्षणार्थापत्त्या [२]ग्रहणावेक्षणयोः प्राप्तिः । नहि ग्रहणावेक्षणाभ्यां विना भक्षयितुं शक्यः[३]। भक्षणस्य च सम्यग्जरणफलकस्यैव लोकसिद्धस्य सोमप्रतिपत्त्यर्थत्वेन विधानात् सम्यग्ज[४]रणस्याप्यस्त्येव प्राप्तिः। अतो भक्षणविधिरेवैतानि गोचरयति।

यद्वा अर्थापत्तिकल्पितविध्यन्तरस्वी[५]कारेणैवैतानि विधीयन्ते। न च सम्यग्जरणं कृत्य[६]साध्यं कथं विधेयम्। तस्या[७]शनादिविशेष[८]साध्यत्वात्। अतएव 'वाग्जुषाणा सोमस्य तृप्यन्तु'[९] इत्यवयवो न तृप्तिप्रकाशनार्थः। तस्याः[१०] कृत्यसाध्यत्वेनाविधेयतया मन्त्रप्रकाशनानर्हत्वात्, किन्तु तत्फलकभक्षणप्रकाशनार्थः। ग्रहणादीनां[११] तु मन्त्रप्रकाश्यत्वात् लिङ्गेन समाख्यावाधः। वाक्येन स्थानवाधस्तु आरुण्यस्य क्रमसाधनत्वेनावगतस्य सन्निधिना तत्साधनीभूतानेकद्रव्येषु प्रसक्तौ वाक्यादेकहायन्यां निवेशः[१२]। वाक्येन समाख्यावाधस्तु[१३] 'यजमानस्य याज्ये'ति वाक्यात्। यजमानेन याज्या वाच्या। तेन हौत्रसमाख्यायाः वाधः। प्रकरणेन समाख्यावाधस्तु पौरोडा-

---

१. '°माधाने' इति च मा० पा०।
२. °दिप्रकाशावे° इति मू० मा० पा०।
३. शक्यमिति घ ङ मातृकयोः पाठः।
४. 'जुषाणस्य' इति छ मा० पाठः।
५. 'स्वीकार' पदं मूलमातृकायां नास्ति।
६. कष्टसाध्यमिति मू० मा० पा०।
७. °यासना°' इति मू० मा० पा०।
८. विशिष्टस्येति ग मा० पा०।
९. 'तप्यतु' इति घ मा० पा०।
१०. तस्या इत्यारभ्य प्रकाशनार्थ इति यावत् छ मातृकायां नास्ति।
११. 'प्रहरणादीनां' इति ङ मा० पा०।
१२. 'निवेश्य' इति च मा० पा०।
१३. 'बाधो' इति ग मा० पा०।

शिके काण्डे समाम्नातानां प्रयाजानां समाख्यया पुरोडाशयागाङ्गत्वे प्रसक्ते प्रकरणात् षड्यागाङ्गत्वम् । क्वचिदेषामानर्थक्यप्रतिहतानां विपरीतं बलाबलं मी० न्या० पृ० ७८ भवति । तत्तु[1] तत्र तत्र वक्ष्याम[2] इति संक्षेपः ।।

## विनियोगविधावुद्देश्यस्य विवक्षितत्वाविवक्षितत्वनिरूपणम्

विनियोगविधौ यदुद्देश्यं तद्विशेषणमविवक्षितम् । यथा—'ग्रहं सम्मार्ष्टि' इति प्रागुक्ते विधौ ग्रहगतमेकत्वम् । तद्विवक्षायां वाक्यभेदात् ग्रहं सम्मृज्यात्, [3]तच्चैकमिति ग्रहसम्मार्गसम्बन्धे ग्रहैकत्व[4]सम्बन्धे च विध्यावृत्तेः । प्रकरणेन च निर्ज्ञातसंख्यानां [5]ग्रहाणामिहानुवादादनपेक्षितसंख्यत्वेन तद्विध्ययोगात् । सर्वत्रैवोद्देश्यस्य यथा[6]प्राप्त्यनुवादादनपेक्षं विशेषणम् । अतएवाविवक्षितं विध्यन[7]न्वयि [8]कथञ्चित्प्राप्तं त्वनूद्यते ग्रहै[9]कत्वमिव सामान्याभिप्रायेण । यत्तु विधेय[10]मुद्देश्यविशेषणम्, तद्विवक्षितमेव । यथा—'अष्टवर्षं ब्राह्मणमुपनयीते'त्यत्र ब्राह्मण[11]स्योपनयनं प्रति द्वितीयाश्रुत्या संकार्यत्वेनोद्देश्यत्वात्, तद्विशेषणमष्टवर्षत्वपुंस्त्वाद्यप्राप्तत्वाद्विवक्षितमेवेति राणके ।

---

१. 'तत्तु' इति च मातृकायां नास्ति ।

२. 'वक्ष्यते' इति ख ग घ मातृकासु दृश्यते ।

३. तत्रैकमिति मू० मा० पा० ।

४. 'ग्रहैकत्वसम्बन्धे' इति ग मातृकायां नास्ति ।

५. ग्रहणमिह इति ङ मा० पा० ।

६. 'यथाशक्त्य°' इति च मा० पा० ।

७. 'विध्यन्वयि' इति मू० मा० पा० ।

८. 'क्वचित्तु' इति घ मा० पा० ।

९. 'प्रतिग्रहमेकत्वस्य विषया°' ग मा० पा० ।

१०. 'विधेयोद्देश्य°' इति ग मा० पा० ।

११. ब्रह्मणोद्देश्यस्येति ख मा० पा० ।

मिश्रास्तु—तदप्युद्देश्यतादशायामविवक्षितम्। यदा तु 'तमध्यापयीते'त्यग्रिमवाक्येऽध्या[1]पनस्य वृत्त्यर्थत्वेन प्राप्तस्य विधेयत्वात् सोऽधीयीतेत्येवं प्रकृतब्राह्मणकर्त्तृकाध्ययनविधिपरं[2] ब्राह्मणस्यो[3]पादेयता, तदा विवक्षितम्। अष्टवर्षः पुमानुपनीतो ब्राह्मण एव तच्छब्दमहिम्ना अध्ययन[4]कर्त्ता, उपनयनं चाध्ययनाङ्गं कर्त्तृविशेषणतयेति। तत्रापि स एव कर्त्तेत्याहुः। एवं दर्शे 'यस्योभयं हविरार्त्तिमाच्छेंत्, ऐन्द्रं पञ्चशरावमोदनं निर्वपेदि'ति वाक्ये[5] सान्नाय्याख्यहविर्द्वयार्त्तौ निमित्ते प्रायश्चित्तं विधीयते 'तत्रोद्देश्य[6]निमित्तविशेषणमुभयत्वमविवक्षितम्। तेनैकहविरार्त्तावपि प्रायश्चित्तं भवति। नचैवमार्त्तिमात्रं निमित्तम्। हविस्तु [7]विशेषणत्वादविवक्षितं स्यादिति[8]वाच्यम्। आर्त्तिमात्रस्य नित्यत्वेन निमित्तत्वायोगान्मृष्यामहे हविषो विशेषणम्। तावता तु निमित्तबुद्धिपर्य[9]वसानान्नोभयत्वं विवक्षितम्। वस्तुतस्तु सायंदोहार्त्तौ [10]प्रातर्दोहार्त्तौ च पृथक् प्रायश्चित्तं विधाय श्रुतेऽस्मिन् वाक्ये उभयमित्युद्दिश्य प्रायश्चित्तं विधीयते। हविरार्त्तिस्त्वधिकारप्राप्तानूद्यते। तेन विवक्षितमेवोभयत्वम्। पृथक् प्रायश्चित्तविध्यभावं कृत्वा तूभयत्वस्याविवक्षोच्यते इति तन्त्ररत्ने।

[11]क्वचित्तु निमित्त[12]रूपोद्देश्यविशेषणमपि नैमित्तिकरूपपर्यालोचनया विवक्षितं भवति। यथा—यस्योभावग्नी अनुगतावभिनिम्नो

---

१. अध्ययनस्येति च मा० पा०।
२. 'परे' इति मू० मा० पा०।
३. 'विधेयता' इति ग मा० पा०।
४. 'अध्ययने' इति ग ङ मातृकयोः पाठः।
५. 'वाक्ये' इति पदं ग घ ङ मातृकासु न दृश्यते।
६. 'तत्रोभयमिति पदं तद्विशेषणम्' इति ग घ मातृकापाठः।
७. विशेषत्वादिति मू० मा० पा०।
८. 'इति वाच्यम्' इति ग घ मातृकयोर्नास्ति।
९. पर्यवज्ञानादिति च मा० पा०।
१०. 'प्रातर्दोसत्तौ' इति छ मातृकायां नास्ति।
११. किञ्चिदिति मू० मा० पा०।
१२. 'रूपोद्देश्य' इति च मातृकायां नास्ति।

चेदभ्युदियाद्वा पुनराधेयमेव[1] प्रायश्चित्तिरिति वाक्ये[2] गार्हपत्याहवनीयरूपाग्निद्वयानुगमोपलक्षितसूर्यास्तो[3]दयनिमित्तकपुनराधेयविधिपरे निमित्तविशेषणोभयत्वाविवक्षायां प्राप्तायां नैमित्तिकस्याधानस्यानेका[4]ग्न्युत्पादकत्वसामर्थ्यपर्यालोचनया नैमित्तिकविशेषणमपि उभयत्वं विवक्षितम्। तेन विनियोगविधावेकपदोपात्तं भिन्नपदोपात्तं चोद्देश्यविशेषणमविवक्षितम्। उपादेयविशेषणन्तु विवक्षितम्। यथा—'अग्नीषोमीयं पशुमालभेते'ति ज्योतिष्टोमप्रकरणस्थे वाक्ये[5] पश्वेकत्वादिः[6]। अत्र हि द्रव्यदेवतासम्बन्धकलितो यागो विधीयते। '[7]अग्नीषोमीयेण पशुना यजेते'ति। आलम्भस्त्वर्थप्राप्तोऽनूद्यते। यागसाधनत्वेन च पशोरुपादेयत्वात्तद्गता संख्या विवक्षिता। तद्विधौ च[8] वाक्यभेदाभावात्प्रातिपदिकार्थः पशुः पदश्रुत्या तृतीयैकवचनार्थः संख्या[9] चैकाभिधानश्रुत्या करणकारकेण सम्बद्धचते। विशिष्टं च कारकं यागाङ्गत्वेन विधीयते। कारकद्वारा च यागाङ्गयोः पश्वेकत्वयोः परिच्छेद्यपरिच्छेदकाकाङ्क्षायामेकक्रियाक्षेपादन्योन्यनियमो भवतीति न वाक्यभेदः उद्देश्यतद्विशेषणयोस्तु क्रियां प्रति गुणत्वाभावान्न तदाक्षेपादन्योन्यनियमः सम्भवी, प्रत्युत ताभ्यां प्रत्येकं[10] गुणभूतक्रिया[11]वशीकारात्क्रियावृत्तिनिमि[12]त्तो वाक्यभेद इति वैलक्षण्यम्।

---

१. 'एव' इत्यस्य स्थाने तस्येति मू० मा० पा०।
२. 'वाक्येन' इति ख मा० पा०।
४. 'अस्त' पदं छ मातृकायां नास्ति।
५. 'सहितोभयजनकत्वादुभयाग्निनाश एव निमित्तं प्रतीयते' इति ख ग ङ मातृकासु पाठः।
६. वाक्यपदं छ मातृकायां नास्ति।
७. आदिपदं मूलमातृकायां नास्ति।
८. अग्नीषोमाभ्यामिति छ मा० पा०।
९. 'च' इति पदं मूलमातृकायां नास्ति।
१०. संख्या लादेशार्थः। पुंस्त्वैकाभिधान इति ग छ मातृकयोः दृश्यते।
११. प्रत्येकमिति पदं छ मातृकायां नास्ति।
१२. 'क्रियात्वेन तदाकाङ्क्षत्वाच्च' इति ग मातृकापाठः।
१३. निमित्तपदं छ मातृकायां नास्ति।

[1]उपादेयस्याप्राप्तत्वाद[2]तिज्ञातविशेषणत्वेन तदाकाङ्क्षत्वाच्च[3]। एवं 'अनड्वाहौ[4] युनक्ति' इति द्वित्वम्, 'वसन्ताय कपिञ्जलानालभेते'ति बहुत्वञ्च विवक्षितम्। बहुत्वं चासति चतुष्ट्वादिसाधकमानान्तरे त्रित्व एव पर्यवस्यति, उपादानलाघवन्यायात्। त्रीननुपादाय चतुरादीनामुपादानासम्भवात्त्रित्वमेव लाघवाद्विधिर्गोचरयति । संख्यावल्लिङ्ग[5]मप्युपादेयविशेषणं विवक्षितम्। यथा—'अग्नीषोमीयपशावजोऽग्नीषोमीय' इति शाखान्तरीये वाक्ये पुंल्लिङ्गम्। 'सारस्वती मेषी' इति च[6] स्त्रीत्वम्। एवं सर्वत्रोपादेयविशेषणं विवक्षितम्। [7]किञ्चित्तूपादेयविशेषणं प्राप्तत्वादविवक्षितम्[8]। यथा—सत्रादुदवसाय पृष्ठशमनीयेन यजेरन्' इति पृष्ठशमनीयकर्तृबहुत्वं सत्रोदवसानसमानकर्तृत्वादेव तत्प्राप्तेः। 'यावतोऽश्वान् प्रतिगृह्णीयादि'त्यादिविधौ च पूर्वोक्ते वारुणानिति बहुत्वम्। निमित्तसमसङ्ख्यनैमि[9]त्तिकविधिनैव तत्प्राप्तेः । अप्राप्तं तूपादेयविशेषणं विवक्षितमिति संक्षेपः।

## अधिकारविधिनिरूपणम्

उत्पन्नस्येष्टसामान्ये विनियुक्तस्य च[10] कर्मणः फलविशेषसम्बन्ध-

---

१. 'उपादेयस्य विशेषणं त्वप्राप्तम् इति ग छ मातृकयोः दृश्यते।
२. निर्ज्ञात इत्यस्य स्थाने 'अनिमित्त' पदं घ मातृकायामस्ति। ङ मातृकायाञ्च 'निमित्तविशेषणत्वे इति पाठः।
३. 'त्वाच्च' इत्यनन्तरं तद्विशिष्टस्यैव क्रियया वशीकारादवाक्यभेदः ग छ मातृकयोरधिकः।
४. आमनहोममिति छ मातृकापाठः।
५. 'अपि' पदं मूलमातृकायां नास्ति।
६ च पदं ङ मातृकायां नास्ति।
७. 'किञ्चित्तूभय°' इत्यारभ्य 'इति संक्षेपः' पर्यन्तं ख ग घ च छ मातृकासु नास्ति।
८. '°विवक्षितम्' इत्यनन्तरं 'इति संक्षेप' इति ग मातृकायां दृश्यते। तथा तदनन्तरं 'पशावजोऽग्नीषोमीयः' इत्यप्यधिकोऽस्ति।
९. '°त्तकविधे नैव' इति मूलमातृकापाठः।
१०. च पदं ङ मातृकायां नास्ति।

बोधनेन पुंसः फलभोक्तृत्वरूपमधिकारं यो बोधयति सोऽधिकारविधिः। अधि उपरि करणं कारः भावे घञ्। कर्मभि[1]रुपरिकरणं कर्मजन्यफलभोक्तृत्वम्। यथा—'सोमेन यजेते'त्युत्पन्नस्य यागस्य। ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यनेन[2] फलविशेषसम्बन्धः क्रियते। स्वर्गकामस्य चाधिकारो बोध्यते। 'एकै[3]कस्मै वा अन्ये यज्ञ[4]क्रतवः कामायाह्नियन्ते सर्वेभ्यः कामेभ्यो ज्यतिष्टोम' इत्यनेन च सर्वफलसम्बन्धः क्रियते। एतेनैव [5]स्वर्गसम्बन्धसम्भवेऽपि गोबलीवर्दन्यायेन भिन्नविषयत्वकल्पनेनोभयोरर्थवत्ता। स्वर्गकामविधिनैव स्वर्गसाधनत्वेन ज्ञातं कर्म[6] स्वर्गं जनयतीति नियमकल्पनाच्च। एवमाग्नेयादिवाक्योत्पन्नानां षण्णां यागानां 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, एकैकस्मै वा अन्या इष्टयः कामायाह्नियन्ते, सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ' इत्याभ्यां[7] वाक्याभ्यां फलसम्बन्धः। सर्वफलार्थयोश्च दर्शपूर्णमासज्योतिष्टोमयोरेकस्मिन् प्रयोगे एकं फलं जायते। उद्देश्यानां फलानां साहित्यस्याविवक्षितत्वात्। निरपेक्षानेकफलजनकस्य वस्तुन एकप्रयोगे एकफलजनकताया[8] लोके दृष्टत्वात्। न हि मृत्पिण्डः [9]एकप्रयोगे घटौ सृजति। वैदिक[10]मप्येकफलार्थं कर्मैकमेव फलं सकृत्प्रयोगे जनयति। अन्यथैकप्रयोगे यावदिष्टं फलं लब्धमिति न काम्यं कर्म पुनरा-

---

१. रुपरि° इत्यस्य स्थाने 'रूप' पदं ग छ मातृकयोः दृश्यते।
२. 'इत्युत्पन्नस्य न' इति ग मा० पा०।
३. 'एकैकस्यै' इति मू० मा० पा०।
४. 'यज्ञा तत्तत्कामाय' इति घ ङ छ मातृकासु पाठः।
५. स्वर्गपदं ङ मातृकायां नास्ति।
६. कर्मपदं मूलमातृकायां नास्ति।
७. इत्येताभ्यामिति ग छ मातृकापाठः।
८. '°तया' इति ग मातृकापाठः।
९. 'एके' इति ग मातृकापाठः।
१०. 'वैदिकमप्येककर्मैकमेव' इति वाक्यविन्यासः ग मातृकायाम्।

वर्त्तेत। [1]कामनावशाच्च[2] फलनियमः। फलानि हि त्रिविधानि—ऐहिकामुष्मिकोभयरूपाणि। तत्रावग्रहजन्यसस्यशोषे 'कारीर्या यजेत वृष्टिकाम' इति विहितायाः कारीर्याः फलमैहिकमेव, एवं जातेष्टिजन्यं पुत्रगतपूत[3]त्वादिकञ्च। श्येनजन्योऽभिचारश्च। तथैव काम्यमानत्वात्। स्वर्गस्त्वामुष्मिक एव। तादृशसुखस्येह भोगासम्भवात्। पुत्र[4]पश्वादीनि त्वैहिकामुष्मिकानि। न हि तद्देशान्तरे एव भोग्यम्, इहापि मैथुनादिकारणजन्यत्वात् पुत्रकामेष्ट्यादौ कृते[5] तु प्रतिवन्धकपापनिवृत्ताविहोत्पत्तिः। सति प्रतिवन्धके[6] कालान्तर इति। तत्र पुम्मतिवैचित्र्यात् कैश्चित् किञ्चिदेव प्रकाम्यते[7]। काम्यमानञ्च फलत्वेन सम्बध्यते। येषां[8] तु युगपत् कामना कस्यचिज्जाता, तेषामपि न युगपदुत्पत्तिः। पूर्वोक्तकर्मस्वाभाव्यादिति मिश्राः।

राणके तु विरुद्धानां कामानां युगपदनुत्पत्तिरविरुद्धानां पुत्रपश्वादीनां काम्यमानानां युगपदुत्पत्तिरेवेत्युक्तम्[9] अतस्त[10]त्फलकामस्या[11]धिकारः। एवं सर्वत्र[12] फलार्थं गङ्गास्नानादिष्वपि बोध्यम्। जातेष्टौ तु सहितपूतत्वादिकामस्याधिकारः। अर्थवादोपस्थितानां तेषां[13] सहितानामेव[14]

---

१. 'कामव°' इति ग मा० पा०।
२. फलपदं मूलमातृकायां नास्ति।
१. कृतत्वादि° इति छ मा० पा०।
४. पुत्रपश्वादि त्वैहिकमामुष्मिकञ्चेति ङ छ मातृकापाठः।
५. 'तु कृते' इति व्यत्ययः ङ मातृकायाम्।
६. 'प्रतिबन्धे' इति मूलमातृकायां ङ मातृकायाञ्च।
७. 'काम्यते' इति ग ङ छ मातृकासु पाठः।
८. तेषामिति ङ मा० पा०।
९. 'इत्युक्ताः' इति घ ङ मा० पा०।
१०. 'तत्फल°' इति ग मा० पा०। तत्तदिति घ ङ मा० पा०।
११. '°स्यात्र' इति ग घ ङ छ मा० पा०।
१२. 'सर्व' इति घ मा० पा०।
१३. तेषामित्यस्य स्थाने 'फलत्वकल्पने लाघवात्' इति मू० मा० पा०।
१४. '°मेव' इत्यस्य स्थाने 'मेक' इति मू० मा० पाठः।

फल[1]कल्पनात्। एवमग्निहोत्रहोमस्य 'अग्निहोत्रं जुहुयात्स्वर्गकाम' इत्यनेन फलसम्वन्धे[2] स्वर्गकामस्य [3]वाधिकारः। एषु सर्वकर्मसु मनुष्याणामधिकारो, नान्येषाम्, सामर्थ्याभावात्।

तिरश्चां तावदर्थज्ञाना[4]भावात् कालान्त[5]रीयफलकामना[6]भावाच्चानधिकारः। देवादीनां देवतोद्देशासम्भवात्। नहीन्द्रेणेन्द्रोद्देशेन त्यक्तुं शक्यते। तदानीमिन्द्रान्तराभावात्। अतीतस्य चेन्द्रत्वाभावात्। स्वोद्देशेन वा[7] स्वत्वत्यागासम्भवात्। विग्रहाभावाच्च। तत्प्रतिपादकानां मन्त्रार्थवादानां वक्ष्यमाणन्यायेन [8]स्तुत्यर्थतया स्वार्थपरत्वाभावात्। ऋषीणामार्षेय[9]वरणाभावा[10][11]दनधिकार इति भाष्ये[11]। वार्त्तिके[12] त्वनादौ संसारे भृग्वादेः पूर्वंपूर्वंभृग्वादिवरणसम्भवादस्त्येवाधिकार इत्युक्तम्[13]।

मनुष्येष्वपि नान्धपंग्वादीनाम्। अन्धस्याज्यावेक्षणाद्य[14]सम्भवात्। पङ्गोर्विष्णुक्रमणाद्य[15]सम्भवात्। वधिरस्य वाचना[16] (श्रवणा)

---

१. 'फलत्व' इति मू० मा० पाठः।

२. 'सम्बन्धः' मू० मा० पाठः। तथा च ङ च मातृकास्वप्येवमेव।

३. घ ङ मातृकयोः च पदं दृश्यते। ग मातृकायाञ्च वा पदं नास्ति।

४. कथना° इति च मा० पा०।

५. कालान्तरीयमिति ङ मा० पा०।

६. ज्ञानामा° इति घ ङ मातृकयोः दृश्यते।

७. वा स्थाने च पदं घ ङ छ मातृकासु विद्यते।

८. स्मृतिस्तु° इति मू० मा० पा०। च मातृकायाञ्च श्रुतिपदं दृश्यते।

९. आर्ष° इति ग मा० पा०।

१०. °णासम्भवादिति मू० मा० पा०।

११. 'भाष्ये' इत्यस्य स्थाने 'स्थितम्' इति पदं घ ङ मातृकयोः।

१२. 'वार्त्तिके' इत्यारभ्य 'इत्युक्तम्' यावत् घ ङ मातृकयोर्नास्ति।

१३. 'इति स्थितम्' इति ग छ मातृकयोः दृश्यते।

१४. °वेक्षणासंभवादिति मू० मा० पा०।

१५. आदिपदं घ ङ छ मातृकासु नास्ति।

१६. वाक्यवचनाभावादिति ङ मा० पा०।

सम्भवात्। मूकस्य मन्त्रोच्चारणासम्भवात्। काणस्य त्वस्त्यधिकारः। एकस्य[1] चक्षुषो गोलकद्वये प्रत्येकसमाप्तत्वेन चक्षुर्जन्या[2]ज्यावेक्षणादि-[3]सम्भवात्। केचित्तु चक्षुषो व्यासज्यवृत्तित्वं स्वीकृत्य खण्डचक्षुषः[4] काणस्य नाधिकार इत्याहुः[5] ननु यथाधिकारमङ्गविनियोगात्स्वर्गकाम-शब्दाच्च सर्वाधिकारप्रतीतेर्यस्य यत्राशक्तिस्तस्य[6] तं प्रत्यविहितमेव। तस्य तद्रहितः क्रतुः फलजनक इति। मैवम्। यदि पुरुषार्थतया अङ्गोपदेशः स्यात्तो यथापुरुषाधिकारमङ्गविनियोगः कल्प्येत। श्रुत्यादिभिस्तु[7] क्रत्वर्थतया अङ्गोपदेशात्सर्वाङ्गयुक्तस्य क्रतोः फलार्थत्वावगतेस्तादृगनुष्ठान-समर्थमेवाधिकारिणं[8] स्वर्गकामशब्दोऽवलम्बते। एवं स्वर्गकामशब्दोपपत्तौ नित्यवच्छ्रुतानामङ्गवाक्यानां पाक्षिकत्वमन्याय्यम्। तेन यथाविनियोग-मधिकार इति सर्वाङ्गोपसंहारसमर्थस्याधिकारः।

नित्यनैमित्तिकेषु तु[9] निमित्तश्रुतिविरोधात् यथाशक्तिप्रयोगेणाप्य-धिकारः। 'यावज्जीवमग्निहोत्रं जुहुयात्', 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेते'त्यत्र ण[10]मुल् श्रुत्या निमित्तत्वं प्रागुक्तम्। 'वसन्ते वसन्ते ज्योतिषा यजेते'त्यत्र वीप्स[11]या वसन्तस्य निमित्तत्वम्। अ[12]तएव वीप्सानुवादः

---

१. एकस्येत्यारभ्य सम्भवात् पर्यन्तं ग छ मातृकयोः नास्ति। ङ मातृकायाञ्च चक्षुर्जात्यावेक्षणे० इति पाठः।
२. चक्षुर्जात्या॰वे० इति घ मा० पा०।
३. आदिपदं ङ मातृकायां नास्ति।
४. चक्षुरिति ग मा० पा०।
५. इत्याहुरिति पदं छ मातृकायां नास्ति।
६. तस्येत्यस्य स्थाने तत्पदं ग मातृकायाम्।
७. तु पदं घ ङ मातृकयोर्नास्ति।
८. '°कारिणाम्' इति मू० मा० पा०।
९. तु पदं घ ङ छ मातृकासु नास्ति।
१०. प्रतिनिमित्तं णमुलिति च मा० पा०।
११. 'सप्तम्या' ग छ मा० पा०।
१२. अतएवेत्यारभ्य 'सङ्गच्छते' पर्यन्तं मूलमातृकायां नास्ति।

सङ्गच्छते। तत्र प्रतिनिमित्तं नैमित्तिकमवश्यं कार्यम्। सर्वाङ्गयुक्तञ्चे[1]त्कार्यमित्यशक्यार्थविधिप्रसङ्गात् यथाशक्तीत्युप[2]पद्यत इति वक्ष्या[3]मः। एवमद्रव्यस्या[4]प्यधिकारः। जीवनार्थमर्जनस्यावश्यकत्वेन तेनैव क्रत्वनुष्ठानसम्भवात्। न च द्रव्यार्जनं क्रत्वर्थम्। तत्र श्रुत्यादिप्रमाणाभावात्। प्रत्यक्षेण पुरुषप्रीत्यर्थत्वाच्च ब्राह्मणस्य प्रतिग्रहादिना, राजन्यस्य जयादिना, वैश्यस्य कृष्यादिनेति नियमात्त[5]द्द्रव्यार्जनाश्रितादृष्टं कल्प्यते। भोजनाश्रिता[6]दिवत् प्राङ्मुखत्वादिनियमात्।[7] पुरुषा[8]र्थेन तु द्रव्यार्जनेन[9] यथापुरुषकार्यं भोजनादि निर्वर्त्यते, तथा क्रतुरपि। एवञ्चाद्रव्यस्य पुरुषार्थार्जनावश्यम्भावात्तेनैव क्रतावप्यधिकारः। एवमङ्गहीनस्यापि तत्प्रतिसमाधानेनाधिकारः। यस्यत्वप्रतिसमाधेय[10]मङ्गवैकल्यम् तस्य काम्येषु[11]नाधिकारः। नित्येषु[12] त्वाहिताग्निश्चैतदधिक्रियते। आधानस्य त्वग्न्यर्थतया काम्यत्वात्तत्र नाधिकारः। यत्त्वनाहिताग्नेः प्रत्य[13]वायः प्रायश्चित्तं च स्मर्यते, तदुत्तरनित्यक्रत्वकरणनिमित्तम्, न त्वाधानाकरणनिमित्तमिति मिश्राः।

---

१. 'युक्तं च' इति घ ङ मा० पा।

२. 'उपवक्ष्यत' इति ङ च तथा मूलमातृकापाठः।

३. 'वक्ष्यामः' इत्यारभ्य क्रत्वर्थम् 'तत्र' इति यावत् छ मातृकायां नास्ति।

४. 'अपि' पदं मूलमातृकायां नास्ति।

५. नियमात्तु इति मू० मा० पा०।

६. ख मातृकायां 'वत्' इति नास्ति ग घ मातृकयोश्च तकारमात्रं नास्ति।

७. नियमादित्यनन्तरं 'पुरुषार्थेन न तु' इत्यधिकः ङ मातृकायाम्।

८. 'पुरुषार्थेन' इति पदं घ मातृकायां नास्ति।

९. द्रव्यार्जनमिति ङ मा० पा०।

१०. '°धेयत्वमङ्ग°' इति ग मा० पा०।

११. '°ष्वनधि' इति ङ मा० पा०।

१२. तु पदं घ ङ मातृकयोर्नास्ति।

१३. 'प्रत्यवायः' इति पदं ग छ मातृकयोर्नास्ति।

अन्ये त्वाधानस्यापि फलतो नित्यत्वादस्त्येवाधिकार इत्या[1]हुः। एवञ्चार्षे[2]यवरणसमर्थस्यैवाधिकारः। दर्शपूर्णमासयोः। 'आर्षेयं वृणीते' इति विधाय 'एकं वृणीते', 'द्वौ वृणीते', 'त्रीन् वृ[3]णीते', 'न[4] चतुरो-वृणीते', 'न पञ्चातिवृणीते' इति वाक्यानि श्रूयन्ते'। सर्वेषाञ्च[5] विधिश्रुत[6]या कल्प्यमानो विधिरेकवाक्यत्वसिद्धये 'त्रीन् वृणीते' इत्यत्रैव कल्प्यते। तथा चैकत्वद्वित्ववाव[7]ययोरवयुत्यानुवादः सिध्यति। त्रिष्वेकत्वद्वित्वयोः प्रप्तत्वात्। निषेधौ तु नित्यानुवादावित्येकवाक्यत्वम्। तेनैकद्वयार्षेययो-रनधिकार एव। चतुरार्षेयादीनां तु[8] त्र्यार्षेयवरणेनैवेति। एवमध्ययन-सिद्धार्थज्ञानवत एवाधिकारः। अग्निसाध्येषु चाधानसिद्धाग्निमत एव क्रतु-विधयोऽस[9]त्यर्थज्ञानापेक्षा अपि विध्यन्तरसिद्धतद्[10]ग्रहणेन कृतार्था न स्वयं ते प्रयुञ्जते।

अतएव त्रैवर्णिकानाम[11]ध्ययनाधानविधानादधिकारो, न शूद्रस्य। अध्ययनं ह्यनिर्दिष्टकर्त्तृकम्। प्रत्यु[12]तानुपनीतान् त्रैवर्णिकान्। कर्त्तृत्वेन गृह्णाति। आधानं तु त्रैवर्णिकानामेव विहितम्। 'वसन्ते ब्राह्मणोऽग्नीना-दधीत, ग्रीष्मे राजन्यः, शरदि वैश्य', इति। ननु वर्षासु रथकारो[13]ऽग्नीना-

---

१. 'इत्याहुः' इति पदं ग छ मातृकयोर्न दृश्यते।
२. 'त्र्यार्षेय' इति च मातृकापाठः।
३. 'वृणीते' इत्यनन्तरं 'कल्प्यते तथा चैक' इत्यधिकः ङ मातृकायाम्।
४. 'न तु' इति ङ मा० पा०।
५. 'च' इति घ ङ छ मातृकासु नास्ति।
६. शून्यत्वादिति मू० मा० पा०।
७. वाक्ययोरिति पदं ख ग ङ छ मातृकासु नास्ति।
८. त्रिपदं घ छ मातृकयोर्नास्ति।
९. 'ह्यनन्यार्थ' इति घ० मा० पा०। अनन्यार्थलाभापे० इति च मा० पा०।
१०. तदिति पदं मूलमातृकायां नास्ति।
११. °नामेवाध्ययन' इति ग मा० पा०। 'अध्ययनाधान' इति ङ च मातृकयोः दृश्यतेः
१२. 'प्रकृता°' इति ग मा० पा०।
१३. अग्नीन्' इति मूलमातृकायां नास्ति।

दधीते'ति रथकाराख्यसौधन्वना[1]परपर्यायजातिविशेषस्याप्याधानं विधीयते। न च रथं करोतीति व्युत्पत्त्या त्रैवर्णिकानामेव रथकरणे निमित्ते नित्यवसन्तादिकाल[2]बाधेन वर्षाविधानार्थ[3]मिति वाच्यम्। 'योगाद्रूढे-र्बलीय[4]स्त्वाद्' रूढ्या रथकारशब्देन जातिविशेषस्यैव प्रतीतेः।

**व्रात्य[5]त्तु जायते वैश्यात् सुधन्वाचार्य एव च।**
**भारु[6]षश्च द्विजन्मा च मैत्रः सात्वत एव च॥** मनु० १०।२३

इति हि स्मृतिप्रसि[7]द्धया व्रा[8]त्यवैश्योत्पन्नजातिविशेष[9] एवात्र गृह्यते। यस्तु—

**माहिष्योग्रौ प्रजायेते विट्शूद्राङ्गनयोर्नृपात्।**
**शूद्रायां करणो वैश्यात्॥**

इत्युक्तो[10] रथकारः। तस्या[11]नुलोमत्वेनाध्य[12]यनादिसम्भ[13]वात् सौधन्व[14]नादिपर्यायत्वाभा[15]वाच्च नात्र ग्रहणमिति मिश्राः।

---

१. 'सौधन्वन्पर्याये' इति ख मा० पा०।
२. 'न्तादिबाधे' इति मूलमातृकापाठः। 'वर्षा' पदं छ मातृकायां नास्ति।
३. इदमिति पदं छ मातृकायां नास्ति।
४. 'बलीयस्या रूढया' इति ख ग ङ मातृकापाठः। घ मातृकायाञ्च रूढेरिति पदं नास्ति।
५. वैश्यात्तु जायते व्रात्यात्सुधन्वाचार्य एव च। कारूषश्च विजन्मा च मैत्रः सात्वत एव च॥मनु० १०।२३ एतादृशः पाठः मनुस्मृतौ दृश्यते।
६. 'भारूप' इति मू० मा० पा०।
७. 'प्रसिद्ध' इति मू० मा० पा०।
८. व्राह्य' इति च मा० पा०।
९. विशेषस्यैवात्र ग्रहणादिति ख ग घ छ मातृकापाठः। विशेषस्य चात्र ग्रहणादि ङ मा० पा०।
१०. 'रथसौधन्वा ऋभव इति वेदे सामाधिकरण्या' इति ग मा० पा०।
११. 'रथकारस्य' इति ग मा० पा०।
१२. 'आधानादि' इति ग छ मा० पा०।
१३. सद्भावादिति घ ङ च मातृकापाठः।
१४. '°धन्वन्वादि°' इति घ मा० पा०।
१५. °भावाच्च' इति छ मातृकायां नास्ति।

'ऋभूणां चे[1]'ति चाधाने मन्त्राम्नानात् 'सौधन्वना ऋभव' इति वेदे सामानाधिकरण्यात्सौधन्वन [इति] ऋभुपर्यायस्येहाधिकारः । वचनाच्च तदुपायिकार्थज्ञानाक्षेपः । अ[2]तः कथं त्रैवर्णिकानामेवाधानमिति । सत्यम् । तदा[3]धानं त्रैवर्णिकाधानवन्ना[4]ग्निसंस्कारार्थम् । संस्कृतानामग्नीनामुत्तरत्रानु[5]पयोगात् । उत्तरक्रतुषु वचनाभावेन तस्यानधिकारात्, किन्तु विश्वजिन्न्यायेन स्वर्गफलकं विधीयते । अग्नीनां त्वनीप्सितकर्मत्वम् । अतस्त[6]त्रोत्तरक्रत्वधिकारप्रयोज[7]कमिति त्रैवर्णिकानामेव तादृशाधानविधानात्सिद्ध्यत्यधिकारः ।

नन्वेवं स्त्रियाः नाधिकारः स्यात् । अध्ययनस्योपनीतपुमधिकारत्वेन तत्सिद्धार्थज्ञानाभावात् । आधानस्य च पुंकर्तृकत्वेन श्रवणात् तत्सिद्धाग्न्यभावाच्चेति चेत्, सत्य[8]म् । पृथक् नास्त्येवाधिकारः भर्त्रा सह त्विष्यते । संसृष्टद्रव्यत्वादुभयोर्द्रव्यत्यागा[9]त्मकेषु कर्मसु पृथक्कर्तृत्वासम्भवा[10]त् । 'न भर्त्रा विभजेदिति विभागप्रतिषेधात् । प्रीतिद[11]त्तादिस्त्रीधनसत्त्वेऽपि

भार्यादासश्च पुत्रश्च त्रय एवा[12]धनाः स्मृताः । मनु० ८।४१६

इति स्वातन्त्र्यप्रतिषे[13]धात् । 'पाणिग्रहणाद्धि सहत्वं कर्मसु द्रव्यपरिग्रहेषु चे'ति आप० ध० २।१२।१७ स्मृतेश्च । 'यजमानः आज्यमवेक्षते' 'पत्न्या-

---

१. 'त्वेति' इति ख च मातृकापाठः ।
२. अत्रेति मू० मा० पा० ।
३. तदाधानमित्यारभ्य °योगात्पर्यन्तं ग छ मातृकयोर्नास्ति ।
४. नेति ङ मातृकायां नास्ति ।
५. °'रत्रायोगात्' ङ मा० पा० ।
६. 'तत्रोत्तर°' इति घ मा० पा० ।
७. प्रसञ्जकमिति छ मा० पा० ।
८. मैवमिति छ मा० पा० ।
९. '°त्यागात्मकेष्वित्यारभ्य कर्तृत्व°' पर्यन्तं ग मातृकायां नास्ति । त्यागासम्भवादित्येव छ मातृकायाम् ।
१०. 'वृत्तादि' इति मू० मा० पा० ।
११. 'एतेऽधनाः' इति ख ग घ मा० पा० ।
१२. निषेधादिति छ मा० पा० ।
१३. चेति मूलमातृकायां नास्ति ।

ज्यमवेक्षते' इत्याद्युभयकर्त्तृकाङ्क्षश्रवणाच्च। न चर्त्विग्वत् परिक्र[1]येण यजमानः पत्नी सा च तं [?] स्वस्वप्रयोगे सम्पादयिष्यत इति वाच्यम्। स्वामिवचनत्वात् पत्नीयजमानशब्दयोः परिक्रयासम्भवात्। 'पत्युर्नो यज्ञसंयोगे' इति[2] पा० सू० ४।१।३३ यज्ञस्वामिन्यां पत्नीशब्दः स्मर्यते। यजमानशब्दोऽपि कर्त्रभिप्राये क्रियाफले विहितशानजन्तं फलभोक्तारं स्वामिनमेव बोधयति। तस्मादुभयोः सहाधिकारः। तथा चाधाने 'क्षौ[3]मे वसा[4]नावग्निमादधीयाताम्' इत्युभयोः क्षौमव[5]सनविधानात्। न चात्रौकाराभिहितं पुंद्वयमाधानाङ्गत्वेन विधीयते न दम्पत्योः क्षौमविधानमे[6]वेति वाच्यम्। क्षौमशब्दानर्थक्यापातात्। वसन्तादिवाक्येन[7] प्राप्ते चाधाने क्षौमपुम्द्वयविधौ वाक्यभेदात्। अतः प्राथ[8]म्यात् क्षौमविधिः। औकारस्तु स्त्रीपुम्द्वयानु[9]वादः। स हि पुम्द्वयवत् स्त्रीपुम्द्वयेऽपि प्रयुज्यते। कु[10]क्कुटश्च कुक्कुटी चेति कुक्कुटाविति। एवञ्चानेकार्थत्वभियोभयानुगतं पुंस्त्वा[11]दि द्वित्वञ्चास्य वाच्यम्। तत्रासति प्रमाणान्तरे पुम्द्वयमभिधत्ते। सति तु स्त्रीपुम्द्वयमभिधी[12]यते। अ[13]स्ति तु प्रमाणं स्त्रीपुम्द्वयाभिधाने सह-

---

१. परिक्रयेणेत्यारभ्य यजमानशब्दयोः पर्यन्तं ग मातृकायां वास्ति।

२ 'अनुशासनात् यज्ञस्वामिनी पत्नीशब्दो वदति' इति ग० मातृकायां वाक्यविन्यासः।

३. क्षुमायाः विकारः क्षौमम्। अतसी स्यादुमा क्षुमेति। ग मातृकायां टिप्पणी।

४. वसाना ...... वग्निपदयोर्मध्ये जायपती शब्दोऽपि ग मातृकायां दृश्यते।

५. 'वसननियमविधानं सङ्गच्छते' ग घ ङ छ मातृकासु पाठः।

६. 'एव' पदं ख ग ङ छ मातृकासु नास्ति।

७. वाक्ये प्राप्ते ख घ ङ मातृकापाठः। मूलमातृकायाञ्च 'वाधाने' इति पाठः।

८. पाक्षिकत्वादिति ग छ मातृकयोः पाठः।

९. 'स्त्रीत्यारभ्य स हि' पर्यन्तं ग मातृकायां द्विरावृत्तः। छ मातृकायाञ्च 'द्वयानुवाद' इति पदं नास्ति।

१०. कुक्कुटश्चेत्यारभ्य 'वाच्यम्' इति यावत् ग मातृकायां नास्ति।

११. आदिपदं ङ मातृकायां नास्ति।

१२. 'अभिधत्ते' इति ख च मातृकापाठः।

१३. अस्तीत्यारभ्य अतएवेति यावत् ख ङ छ मातृकासु नास्ति।

त्वबोधकं वाक्यम् । अ[1]तएव क्षौमविधायकत्वाद्वाक्यस्य वसा[2]नाविति प्रकरणप्राप्तस्त्रीपुम्द्वयानुवादः इत्युभयोः क्षौमवसनविधानात् सहाधिकारः । एवञ्च विदुषा यजमानेन कृतं कर्म[3] उभयोः फ[4]लं ददातीति ना[5]विद्यात्वात्स्त्रोव्यावृत्तिः । तस्यास्तु यावदुक्तमाशीर्ब्रह्मचर्यं च भवति । यावदुक्तमाज्यावेक्षणादि । आशीः शब्देन फलाभिधा[6]यिनि तत्प्रतिग्रह[7]णयोग्यताजनकाः संस्का[8]राः विवक्षितास्तीर्थस्नानाञ्ज[9]नाभ्यञ्जनवपन[10]नादयस्ते फलित्वादुभयोर्भवन्ति । व[11]पनं तु पुंस एव । 'केशश्मश्रु वपते' इ[12]ति हि सत्यपि केशश्मश्रुणोः द्वितीयानिर्दे[13]शे । भूतभाव्यनुपयोगित्वेन संस्कार्यत्वायोगात्तत्कर्मकं व[14]पनं फलीतरपुरुषसंस्कारकत्वेन विधीयते । त[15]योश्चानीप्सितकर्मत्वेनोपादेययोर्विवक्षितसाहित्य[16]त्वात्पुंस एव च[17] तत्सम्भवात् । स्त्रिया न प्राप्नोति । ब्रह्म[18]चर्यं च सत्यपि पर्वणि

---

१. ग मातृकायां 'अत्र च' इति नास्ति मूलमातृकायां चास्ति ।
२ 'वसानाविति' इति मूलमातृकायां नास्ति ।
३. 'कर्मोत्तरी' इति ख मा० पा० ।
४. 'फले' इति ङ मा० पा० ।
५. 'नावैधत्वात्' इति मू० मा० पा० ।
६. °'धायिना' इति मू० मा० पा० ।
७. 'ग्रह' इति ग मा० पा० ।
८. 'संस्कार' इति ग मा० पा० ।
९. 'अञ्जन' पदं ग मातृकायां नास्ति ।
१०. 'वपन' पदं छ मातृकायां नास्ति ।
११. 'वपनं तु पुंस एव' इति छ मातृकायां नास्ति ।
१२. 'इति श्मश्रुपदसामानाधिकरण्यात् । 'अत्र' इति ग मातृकायामधिकः ।
१३. 'निदेशो' इति च मा० पा० ।
१४. 'वपनं फलिसंस्कारो विधीयते, मू० मा० पा० । 'वपनं पुंस एव केशश्मश्रुफलसंस्कारो' इति घ ङ मातृकापाठः ।
१५. 'तच्च केशश्मश्रुणो' इति ग मा० पा० ।
१६ 'साहित्यात्' इति घ मातृकापाठः ।
१७. 'च तत्सम्भवादिति ग मातृकायां नास्ति ।
१८. 'ब्रह्मचर्ये' इति ङ मातृकापाठः ।

पुरुषार्थं ब्रह्मचर्यविधौ क्रत्वङ्गतया पुनर्विहितम्, तदप्युभयोः । इदञ्च फलिसंस्काररूपमपि गोवलीवर्दन्यायेन पृथ[1]गुपात्तमिति बोध्यम् ।

यद्वा अ[2]नेन [यानि] कर्मफलानि विवक्षितानि, तान्युभयोर्भवन्तीति व्याख्याद्वयं तन्त्ररत्ने । वस्तुतस्त्वाशीः शब्देन फलानि ब्रह्मचर्यपदेन सर्वफलिसंस्कारोपलक्षणमिति युक्त[3]म् । इतोऽन्यत्तु यजमानसमाख्[4]या उक्तम् । विद्वान् यजमान एव करिष्यतीति सिद्धः स्त्र्यधिकारः । मृतभार्यस्य तु 'भार्यायै पूर्वमारिण्यै दत्त्वा अग्नीन् अन्त्यकर्मणि' इत्येतत् पक्षाश्र[5]यणेऽग्न्यभावादनधिकारः । यदा त्वग्नयः सन्ति, तदा वचनादग्निहोत्रेऽधिकारः । तदाहुरपत्नीकोप्यग्निहोत्रमाहरेदिति, न तु दर्शपूर्णमासादौ । तथा[6]-व्यवहाराभावादिति तन्त्ररत्ने ।

क्वचिच्छूद्रस्याप्यधिकारो, यथा 'वास्तुमध्ये चरुं निर्वपेत्, एतया निषादस्थपतिं याजयेत्' इति वाक्यान्निषादस्य । अत्र हि याजनस्य[7] वृत्त्यर्थत्वेन प्राप्तत्वाद्यागविधौ कर्मधारयसमासेन निषादाभिन्नः स्थ[8]पतिः स्वामी कर्म[9]कर्त्ता विधीयते । न च षष्ठीतत्पुरु[10]षाश्रयणेन निषादस्वामी त्रैवर्णिक एव विद्वत्ताग्निमत्ताभ्यां विधीयतामिति वाच्यम् । तत्पुरुषे पूर्वपदे षष्ठ्यर्थस्य लक्षणीयत्वेन कर्मधारयाद् दौर्बल्यात् । कर्मधारये हि द्वौ पदार्थावभेदसंसर्गेण भासेते इति न काचिल्लक्षणा । तेन कर्मधारयबलीयस्त्वान्निषाद

---

१. पृथग् स्थाने पुनरिति ख ग घ ङ छ मातृकासु दृश्यते ।
२. 'अनेक' इति मूलमातृकापाठः ।
३. 'इत्युक्तम्' इति च मातृकापाठः ।
४. समाख्यातमिति मू० मा० पा० ।
५. 'पक्षावलम्बे' इति छ मातृकापाठः ।
६. 'तथा चारम्भाभावादिति' इति मू० मा० पा० ।
७. 'स्यावृत्त्यर्थ इति ग मातृकापाठः ।
८. 'स्थपति' पदं मूलमातृकायां नास्ति ।
९. 'कर्मकर्त्ता' इति पदं ङ च छ मातृकासु नास्ति ।
१०. 'पुरुषेण' इति मू० मा० पा० ।

एव वचनात्तावदर्थज्ञानं सम्पाद्य लौकिकाग्नाविष्टिं करिष्यतीति शूद्राधिकारः। साक्षाद् वचनाभावे तु त्रैवर्णिकानामेव विद्वत्ताग्निमत्ताभ्यामिति सिद्धम्।

तत्राग्निहोत्रादावेकस्यैव सस्त्रीकस्याधिकारो, न द्वयोर्बहूनां वा सह। अधि[1]कारिसमर्पकस्वर्गकामादिपदेषु प्रधानपुरुषगतत्वेन लिङ्गवत्संख्याया अविवक्षितत्वेऽपि यजे[2]तेत्याख्यातोपात्तसंख्याया गुणभूतपुरुषगत्वेन विक्षितत्वात्। न चैवं स्त्रिया अपि निवृत्तिः। दम्[3]पत्योर्व्यासज्यवृत्तिकर्त्तृक[4]त्वात्। आख्यातेन च क[5]र्त्तृत्वगतसंख्याभिधानात्। क्वचित्कर्त्तृत्वाधिष्ठानगतसंख्याभिधानं तु लक्षणया। यथा 'क्षौमे वसानावग्निमादधीयाताम्' इत्यादौ। क्वचित्तु द्वयोः पुंसोरधिकारः। यथा कुलाय यज्ञे। तत्र[6] हि 'एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इति द्वन्द्वोपात्तयोः राजपुरोहितयोराख्यातेन कर्त्तृत्वद्वित्वाभिधानात्। ननु भिन्नकल्पयोः राजपुरोहितयोः कथं सहाधिकारः। तथाहि राज्ञो हि[7] नाराशंस एव द्वितीयः प्रयाजः, पुरोहितस्य तु ब्राह्मणस्य वसिष्ठशुनकात्रिवध्[8]यश्वगोत्रस्य स एव, अन्यगोत्रस्य तु तनूनपाद् द्वितीयः। तथा राज्ञः फलचमसो विहितः। 'स यदि राजन्यं वैश्यं वा याजयेत्, स यदि सोमं विभक्षयिषेन्न्यग्रोधस्तिभिनीराहृत्य ताः सम्पिष्य दधन्युन्मृज्य[9], तस्मै भक्षं प्रयच्छेत् न सोममिति। यद्यपि स्तिभिनीपदेन न्यग्रोधे लम्बमानं रज्ज्वाकारं वस्तु

---

१. 'अधिकारि' पदं मूलमातृकायां नास्ति।
२. 'जुहुयादित्यादिकर्त्तृगतैकत्वस्य विवक्षितत्वात्' इति ग छ मातृकापाठः।
३. दम्पत्योः इत्यारभ्मगतसंख्या पर्यन्तं ङ मातृकायां नास्ति।
४. कर्त्तृत्वादिति घ मातृकापाठः।
५. कर्त्रावगत° इति घ मातृकापाठः।
६. 'यद्' इति हि स्थाने मूलमातृकायाम्।
७. हि पदं घ मातृकायां नास्ति।
८. °'वध्यश्व'' इति ङ मा० पाठः। च मातृकायाञ्च 'वध्रय्श्व' इति पाठः।
९. ''मृज्यत्' इति मू० मा० पा०।

गृह्यते, तथापि वाक्यान्तरे न्यग्रोधोदुम्बरफलसमर्पकस्य विहितत्वात् फलचमस इत्युच्यते। ब्राह्मणस्य तु सोमचमसः। तथा[1] बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात्, [2]पार्थुरश्म्यं राजन्यस्येत्यादि। तत्रा[3]न्यतरकल्पानुष्ठानेनेतरस्य फलं सिध्येत्, वैगुण्यात्। न चोभयं कर्त्तुं शक्यम्, पञ्चप्रयाजा इत्याद्यनुवादविरोधात्। तेन समानकल्पयोरेकराजसम्बन्धिनोः पुरोहितयोरे[4]वात्राधिकारः। पुरोहिताविति कृतैकशेषस्य राजपदेन षष्ठीसमासः। कृततत्पुरुषस्य [5]वैकशेषाद् भिन्नराजसम्बन्धिनोर्द्वयोः। कृतकर्मधारयस्य चैकशेषाद् राज्ञोः स[6]तोः पुरोहितयोः। उच्यते—षष्ठीसमासे पूर्वपदे [7]षष्ठ्यर्थलक्षणेत्युक्तम्। द्वन्द्वे तु न काचिल्लक्षणेति बलवत्त्वात्तदाश्रयणम्। न चैकस्य राज्ञः पुरोहितद्वयमस्ति। 'पुरो[8]हितं वृणीते' इत्येक[9]वरणविधानात्। वरणकर्मीभूतस्यापि च पुरोहितस्य मानान्तरेणोपयोगात् रा[10]ज्ञा वृत्तेन पुरोहितेनेष्टं भावयेदिति वाक्यार्थकल्पनादुपादेयस्य विवक्षितमेकत्वम्। [11]तत्पुरुषोत्तरमेकशेषपक्षस्तु राजपदवैयर्थ्यादेव न न्याय्यः। राज्ञ एव पुरोहितवरणविधानात्। कर्मधारयोऽपि राज्ञः पौरोहित्यविध्यभावादापद्यपि ब्राह्मण[12]वृत्तिनिषेधात् वैश्यवृत्त्यभ्यनुज्ञानादयु[13]क्तः। तेन वचनाद्भिन्नकल्पयोरपि सहाधिकारः। क्वचिद् बहूनां सहाधिकारः। यथा द्वादशाहादि-

---

१. यथा बार्हस्पत्यमिति घ ङ मातृकयोः दृश्यते।
२. पार्थरश्ममिति मू० मा० पा०।
३. 'तन्नान्यतर°' इति मू० मा० पा०।
४. सत्त्वान्नाधि° इति च मा० पा०।
५. चैक° इति मू० मा० पा०।
६. 'सतोः' इति पदं ख ग ङ च छ मातृकासु नास्ति।
७. 'षष्ठ्यर्थ' इति पदं ग छ मातृकयोर्नास्ति।
८. 'वृणीतम्' इति घ मा० पा०।
९. एकस्येति छ मातृकापाठः।
१०. ज्ञानादिति मू० मा० पा०।
१२. तत्पुरुषेत्यारभ्य विधानादिति यावत् च मातृकायां नास्ति।
१३. ब्राह्मणस्येति मू० मा० पा०।
१४. 'उपयुक्तः' इति ख मा० पा०।

सत्रेषु । 'चतुर्विंशतिपरमाः सप्तदशावराः सत्रमासीरन्' इति द्वादशाहे श्रवणात् । तत्प्रकृतिकत्वाच्च गवामयनादीनाम् । यत्र[1] 'आसीरन्नुपेयुरिति चोदना, तत्सत्रम् । यत्र यजतिचोदना सोऽहीन इत्यहर्गणस्य द्वौ भेदौ । द्वादशा[2]हश्च 'द्वादशाहमृद्धिकामा उपेयुर्द्वादशाहेन प्रजाकामं याजयेत्' इति विधिद्वयात् द्विवि[3]धः सत्रसंज्ञोऽहीनसंज्ञश्च । तत्र सत्रात्मकद्वादशाह-प्रकृ[4]तीनि त्रयोदशरात्रादीनि सत्राणि अहीनात्मकद्वादशाहविकृतयश्च[5] । द्विरात्रादय एकादशरात्रपर्यन्ता अहीनाः । सत्रेषु बहुकर्तृकत्वं पूर्वोक्त-वाक्यात् । अहीनेषु [6]त्वेको द्वौ बहवो वा कर्त्तारः । कर्त्तॄणां चाधिकार इति बहूनामधिकारः । अत्र तु[7] समानकल्पानामेवाधिकारः वासिष्ठादीनां नाराशंस इत्यादिषु हि यदि वासिष्ठादयः कर्तृत्वेन विधीयेरन्, ततो वासिष्ठावासिष्ठैः क्रियमाणो नाराशंसो वासिष्ठकर्तृको जात एवेत्य-वैगुण्यात् सर्वेषां फलं सिद्ध्येत् । षष्ठीश्रुत्या तु वासिष्ठादीनां तु[8] प्राधान्या-वग[9]मात् । तादर्थ्येन नाराशंसादयो विधीयन्ते । तादर्थ्यञ्च वासिष्ठाभि[10]लषितफलजनकीभूतक्र[11]तूपकारद्वारेणेति प्रकरणेनावगमान्न[12] स्वतन्त्रादृष्ट-कल्पनाप्रसङ्गः । एवञ्च नाराशंसकरणेनैव वासिष्ठादीनां क्रतुफलं सिध्यति ।

१. 'यत्रासनोंपायि चोदना' इति मू० मा० पा० । 'यत्रारनुपेयुरिति ङ मा० पा० °नोपाधिचोदनात्सत्रमिति च मा० पा० । चोदनात्तत्सत्रमिति छ मा० पा० ।

२. द्वादशाहश्चेति पदं च मातृकायां नास्ति ।

३. 'द्विविधः' इति पदं मूलमातृकायां नास्ति ।

४. 'विकृतीनि' इति मू० मा० पा० ।

५. द्विरापश्चेत्यधिकः ङ मातृकायाम् ।

६. 'तु' पदं छ मातृकायां नास्ति ।

७. 'तु' स्थाने च पदं घ ङ छ मातृकासु दृश्यते ।

८. 'तु' पदं ग च छ मातृकासु नास्ति ।

९. 'अवगतेरिति' ख ग ङ मातृकापाठः ।

१०. 'अभिहितः' इति ग छ मातृकापाठः ।

११. 'ऋतु' इति छ मातृकापाठः ।

१२. नेति पदं च मातृकायां नास्ति ।

तनूनपात् क[1]रणेनैवेतरेषामिति नियमादेकपक्षाश्रयणे इतरेषां फलासिद्धे-रुभयोश्च संख्यादिविरोधेन[2] करणासम्भवात् समानकल्पानामेवाधिकारः।

तत्र च सत्रेषु ब्राह्मणानामेवाधिकारः। तेषु हि 'ये यजमानाः त एव ऋत्विज' इति जघन्य[3] ऋत्विक्शब्दलक्षितऋत्विक्कार्ये यजमानाः विधीयन्ते। प्रकृतौ च ज्योतिष्टोमे यजमानभिन्नकर्त्तृकत्वं ब्राह्मणकर्त्तृकत्वं चार्त्विज्यस्यावगतम्। यद्यपि तत्र[4] ब्राह्मणानां न विधिस्तथापि सर्वत्र ब्राह्मणानामेवार्त्विज्येऽधिकारः।

[5]षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः॥

मनु० १०।७६ इति स्मृतेः।

'ब्राह्मणानामिदं हविः सोम्यानां सोमपीथिनाम्' इत्यादिवैदिकलिङ्गा-[6]त्परेषां शेषभक्षणप्रतिषेधाच्च। एवञ्च[7]'ज्योतिष्टोमात्[8] सत्रेषु तथै-वातिदेशेनार्त्विज्ये प्राप्ते वचनेन भिन्नकर्त्तृकत्वे बाधितेऽपि[9] ब्राह्मण-कर्त्तृकत्वबाधे मानाभावात् ब्राह्मणा एव यजमानाः तत्कुर्युरिति तेषा-मेवाधिकारः। तत्रापि[10] वैश्वामित्राणां तत्समानकल्पानां चाधिकारः। 'वैश्वा[11]मित्रो होता' इति तत्र वचनात्। यद्यपि वासिष्ठो ब्रह्मेत्यपि तत्र

---

१. करणेन चेतरे' इति छ मातृकापाठः।
२. 'विरोधे' इति घ ङ मातृकापाठः।
३. जघन्य पदं ग छ मातृकयोर्नास्ति।
४. तत्रेति पदं छ मातृकायां नास्ति।
५. एषामिति च मातृकापाठः।
६. 'परेषामित्यारभ्य प्रतिषेधाच्च' इति यावत् च मातृकायां नास्ति।
७. चेतिमूलमातृकायां नास्ति।
८. 'मादित्यनन्तरं 'सच्च प्रतिग्रह' इति स्मृतेरित्यधिकः ङ मातृकायाम्।
९. 'बोधिते' इति ङ मातृकापाठः।
१०. 'तेष्वपि' इति मू० मा० पा०।
११. विश्वामित्रो' इति मू० मा० पा०।

वचनम्, तथापि 'य एव कश्चित् स्तोमभागानधीयीत, स एव वासिष्ठ' इति वाक्यान्तरेण वसिष्ठगोत्रत्वानादरकथनान्न तद्गोत्राणामधिकारः। तत्राप्याहिताग्नीनामेवाधिकारः। आधानविधिगता[1]त्मनेपदादाधातुरेवाधानसाध्याग्निसाध्यक्रतुसाध्यानि फलान्या[2]धातुरेव भवन्तीति गम्यते। तेन सर्वेषामग्निषु संसृष्टेषु कृतं सत्रं सर्वेषां फलदं भवतीति। श्रूयते च 'गृहपतेरेवाग्निषु निर्मथ्य नि[3]र्वपेरन्' इति। तेन सत्रेषु ब्राह्मणानां वैश्वामित्राणामाहिताग्नीनामधिकारः। ननु विश्वसृजामयनसंज्ञ[4]के सत्रे नायं नियमः सम्भवति। एवं हि तद्विधिः 'पञ्च पञ्चाशतस्त्रिवृत्तः[6] संवत्सराः पञ्चपञ्चाशतः पञ्चदशाः पञ्चपञ्चाशतः सप्तदशाः। पञ्चपञ्चाशत एकविंशाः' इति। अत्र त्रिवृत्सोम[7]कानां संवत्सराणां पञ्चाशतः पञ्चेत्यर्थः। तेने[8]दं सार्द्धशतद्वयम्। एवमुत्तरत्रापि। तेन सहस्रसंवत्सरसाध्यमेतत्सत्रं न मनुष्याधिकारं सम्भवति। तेषां 'शतायुर्वै पुरुष' इत्यायुर्नियमात्ः तेन येषां तावदायुः पुराणादिप्रसिद्धं गन्धर्वादीनां तेषा[9]मत्राधिकारः। यदि तेषामग्निविद्याभावान्नाधिकारस्तदा मनुष्या[10]णामेव रसायना[11]दिसम्पादिततावदायुषामस्तु।

१. आत्मनेपदी दाधातोरिति घ मा० पा०। ङ मातृकायाञ्च दा पदं नास्ति। च मातृकायां आधातुरेव' इति पदं न दृश्यते।

२. आधातुरेवेति पदं ग घ मातृकयोर्नास्ति।

३. निर्वपन्तीति च मातृकापाठः।

४. तक्ष्यमान कृत्यानामिति ख मा० पा०। वैश्वामित्रतत्समानकल्पनामिति ग घ छ मातृकापाठः।

५. 'संज्ञे' इति ङ छ मातृकापाठः।

६. ०वृत्तामिति छ मातृकापाठः।

७. स्तोमकानामिति ङ छ मातृकापाठः।

८. तदिदमिति च मातृकापाठः।

९. तेषामेवात्रा० इति' छ मातृकापाठः।

१०. मनुष्याणामेवेति ग छ मातृकयोर्नास्ति।

११. आदिपदं मूलमातृकायां नास्ति।

यद्वा पितृपुत्रादिकुलपरम्परया समापनीयम्। यद्वैतत् सत्रारम्भादेव तावदायुर्भवतीति कल्पनीयम्। नैतत्पक्षत्रयं युक्तम्। नहि रसायनस्यायुर्वृद्धिहेतुत्वं दृष्टं श्रुतं वा। कुलकल्पेनैकस्यापि फलं सिद्ध्येत्। यो[1]ह्यारभ्य समापयति, तस्य फलम्। समाप्तिरेव हि शास्त्रार्थः। आरम्भस्तु तदर्थापत्त्यैवाक्षि[2]प्यत इति न शास्त्रार्थो, गौरवात्। यदि च समाप्तेरारम्भं विनानुपस्थितेः [3]पूर्वोक्तकुलकल्पे वैकस्योभयासम्भवादुपस्थितारम्भस्य शास्त्रार्थता, तदोभयोरपि साङ्गीकार्या। आरब्धासमाप्तौ हि प्राक्रमिकोऽयं कापुरुष इति शिष्टाः विगर्हन्ते। दोषप्रायश्चित्ते च [4]श्रूयेते—'देवताभ्यो वा एष आवृश्च्यते यो यक्ष्ये 'इत्युक्त्वा न यजते, त्रैधा[5]तवीयेन यजेते'ति। समाप्तेरशास्त्रार्थत्वे हि नैतानि स्युः। अतएवारब्धं का[6]म्यं कर्म वीतायां फलेच्छायामवाप्ते वा [7]फलेऽवश्यं समापनीयम्। शिष्टविगर्हणार्थापत्तिकल्पितश्रुत्या पापक्षयोद्देशेन तत्समाप्तिविधानात्। लौकिकं तु गृहरथाद्यारब्धं न नियोगेन समापनीयम्। तत्र शिष्टवि[8]गर्हणाद्यभावात्। तेनारम्भसमा[9]प्त्योः शास्त्रार्थत्वात्कुलकल्पे चोभयासम्भवान्न कुल[10]कल्पः। तृतीयस्तु निष्प्रमा[11]णकत्वादेवायुक्तः। तर्हि नेयं सहस्रसंख्या संवत्सराणाम्, किन्तु

१. 'त्वारभ्य' इति च मा० पा०।

२. ०'वाक्षेप्स्यते' इति ग ङ छ मातृकासु दृश्यते।

३. पूर्वोक्तेत्यारभ्य ०सम्भवाद् पर्यन्तं ख घ ङ छ मातृकासु नास्ति। ग मातृकायाञ्च 'पूर्वोपस्थितारम्भस्य' इत्येव दृश्यते।

४. 'श्रूयते' इति मूलमातृकापाठः।

५. 'त्रैतधा०' ख मा० पा०।

६. काम्यमिति पदं च मातृकायां नास्ति।

७. 'कामे' इति ख घ ङ मातृकासु पाठः।

८. विगानाद्य० इति मू० मा० पा०।

९. 'समाप्तौ शास्त्रार्थत्वान्न' इति च मातृकापाठः।

१०. कुलपदं मूलमातृकायां नास्ति।

११. निष्प्रमाणत्वा० इति घ ङ मातृकापाठः।

यजमानानाम् । पञ्चपञ्चाशत्संख्या[1]काः [2]यजमानास्त्रिवृत्स्तोमकं सवत्सरं कुर्यु[रि]त्यर्थः । एवमुत्तरत्रापि । तेन चतुः संवत्सरमिदं सत्रं सहस्रयजमान-साध्यमिति । नैवम्[3] । संवत्सरसामानाधिकर[4]ण्येन श्रुतायाः संख्यायाः । यजमानविशेषणत्वायोगात् । 'चतुर्विंशतिपरमाः सप्तदशावरा' इति श्रुतसंख्यावाधापत्तेश्च । तर्हि संवत्सरशब्द[5] एव जघन्ये गौणः कल्प्यताम् । तत्र 'यो वै मासः संवत्सरः । इति क्वचिन्मासे संवत्सरशब्दप्रयोगादत्रापि तत्पर एवास्तु । तत्रापि तु मनुष्याणामशक्तिस्तुल्या । न ह्यनुपनीतस्य कृता-ध्ययनस्य कृतविवाहस्य कृताधानस्य च पुनः सहस्रमासं[6] जीवनं सम्भवति । तर्हि 'संवत्सरप्रतिमा वै द्वादशरात्रय' इति क्वचिद् प्रयोगाद् द्वादशरात्रि-परोऽस्तु । तदपि संवत्सरशब्दस्य द्वादशरात्रिषु प्रयोगाभावात् । प्रत्युत तत्प्रतिमा[7]नत्वेन भेद[8]कीर्त्तनादयुक्तम् । तस्मादस्मिन् सहस्र[9]संवत्सरे सत्रे मनुष्याधिकारासम्भवादगत्या गन्धर्वादीनामेवाधिकार एष्ट[10]व्य इति न पूर्वोक्तो नियमो युक्त इति ।

---

१. 'संख्या' इति मू० मा० पा० ।

२. यजमानानामेकं संवत्सरं कुर्युरिति छ मातृकापाठः ।

३. मैवमिति ख ग घ ङ छ मातृकापाठ. ।

४. '०धिकरण्येऽपि न' इति ख मा० पा० ।

५. 'शब्दे जघन्य' इति ख मा० पा० । 'शब्दो जघन्यत्वाद् गौणः' इति ग ङ छ मा० पा० । केवलमेव पदं घ मातृकायां नास्ति । च मातृकायाञ्च तद् योग्यो गौणः' । इति पाठः ।

६. '०मासजीवन' इति च मा० पा० ।

७. ०प्रतिमात्वेन' इति घ च छ मातृकापाठः ।

८. ०सङ्कीर्त्त० इति ख ङ छ मातृकापाठः ।

९. सहस्रसंख्येति ङ मा० पा० ।

१०. 'एव' इत्येव च मातृकायाम् ।

अत्रोच्यते, मनुष्याधिकारस[1]र्वशास्त्रप्रायपठितस्यास्य शास्त्रस्य न गन्धर्वाद्यधिकार[2]त्वकल्पनमुचितम् । अग्निविद्या[3]विहीनत्वात्तेषां न सामर्थ्यमप्य[4]स्ति । तेनायं सह[5]स्रसंवत्सरशब्द एव त्रिवृदादिशब्दसामानाधिकरण्यात् दिवसेषु गौणः कल्प्यते । द्वादशाहे हि त्रिवृदादिशब्दास्तत्स्तो[6]मकदिवसवाचित्वेन दृष्टाः । इहापि तत्सामा[7]नाधिकरण्यात् संवत्सरशब्दो दिवसपरः कल्प्यते । ते[8]न विहितो मनुष्याधिकार इति ब्राह्मणाधिकारकाणि सत्राणि ।

क्वचित्तु क्षत्रियस्यैवाधिकारः । यथा—'राजा राजसूयेन स्वाराज्यकामो यजेते'ति विहिते राजसूये राजपदञ्च[9] रूढ्या क्षत्रियत्वजातिवाचि-देशविशेषे प्रसिद्धम् । त[10]स्येदं कर्मेति च प्रजापालनादि राज[11]न्यपदेनोच्यते । 'कर्मणि' पा० सू० ५.१.१२४ इत्यधिकृत्य 'प्रत्यन्तपुरोहितादिभ्यो यक् पा० सू० ५.१.१२८ इति स्मरणात् राजपदस्य च[12] तत्र पाठात् । नन्वार्यावर्त्तदेशे राज्यपदं प्रजापालना[13]दिवाचि, तत्कर्तरि त्रैवर्णिकेऽपि

१. सर्वपदं छ मातृकायां नास्ति ।

२. 'अधिकार' इति घ० ङ मातृकयोः दृश्यते ।

३ 'वि' इति घ ङ छ मातृकासु नास्ति ।

४. 'अपि' पदं घ ङ मातृकयोर्नास्ति ।

५. 'सहस्र' इति पदं ख च मातृकयोर्नास्ति ।

६. 'स्तोम' इत्येव ग घ मातृकयोः दृश्यते ।

७. 'समानाधिकरण' इति छ मा० पा० ।

८. 'तेनाविहित' इति ख ग छ मा० पा० । ङ मातृकायाञ्च 'तेनाभिहित' इति पा० ।

९. चेति मूलमातृकायां नास्ति ।

१० 'सस्य' इति ङ० मा० पा० ।

११ मूलमातृकायां राजशब्दः वर्त्तते । ग ङ मातृकयोश्च राज्यशब्दः दृश्यते ।

१२. च पदं घ ङ मातृकयोर्नास्ति ।

१३. °'नादिषु' इति ग छ मातृकापाठः ।

राजपदं प्रयुज्[1]यते, न क्षत्रिये एव । अतस्त[2]दनुरोधेन देशान्तर[3]-प्रसिद्धिर[4]नादर्त्तव्या । स्मृतिरपि साधुत्वानुशासनमात्रार्थेति राज्यपदं रूढमेव [5]गोशब्दवत् । तत्कर्त्तरि [6]च प्रवर्त्तमा[7]नं राजपदं राजसूये त्रैवर्णिकानामधिका[8]रं बोधयति । अत[9]एव तदन्तर्गतायामे[10]वेष्टौ 'आग्नेयमष्टाकपालं निर्वपति, हिरण्यं दक्षिणे' त्यादिवाक्यविहितायां त्रैवर्णिकाधिकारः श्रूयते । 'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधाय आ[11]हुतिं हुत्वा तमभिघा[12]रयेत् । यदि राजन्यं ऐन्द्रम्, यदि वैश्यो वैश्वदेवमि'ति । तस्मात्त्रैवर्णिका[13]धिकारो राजसूय इति ।

उच्यते, न राज्यकर्त्तरि राजशब्दः 'राजानमभिषेचयेद्' इति ह्यभिषेकात्प्रागेव स[14]म्प्रयुज्यते । न च तदा राज्यकर्त्तृत्वमस्ति, [15]अभिषेक-निमित्तत्वात्तस्य । यदि च राजपदमप्रसिद्धार्थं स्यात्तदाऽभिषेकेण राजानं भावयेदिति । यूपादिवत् वाक्यार्थविप[16]र्ययोऽपि [17]कल्प्येत, तत्तु क्षत्रिय-

---

१. 'प्रयुञ्जते' इति छ मा० पा० ।
२. आर्यप्रसिद्ध्यनुरोधेनेत्यर्थः । इति छ मातृकाप्रान्तटिप्पणी ।
३. प्रवृत्तिरिति ख मा० पा० ।
४. 'द्धिर्नाद० इति ग मा० पा० ।
५. 'सोम' इति मू० मा० पा० ।
६. 'अपि च' इति ख मातृकापाठः ।
७. '°मानं न' इति ग मा० पा० ।
८. 'अधिकारः श्रूयते' इति ग मा० पा० । च मातृकायाञ्च 'बोधयति' इति नास्ति ।
९. 'अतएवेत्यारभ्य श्रूयते' इति यावत् ग छ मातृकयोर्नास्ति ।
१०. 'अत्रेष्टौ' इति घ मातृकापाठः ।
११ आहुतिशब्द. ख ग घ च मातृकासु वारद्वयं पठितः ।
१२ 'अभिधारभेः । इति ङ मा० पा० ।
१३. त्रैवर्णिकानामिति घ ङ मातृकयोः दृश्यते ।
१४. 'सम्' इति घ ङ मातृकयोर्नास्ति । छ मातृकायाञ्च 'स प्रयु०' इति पाठः ।
१५. 'अभिषेक' इत्यारभ्य 'तस्य' पर्यन्तं ग घ मातृकयोर्नास्ति । छ मातृकायाञ्च '°षेकेन' इति पाठः ।
१६. 'विषयोऽपि' इति च मा० पा० ।
१७. 'कल्पेत' इति मू० मा० पा० ।

त्वजातौ द्रविडादि[1]देशे प्रसिद्धम् । तामेवाभिषेकेण सम्वध्नाति व्याकरण-[2]स्मृतिः । एवं स्मृतिरप्यनुगृह्यते । यस्त्वार्यावर्त्तदेशे ब्राह्मणादौ प्रयोगः । स[3] राज्यकर्त्तृत्वसामान्यादौपचारिकः, न तु तावता श्रुतिस्मृत्योरन्यथा-करणमुचि[4]तम् । तेन[5] राजसूये क्षत्रियस्यै[6]वाधिकारः । एवञ्चा[7]वेष्टौ ब्राह्मणादिश्रवणं तत्प्राप्त्यर्थम् । यदिशब्दश्च रु[8]च्याध्याहारादिना योज[9]यः । 'यदि रोचेत[10] ब्राह्मणो यजेते'ति ब्राह्मणकर्त्तृकं प्रयोगान्तरं राजसूयबहि-र्भूतमे[11]वेष्टिर्विधीयते । एवं राज[12]न्यकर्त्तृकं वैश्यकर्त्तृकमपि । तस्य फलं 'एत[13]या अन्नाद्यकामं याजयेदि'ति वाक्येन विधीयत इति सिद्धो राजसूये क्षत्रियाधिकारः । वैश[14]यस्तोमे वैश्यस्यै[15]वाधिकारः 'वैश्यो वैश्यस्तोमेन यजेते'ति वचनादसति विशेषवचने पूर्वोक्तत्रैवर्णिकानामेवाधिकारो वैदिक-कर्मस्विति संक्षेपः ।

## प्रयोगविधिनिरूपणम् ।

एवमुत्पन्नस्य विनियुक्तस्य फलविशेषसम्बद्धस्य च कर्मणः साङ्गस्य

---

१. 'देश' इति घ मा० पा० ।
२. व्याकरणस्मृतिरिति ख ग घ ङ च छ मातृकायां नास्ति ।
३. 'स' इति पदं घ ङ मातृकयोर्नास्ति ।
४. 'युज्यते' इति छ मा० पा० ।
५. 'तेन स' इति ख मा० पा० ।
६. 'एव' पदं घ ङ मातृकयोर्नास्ति ।
७. 'चा' इति मूलमातृकायां त्रुटितः ।
८. 'च्य' मात्रं च मातृकायां नास्ति ।
९. 'प्रयोज्यः' इति ग छ मातृकयोर्दृश्यते ।
१०. 'रोचते' इति ग घ ङ मातृकापाठः ।
११. °मेवेष्टेः' इति ख घ च मातृकापाठः । 'अवेष्टेः' इति घ मा० पा० 'अवेष्टिष्त्वेव' इति च मातृकायाम् ।
१२. राजन्यकर्त्तृकमिति ग च छ मातृकासु नास्ति ।
१३. 'एतस्या' इति ख मा० पा० ।
४१. 'वैश्य° इत्यारभ्य °वाधिकारः' इति यावत् च मातृकायां नास्ति ।
१५. एव पदं घ छ मातृकयोर्नास्ति ।

प्रयोगं बोधयन् यो[1] विधिः [अस्ति] स प्रयोगविधिः। यथा पूर्वोक्तोऽधिकारविधिरेव भावनायाः फलविशेषसम्बन्धोत्तरं कथम्भावाकाङ्क्षायामङ्गवाक्यैकवाक्यतामापन्नः साङ्गप्रधानप्रयोगमनुष्ठापयति। तदित्थं साङ्गं प्रधानं कुर्याद्, अनेन क्रमेणास्मिन् काले देशे[2] एते च कर्त्तारः यावता कालेन विना न भवति, तावता कालेन कुर्यान्नान्येन व्यवदध्यादिति। तत्र प्रधानं क्वचिदुत्पत्तिवा[3]क्यप्राप्तमेवानुष्ठाप्यते। यथा—अग्निहोत्रादौ। क्वचित्तेनैव [4]प्राप्यते। यथा 'उद्भिदा यजेत पशुकाम' इत्यादौ। अत्र ह्युत्पत्तिविनियोगाधिकारप्रयोगबोध[5]नाच्चातुर्विध्यमप्यस्ति। अङ्गानि तु तत्त[6]द्विधिप्राप्तान्येवानुष्ठाप्यन्ते। तेनाङ्गविधीनामनुष्ठापनशक्तिर्विलु[7]प्यते। अङ्गविधयश्च प्रकृतिकर्मप्रयोगविधिषु श्रुता एवैकवाक्यतां भजन्ते। विकृतिकर्मप्रयोगविधिषु तु केचिच्छ्रुताः। केचि[8]दतिदेश[9]वाक्येनोपस्थापिताः।

## अतिदेशस्वरूपं तद्भेदनिरूपणम्।

अतिदेशो नाम—अन्य[10]त्र श्रुता[11]नामङ्गानामन्यत्र तदतिदेशनम्।

उक्तञ्च—

---

१. 'यो' इत्यारभ्य 'स' इति यावत् ग घ ङ छ मातृकासु नास्ति।

२. देशे 'इत्यारभ्य कर्त्तारः' इति यावत् च छ मातृकयोर्नास्ति।

३. 'वाक्यम्' इति घ ङ मा० पा०।

४. 'प्राप्यतेऽनुष्ठाप्यते च' इति मूलमातृका तथा ग छ मातृकापाठः।

५. बाधनादिति च मातृकापाठः।

६. एकमेव तत् पदं दृश्यते मूलमातृकायाम्।

७. 'वि' इति मूलमातृकायां नास्ति।

८. 'क्वचिदतिदेशेनोपस्थिताः। इति ग छ मातृकापाठः।

९. 'वाक्येन' इति पदं ख घ ङ मातृकासु नास्ति।

१०. 'अङ्गानामन्यत्र कीर्त्तितानामतिदेशनम्' छ मातृकावाक्यविन्यासः।

११. 'कीर्त्तितानामतिदेशेन' इति ग मातृकापाठः।

**प्राकृतात्कर्मणो यस्मात्तत्समानेषु कर्मसु ।**

**धर्मप्रदेशो येन स्यात्सोऽतिदेश इति स्मृतः ॥** शा० भा० ७-१-१२ इति ।

स त्रिविधः—वचनातिदेशः, नामातिदेशश्चोदनालिङ्गातिदेशश्चेति । आद्यो यथा—'इ[1]षुणाभिरन् यजेते'ति इषुसंज्ञ[2]कयागं विधाय 'इषुं विष्टुतिं करोति, स[3]प्ताहं साम भवती'त्यादीनि चाङ्गानि विधाय श्रुतम् 'समानमितरच्छ्येने'ति । अनेन श्येने यानि विशेषतो[4] विहितान्यङ्गानि कण्टकविनोदनादीनि तानीषावतिदिश्यन्ते । तथा चातुर्मास्येषु वैश्वदेवपर्वणि आग्नेयादीन् पञ्चयागान् विधाय वरुणप्रघाससंज्ञकद्विती[5]ये पर्वणि तानेव विधाय श्रुतम्—'एतद्ब्राह्मणान्येव पञ्च हवींषि यद् ब्राह्मणानीतराणि' इति । अनेन ब्राह्मणशब्दोक्तानि पूर्वपर्वस्थहविः सम्बन्धीन्यङ्गवाक्यान्यर्थवादवाक्यानि चात्रा[6]तिदिश्यन्ते । तथा द्वितीयपर्वणि 'ऐन्द्राग्न एकादशकपालः, काय [प्रजापतये] एककपालश्च श्रुतः । साकमेधसंज्ञके[7] तृतीये पर्वणि 'ऐन्द्राग्न एकादशकपालो वैश्[8]वदेव कर्मणः [पर्वणः] एककपालो विहितस्तत्र श्रुतम्—'एतद् ब्राह्मण ऐन्द्राग्न, एतद् ब्राह्मणः एककपालो, यद् ब्राह्मण इतरश्चे'ति । अत्र प्राग्वत् । द्विती[9]यस्तु कौण्डपायिनामयने सत्रे श्रुतम्—'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति, मासं दर्शपूर्णमासाभ्यां यजेते'त्यादि । अत्र होमादीनि नित्याग्निहोत्राद्यपेक्ष[10]या । कर्मान्तराणीति वक्ष्यामः । तेषामग्निहोत्रादिशब्दौ न नाम 'अन्याय्यश्चानेकार्थत्वमि'

---

१ 'इषुणा' इत्यारभ्य यजेत पर्यन्तं च मातृकायां नास्ति ।
२. संज्ञमिति मूलमातृकायां ख मातृकायाञ्च ।
३. सप्तानामिति मूलमातृकापाठः ।
४. 'विशेषतोऽन्यवि०' इति घ ङ मातृकयोः पाठः ।
५. 'तीये पर्व०' इति घ छ मा० पा० ।
६. अत्रेति पदं ख घ ङ छ मातृकासु नास्ति ।
७. 'संज्ञकतृतीय' इति घ ङ मातृकापाठः ।
८. 'वैश्वदेवेत्यारभ्य एककपालो' इति यावन्मूलमातृकायां नास्ति ।
९. 'द्वितीयो यथा' इति ग छ मातृकापाठः ।
१०. °पेक्षायामिति च मातृकापाठः ।

मी० सू० १-३-२६ति न्यायात् । प्रवृत्तिनिमित्तभूताग्न्यादियोगाज्ञानाच्च, किन्तु नित्याग्निहोत्रा[1]दिध[2]र्मातिदेशा[3]र्थम् ।

एवं 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते'त्यत्र' यः पुरोधाकामः स्यात्स बृहस्पतिसवेन यजेते'त्येतद् वाक्यविहिताद्[4] बृहस्पतिसवात् कर्मान्तरं वाजपेयाङ्गं विधीयते। तत्र बृहस्पतिस[5]वशब्दः पौरोहित्या[6]र्थक, बृहस्पतिसवधर्मातिदेशार्थः। यत्तु यौगिकं नाम ना[7]तिदेशकम् । यथा— द्वादशाहे प्रायणीयसंज्ञमाद्यमहः । गवामयनेऽपि तत्संज्ञमेवाद्यम् । तत्र प्रायणीयशब्दो न द्वादशाहिकप्रायणीयधर्मातिदेशार्थः। प्रयन्त्यारभन्तेऽनेनेति । यथा योगेन तत्र प्रवृत्तस्तथा गावा[8]मयनिकेऽप्याद्येऽह्नि योगेनैव प्रवृत्त्युपपत्तेः । तृतीयस्त्वतिदेशश्चोदनागतेन लिङ्गेन तद[9]र्थगतेन वा सामा[10]न्येन कल्प्यमानः सौर्ये पूर्वमुक्तः। तत्र हि निर्वपतिश्चोदनागतं लिङ्गम् । आग्नेये 'चतुरश्चतुरो मुष्टीर्निर्वपती'ति श्रवणादेकदैव[11]त्यत्वमौषधद्रव्यकत्वं चार्थगतं लिङ्गम् । एवं द्विदेवत्येषु 'आ[12]ग्नावैष्णवमेकादशकपालं निर्वपेत्' इत्यादिष्व-ग्नीषोमीयधर्मातिदेशः चोद[13]नागतान्निर्वपति सामान्यादर्थगतद्विदेवत्यत्वौषध-

---

१. आदि पदं ग छ मातृकयोर्नास्ति ।
२. °नामाति° इति च मातृकापाठः ।
३. °[illegible]देशार्थः इति मूलमातृकायां च मातृकायाञ्च ।
४. विहितबृहस्पति° इति घ ङ मातृकापाठः ।
५. 'सव' इति पदं ङ छ मातृकयोर्नास्ति ।
६. °हित्यार्थ' इति छ मा० पा० ।
७. न तदति° इति ख ग घ ङ छ मातृकापाठः ।
८. 'गवामयने' इति ख घ ङ मातृकापाठः । 'गवामयनिके' इति मू० मा० पा० ।
९. 'तदर्थेन' इति ख मा० पा० ।
१०. 'समानेन' इति मू० मा० पा० ।
११. 'देवताकन्व' इति ख घ ङ मातृकापाठः ।
१२. 'चाग्ना°' इति मू० मा० पा० ।
१३. 'चोदनागतादित्यारभ्य सामान्यात्' इत्यस्य स्थाने 'द्विदेवत्यत्वेनाधिकसाम्यात्' इति ग्र मातृकापाठः । घ मातृकाया 'निर्वपतिसमानार्थक' इति पा० । चोदनेत्यारभ्य 'औषध' पर्यन्तं ङ मातृकायां नास्ति ।

द्रव्यकत्वसामान्यात्। 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्' इत्यादिषु त्वैन्द्रा[1]ग्न-धर्मातिदेशः। इन्द्राग्निदेवत्यत्वेनाधिकसा[2]म्यात्। 'सर[3]स्वतीमाज्यस्य यजेते'त्यादिष्वाज्य[4]द्रव्यकेषूपांशुयाजधर्मातिदेशः। आज्यद्रव्यकत्वसा[5]मान्यात्। 'दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यमि'ति वाक्यविहित[6]यागद्रव्ये [7]दधनि ऐन्द्रदधिधर्मातिदेशः। दधिद्रव्यकत्व-सामान्यात्। मधूदकघृतेषूपांशुयाजधर्मातिदेशः। द्रव्यगतद्रव्य[8]त्व-सामान्यात्, वर्णसामान्याच्च। पयसि ऐन्द्रपयो धर्माणा[9]मतिदेशः, पयोद्रव्यकत्वसामान्यात्। धा[10]नातण्डुलेष्वाग्नेयधर्मातिदेशः, औषधद्रव्य-कत्वसामान्यात्। देवता[11]सामान्याच्च द्रव्यसामान्यं बलीयः। देवता हि शब्दद्वारेण कर्मणि समवैति, न स्वरूपेण। द्रव्यं तु स्वरूपेणैवेत्यन्तरङ्गत्वात् तत्सामान्यस्य शीघ्रोपस्थितेः। यथा 'आग्नेयं पय' इत्यत्र ऐन्द्रपयोधर्माणा-मतिदेशो, नाग्नेयधर्माणाम्। एवञ्च दर्शपूर्णमासाख्यषड्यागधर्माणां सर्वा-स्विष्टिषु चोदनालिङ्गसामान्येनातिदेशो द्रष्टव्यः। यासु तु दार्शपौर्णमासि-काङ्गं पुनः श्रुतिरनन्या[12]र्थास्ति तासु नातिदेशः। क्लृप्तोपकाराङ्गविधिनैव नैराकाङ्क्ष्यात्। यथा पूर्वो[13] गृहमेधीये 'आदित्यः प्रायाणीयः पयसि

१. °द्राग्नस्य' इति ख ङ मातृकापाठः।
२. सादृश्यादिति ग छ मातृकापाठः।
३. सरस्वतीत्यारभ्य सामान्यात्पर्यन्तं ग मातृकायां नास्ति।
४. 'आज्यस्य' ङ मा० पा०।
५. सादृश्यादिति छ मातृकापाठः।
६. विहितस्येति मूलमातृकापाठः।
७. दधनि ... सामान्यादित्यधिकः घ मातृकायाम्।
८. 'वर्णसामान्याधिक्यादिति ख घ ङ च मातृकासु दृश्यते। ग छ मातृकायां 'सामान्याधिक्यात्' वर्त्तते, परन्तु 'वार्गसामान्यादि'ति नास्ति।
९. धर्मातिदे' इति ख घ ङ मातृकापाठः।
१०. 'धाना' इत्यारभ्य सामान्यादिति यावत् ख घ ङ च मातृकासु नास्ति।
११ सादृश्यदेवतेति ङ मातृकापाठः।
१२. 'श्रुतिरन्यार्था' इति घ मातृकापाठः। ख मातृकायाञ्च 'अन्यार्थामितरसु नातिदेशः' इति पाठः।
१३. 'पूर्वोक्तेषु' इति ख मातृकापाठः।

चरुरि'ति विहितायां प्रायागीयायां शक्यता [?] वत्ता प्रायागीया सन्तिष्ठत इति शक्यतावत्ताङ्गरीतिपुनःश्रवणात् । 'आतिथ्यायामिडान्तातिथ्या सन्तिष्ठत' इतीडान्तङ्गरीतिः, पुनःश्रवणात् । 'उपसत्सु स्रुवेणाधारमाधारयतीत्याघारपुनः श्रवणात् । अवभृथे च 'अप्सुमन्तावाज्यभागौ यजति' इत्याज्यभागपुनःश्रवणात् । न चात्राप्सुमत्ता गुणार्थत्वादन्यार्थत्वम् । तस्य पाठप्राप्तमन्त्रलिङ्गादेव प्राप्तेः । तेनैता अपूर्वा इष्टयः । एवमग्नीषोमीयपशुयागे दर्शान्तर्गतपयोयागधर्मातिदेशः साक्षात् प[1]शुप्रभवद्रव्यकत्वसामान्यात् । 'एकादश प्रयाजान् यज[2]ति' इत्यादिभिः प्रयाजाद्यनुवादेन गुणविधानाच्च । विशिष्टविधौ च गौरवात् । त[3]था 'अग्नीषोमीयपशुयागधर्माणां सवनीयादिसर्वपशुयागेष्वतिदेशः । पशुद्रव्यकत्व[4]सामान्यात् । पश्वेदशिन्यां च सवनीयधर्माणां द्वैरश[5]न्यसामान्यात् 'द्वे द्वे रशने यूपमृच्छत' इति ह्युभयत्र श्रव[6]णात्, सुत्याकालत्वसामान्याच्च । पश्वेकाशिनी धर्माणां च[7] सर्वपशुगुणेषु प्राजापत्यादिषु, पशुगणत्वसामान्यात् । यत्र तु पाशुकाङ्गपुनःश्रुतिर[8]न्यार्था सोऽपूर्वः । यथा—त्वाष्ट्रं पात्नीवतमालभेते'ति विधाय 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ती'ति श्रुतम् । तत्र पर्यग्निकरणा[9]न्ताङ्गरीतिपुनः श्रवणान्नोतराङ्गातिदेशः । तेन विशस[10]नाद्यभावादुत्सर्गस्यार्थप्राप्तेरनुवादः । एवं[11] 'ईशानाय परस्वत आलभेतेति विधाय 'पर्यग्निकृता-

---

१. पशुपदं ख मातृकायां नास्ति ।
२. यजतीत्यनन्तरं 'एकादशानुयाज़ान्यजती' त्यप्यधिकः ख घ ङ मातृकासु ।
३. तथेति पदं मूलमातृकायां नास्ति ।
४. 'त्व' इति ख मातृकायां नास्ति ।
५. द्वै° न्य' इति मू० मा० पा० ।
६. विधानादिति ख मा० पा० ।
७. चेति पदं घ ङ मातृकयोर्नास्ति ।
८. '°रनन्यर्था' इति ख घ ङ मातृकापाठः ।
९. 'कृताङ्ग' इति ख मातृकायां तथा 'करणङ्ग' इति घ ङ मातृकयोः दृश्यते ।
१०. 'विनाशा°' इति ख मा० पा० ।
११. एवमित्यारभ्य प्राग्वदिति यावदग्रे 'संस्थापनेनोपचारः' इत्यनन्तरं ख ग ङ ठ मातृकासु पठितः वर्त्तते ।

नाराण्यानुत्सृजती'ति श्रुतमत्रापि प्राग्वत्। य[1]त्र' 'आज्येन शेषं संस्थापयती'ति श्रुतम्, तत्राज्यद्रव्यकं कर्मान्तरं विधीयते, पशुयागाङ्गत्वेन। पात्नीवतपदानुषङ्गेण च स याग एव। आज[2]यं पात्नीवतं करोतीत्यर्थः। तस्यान्तेऽनुष्ठानाच्छेषसंस्थाप[3]नेनोपचा[4]रः । सर्वसोमयागेषु च ज्योतिष्टोमधर्माणामव्यक्तत्वसामान्यात्। अव्यक्तत्व[5]श्च—स्वार्थचोदितदेवताराहित्यम्। 'ऐन्द्रवा[6]यवं गृह्णाति' इत्यादिवाक्यैर्ग्रहणाङ्गत्वेन विहि[7]ताः देवताः स्वसम्बन्धिनं यागमपेक्षन्ते। 'सोमेन यजेते'ति विहितोऽ[8]पि यागो[9] देवतामपेक्षन्ते। तयोर्नष्टाश्वदग्धरथवत् सम्बन्धो भवति, न तु यागाङ्गत्वेन देवताविधानमस्तीत्यव्यक्तो ज्योतिष्टोमः। त[10]था विश्वजिदादयोऽपीति सामान्यम्। द्वादशाहेऽपि ज्योतिष्टोमधर्माः, तत्सामान्यात्। द्वादशाहधर्माश्चेतरेष्वहर्गणेषु, अहर्गणत्वसामान्यात्। तत्रापि सत्रात्मकद्वादशाहधर्माः सत्रेषु त्र[11]योदशरात्रादिषु गवामयना[12]दिषु। अहीनात्मकद्वादशाहधर्माश्चाहीनेषु द्विरात्राद्येकादशरात्रपर्यन्तेषु, अधिकसामान्यात्। गवामयनधर्माश्च संवत्सरसा[13]ध्येषु सत्रेषु संवत्सरसत्रत्व-

---

१. 'यत्तु' इति मूलमातृकापाठः।
२. 'आज्य' पदं घ ङ मातृकयोर्नास्ति।
३. °पनोपचारः' इति मूलमातृकापाठः।
४. मूलमातृकायां '°प्राप्तेरनुवादः' इत्यनन्तरमेव 'एवमित्यादिः प्राग्वदित्यन्त' पठितः।
५. 'अव्यक्तत्वस्यार्थ°' इति ङ मातृकापाठः।
६. °वायव्यं' इति ङ मातृकापाठः।
७. 'विधितः' इति च मातृकापाठः।
८. अपि पदं मूलमातृकायां नास्ति।
९. 'यागोऽपि' इति मू० मातृकापाठः।
१०. 'तथाविश्वजिता यजेतेत्यादिवाक्यविहितस्यापीति सामान्यम्' ख मातृकापाठः।
११. 'त्रयोदश' इत्यारभ्य 'मयनादिषु' इति पर्यन्तं च मातृकायां नास्ति।
१२. '°नादिषु' इत्यस्य स्थाने 'नान्तेषु' इति घ मातृकापाठः।
१३. 'मध्येषु' इति च मातृकापाठः।

सामान्यात् । एवमयं चोदनालिङ्गातिदेशः । एवं त्रि[1]विधेनातिदेशेन प्रथमं प्राकृताङ्गजन्योपकाराः प्राप्यन्ते । विकृतेस्तदाकाङ्क्षत्वात् । तत्पृष्ठभावेन च तत्साधनान्यङ्गान्यतिदिश्यन्त । तत्पृष्ठभावेन च[2] तद्विधायकानि शास्त्राणीत्येवम[3]तिदेशोपस्थापिताङ्गविध्येकवाक्यतापन्नो विकृतिप्रयोगविधिस्तदुपस्थापितान्यङ्गान्यनुष्ठापयति । तदुक्तं भाष्ये—'चोदक उत्पादयति प्रापयति च प्रापितानभिसमीक्ष्य प्रयोगवचनउपसंगृह्णाती'ति । प्राकृ[4]तोपकारपृष्ठभावेन च प्राप्तान्यङ्गान्यनुष्ठापयन् यथा प्राकृ[5]तोपकारार्थता भवति, तथानुष्ठापयति, न त्वप्राकृतकार्यार्थतया । तत्सिद्धये च क्वचिदूहं बोधयति ।

## ऊहनिरूपणम् ।

ऊहो नाम कार्यवशेनान्यथाभावः । तदुक्तम्—

**प्राकृतस्थानपतितपदार्थान्तरकारितः ।**
**[6]ऊहः प्रयोगो विकृता[7]वूह्यमानतयोदितः ।।**

न्या० मा० ६-१-१ इति ।

स च[8] त्रिविधः—मन्त्रोहः, सामोहः संस्कारोहश्चेति । आद्यो यथा—'अग्नये जुष्टं निर्वपामी'ति मन्त्रः सौर्येऽतिदेशेनापू[9]र्वीयसूर्यदेवताप्रकाशनरूपोपपकारार्थतया प्राप्तः । तत्र चा[10]पूर्वीयदेवता सूर्यः, स च नाग्निपदेन प्रकाशयितुं शक्य[11] इत्यग्निपदे निवृत्ते विधिगतसूर्यपदप्रक्षेपेण 'सूर्याय

---

१. त्रिपदं घ मातृकायां नास्ति ।
२. च पदं ङ मातृकायां नास्ति ।
३. 'अतिदेश' इत्यारभ्य 'अङ्गानि' पर्यन्तं ख ङ मातृकयोर्नास्ति ।
४. 'प्रकृतो°' इति मूलमातृकापाठः ।
५. 'प्रकृतोप°' इति मूलमातृकापाठः ।
६. 'ऊहो विकृतिस्था सा' इति ख मातृकापाठः ।
७. 'विकृत' इति मूलमातृकापाठः ।
८. चेति पदं मूलमातृकायां नास्ति ।
९. 'अपूर्वीय' इति मूलमातृकायां नास्ति ।
१०. 'नापूर्वीय' इति ख मातृकापाठः ।
११. 'शक्यतं' इति ग च मातृकयोः पाठः ।

जुष्टमि'त्यन्यथाभावं प्रयोगविधिरनुष्ठापयति । अयं चोहः प्रकृतौ मुख्या[1]र्थानां दृष्टार्थानां स्वा[2]र्थनिष्ठानां समवेतार्थानां यजुर्वे[3]दमन्त्राणां कार्यमुखेन विकृतिङ्गतानां कार्या[4]न्यथाभावेन कल्प्यते । अ[5]तएव 'इयं गौः, तया[6] क्रीणामि तस्यै शृतमि'त्यादौ सोमक्रयार्थैकहायनीप्रकाशकमन्त्र[7]-पठितानां शृतादिशब्दानां 'सान्द्रस्त्रिवत्सः सोमक्रयण' इति विकृतौ विहिते सान्द्रे नोहः । प्रकृतावेकहायन्यवस्थायामुच्यमानस्य क्षीरादेर्मुख्यत्वाभावाद् भावित्वेनौपचारिकस्य क्षीरादिसम्बन्धस्य सान्द्रोत्पादयिष्यमाणधेनुद्वारेण सान्द्रेऽप्युपपत्तेः । 'पत्नीं संनह्यति' इति पत्नीसन्नहनप्रेषमन्त्रे पत्नीमित्येक-वचनस्य द्वि[8]बहुपत्नीकविकृतिप्रयोगेनोहः । प्रकृतौ हि द्विब[9]हुपत्नीसत्त्वेन पत्नी[10]शब्दस्यापूर्वसम्बन्धिपत्नीव्यक्तिपरत्वात् सामान्यसंख्याप्रकाशनस्य विद्यमानार्थ[11]त्वेन मुख्यार्थत्वेऽपि दृ[12]टार्थत्वाभावाददृष्टार्थत्वात् दर्शपूर्णमासयोरिडानिगदे 'उपहूता मनुष्याय इमं यज्ञमव'। अन्ये[13] च यज्ञपतिं व[14]र्द्धानि'ति श्रुतम्। ये ब्रह्मादय इमं यज्ञं रक्षितवन्तो, ये च

---

१. मुख्यानामिति मू० मा० पा० ।
२. स्वार्थानामिति मू० मा० पा० ।
३. वेद पदं ङ च मातृकयोर्नास्ति ।
४. 'कार्यार्थान्य' इति मू० मा० पा० ।
५. 'यथा' इति मू० मा० पा० ।
६. 'ते' इति पदं ख घ ङ मूलमातृकासु दृश्यते ।
७. पठितानामिति पदं ख च मातृकयोर्नास्ति । ग घ ङ मातृकासु च मन्त्रे पठिता-नामिति दृश्यते ।
८. 'द्विपत्नी' इति घ मा० पा० ।
९. बहुपत्नीशब्दश्च ङ मातृकायां नास्ति ।
१०. 'पत्नीकत्व' इति ख ग घ ङ च छ मातृकासु दृश्यते । ग मातृकायां 'पत्नीकत्वे सत्त्वे' इति व्यस्तप्रयोगोऽपि ।
११. 'पत्नीक' इति ख मा० पा० ।
१२. अर्थपदं छ मातृकायां नास्ति ।
१३. मातृकायां °'त्वाभावेन' इति पाठः । च मातृकायाञ्च 'अदृष्टार्थत्वाभावादिति' पाठः ।
१४. 'अन्ये च भवाम्' इति च मातृकापाठः ।

यज्ञपतिं फलदानेन वर्द्धितवन्तस्त ईडायामुपहूता[1] इत्यर्थः। अत्र यज्ञपति-शब्दस्य सत्रेषु नो[2]हः। प्रकृतौ त[3]स्य यज[4]माने मुख्यार्थत्वेऽपि तत्प्रोत्साहनार्थत्वेन दृष्टार्थत्वेऽपीडास्तुत्यर्थवृद्धिविशे[5]षणत्वेन स्वा[6]र्थत्वा-भावात् परार्थत्वात्। एव[7]ञ्च यज्ञपतिस[8]म्बन्धिवृद्धिप्रकाशनेऽपीडास्तुति-शेषत्वेन स्वार्थत्वाभावात् परार्थत्वात्। एवञ्च[9] यज्ञपतिसम्बन्धिवृद्धि-प्रकाशनेऽपीडास्तुत्युपपत्तेः। 'इन्द्रागच्छ, [10]हरिव आगच[11]छ' इति सुब्रह्मण्या[12]मन्त्रे हरिवदादिपदानामग्निष्टुत्याग्नेयी सुब्रह्मण्या भवतीति विहिते सति 'अग्न आगच्छ' इत्यूहेऽपि रोहिताश्वादिपदैर्नोहः। प्रकृतौ तेषां हरिवत्तादिगुणेषु मुख्यत्वेऽपि तस्य च गुणस्य 'इन्द्राय हरिवत्ते धाना' इत्यादिषु देवतात्वान्तर्गतेर्दृष्टार्थत्वेऽपि यक्ष्[13]यमाणे इन्द्रप्रकाशनाच्च स्वार्थत्वेऽपि इन्द्रे हरिवत्ताद्यसमवायात् समवेतार्थत्वाभावात्। अविद्यमान-गुणसम्बन्धेनेन्द्रस्येवाग्नेरपि प्रकाशनोपपत्तेः।

ऋङ्मन्त्राणान्तु निषेधान्नोहः। 'श्यति वा एतदृचोक्षरं यदेनदूहति, तस्मादृचं नोहेदि'ति। अतएव क्वचिद् याज्यानुवाक्ययोरनुपदेशे गायत-

---

१. 'धर्मान्' इति घ ङ मातृकापाठः।

२. 'उपहूताया' इति च मा० पा०।

३. 'चोहः' इति ङ मा० पा०।

४. 'यजमानस्य' ग मा० पा०।

५. 'यजमाने' इति पदं ख घ ङ मातृकासु नास्ति।

६. 'विशेषस्य' मू० मा० पा०। ग ङ मातृकयोः 'विशेषणतया स्वार्थनिष्ठत्वाभावेन' इति पाठः। घ छ मातृकयोः '[१]निष्ठत्वाभावात्' इति पाठः।

७. एवञ्चेत्यारभ्य परार्थत्वादित्यन्तः ख मातृकायां नास्ति। घ ङ च मातृकासु च 'एवं' स्थाने 'एक' इति पदं दृश्यते।

८. 'सम्बन्धि' पदं ङ मातृकायां नास्ति।

९. 'एवञ्च' इत्यस्य स्थाने 'एक' इति पदं ग मातृकायाम्। पूर्वस्माद्वाक्यात्साम्याद् द्विरुक्तिरपि प्रतीयते।

१०. 'हरिव आगच्छ' इति वाक्यं ख मातृकायां नास्ति।

११. 'गच्छ' इत्येव ङ मातृकायाम्।

१२. 'सुब्रह्मण्याया' इति मू० मा० पा०।

१३. वक्ष्यमाणे' इति ङ च छ मा० पा०।

यादिलक्षणेनानुवाक्याकल्पनं त्रिष्टुबादिलक्षणेन याज्याकल्पनम्। तादृग्लक्षणयोश्चासम्भवे 'इममा श्रृणुधी हवंस्तीर्णं बर्हिरानुषङ्गासदेतदि'त्यनयोर्ऋचोरागमन[1]मुपदिशति । अस्ति चोदाहृतमन्त्रगतस्याप्यग्नि[2]पदस्य यागीयदेवताप्रकाशकत्वात् मुख्यार्थत्वादी'ति । तद् यागीयदेवताप्रकाशनरूपकार्यमुखेन सौर्ये[3] प्राप्तः[4] । तत्र[5] सूर्यस्याग्निकार्यापत्[6]त्तेस्तत्प्रकाशनायोह्यते[7] । [8]तत्कार्यापत्तिश्च पञ्चभिः प्रमाणैर्ज्ञायते[9] । यथाहुः—

प्रत्यक्षविधिनाभावे विधाने न विकारतः ।
स्वशब्दाच्च निषेधानुवादा तत्कार्यकारिता ।।इति ।

'नैवारश्चरुरि'ति श्रुतेन[10] विकारार्थ[11]तद्धितेन च[12] नीवाराणां चरु[13]प्रकृतित्वाभिधानात् प्रदेयप्रकृतित्वरूपा व्रीहिकार्यापत्तिः प्रत्यक्षविधिना प्रतीयते । 'संस्थिते षडहे मध्वाशये घृतं चे'ति[14] मधुघृताशनयोः षडहाभावे विधानात्[15], अभावे विधानेन षडहकार्यापत्तिस्तयोरिति भाष्ये । तत्तु 'जुहूषा व । तर्हि वाग्भवति' । 'यदि[16] पृष्ठचः षडहः सन्तिष्ठते, नान्यं

१. 'उपदिश्यति' इति ङ च मातृकापाठः ।
२. अग्नि' पदं मूलमातृकायां नास्ति ।
३. सौर्यमिति च मा० पा० ।
४. प्राप्तमिति घ मा० पा० ।
५. 'तत्' इति घ मा० पा० ।
६. ' पत्तिः' इति च मा० पा० ।
७. °योत्पत्तेरिति मू० मा० पा० ग मातृकायां कार्यापत्तिश्चेत्यपि दृश्यते ।
८. 'तत्' पदं छ मातृकायां नास्ति ।
९. 'जीर्यते' इति च मा० पा० ।
१०. मूलमातृकायां च मातृकायाञ्च 'श्रुतेः' इति पाठः ।
११. अर्थपदं मूलमातृकायां नास्ति ।
१२. च पदं ङ मातृकायां नास्ति ।
१३. 'चरु' पदं घ मातृकायां नास्ति ।
१४. 'वेति' इति ख मा० पा० ।
१५. 'विधानाभावे' इति घ ङ मातृकापाठः ।
१६. 'यर्हिष्टयः' इति मू० मा० पा० ।

ब्रूयादि' त्याद्यर्थवादालोचनया षडहजन्यवाक्[1]श्रमनिवृत्त्यर्थत्वावगमात्तयो-र्नातीव [2]युक्तमिति [3]वार्तिककारैः 'सत्रायागूर्य विश्वजिता यजेते'ति सत्राभावे विश्वजितो विधानात्सत्रकार्यापत्तिरित्युदाहृतम् । 'नैवारश्चरुर्नखावपूतानामि'ति वैतुष्यरूपविकारफलकनिर्लुञ्चनापरपर्याय[4]वपनाङ्गत्वेन नखानां विधानात् [5]तत्फलकावघातार्थोलूखलमुसलकार्यापत्तिर्विकारेण फलेनेत्यर्थः । सप[6]शुकचातुर्मास्येषु [ समिद्विशेषे ] 'परिधौ पशुं नियुञ्ज[7]-न्ती'ति परिधेर्नियोजने विधानाद् यूपकार्यापत्तिः । स्वशब्दात् कार्यवाचिशब्दश्रवणादित्यर्थः । न गिरा गिरेति ब्रूयात्[8] ऐरं कृत्वोद्गेयमितीरापद-[9]विध्येकवाक्यत्वाय गिरापदनिषेधस्यानुवादत्वावगतेरक्षरसाम्येन च गिरापद[10]कार्यापत्तिसम्भावनायां[11] निषेधानुवादेनेरापदस्य गिरापदकार्यापत्तिर्निश्चीयते[12] प्रकृते तु सौर्यमितिदेवतातद्धितेन सूर्यस्य यागीयदेवतात्वरूपाग्निकार्यापत्तिः प्रत्यक्षविधिनैव । अग्निदेवत्यायां तु विकृतौ न तस्योहः । यथा—'आग्नेयमष्टाकपालं निर्वपेद् रुक्कामः' इति रुक्[13] कान्तिः प्रकृतावपि च नोहः । यथा—'व्रीहीणां मेधः सुमनस्यमानः' इति मन्त्रस्य यवप्रयोगे, किन्त्व प्रयोग एव । तत्र पदार्थान्वियपूर्वकोपकारकल्पनात् । विकृतौ तूपकारा[14]-

---

१. 'वाक्य' इति घ ङ मातृकापाठः ।
२. 'युक्तमिति वार्त्तिककारीयैः' इति च मा० पा० ।
३. 'वार्त्तिककारीयैः' इति मू० मा० पा० ।
४. 'पर्यायपराव°' इति च मा० पा० ।
५. 'नानाफ°' इति घ मा० पा० ।
६. 'सपशु°' इत्यारभ्य 'मास्येषु' पर्यन्तं ग मातृकायां नास्ति ।
७. 'नियुञ्जीत' इति ख ङ मातृकापाठः ।
८. 'क्रमादिति' मू० मा० पा० ।
९. अत्र व्यस्तप्रयोगः छ मातृकायाम् ।
१०. '°पदोपका°' इति घ मा० पा० ।
११. 'वनया' इति ङ मा० पा० ।
१२. 'निश्चीयते' इत्यारभ्य 'अग्निकार्यापत्तिपर्यन्तं घ ङ मातृकयोर्नास्ति ।
१३. 'रुक् कान्तिः' इति ख ग घ ङ मातृकासु नास्ति ।
१४. 'अन्वयापू°' इति ख मा० पा० ।

न्वयपूर्वकपदार्थान्वयादुपकारान्यथाभावेति[1] सिद्ध्यत्यूहः । सर्वं चैतदुक्तं वार्त्तिके—

मुख्यदृष्टार्थता स्वार्थसमवेतार्थतादिभिः ।
प्रयुक्ताः प्रकृतौ मन्त्राः गताः कार्यातिदेशतः ।।
विकारेऽथ निषिद्धोहाः कार्यापन्नेषु पञ्चधा ।
अर्थान्तरेष्वपूर्वार्थद्वारेणोहं व्रजन्ति नः[2] ।। तन्त्रवार्त्तिक १.३.२४

एवं 'व्रीहीणां मेध सुमनस्यान'इति मन्त्रे [3]हविः प्रकृतिद्रव्यवाचिनो व्रीहिपदस्य 'नैवारश्चरुरि'[4]त्यादिविकृतावूहः । एवं '[5]दर्भेण स्तृणीत' हरितैः सुपर्णै'रित्यादिदर्भस्तरणार्थो मन्त्रः । 'समौद्गं चरुं निर्वपेत् श्रियै श्रीकाम'इति विहितायां विकृतौ 'पौण्डरीकाणि बर्हिषि भवन्ती'ति दर्भकार्यापन्नेषु पुण्डरीकेषूह्यः । तत्र दर्भपदस्थाने पुण्डरीकपदं प्रयोज्यम् । हरित्[6] पदस्थाने रक्तपदम् । यद्यपि 'पुण्डरीकं सिताम्भोजमि'त्यमरोक्तिस्तथापि तस्य यथा 'कप्यासं पुण्डरीकमेवमक्षिणी' इत्यादिश्रुतौ रक्तगुणेऽपि[7] प्रयोगादेवमूहो भाष्या[8]दिपूक्तः । तदेवं मन्त्रगतानां देवताद्रव्यगुणवाचिनां पदानां[9] पूर्वोक्तविशेषणयुतानामूहः प्रदर्शितः । किञ्चित्तु शक्त्या[10] समवेतार्थत्वाभावेऽपि लक्षणया प्रकृतौ[11] समवेतार्थत्वं[12]

---

१. इतिपदं घ ङ मातृकयोर्नास्ति ।
२. 'हित' इति ग मा॰ पा॰ ।
३. हविः प्रकृतिरिति च मातृकायां नास्ति । 'प्रकृते' इति ङ मा॰ पा॰ ।
४. °त्यादि विहितायामिति ख ङ॰ मा॰ पा॰ ।
५. दर्भैरिति घ ङ मातृकयोः दृश्यते ।
६. 'हारीत' छ मा॰ पा॰ ।
७. 'अपि' पदं घ ङ मातृकयोरस्ति ।
८. '°दावुक्तः' इति ख ङ छ मातृकापाठः । च मातृकायां 'उक्तः' इति नास्ति ।
९. पदार्थानामिति ख मातृकापाठः ।
१०. 'शक्या' इति घ मातृकापाठः ।
११. 'प्रकृतौ' इति ख घ मातृकयोर्नास्ति । ङ मातृकायाञ्च 'कृतातौ' इति पाठः ।
१२. समवेतार्थं सत्' इति घ ङ मातृकापाठः ।

विकृतावूह्यते। यथा—'धान्यमसी'त्या[1]दिमन्त्रे तण्डु[2]लपेष[3]णार्थे धान्यपदं सतुषवाचि तण्डुलेषु प्रयुज्य[4]मानं [5]लक्षणया तान्[6] प्रकाशयति। अतस्तच्छाक्यानामयने सत्रे संस्थि[7]तेऽहनि गृहपतिर्मृगयां याति। तत्र यान् मृगान् हन्ति, तेषां तर[8]समयाः सव[9]नीयाः पुरोडाशाः भवन्तीति मांसमयेषु पुरोडाशेषु विहितेषु मांसपेषणार्थेऽस्मिन् मन्त्रे ऊहितव्यम्। तत्र 'मांसमसी'ति ऊहो न तु प्रकृतिवन्मृगपदेन लक्षणया तत्प्रकृतिकं मांसं प्रकाशयितुं 'मृगोऽसी'ति। प्रकृतौ तथा [10]पाठाल्लक्षणाश्रयणम् इह तु [11]स्वाधीने पदप्रक्षेपे किमिति लक्षणा[12]श्रीयेत। यथोक्तं भाष्ये'स्वायत्ते शब्द[13]प्रयोगे किमित्यवाचकं प्रयोक्ष्यामहे' इति। किञ्चित्तूपचारेण समवेतार्थं सकृत्[14] विकृतावूह्यते। यथा—अग्नीषोमीये पशौ पाश[15] मोचनार्थौ मन्त्रौ 'अदितिः पाशान् प्रमुमोक्तु एता[16]नि'त्येकः। 'अदितिः पाशं प्रमुमोक्तु एतमित्य'न्यः[17]।

---

१. आदिपदं ङ मातृकायां नास्ति।
२. 'तन्दुल' इति ख मातृकापाठः।
३. पेषणार्थमिति घ ख ङ मातृकापाठः।
४. 'मानाम्' इति ङ मा० पा०।
५. 'लक्षणया' इत्यतः पूर्वं लक्ष्यमाणमिति पदं मूलमातृकायां दृश्यते।
६. प्रकृतौ तानिति ङ छ मातृकापाठः।
७. 'संस्थिते' इत्यारभ्य तेषामिति यावत् ख ग घ ङ च छ मातृकासु ग्रन्थपातः।
८. वरस° च मा० पा०।
९. 'सवनीयाः' इति पदं ख ग ङ च छ मातृकासु नास्ति।
१०. 'याग' इति च मातृकायाम्।
११. 'स्वायत्ते' इति ख मा० पा०।
१२. 'लक्षणाश्रीयेत' यथोक्तं भाष्ये' ख च मातृकायां नास्ति।
१३. 'शब्द' पदं घ ङ मातृकयोर्नास्ति।
१४. सकृत् स्थाने सदिति पाठः घ मातृकायाम्। च मातृकायाञ्च 'सिद्धिकृताबु°' इति पाठः।
१५. 'पशुबन्धनार्थौ' इति मू० मा० पा०। 'पाशबन्धनार्थौ' इति ङ छ मातृकयोः पाठः।
१६. 'एतमि'ति ङ मातृकापाठः।
१७. '°त्यादिना' इति मूलमातृकापाठः।

तत्रैकपाशमोचन[1]प्रकाशकः समवेतार्थः। बहुपाशमोचन[2]प्रकाशकोऽपि न पशुगणे उत्क्रष्ट[3]व्यः। गुणभूतबहुत्वसंख्यामात्रानुरोधने प्रधानभूतानेकार्थोत्कर्षायोगात्। बहुवचन एव तु छान्दसत्वनिमित्तकमवयवाभिप्रायेणौपचारिकत्वं युक्तमाश्रयितुम्। तथा च सूत्रम्—'गुणे त्वन्याय्यकल्पने'ति (मी० सू० ९.३.१५)। तेन प्रकृतावेवास्य निवेश इत्युभयोर्मन्त्रयोर्विकल्पः। तत्र 'मैत्रं श्वेतमालभेत, वारुणं कृष्णमि' त्यादिद्विपशुकविकृतावनेकवचनान्तवद् बहुवचनान्तस्याप्यूहेन प्रवृत्तिः प्रकृतावुपचारेण समवेतार्थत्वेऽपि विकृतौ 'स्वायत्ते शब्दप्रयोगे' इति—न्याये[4]नोपचारायोगात्। द्वयोर्बहुवचनस्योपचारेणापि लोके प्रयोगादर्शना[5]च्च। तदेवं संक्षेपेण मन्त्रोहो निरूपितः।

## ऊह्यमानेषु मन्त्रत्वाभावनिरूपणम्

अयश्च मन्त्रमध्यस्थोऽपि न मन्त्रसंज्ञां लभते। मन्त्रसमाम्नाये पाठाभावात्। एवं प्रवरपदेषु यजमानादिनामसु च मन्त्रमध्यस्थेष्वपि न मन्त्रसंज्ञा। 'आर्षेयान् प्रवृणीते' सावसावि[?]त्यस्यादिश्य 'नामनी' इत्येवं सामान्यरूपेण पाठेऽप्युच्चारणीय[6]विशेषरूपापाठात्। तदुक्तम् '[7]अनाम्नातेष्वमन्त्रत्वमि'मी० सू० २.१.३४ति। न[8] तेषां भ्रेषेण मन्त्रलोपप्रायश्चित्तम्, किन्त्वङ्गलोपप्रायश्चित्तम्।

सामोहस्तु योन्यां पठितस्य साम्नः उत्तरयोर्वचनातिदेशे सति

१. 'मोचन' इति ख मातृकायां नास्ति।
२. 'मोचन' इति ख मातृकायां नास्ति।
३. 'उत्कृष्टव्यः। इति मू० मा० पा०।
४. 'इत्यनेनोप°' इति ङ मा० पा०।
५. 'च' मूलमातृकायां नास्ति।
६. °रणीये' इति मू० मा० पा०।
७. 'नाम्नाते°' घ मा० पा०।
८. 'तेनैषाम्' इति ख ग ङ च छ मातृकासु पाठः।

तद्वशेनान्यथाभावः तथाहि—'अभि त्वा शूर नोनुम' इत्यस्यामभिवत्या[1]-मृचि रथन्तरं साम पठितम्। तेनेयं योनिरुच्यते[2]। 'तद् रथन्तरं पृष्ठं भवती'ति वाक्येन पृष्ठस्तोत्रार्थतया विहितम्। एवं[3] 'साम तृचे क्रियते स्तोत्रीयम्' इति वाक्येन च स्तोत्रार्थ[4]त्वस्य साम्नस्तृचे प्रयोगो विहितः। तत्रर्ग्द्वया[5]पेक्षायां 'यद् योन्यां गायति तदुत्तरयोर्गायति' इति वाक्यादुत्तरा-ग्रन्थपठितयोर्द्वयोरेतत् पठ्यते। तत्रैव[6] योनौ पठ्यमानं तदक्षरणा[7]मार्द्र-भावादिरूपमभिव्यक्तिं कुर्वन् संस्कारकं दृष्टम्। 'कार्यप्रधानश्चातिदेश' इत्यक्षरसंस्कार[8]द्वारैवोत्तरयोरतिदिष्टम्। तयोश्चाक्षरान्यथाभावात् सस्कार्यानुरोधेन संस्कारकं साम अन्यथा भवति। एवं 'कवतीषु रथन्तरं गायती'ति वचनात् 'कया नश्चित्र आभुवदि'त्यादिकवतीषु रथन्तरस्यातिदेशे सति तदक्षरसंस्कारानुरोधेनोहः। एवं बृहदादिसामस्वप्यूहो द्रष्टव्यः।

संस्कारोहस्तु प्रकृतावेकस्मिन् द्रव्येऽनुष्ठितानां संस्काराणां विकृतौ प्रागुक्तपञ्चमानान्यतरमानेन तत्कार्या[9]पन्नेऽन्यस्मिन् करणादन्यथाभावः। यथा—व्रीहिषु कृतानामवघातादीनां 'नैवारश्चरुरि'ति प्रत्यक्षविधिना नीवारेषु व्रीहिकार्यापन्नेषु क्रियमाणानामदृष्टप्रहारादिरूपोऽन्यथाभावो वैतुष्यादिकार्यवशेनेति संक्षेपः। तदेव प्रयोगविधिरतिदिष्टानां पदार्थानां प्राकृतकार्यवशेनोहं बोधयति।

---

१. '°वत्याम्' इति ङ मा० पा०।
२. 'अध्ययनकाले यस्यामृचि सा योनि' इति मूलमातृकायामधिकः।
३. एकमिति घ मातृकायां दृश्यते।
४ '°त्व' इति ङ छ मातृकयोर्नास्ति।
५. '°र्ग्द्व°' मूलमातृकायां त्रुटिः। तत्त्वत्यपे इति घ मा० पा०। 'क्वेत्य°' इति ङ मा० पा०। 'द्वयापे°' इति च मा० पा०।
६. 'तत्रैतद्' इति मू० मा० पा०। 'यत्र' इति ख मा० पा०।
७. 'णामार्द्रमा° इति मू० मा० पा०। '°णामाणारूपार्हमभिव्यनक्ति' इति ङ मा० पा०। रूपाणामभिव्यनक्ति' इति ग मा० पा०। घ मातृकायामपि 'रूपाणामि'ति पा०।
८. 'द्वारेणैव' इति ख घ ङ मातृकापाठः।
९. 'तत्कार्यापत्तेः' इति च मा० पा०।

## ऊहबाधतद्भेदनिरूपणम्

क्वचित्तेषां [1]बाधोऽपि भवति[2]। त्रेधा च बाधः—प्रत्याम्नानानात् अर्थलोपात्, पर्युदासाच्च। तत्राद्यो—नीवारैः व्रीहिबाधः। का[3]र्यापत्त्येतियावत्। 'कुशमयं बर्हिर्भवती'ति प्रकृतौ विहितानां कुशा[4]नां 'शरमयं बर्हिर्भवती'ति विकृतौ विहितैः श[5]रैर्बाधः। द्वितीयस्तु—'प्राजापत्यं घृ[6]ते चरुं निर्वपेच्छतकृष्णलमायुष्काम' इति विहितायां विकृतावतिदिष्टस्यावधातस्य वैतुष्यरूपार्थलोपात्। 'त्रयो यवा कृष्णल' इति स्वर्णमयं कृष्णलद्रव्यम्।

तृतीयस्तु—पित्र्येष्टौ 'न होतारं वृणीत' इति पर्युदासादतिदिष्टस्य होतृवरणस्य प्रकृतिविकृतिसाधारणोऽपि बाध उदाह्रियते नित्यं नैमित्तिककाम[7]याभ्यां बाध्यते। यथा—दर्शपूर्णमासयोर्नित्यं सामिधे[8]नीनां च पाञ्चदश्यं नैमित्तिकेन साप्तदश्येन 'सप्त[9]दश वैश्यस्य' इति विहितेन च 'एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य' इति विहितेन च काम्येनैकविंशत्यनुवचनेन बाध्यते। नैमित्तिकं च काम्येन। यथा—साप्तदश्यमेकविंशत्यनुवचनेन। क्रत्वर्थं पुरुषार्थेन। यथा—चमसो गोदोहनेन। सामान्यं विशेषेण 'यथा—आहवनीयः पदेन। सावकाशं निरवकाशेन। यथा—यत्किञ्चित्प्राचीनमग्नीषोमीया[10]न्तेनोपांशु चरन्ती'त्यग्नीषोमीयप्राग्भाविपदार्थेषु विहितमुपांशु-

---

१. 'बाधमपि' इति ग मा० पा०। 'बाधेऽपि' इति च मा० पा०।
२. 'बोधयति' इति ग च छ मातृकापाठः।
३. 'कार्याय नेति' इति च मातृकापाठः।
४. कुशानाम्' इति पदं छ मातृकायां नास्ति।
५. 'शरैश्च' इति ङ मा० पा०।
६. 'श्रुते' इति च मा० पा०।
७. 'कामाभ्याम्' इति घ० मा० पा०।
८. '°धेनी पाञ्च०' इति घ ङ मातृकापाठः।
९. 'सप्तदशैः' इति ङ मा० पा०।
१०. '°न्तेनो°' इत्यारभ्य '°षोमीय' पर्यन्तं च मातृकायां नास्ति।

त्वम्। 'यावत्या वा[१]चा कामयीत, तावत्या दीक्षणीयायामनुब्रूयात्मन्द्रम्, प्राय[२]णीयायाम्, मन्द्रतरम्, आतिथ्यायाम्' इत्यादिभिर्विशेषस्वरैर्निरवकाशैर्बाध्यते। दीक्षणीयादिप्रधानमात्रे ह्येते स्व[३]राः विधीयन्ते। उपांशुत्वं तु तदङ्गेष्वितरपदार्थेषु च सा[४]वकाशम्। 'पूर्वं परेण' यथा—'बहिष्पवमानार्थं सदसि प्रस[५]र्पतामन्योन्यकच्छधारणे विहिते 'यद्युद्गातापच्छिन्द्याददक्षिणं यज्ञं समाप्य पुनर्यजेत'। तत्र तद् दद्यात् यत्पूर्वस्मिन् दास[६]यन् स्यादित्युद्गात्रपच्छेदे। प्रायश्चित्तं विहितम्। 'यदि प्रतिहर्त्तापच्छिन्द्यात्सर्ववेद[७]सं दद्यादि'ति प्रतिहर्त्रपच्छेदे। तत्र युगपद् द्वयोरपच्छेदे प्रायश्चित्तयोर्विरोधाद्विकल्पः 'पौर्वापर्ये परं कार्यम्' तस्य पूर्वनैरपेक्ष्येण पूर्वोपमर्द्देनैवात्मलाभात्। यत्र तु पूर्वसापेक्षः परस्यात्मलाभस्तत्र पूर्वं बलीयः। यथा—प्रा[८]गुक्ते वाक्योदोहरणे। तदुक्तम्—

**[९]पौर्वापर्यबलीयस्त्वं तत्र नाम [१०]प्रतीयताम्।**
**अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत्॥** त० वा० ३-३-२

अङ्गं प्रधानेन। यथा—दर्शपूर्णमासयोः 'अग्निहोत्रहवण्याहवींषि निर्वपती'ति विहितो निर्वापः पवमानेष्टिष्वतिदिष्टः। तत्र भाष्यकारमते पवमानेष्टिगुणकाधानस्याग्न्यर्थत्वात् पवमानेष्टिकालेऽऽहवनीयाद्यभावेनाग्निहोत्राप्रवृत्तेरग्निहोत्रहवण्यभावेऽपि निर्वापोऽनुष्ठेयः। तस[११]य प्रधानत्वेनाङ्गबाधकत्वात्,

---

१. 'वात्या' इति ङ मा० पा०।
२. प्रायणीयामित्यारभ्य दीक्षणोयादिपर्यन्तं छ मातृकायां नास्ति।
३. 'स्वरो' इति च मा० पा०।
४. 'चावकाशम्' इति ङ मा० पा०।
५. 'प्रवर्त्तताम्' इति ख ङ मातृकापाठः।
६. 'दास्यत्' इति मूलमातृकापाठः।
७. 'सर्ववेदधात्' इति ङ मातृकापाठः।
८. 'पूर्वोक्ते' इति ख घ ङ मा० पा०।
९. 'पूर्वत्पर°' इति मू० मा० पा० प्रकाशिते पुस्तके 'पौर्वापर्य°' इति पा०।
१०. 'प्रतीयते' इति मुद्रितपुस्तकपाठः।
११. 'तत्र' इति च मा० पा०।

न[1] तु तदनुरोधेन नि[2]र्वापबाधः। अङ्गाङ्गं प्रधानाङ्गेन। यथा 'य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्ण[3]मास्यां वा यजेत'ति वाक्येनेष्टचा[4]दीनां पर्वकालसम्बन्धे सति सोमाङ्गपर्वकालेन दीक्षणीयाद्यङ्ग-पर्वकालबाधः। साङ्गसोमस्य पञ्चाहसाध्यत्वेनोभयानुग्रहायोगात्। एवमन्येऽपि बाधास्तत्र तत्र वक्ष्यन्त इत्यलम्।

## प्रयोगविधेः प्राकृतवैकृतानां समुच्चयबोधकत्वम्।

क्वचित्तु प्राकृतवैकृतानां समुच्चयं बोधयति प्रयोगविधिः। यथा—नक्षत्रेष्टिषूपदिष्टानामुप[5]होमानामतिदिष्टानां च[6] नारिष्ठ[7]होमानाम्। प्र[8]कृतौ हि नारिष्ठहोमानां प्र[9]धानोत्तरकालमनुष्ठानादुपहोमानां चात्र प्रधानविध्युत्तरपाठेन तत्रैवानुष्ठानादेकस्थानत्वेऽप्यदृष्टार्थत्वेन प्रत्याम्ना-ना[10]द्यभावान्न बाधः, किन्तु प्राकृतोत्तरं तु[11] वैकृतानामागन्तूनामनुष्ठानम्। 'अन्ते तु बादरायणः[12] मी० सू० ५-२-१९ इति न्यायात्। एवं साङ्-ग्रह[13]ण्यामामनहोमैन्द्रयाजानां त्रित्वसाम्येन न बाधः; किन्त्वदृष्टार्थत्वा-

१. 'न तु' इति च मातृकायां नास्ति।
२. 'प्रधान' इति घ ङ मातृकयोः दृश्यते।
३. 'बाधकः' इति ख मा० पा०।
४. 'पूर्णमास्याम्' इति ङ मा० पा०।
५. 'दीक्षणीयादीनाम्' इति ख घ ङ मातृकापाठः।
६. 'होमादीनाम्' इति ङ मा० पा०।
७. 'चारिष्टानाम्' इति ङ मा० पा०।
८. 'नारिष्ठहोमानाम्' इति पदं ङ मातृकायां नास्ति।
९. 'प्रकृतौ' इत्यारभ्य 'उपहोमानाम्' इति पर्यन्तं ख मातृकायां नास्ति। घ ङ मातृकयोश्च 'प्रकृतौ हि' इति नास्ति।
१०. 'प्रधानोत्तर' इत्यारभ्य दुपहोमानां पर्यन्तं ङ मातृकायां नास्ति।
११. 'आदि' पदं ङ मातृकायां नास्ति।
१२. 'तु' इति मूलमातृकायां नास्ति।
१३. 'णम्' इति मू० मा० पा०। सम्पूर्णं सूत्रञ्चेत्थम्—'अन्ते तु बादरायणस्तेषां प्रधानशब्दत्वात्' मी० सू० ५-२-१९ इति।
१४. साङ्ग्रहणेष्ट्यामिति ग मा० पा०।

त्पूर्ववत्समुच्चयः । एवं बृहस्पतिसवादौ 'बार्हस्पत्यं ग्र[1]हं गृह्णाती'-त्याद्युपदिष्टग्रहाणामैन्द्रवायवादिप्राकृतग्रहैः[2] समुच्चयः । अगृहीतस्यापि सोमस[3]य यागार्थत्वसम्भवेन ग्रहाणामदृष्टार्थत[4]वात् । न चात्र लाघवात् प्राकृतग्रहानु[5]वादेन देवतामात्रविधानमिति वाच्यम् । प्राकृतग्रहानुवादेन देवताविधौ तेषां बहुत्वादाग्नेयाः ग्रहाः भवन्ती[6]ति बहुवचनापत्तेः । एव-मन्यत्राप्यूह्यम् ।

## तन्त्रनिरूपणम् ।

वाधाभ्युच्चयाभ्यां चेय[7]त्तया अवधारितानां पदार्थानामनेकप्रधान-सन्नि[8]पाते तदर्थतया क्वचित् तन्त्रेण प्रयोगमनुष्ठापयति । क्वचिदावृत्त्या क्वचित्परप्रयुक्तमेव स्वस्य प्रयुक्तिशक्तौ सत्यामे[9]वोपजीवति । क्वचित्परार्थ-मेवोपजी[10]वन प्रयोजक[11] एव । आद्यो—[12]दर्शप्रयोगविधिस्त्रयाणामर्थेन[13] प्रयाजादीनगृह्यमाणविशेषत्वात् । सकृ[14]दनुष्ठापयति । न ह्ययं विशेषो

---

१. 'सङ्ग्रहम्' ङ मा० पा० ।
२. 'प्राकृतग्रहौ सुवादेहीः समुच्चयः' इत्यधिकं च मातृकायाम् ।
३. सोमस्येति पदं घ मातृकायां नास्ति ।
४. °'र्थत्वासम्भवात्' इति घ ङ मातृकापाठः ।
५. °'वादेवा न' इति मूलमातृकापाठः ।
६. 'भवन्तीति' इत्यस्य स्थाने 'इतिवत्' ख मातृकायामस्ति । ग ङ मातृकयोस्तु 'इति' इत्यस्य स्थाने 'इतिवत्' इति दृश्यते ।
७. 'वेद्यतया' इति मू० मा० पा० । यत्र यावधारितानामिति छ मा० पा० ।
८. 'सन्निपातेन' इति ख मातृकापाठः ।
९. 'एव' इत्यस्य स्थाने 'अपि' पदं ख ग ङ मातृकासु दृश्यते ।
१०. 'उपजीवः' इति मू० मा० पा० । 'उपजीवन्तः' इति ख ग मातृकापाठः । 'उपजीवन्नप्रयोजक' इति ङ मातृकापाठः । च मातृकायाञ्च उपजीवन्नप्रयोजक एवेति पाठः । प्रयोजकमेवेति छ मातृकापाठः ।
११. 'यथा दर्शपूर्णमास' इति ख घ ङ मातृकापाठः ।
१२. 'अर्थप्रयाजा°' इति ख मातृकापाठः ।
१३. 'सकृदेव' इति घ ङ मातृकापाठः ।
१४. 'किं सकृत्' इति ख ङ मातृकयोः दृश्यते ।

गृह्यते। स[1]क्रत्क्रताः प्रयाजादयः कि[1]माग्नेयार्थाः उत सान्नाय्यार्था इति। तेन त्रयाणां मनसि विपरिवृत्तेस्त्रयाणामप्युपकुर्वन्ति। एवं वरुणप्रघास-पर्वण्यौत्तरवैहा[2]रिकाणां प्रधानानां तन्त्रं प्रयाजादयः।

यत्र तु देशकालकर्त्रादिभेदाद्विशेषो गृह्यते, तत्रावृत्तिः। यथा—दर्शपूर्णमासे च कालभेदादुत्तरदक्षिणविहारयोश्च देश[3]कर्त्तृभेदात्काल-भेदाच्च प्रयाजाद्यवृत्तिः। य[4]त्रत्वेकस्य तन्त्रे प्रतते मध्येऽन्यद्विधीयते। यथा—अग्नीषोमीयस्य च यया प्रचा[5]र्यग्नीषोमीयं पुरोडाशमनुनिर्वपती'ति अग्नीषोमीयपशुयागतन्त्रे प्रतते पुरोडाशयागः। स[6] यद्यपि द्विदेवत्[7]या-दग्नीषोमीयविकारस्तथाप्यतिदिष्टानङ्गभूतान् प्रयाजादीन् नानुष्ठापयति।

## प्रसङ्गनिरूपणम्

उपकाराय हि पदार्थानुष्ठा[8]पनम्। स च पश्वर्थमनुष्ठितैरेव जनितो[9]पलब्धि [?] रिति, किं पृ[10]थगनुष्ठापनेन। यद्यपि पश्वर्थमेकादश-संख्याः प्रयाजानुयाजाः क्रियन्ते पृषदाज्यद्रव्यकाश्चानुयाजाः' इत्यादि-वद्यथा प्रकृतिपुरोडाशस्य[11] तु यथाप्रकृत्यपेक्षिताः, तथाप्युपकारस्यावि[12]-

---

१. आग्नेयार्था एवेति सान्नाय्यार्था एवेति ग मातृकापाठः। ङ मातृकायां 'किम्' पदं नास्ति।
२. वैकारिकाणामिति मूलमातृकापाठः।
३. 'देशभेदात्' 'कर्त्तृभेदात्' इति घ ङ मातृकापाठः। 'कालभेदात्' इति ख मातृकायाम्।
४. 'यत्र' इति पदात्पूर्वं 'श्रीवारेश्वरप्रसत्तिस्तु' ख मातृकायां दृश्यते।
५. 'प्रचर्य' इति ग ङ मातृकयोः पाठः। ख मातृकायाञ्च 'प्रवर्य' इति पाठः।
६ 'सपद्यपि' इति मू० मा० पाठः।
७. 'त्यत्वात्' इति च मातृकापाठः।
८. अनुष्ठानमिति ग मातृकायाम्।
९. 'जानितो लब्ध' इति मू० मा० पा०।
१०. 'किन्त्वपृ ' इति मू० मा० पा०। 'अनुष्ठानेन' इति ङ च छ मातृकापाठः।
११. 'स्यतु' इत्यारभ्य पुरोडाशपर्यन्तं च मातृकायां नास्ति।
१२. '°स्याविकृत°' इति ग मा० पा०।

ष्कृतत्वात्तदार्थवैलक्षण्येऽपि तदनादरेणोपकारमात्रमपेक्षितं गृह्णन् पुरोडाश-प्रयोगविधिर्न पदार्थान[1]नुष्ठापयति। सोऽयं प्रसङ्गः। यथा 'जामात्रर्थं कृतो दीपः शिष्यस्योपकरोति, तद्वत्।

यत्तु पशुना स्वापेक्षितं नानुष्ठापितं तत्स्वयमनुष्ठापयति। यथा 'न तौ पशौ करोति' इति नि[2]षेधात् पशावाज्यभागविकल्पे स[3]ति यदा ना[4]ज्यभागौ क्रियेते, तदा अयमनुष्ठापयति। पिष्टलेपहोमादिकं चेति ना[5]स्याः प्रयोजकत्वम्। यस्तु पर[6]प्रयुक्तिशक्तिरहितः परप्रयुक्तमुपजीवति, सोऽप्रयोजकः। यथा—वाजिनयागप्रयो[7]गविधिः। 'तप्ते पयसि दध्यानयति' इति हि[8]दध्यानयनेन तप्तं पयः संस्कुर्यादित्यर्थः। अगारे गावो वास्यन्ता-मितिवत्। दृष्टश्च दध्यानयनेन पयसो घनीभावः[9] संस्कारः, तेन 'सा वैश्वदेव्यामिक्षा' इत्युत्तरवाक्ये तच्छब्देन पूर्वप्रकृतं प्रधानं पयः परा[10]-मृश्यते। तद् विश्वेदेवदैवत्यामिक्षापदवाच्यं चेति ज्ञा[11]पयति। आमिक्षा[12] स्त्रीत्वाभिप्रायेण च सेति स्त्रीलिङ्गमनुवादः। तेन पय एव घनीभूतमामिक्षा। तदर्थेन दध्यानयनेनानुनिष्पन्नं वाजिनं 'वाजिभ्यो वाजिनम्' इति विधिर्वाजिदेवत्ययागाङ्गत्वेन विनियुंक्ते, न तु दध्यानयनं प्रयुंक्ते। वाजि-नार्थत्वेन तस्याविधानात्। तेन वाजिननाशेन पुनर्दध्यानयनं कार्यमित्य-

---

१. '°र्थानुष्ठाप°' इति ङ मा० पा०।
२. 'निषेध्यत्' इति ख मा० पा०।
३. 'सति' पदं ख ग घ ङ मातृकासु च नास्ति।
४. 'आज्य' इति घ मा० पा०।
५. 'नास्याः' इति घ मा० पा०।
६. 'परप्रयुक्ति°' इति ख घ मा० पा०।
७. 'प्रयोगे' इति ङ मा० पा०।
८. 'हि' पदं घ ङ मातृकयोर्नास्ति।
९. '°भावरूपः' इति घ ङ मा० पा०।
१०. 'परामृश्य' इति ख मा० पा०।
११. 'ज्ञायते' इति ख ग घ ङ च मातृकासु दृश्यते।
१२. '°भिक्षात्वाभि°' इति च मातृकापाठः।

प्रयोजको दध्यानयनस्य [1]वाजिनविधिः । तथा 'एकहायन्या क्रीणाति' इति प्रकृत्य श्रूयते—'षट् पदान्यनुनिष्क्रा[2]मति, सप्तमं पदमध्वर्युरञ्जलिना गृह्णाति' । [3]यर्हि हविर्धाने प्राञ्चा प्रवर्त्तयेयुस्तर्हि तेना[4]क्षमुपाञ्ज्यात्' 'इति' त[5]त्र षट् पदान्यनुष्क्रिाम्य सप्तमपदसाध्यमक्षाभ्यञ्[6]जनमेकहायनीनयनस्याप्रयोजकम् । क्रयार्थत्वादेकहायनीनयनस्य । तदनुनिष्पा[7]दिसप्तमपदपांसूपजीवित्वादक्षाभ्यञ्जनस्य । तेन तत्पद[8]स्य पांस्वलाभेनैकहायनीनयनं पुनः कार्यम् । तथा 'पुरोडाशकपालेन तुषानुपवपति' इति विधिरप्रयोज[9]कः कपालस्य । पुरोडाशश्रपणप्रयुक्तकपालोपजी[10]वित्वात् । पुरोडाशसंयुक्तस्यैव तुषोपवा[11]पे विनियोगात् । तेन चरौ न कपालेन तुषोपवापः कार्यः । तथा 'उत्तरार्द्धात् स्विष्टकृते समवद्यति' इत्युत्तरार्द्धस्य स्विष्टकृदप्रयोजकः । आग्नेययागादिप्रयुक्तपुरोडाशैकदेशोपजीवित्वात् । 'तेनावत्तोत्तरार्द्धनाशेऽऽज्येन स्विष्टकृत्कार्यः । 'यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुर्वापहरेयुर्वाज्येनैता देवताः परिसंख्याय यजेत' इति वचनात् । तथा

---

१. 'वाजिविधिः' इति मूलमातृकायां वर्त्तते । 'वाजिन' इत्युत्प्रेक्षितं मया । ख ग घ ङ च छ मातृकासु च नैवेदं पदं दृश्यते ।

२. 'निष्क्रम्य' इति ख च मातृकापाठः ।

३. 'यर्हि' इत्यारभ्य 'तर्हि' तावत् ग मातृकायां नास्ति ।

४. 'तेनाक्षि' इति ख मातृकापाठः ।

५. 'तत्र' इत्यारभ्य '°नुनिष्क्राम्य' पर्यन्तं ख च मातृकयोर्नास्ति ।

६. 'भ्यञ्जनं क्रियमाणमेकहायन्यानयनस्य' इति ग घ ङ मातृकापाठः ।

७. 'निष्पादित' इति च मातृकापाठः ।

८. 'पदस्थ' इति मू मा० पा० ।

९. '°योनको हि' इति ख मातृकापाठः । ङ मातृकायाञ्च निनयनमप्रयोजकं प्रणीता तृतीयया श्रुत्या हविः संवपनार्थत्वात्प्रणीतानां द्वितीयातत्प्रतिपत्त्यर्थः ओ पुषोपवायस्य' इत्यधिकं पूर्वतोऽपकृष्टः ङ मातृकायाम् ।

१०. 'जीव्यत्वादिति ङ मातृकापाठः ।

११. 'वापेऽपि' इति ङ मातृकाणाठः ।

पश्वाल[1]म्भस्य शकृल्लोहितनिरसनमप्रयोजकम् । यागीयहवि[2]र्भूत-हृदयाद्यर्थालम्भानुनिष्पादित्वात्तस्य । त[3]था 'प्रणीताभिर्हवींषि संयौति' इति विधाय 'अन्तर्वेदिप्रणीताः निनयति' इति श्रुतम् । निनयनमप्रयोजकं प्रणीता[4]नाम् । तृतीय[5]या श्रुत्या हविः संय[6]वनार्थत्वात् प्रणीतानां द्वितीयया तत्प्रतिपत्त्यर्थं निनयनं तदुत्प[7]त्तेरप्रयोजकम् । धारणस्य तु प्रयोजकमेव । एवं हविःशेषभक्षणादिसर्वप्रतिपत्तीनां धारणप्रयोजकता । अन्यथैकेन कृत्स्नसोमपानसम्भवादनेकपानबाधः स्यादिति मिश्राः । प्रतिपत्तिर्नाम—आकीर्णक[8]रतानिवृत्तिः । सा च भक्षणादिनैवेति नियमांशेऽदृष्टकल्प[9]नाद्वारेण प्रयोजकत्वेऽप्युप[10]पत्तेरप्रयोजिका । तदेतत्तन्त्रादि चातुर्विध्यमुक्तं वृद्धैः ।

साधारणं भवेत्तन्त्रं परार्थे त्वप्रयोजकम् ।
एवमेव प्रस[11]ङ्गः स्याद्विद्यमाने स्वके विधौ ।।

शा० भा० ११-१-१ इति ।

साधारणमगृह्यमाणविशेषं विशेषग्रहणे त्वावृत्तिरित्यर्थादुक्तम् । परार्थ इति विषयसप्तमी । 'विधौ प्रयुक्तिसामर्थ्ये' एवमियतः पदार्थान् तन्त्रादिप्रकारेणानुष्ठापयन् प्रयोगविधिः, क्रमा[12]नियमे प्रयोगविक्षेपापत्तेः ।

---

१. °'लम्भनस्य' इति घ छ मातृकापाठः ।
२. 'हविर्भूत' इति ख ग च छ मातृकासु नास्ति ।
३. तथेति पदं ग मातृकायां नास्ति ।
४. 'प्रणीतानाम् । तदुत्पत्तेरप्रयोजकम्' इति यावत् ङ मातृकायां नास्ति
५. 'तृतीय' इति घ च छ मातृकापाठः ।
६. °'वपनार्थ°' इति मू० मा० पा० ।
७. °'मप्रयोजकं तदुत्पत्तेः' इति ख मा० पा० ।
८. °'करणता' इति घ मा० पा० ।
९. 'कल्पनात् वारणप्र०' इति घ छ मातृकापाठः ।
१०. °उत्पत्तेरिति च छ मातृकापाठः ।
११. 'प्रसङ्गे' इति छ मातृकापाठः ।
१२. 'क्रमनियम' इति च मा० पा० ।

## श्रुत्यादिप्रमाणषट्कनिरूपणं क्रमभेदनिरूपणञ्च

श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तिरूपषट्प्रमाणोपस्थापितक्रमविशिष्टा नेवानुष्ठापयति। यद्यपि पौर्वापर्यमानन्तर्यञ्चेति क्रमो द्वेधा लोके प्रसिद्धस्तथापि प्रयोगविधिः प्रयोगप्राशुभावायानन्तर्यरूपमेवापेक्षते तदपेक्षितमेव श्रुत्यादीनि बोधयन्तीति।

### श्रुतिनिरूपणम्

तत्र क्रमपरं वचनं श्रुतिः। यथा 'वेदं कृत्वा वेदिं करोति' इति वेदकरणवेदिकरणयोः[1] प्राप्ते क्रमपरमेवेदम् न[2] 'वषट्कर्त्तुः प्रथमभक्षः' इति क्रमविशिष्टपदार्थविधिः। होतुर्भक्षणप्राप्तावपि तदनुवादेन प्राथम्यरूपक्रमविधाने एकस्मिन् पदे एकप्रसरताभङ्गापत्तेः एकस्य हि पदस्यैकरूपेणोद्देश्येन विधेयेन वार्थेन भाव्यम्[3]। 'यो भक्षः स प्रथमः' इति तूद्देश्योपादेययोर्यत्तच्छब्दयो गयोर्विरुद्धयोरेकपदप्रतिपाद्यत्वासम्भवात् क्रमविशिष्टो भक्षो वषट्कारनिमित्तसमाख्यादिनिमित्तभक्षभिन्नो विधीयत इति क्रमपरत्वस्यापि भावाद् भवतीयमपि श्रुतिः। एवं 'आश्विनो दशमो गृह्यते, तं तृतीयं जुहोती'ति शुद्धक्रमपरम्।

### अर्थनिरूपणम्

अर्थः प्रयोजनम्, तद्वशेन क्रमः। 'अग्निहोत्रं जुहोति', 'यवागूं पचती'ति यवाग्वा होमार्थत्वात् तदर्थः पाकः पाठक्रमबाधेन पूर्वं[4] क्रियते,

---

१. °णयोः वचनान्तरेण प्राप्ते इति ख ग ङ छ मातृका पाठः।

२. 'न वषट्' इति ग० मा० पा०।

३. 'भाव्यमर्थेन' इति व्यत्ययः ख मातृकायाम्। ङ मातृकामाञ्य °रमाठ्यमिति पाठः।

४. पूर्वमित्यारभ्य 'प्रतिपद्येते 'इति यावत् छ मातृकायां नास्ति।

सोऽमार्थः[1] क्रमः। एवं 'उपहूत उपहूयस्व' इत्यनुज्ञादानयाचनार्थौ मन्त्रौ, याचनपूर्वकत्वात् दानस्य मन्त्रपाठक्रमबाधेन[2] वैपरीत्यं प्रतिपद्येते।

## पाठनिरूपणम्

पाठक्रमस्तु मन्त्रपाठेन ब्राह्मणपाठेन वा यः कल्प्यते[3] यथा—प्रयाजानां 'समिधः समिधोऽग्न आज्यस्य व्यन्तु' इत्यादिमन्त्रपाठक्रमेणानुष्ठानक्रमः। मन्त्राणां स्मारकत्वात् [4]तत्क्रमेण स्मृतौ तथानुष्ठानात्। अमन्त्रकपदार्थेषु ब्राह्मणानामेव स्मारकत्वात् तत्क्रमेणानुष्ठानक्रमः। विरोधे च[5] मन्त्रपाठो ब्राह्मणपाठाद्बलवान्[6]। यथाआग्नेयाग्नीषोमीययोः मन्त्रपाठेनैवानुष्ठानम्, न तु ब्राह्मणपाठेनाग्नीषोमीयस्य पूर्वम्[7]। मन्त्राणामेवात्र स्मारकत्वात् तत्क्रमस्यान्तरङ्गत्वात्। ब्राह्मणानां[8] त्वर्थं निधाय निवृत्तव्यापाराणां प्रयोगः[9]। सम्बन्धा[10]भावेन तत्क्रमस्य बहिरङ्गत्वात्।

## स्थाननिरूपणम्

स्थानं तूपस्थानमुप[11]स्थितिः। तद्वशेन क्रमो यथा—साद्यस्क्रे सोमयागे श्रुतम् 'सह पशूनालभत' इति ज्योतिष्टोमादतिदेशेन स्वस्वकालेऽग्नीषोमीय-सवनीयानुबन्ध्याः पशवः प्राप्तास्ते सह [12]तेऽऽलब्धव्या इत्यर्थः। तत्र

---

१. '०मर्थक्रमः। इति मू० मा० पा०।
२ 'क्रमबाधेन' इति ङ मातृकायां नास्ति।
३. 'कल्पते' इति ख ग ङ छ मातृकासु दृश्यते।
४. 'तदि' ति ङ मातृकायां नास्ति।
५. च इत्यस्य स्थाने नेति पदं च मातृकायां दृश्यते।
६. 'बलीयान्' इति ग छ मातृकयोः पाठः।
७. पूर्वमन्त्रणामिति समस्तः पाठः घ मातृकायाम्।
८. 'ब्राह्मणम्' इति छ मातृ का पाठः।
९ प्रयोगपदानन्तरं 'संयोग' पदमपि मूल मातृकायाम्।
१०. 'सम्बन्ध्यमावेन' इति ख मा० पा०।
११. उपस्थितिरिति पदं ख ग घ ङ च छ मातृकासु नास्ति।
१२. 'ते' पदं मूलमातृकायां नास्ति।

सवनीयस्थानेऽन्ययोरालम्भः । प्रधानसोमयागप्रत्यासत्तेरुभयोरेकस्थानातिक्रमसाम्याच्च । अग्नीषोमीयस्थाने ह्यालम्भेऽऽनुवन्ध्यस्य स्वसवनीयस्थानद्वयातिक्रमः स्यात् । एवमानुवन्ध्यस्थानेऽप्यग्नीषोमीयस्योह्यः । तत्रादौ सवनीयस्यालम्भः । पश्चादितरयोरागन्तुकयोः, तस्य[1] स्थानादुपस्थितेः । तयोर्मध्ये पूर्वमग्नीषोमीयस्य । प्रकृतौ तथा दृष्टत्वात् । यद्यपि भिन्नकालत्वात् आर्थिकं[2] पौर्वापर्यं तयोः प्रकृतौ न चार्थिकं चोदकः प्रतिदिशति । विकृतौ तथापि 'सन्देहेऽणुरपि विशेषोऽध्यवसायकरो भवती'ति न्यायेन पूर्वदृष्टत्वमेवात्र निर्णायकमिति मिश्राः । अनियत एवानयोः क्रम इति राणकः ।

## मुख्यप्रवृत्तीनिरूपणम्

प्रधान[3]क्रमेणाङ्गानां क्रमो मुख्यक्रमः । यथा आग्नेयादिक्रमेण निर्वापादिक्रमः ।

एकाङ्गक्रमेणान्याङ्गानां क्रमः प्रवृत्तिक्रमः । यथा—'वाजपेये सप्तदश प्राजापत्यान् पशूनाल[4]भेत' इति सप्तदशयागाः प्रजापतिदेवत्या विहितास्ते सम्प्रतिपन्नदेवत्यत्वात् सहकार्यतयानुष्ठाप्यन्ते प्रयोगविधिना । तदङ्गान्यारादुपकारकाणि तन्त्रेण । सामवापिकानि तूपकरणादीनि विशेषग्रहणात् प्रतिपश्वावृत्त्या । तत्रोपाकरणं सर्वपशूनां येन क्रमेण प्रवृत्तम्, तेनैव नियोजनादीन्यपि कार्याणीत्ययं प्रवृत्तिक्रमः ।

---

१. 'तस्य स्थानादुपस्थितेः इत्यस्य स्थले' तस्य। शिवनग्रहेणोप स्थाना दन्नुष्ठेयत्वा वगतेः । इति ग छ मातृ का पाठः

२. आर्थिकपदानन्तरमेव 'प्रन्कृतौ' इति पदमपि पठति ख मातृका । घ मातृका च 'प्रकृतौतयोः पौर्वापर्यम्' इति पठति । ङ मातृकायां प्रकृतौतयोः पौर्वापर्यण चार्थिकं चोदकः 'इति वाक्ययोजना ।

३. प्रधानक्रम । इत्यारभ्य 'निर्वापादिक्रमः इतियावत् च मातृकायां नास्ति ।

४. मूलमातृकायां ङ मातृकायाञ्च 'आलभते' इति पाठः ।

## श्रुत्यादीनां बलाबलनिरूपणम्

एषां प्रमाणानां पूर्वं यथासम्भवं बलवत् प्रवृत्तेर्मुख्यक्रमो बलवान्। यथा दर्शे दधियागङ्गमातञ्चनं पूर्वेद्युः प्रवृत्तं पश्चादाग्नेय[1]यागप्रवृत्तिः। प्रयाजशेषाभिधारणादि तु प्रधानक्रमेण पूर्वमाग्नेयहविषः पश्चाद्दध्नः, न तु प्रवृत्तिक्रमेण पूर्वं दध्नः। प्रवृत्तिक्रमे ह्यङ्गानां परस्परं प्रत्यासत्तिर्भवति। मुख्यक्रमे त्वङ्गानां प्रधानैः सह[2] प्रत्यासत्तिरनुगृह्यत इति तस्य बल[3]-वत्त्वम्। मुख्यक्रमाच्च पाठक्रमो बलवान्। यथा उपांशु[4]याजा[5]ज्यनिर्वापः। पाठेन पुरोडाशाः[6] प्रथमकालेऽनुष्ठेयाः, न तु मुख्यक्रमेणाग्नेय[7]यागव्रीहि-निर्वापानन्तरम्। पाठाच्चार्थ उक्तार्थोदाहरणे अर्थादिभ्यः श्रुतिः। यथा— आश्विनस्य पाठात्[8] तृतीयस्थाने ग्रहणे प्राप्ते 'आश्विनो दशमो गृह्यत' इति श्रुत्या दशमस्थाने ग्रहणम्। प्रपञ्चितञ्चैतत्प्रमाणजातं मीमांसाप्रकाशे तातचरणैरित्यलम्।

## पौर्वापर्यरूपक्रमनिरूपणम्

[9]एतैरुपस्थापिता[10]नन्तर्यरूपं क्रमं[11] पदार्थ[12]विशेषणतया प्रयोग-

१. 'आग्नेयाङ्ग' इति घ० मा० पा०।
२. 'सह' इति मूलमातृकायां नास्ति।
३. 'बलवत्वात्' इति मू० मा० पा०।
४. °पांसुयाज्याज्य इति मू० मा० पा०।
५ 'आज्य' पदं घ ङ मातृकयोर्नास्ति।
६. पाठेन च इति ङ मा० पा०। 'पुरोडाशप्रथन' इति ग च छ ङ मातृकासु पाठः।
७. 'आग्नेयाङ्ग' इति ग मा० पा०।
८. 'पाठात्' इति पदं ख मातृकायां नास्ति।
९. तैरिति ख मातृकापाठः।
१०. 'उपस्थापितम्' इति घ छ मातृका पाठः।
११. 'क्रम' पदं च मातृकायां नास्ति।
१२. पदार्थ० इत्यारम्य 'परिगृहीतानां तु' इतियावत् छ मातृकायां नास्ति।

विधिरनुष्ठापयति। अनेन[1]क्रमेण पदार्थान् कुर्यादिति। भिन्नप्रयोग[2]-विधिपरिगृहीतानां तु[3] पदार्थानां नायं क्रमः, अङ्ग श्रुत्या क्वचित्पौर्वापर्य-मात्रं बोध्यते[4]। यथा—दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते'ति 'एष वाव प्रथमो यज्ञो यज्ञानां यो[5] ज्योतिष्टोमः, य एतेनानिष्ट्वा अथान्येन यजते गर्त्तपत्यमेव तद् भवती'ति वा[6] दर्शपूर्णमासोत्तरकालत्वं सोमयागाङ्गं[7] श्रुत्या विधीयते। तदुत्तरकालत्वञ्च तद्विकृत्यङ्गत्वेन विधीयते, नाग्नि[8]-ष्टोमसंस्थं ज्योतिष्टोमं कृत्वा उक्थ्यषोडश्यतिरात्रसंस्था विश्वजिदादयश्च कार्याः। 'य एतेन' इत्यत्र ह्यग्निष्टोसंस्थो ज्योतिष्टोमः परामृश्यते, तस्य नित्यत्वात्। 'अन्यान्येन' इत्यत्र विकृतिमात्रम्। उक्थ्यादिसंस्थाश्च काम्यत्वात् विकृतयः[9]। अत्र 'पशुकाम उक्थ्यं गृह्णीयात्'। षोडशिना वीर्यकामः स्तुवीत' 'अतिरात्रेण प्रजाकामं याजयेत्' इतिवाक्यैः सोमयागा-श्रिताः राणकमते।

[10]चरमसोम[11]यागाभ्यासरूपाः मिश्रमते। समाप्तिसम्बन्धिस्तोत्ररूपा उक्थ्यादिपद[12]वाच्याः संस्थाः फलाय विधीयन्ते। फलार्थगुणेषु चाश्रयधर्मा-तिदेशः। न चैवमन्यशब्देन संस्थानामेव ग्रहणं सन्निधानात्, न तु विश्वजिदा-

---

१. 'अनुक्रमेण' इति ग मातृका पाठः।
२. विधिपदं च मातृकायां नास्ति।
३. 'तु' पदं घ ङ मातृकयोर्नास्ति।
४. 'बोध्येत' इति मू० मा० पा०।
५. 'यत्' इति ग मातृका पाठः।
६. 'वा' इत्यस्य स्थाने 'च' पदं ख ङ छ मातृकासु दृश्यते। 'अन्त' इति छ मातृ-कायाम्।
७. 'यागान्ताङ्ग' इति ख मा० पा०।
८. 'तेनाग्नि' इति ग ङ छ मातृका पाठः।
९. 'विकृतयः' इति पदं ग छ मातृकयोर्नास्ति।
१०. 'राणकमते चरम' ग घ च छ मातृका पाठः।
११. 'सोमयागे' इति ख मातृका पाठः।
१२. 'पदवाच्याः। इति ख मातृकायां नास्ति।

दीनामिति वाच्यम् 'यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते[१]' इत्यादिवाक्यशेषे तेषामप्युपस्थितेः। क्वाचित्तु भिन्नप्रयोगविधिपरिगृहीतानामानन्तर्यरूपोऽपि क्रमोऽङ्गम्। यथा 'यः सोमेन यक्ष्यमाणोऽग्निमादधीत, स नर्त्तुं पृच्छेन्न नक्षत्रम्' इति अत्र ह्याधानकर्त्तुः सोमेन यक्ष्यमाण' इति विशेषणमुच्यते तच्च[२] [३]नायोगव्यावृत्त्या सोमेन[४] यक्ष्यमाण एव[५] नायक्ष्यमाण इति नित्यत्वात् सोमस्यायक्ष्यमाणाप्रसिद्धेः। [६]नाप्यन्यमोगव्यावृत्त्या सोमेनैव यस्क्ष्ययमाणो नान्येनेति होमादेरप्यवश्यकर्त्तव्यत्वेन सोममात्रे कर्त्तुरप्य-प्रसिद्धेः[७]। अतः सोमेनत्रिनन्तरं यक्ष्यमाण इति विशेषणार्थः। तेनाधानानन्तरमेव सोमं कुर्वन्[८] सोमाङ्गमृतुनक्षत्रादिकं न विचारयेदिति वचनार्थः, न त्वाधानकालप्रतिषेधोऽयम्। 'यदहरेवैनं श्रद्धोपनेदथा[९]धीत, सैवास्यर्द्धि-रि'ति वचनेन तस्य कृत्वात्। तेनाधानानन्तरं दर्शपूर्णमासौ कृत्वा सोमकरणे इष्टि[१०]पूर्वाधानमित्युच्यते। सोमस्यैव[११]करणे सोमपूर्वाधानमिति पक्षद्वयं त्रैवर्णिकानाम्, न तु ब्राह्मणस्य सोमपूर्वत्वमेव, तं प्रति सोमादूर्ध्वमिष्टेरुत्कर्ष-विधानात्। 'आग्नेयो वै ब्राह्मणो देवतया स सामेनेष्ट्वाग्नीषोमीयो भवति, यदेवादः[१२] पौणमासं हविस्तत्तर्हचनुनिवपेत्। यर्हि[१३] स उभयदेव[१४]त्यो

१. °'द्यते° तदीयपाति°' इति च मातृका पाठः।
२. 'तत्र' इति च मातृकायाम्
३. तच्च न त्वान्ययोग०' इति ग० मा० पा०।
४. 'स।मेनैव' इति ख मातृकापाठः।
५. 'एव' पदमत्र ख मातृकायां नास्ति।
६. 'नाप्यन्य०' इत्यारभ्य नान्येनेत्यन्तः ख मातृकायां नास्ति।
७. °सिद्धेरनन्तरं ॐ 'इति मू० मा० दृश्यते।
८. कुर्यात्' इति छ मातृका पाठः।
९. 'अथ' इति पदं मूलमातृ कायां नास्ति।
१०. 'इष्टेः' इति ख मा० पा०।
११. '°स्येव' इति ग मा० पा०।
१२. 'अदः' इति मू० मा० नास्ति।
१३. 'तर्हि' इति ग च मातृकापाठः।
१४. '०द्वेवत्यो' इति ग मातृकापाठः।

भवतीति। अत्र हि पौर्णमास्या उत्कर्षो विधीयते। न च तां विना दर्शः फलाय कल्प्यते[1]। तस्मात् कृत्स्नोत्कर्ष, इति अत्र केचित् वचनात् पूर्णमास्या एवोत्कर्षः, दर्शस्तु प्रागेवेत्येवं विहृतादेव फलमिति। अन्ये तु न[2] पूर्णमास्या अप्युत्कर्षः, किन्तर्हि[3] पूर्णमासीधर्मकं कर्मान्तरं सोमा[4]दूर्ध्वं विधीयत इति।

सिद्धान्तस्तु पौर्ण[5]मास्यन्तर्गताग्नीसोमीयपुरोडासमात्रस्योत्कर्षः, पूर्वोत्तरवाक्यसन्दर्भात्। न चा तावता कृत्स्नोत्कर्षो निष्प्रमाणकः शक्यः कल्पयितुम्। वचनात्तु [6]तथानुष्ठानं [7]पूर्वसोमोत्तरं तु[8] षण्णामिति ब्राह्मणस्याप्यस्ति पक्षद्वयमिति संक्षेपः तस्मादेकप्रयोविधिपरिगृहतीतानामेव श्रुत्यादिप्रमाणक्रमनियमः, अन्येषां वाचनिकम् क्वचि[9]त्पौर्वापर्यमानन्तर्यं वेति।

## नियतक्रमाणामुत्कर्षापकर्षनिरूपणम्

एवं नियतक्रमाणामेक[10]स्योत्कर्षे तदादेरुत्कर्षोऽपकर्षे तदन्तस्यापकर्षो दण्डापूपवत्। यथा 'सवनीयपशावग्नीमारुतादूर्ध्वमनुयाजैश्चरन्ती'त्यनुयाजानामिष्टौ दक्षिणादानोत्तर[11]कालीनानामाग्निमारुतशास्त्रोत्तरमुत्कर्षे विहिते तदादीनां सूक्तवाकादीनामुत्कर्षः। अनुयाजानन्तर्यं हि सूक्तवा-

१. 'कल्पते' इति घ मातृका पाठः।
२. 'न' इति पदं मूलमातृकायां नास्ति।
३. 'किन्तु' इति ख मा० पा०।
४. 'सोमोर्ध्वम्' इति मू० मा० पा०।
५. 'पूर्णमास्य०' इति भू० मा० पा०।
६. 'तथा इरत्यस्य स्थाने 'पञ्च भाग०' इति ग० मातृका पाठः।
७. 'पूर्वम्' इति च मातृका पाठः।
८. 'तु' इति मूलमातृकायां नास्ति।
९. 'कूचित्' इति पदं घ मातृकायां नास्ति।
१०. 'मेवोत्कर्षे' इति च मातृ का पाठः।
११. '°कालमग्नि°' इति ख मातृ का पाठः। ग मातृ कायान्त्य' कालानामग्नि' इति पाठः।

काङ्गम्, तद्बाधेन पूर्वं क्रियमाणः[१] सूक्तवाकः[२] विगुणः स्यात् एवमग्रेऽपि यावन्निबद्ध[३]क्रमतोत्कर्षयोग्यता च। अतएव पुरोजशाङ्गानां दाक्षिणाग्निकानां पिष्टलेपफली[४]करणहोमानामेतैरनुयाजैः पुरो[५]डाशस्योकुर्वद्भिरपि पुरोडाशविधिपरिगृहीतेनोत्कर्षः। भिन्नप्रयोगविधि[६]परिग्रहेणनिवद्धक्रमत्वाभावात्। एवं तिष्ठन्तं पशुं प्रयजन्ती'ति प्रयाजानां प्रकृतौ हविरासादयोत्तरकालानां जीवति पशावपकर्षे विहिते प्रयाजान्तानां सामिधेन्यनुवचनादीनामपकर्षः। आधारानन्तर्ये हि प्रयाजाङ्गम्, तद्बाधेन क्रियमाणाः प्रयाजाः[७] विगुणाः स्युः। तेवाधारेऽपकृष्टे ततः प्रागप्येव[८]मपकर्षो यावन्निबद्ध[९]क्रमता अपकर्षे योग्यता च। अतएव सोमाङ्गाग्नीषोमीय प्रणयनोत्तरमाम्नातस्य पाशुकस्य यूपच्छेदनस्य दीक्षासु 'यूपं छिनत्ती[१०]'त्याद्ये दीक्षाहन्यपकर्षे विहिते नाग्नीषोमीयप्रणयनापकर्षः। भिन्नप्रयोगविधिपरि[११]ग्रहेण निवद्धक्रमत्वाभावात्। एवं दर्शपूर्णमासयोर्ह[१२]विरासादनोत्तरकालमाम्नाता वेदिः। पूर्वेद्युरमावास्यायां वेदिं करोती'ति दर्शे पूर्वेद्युरपकृष्टा

---

१. 'माणं' इति छ मातृ मा पाठः।
२. '°वाक्ये' इति मूलमातृ का पाठः।
३. 'क्रममुत्क°' इति ग मातृ का पाठः।
४. 'फलीकरण' इति मूलमातृ कायां नास्ति।
५. 'पुरोडाशे प्रसङ्गादुत्कु०' इति ग मा० पा०।
६. विध्य°' इति मूलमातृ का पाठः।
७. 'प्रयाजा. इत्यारम्म' स्युः' पर्यन्तं ङ मातृकायां नास्ति।
८. 'एवम्' इति छ मा० पा०।
९. 'निबद्धोप कर्ष' इति ख मा० पा०।
°'क्रममुत्क°' इति ग० मा० प०।
°क्रममपकर्ष' इति मू० मा० पा०।
१०. 'छिनद्धि' इति ङ मातृका पाठः।
११. °'ग्रहणे, इति मू० मा पा०।
१२. °रभिवासनो 'इति ग च छ मा० पा०।

न तदन्तमपकर्षति । सा[1]भान्यपाठकल्पे क्रमबोधात् प्रागेव विशेषतो वच[2]नापकर्षविधानात् । एकप्रयोगविधिपरिग्रहेऽपि[3] क्रमक्लृप्त्यभावात् । अनयैव दिशान्तोत्कर्षापकर्षावूह्याविति संक्षेपः ।

## क्रमानियमनिरूपणम्

यत्र तूक्त[4]क्रमप्रमाणाभावस्तत्र क्रमानियमं बोधयति । यथा प्रयाजानुमन्त्रणमन्त्राणां[5] 'वसन्तं[6] ऋतूनां प्रीणामि' इत्यादीनामेकोऽयमेको[7] तस्येत्यादीनां च शाखाभेदेनाम्नाताम् । एषां[8] हि सर्वशाखोपसंहारन्यायेनादृष्टार्थत्वेन च समुच्चये[9] सति न किञ्चित् क्रमनियामकमस्तीत्यनियतः[10] क्रमः । आद्ययोर्येन क्रमेण प्रवृत्तिस्तेनैवान्येषामुपाकरणादिवदिति चेत्, न तथा साहित्यबोधकैकप्रयोगविधिपरिग्रहाभावात् । तत्तच्छाखीयप्रयोगविध्य[11]नुष्ठापितानि हि पश्चात् पंसोपसंह्रियन्त इति । अयञ्च क्रमः पदार्थानामेवोक्तः ।

---

१. 'पाठ कल्प क्रम०' इति ख मा० पा० ।
'कतरय' इति ग छ मा० पा० ।
'सामान्य पाठ कल्पे' इति ङ मा० पा०
'पाठकल्प्य क्रम बाधात् । इति च मा० पा० ।
पाठेन कल्पेन' इति मूलमातृ कायाम् ।
२. 'विशेषवचनेन' ख ङ मातृका पाठः ।
३. °'ग्रहणे०' इति मू० मा० पा० ।
४. 'तूक्तमप्रयाणा ' इति छ मा० पा० ।
५. °'नुमन्त्रणानाम्' इति मू० मा० पा० ।
६. वसन्त' इति मू० मा० पा० ।
७. 'तस्य' इति पदं मूलमातृकायां नास्ति ।
८. 'एवंहि' इति मू० मा० पा० :
९. °'च्चयेप्राप्ते' इति ख घ ङ मातृ का पाठः ।
१०. नियत एव' इति ख ङ मातृका पाठः ।
११. विधिना इति मातृका पाठः ।

## एकविधिविहितानामेवैकपदार्थत्वनिरूपणम्

एकविधिविहितश्चात्रैकः पदार्थः न त्वेकयत्नसाध्यः। तेन 'चतुरश्चतुरो मुष्टीन्निर्वपती'त्येतद्विधिविहितश्चतुर्मुष्टिनिर्वाप। एकः पदार्थः। तेनाग्नेयाग्नीषोमीययोस्तावतानुसमयो, न त्वेकमुष्टिनिर्वापेण। एवं 'अष्टौ कपालान्युपदधाति' इत्येतद्विधिविहितमष्टसंख्य[1]ककपालोपधानमेकः पदार्थः। तेनाग्नेयादौ तत्संख्यककपाधानेनानुसमयः। एवं प्राजापत्यपशू[2]पाकरणादीनां पदार्था[3]नुसमयः। तथा[4] 'चतुरवत्तं जुहोति' इत्येतद्विधिविहितोऽवदानादिप्रदानान्त[5] एकः पदार्थः। अत्र वाक्ये होमाङ्गत्वेन चतुरवत्तं विधीयत इति[6] भाष्यकारः। 'सकृदुपस्तृणाति' द्विर्हविषोऽवद्यति' 'सकृदभिघारयती'ति वाक्यान्तर[7]प्राप्तचतुरवत्तानुवादेन तत्प्रतिपत्त्यर्थतया होमावयवभूतः प्रक्षेपोविधीयत इति वार्त्तिककारः। वक्ष्यते चैतत् विस्तरेण[8]। मतद्वयेऽपि 'द्विर्हविषोऽवद्यति' इति न स्वातन्त्र्येण द्व्यवदानविधिर्येन तावानेकः पदार्थः स्यात्, किन्तु चतुरवत्तविध्यपेक्षितमेव द्व्यवदानं समर्पयच्छेषभूतमेवेत्येकविधिविहितत्वादानादिप्रदानान्त एकः पदार्थस्तेनानुसमय आग्नेयादौ। एवं यत्र विधिभेदस्तत्राप्येकविध्यवयत्वेन विधानादेकपदार्थत्वम्। यथा 'व्रीहीनवहन्ति' इति [9]तण्डूलकर्मि[10]कायामवघातभावनायां विहितायां[11] 'कृष्णाजिनमधस्तादवस्तृणाति' इत्यारभ्य 'त्रिःफलीकरोति'

---

१ 'संख्याक' इति ङ मातृकापाठः।
२. '°पशुभूपा°' इति ग च छ मातृकपाठः।
३. °नामनु' इति घ मा० पाठ।
४. 'एवम्' इति मू० मा० पाठः।
५. 'होमान्तः' इति मू० मा० पाठः।
६. 'इति' पदं छ मातृकायां नास्ति।
७. 'वाक्यान्तरे प्रप्त०' इति मू० मा० पा०।
८. 'विस्तरेण' इति पदं ख ग घ च मातृकायां नास्ति।
९. 'तन्दुल' इति ख मातृकापाठः।
१०. 'विहितायाम्' इति छ मातृकापाठः।
११. 'विहितायाम्' इति पदं घ मातृकायां नास्ति।

इत्यन्तैर्विधिभिस्तण्डुलभावनावयत्वेनैव[1] तत्तदर्थविधानात् कृष्णजिनास्तरणादिफलीकरणान्त एकः पदार्थ। तेन नानाबीजेष्टौ तावता प्रतिबीजमनुसमयः। यत्र तु पदार्थानुसमये किञ्चिद्बाधकं तत्र काण्डानुसमयः। यथा अश्वप्रतिग्रहेष्टौ पौण्ड[2]रीकादिसम्बन्ध्यश्वदाननिमित्तायां सहस्तादिसंख्यपुरोडाशानामेकदेवत्यत्वात् सह प्रयोगे यदि [3]निर्वापादीनां पदार्थानुसमयः क्रियेत,[4] ततः सर्वेषामधिश्रयणं कृत्वा [5]यस्योद्वासने[6] ऽस्य भस्मीभाव एव स्यात्, अतः तत्रैकस्य निर्वापादिकाण्डमपवृज्य [समाप्य] अन्यस्य कार्यम् एवं पश्वेकादशिन्यां बहुयूपपक्षे यूपधर्माणामञ्जनादिपरिव्याणान्तानां काण्डानुसमयः। अञ्जनादिपरिव्याणान्तं 'यजमानो यूपं नावसृजेत्' इति विहितस्य यजमानकर्त्तृकस्यानवसर्गस्य पदार्थानुसमयेऽसम्भवादित्यलम्।

सर्वोऽपि चायं क्रमः स्मार्त्ताचारप्राप्तपदार्थानुष्ठापनोत्तरमनुष्ठा[7]प्ययमानः तदविरोधेनैव बोध्यते। यथा वेदवेदिकरणयोरेव[8] तावत् 'क्षुते आचामेत्' इति स्मार्त्तक्षुतनिमित्ताचमनप्राप्तौ तद्[9]व्यवधानेन क्रमः तद[10]भावे यथाश्रुत एवेत्येवं सर्वत्र। न चाचमनादिव्यवधाने श्रुतिविरोधः। प्रधानभूतप्रबलपदार्थबोधकत्वेन स्मृतेरप्यत्र प्राबल्यात्। गुणभूतदुर्बलक्रम-

---

१. 'तन्दुल' इति ख मातृकापाठः।
२. 'पुण्डरी०' इति ख मातृकापाठः।
३. 'निर्वापीनाम्' इति मू० मा० पा०।
४. 'क्रियते' इति घ मा० पा०।
५. 'द्यस्योद्वासने' इति मू० मा० पा०।
'आद्यस्य' इति घ मा० पा०।
'यस्ययस्यो०' इति ग मा० पा०।
६. '°वासनेत्यस्य' इति मा० पा०।
७. '°नुष्ठास्यमान' इति घ मा० पा०।
८. '°मध्येतावत्' इति ख घ ङ तातृकापाठः।
९. 'द्वयवदानेन' इति मू० मा० पा०। तदद्वय० इति ख मातृकापाठः।
१०. 'नोचेत्' इति मूलमातृकापाठः।

बोधकत्वेन श्रुतेर्दौर्बल्यात्। प्रमाण[1]बलाबलाद्धि प्रमेयबलाबलं बलीयः। प्रमेयविरोधकृतत्वात् प्रमाणविरोधस्य। विरोधालोचन[2]पूर्वकत्वात् बलाबलालोचनस्य। वस्तुवस्त्वाचमनुनादेः सुतादिनिमित्ताशुद्धिपरिहारार्थत्वेनाङ्गत्वान्न व्यवधायकत्वमिति नास्ति श्रुतिविरोधः। तदुक्तम्—

वेदिरेव ह्यनाचम्य कुर्वतो विगुणीभवेत्।
तामेव सगुणां कर्त्तुं शुद्ध्या न व्यवधास्यते ॥इति॥

(त० वा० १.३.७)

इत्थं सक्रमकसाङ्गप्रधान[3]प्रयोगमनुष्ठा[4]प्यैकस्मिन्देशेकाले[5] 'कैः कर्त्तृभिरयं प्रयोगोऽनुष्ठेय' इत्यपेक्षायां वाक्यान्तरबोधितान्[6] देशा[7]दीन् तदङ्गत्वेन[8] बोधयति। तत्रानुपादेयो देश आर्यावर्त्तादिस्मृतिप्राप्त एव। 'समे दर्शपूर्णमासाभ्यां यजेत' 'प्राचीनप्रवणे' 'वैश्वदेवेन यजेत' इत्यादिवाक्यप्राप्तस्तू[9]पादेयः समादिदेशः। स द्विविधोऽपि प्रयोगाङ्गत्वेन बोध्यते। कालस्त्वनुपादेय एव। 'पौर्णमास्यां पौर्णमास्या यजेत'। 'सायं जुहोति' इत्यादिवाक्यप्राप्तः[10] यागाङ्गम्। अनयोर्भेदाच्च प्रयोगभेदः यथा वरुण-

---

१. °बला०' इति घ ङ मातृकयोर्नास्ति।
२. '°पूर्वत्वा०' इति मू० मा० पा०।
३. 'प्रधान' पदं ङ मातृकायां नास्ति।
४. '°नुष्ठाप्य कस्मिन्' इति मू० मा० पा०।
५. 'कालैः' इति च मा० पा०।
६. '°तास्तान्' इति ग छ मा० पा०।
वाक्यान्तबोधिताम् इति ङ मा० पा०।
'बोधितात्तदङ्गत्वेन' इति च मा० पा०।
७. 'दशोदीन्' इति पदं ग ङ छ मातृकासु नास्ति। घ मातृकायां च 'तान्' इति पदमवलोक्यते।
८. 'न तदङ्ग०' इति ङ मा० पा०।
९. 'तूपादेयः' इत्यारभ्य 'प्रयोगाङ्गम्, इति यावत् ग छ मातृकयोर्नास्ति।
१०. 'प्राप्तः प्रयोगाङ्गम्' इति मू० मा० पा०। प्राप्तयागाङ्ग०' इति समस्तपाठः घ मातृकायाम्।

प्रघासपर्वणि दक्षिणोत्तरविहाररुपदेशभेदात् । दर्शपूर्णमासयोस्तु कालभेदात् । कर्त्ता तु यद्यपि फलकाम एव 'कर्त्तुः फलम् । इति न्यायात्तथापि वरणदक्षिणा दानाम्नानात् स्वस्मिंश्च तयोरसम्भवादन्मे समानेयाः । तत्र दर्शपूर्ण[1]मासयोर्यज्ञ[2]क्रत्वोस्चत्वार ऋत्विजः । [3]चातुर्मास्यानां यज्ञक्रतूनां पञ्चर्त्विजः । पशुबन्धस्य यज्ञक्रतोः षट् ऋत्विजः इत्यादिवाक्यैर्नियतमेवाङ्गम् । [4]तत्प्रयोजकत्वेन च फल[5]कामस्य कर्त्तृत्वम् । दक्षिवाभेदाच्च कर्त्तृ[6]भेदस्तद्भेदाच्च प्रयोगभेदः । यथा पूर्वोक्तावेष्टौ 'आग्नेयमष्टाकपालं निर्वपति श्यामो दक्षिणा' इत्यादिभिर्दक्षिणाभेदाम्नानात् । तेन दिशामवेष्टयी भवन्ती'ति बहुत्वमुपपद्यते । एवमन्यत्राप्यूह्यम् । इत्थमनुष्ठा[7]पितप्रयोगस्य प्राशुभावं बोधयति । विलम्बे [8]प्रमाणाभावात् । न चात्रापि मानाभावः । यागं[9] भावयेदनेनेत्थमित्यं[10]शत्रयप्रक्तायाः[11] भावनायाः युगपदनुष्ठा[12]पनादेवक्षण[13]वृत्तित्वं प्रतीयते[14] । तस्यासम्भवात् प्राशुभावकल्पनम् । पदार्थपरिमाणमप्यविभक्रष्टसमस्तपदार्थानुष्ठानाय ज्ञेयमित बोध्यत इति केचित् । अभ्यासादेव तत्सिद्धे स्मार्त्तपदार्था नियमाच्च नेत्यन्ये इति दिक् ।

---

१. 'पौर्ण०' इति ङ मा० पा० ।
२. °'क्रतोः' इति ग मा० पा० ।
३. चातुर्मास्यानां......पञ्चर्त्विजः यावत् ख ग घ ङ छ मातृकासु चा नास्ति ।
४. 'तद्' पदं च मातृकायां नास्ति ।
५. 'दक्षिणादानाद्याम्नानात् तस्यकर्त्तृत्वम्' इति घ ङ मातृकयोः वाक्यविन्यासः ।
६. °'कर्त्तृत्व' इति ग म० पा० ।
७. 'अनुष्ठापितस्य' इति घ मा० पा० ।
८. 'मानाभावात्' इति घ मा० पा० ।
९. 'भवन्तं या०' इति च मा० पा० ।
१०. 'त्रय' इति पदं छ मातृकायां नास्ति ।
११. 'युक्ताभव०' इति मू० मा० पा० ।
'युक्ताभावना' इति ङ मा० पा० ।
१२. 'अनुष्ठानात्' इति च मा० पा० ।
१३. °'वर्त्तित्वम्' इति ङ छ मा० पा० ।
१४. 'आश्रीयते' इति च मा० पा० ।

## प्रतिनिधिनिरूपणम्

इत्थमनुष्ठापितञ्च[1] प्रयोगं नित्यनैमित्तिकेषु निमित्तश्रुत्यवगतावश्यकतानुरोधेन यथाशक्तीत्युपवध्नाति। तेन मुख्याभोवे प्रतिनिधिग्रहणमङ्गभ्रेषे च प्रायश्चित्तमनुष्ठापपति। तत्र मुख्यद्रव्याभावे तत्सदृश एव प्रतिनिधिरूपादेयः। यथा व्रीह्यभावे नीवाराः। 'व्रहिभिर्यलेते'ति हि[2] व्रीहित्वजातिस्तल्लक्षिताव्यक्तिस्तदाश्रया[3] ह्यवयवाः पुरोडाशद्वारा यागाङ्गत्वेन विधीयन्ते। व्रीह्य[4]सम्भवे च जातिव्यक्त्योरङ्गत्ववाधेऽपयशक्तीत्युपवन्धात् विसदृशोपादाने[5] च यवा[6]ननुग्रहापत्तेः। ननु वैकल्पिकयवोपादानं भवतु, न न्यायलभ्यप्रतिनिध्युपादानमिति चेत्, न। वैकल्पिकेष्वेकस्मिन् सङ्कल्पिते[7]ऽन्यस्य तत्रानङ्गत्वत्। 'व्रीहिभिर्यक्ष्ये[8]' इति सङ्कल्प्य यवोपादाने[9] 'ननृतं वदेत्' इति कत्वङ्गभूतनिषेधातिक्रमः स्यात्। सदृशमपि निषिद्धं न प्रतिनिधेयम्। यथा 'अयज्ञिया वै माषा वरकाः कोद्रवाश्चे'ति। यद्यपि प्रतिनिधेर्न स्वरूपेणाङ्गत्वम्, किन्तु तद्गतानां मुख्यसदृशावयवानाम्, तथापि तान्तरीमकस्तस्यपि यज्ञसम्बन्धोऽस्त्येव। स च माषादीनां निषिद्ध इति न तेषां प्रतिनिधित्वम्। यदा[10]

---

१. 'च' पदं' नास्ति छ मातृकायाम्।
२. 'हि' पदं छ मातृकायां नास्ति।
३. '°' श्रयाञ्चावयवाः। इति ङ च मा० पा०।
°'श्रयाश्चावयवाः। इति छ मा० पा०।
४. °'ह्यलाभे' इति घ ङ मातृकापाठः।
५. °'दानेन' इति घ मा० पा०। ङ मातृकायाञ्च '°पादानेन वाननुग्रहापत्तेः' इति पाठः। च मातृकायां °'पादानेऽवयानुनुग्रहापत्तेः। इति पाठः।
६. 'यवानुग्रहानुपपत्तेः' इति ग मातृकापाठः। घ मातृकायां 'यव' पदं नास्ति।
७. 'सङ्कल्पितेनास्य' इति घ मा० पा०।
८. 'यक्ष्यत' इति मू० मा० पा०।
९. '°दानेऽपि' इति छ मा० पा०।
१०. 'यद्यपि' इति ख मा० पा०।
११. °'वोपादेयम्' इति छ मा० पा०।

प्रतिनिधिमुयादाय प्रयोगे प्रकान्ते मुख्यं लब्धम्। तदा तदेवा[1]देयम्। तदसम्भवनिमत्तित्वात्प्रतिनिधेः। निमित्तापाये [2]नैमित्तिकाभावात् प्रतिनिधिना प्रधानेऽनुष्ठिते तु मुख्य[3]लाभेन प्रधानावृत्तिः। गुणानुरोधेन प्रधाना[4]वृत्तेः। पदा प्रधानमात्रक्षमा व्रीहयः, नीवारास्तु शेषकार्यपर्याप्ता अपि तदा[5] व्रीहय एवोपादेयास्तेषां साक्षात्प्रधानाङ्गत्वात्, न[6] तु नीवाराः। शेषकार्याणां तु तत्संस्कार[7]कतया यागाङ्गत्वादङ्गाङ्गाच्च। प्रधानाङ्गस्यवलवत्त्वात्। एवं[8] यदा पशुवन्धनमात्रक्षमः [9]खदिरः। कदरस्तु तक्षणादिसंस्कारक्षमो लभ्यते, तदा खदिरोपादानं ज्ञेयम्। क्वचित्तु वाचनिक एव प्रतिनिधिः। यथा—'यदि सोमं न विन्देत् पूतीकानभिषुणुयात् इति। अत्र हि न सोमाभावे पूतीकानां विधिः। सोमसादृश्येन तेषां प्रतिनिधित्वेन प्राप्तेः। यद्यपि तेभ्यः सुसदृशानामन्येषां सत्त्वात् न मन्दसदृशानां प्राप्तिस्तथापि सर्वसदृशद्रव्योपनिपाते याव[10]न्यायेन सु[11]सदृशं

---

१. °'वोपादेयम्' इति छ मा० पा०।
२. 'त्वनैमित्तिका०' इति मू० मा० पा०।
'चानैमित्ति०' इति ख ग छ मा० पा०।
'च निमित्तका०' इति च छ मा० पा०।
३. 'लाभेन तदनुरोधने' इति ख घ ङ मातृका पाठः। 'लाभेऽपिन' इति छ मातृका पाठः।
४. 'प्रधानावृत्तेरन्याय्यत्वात्' ख ग घ ङ मातृकासु दृश्यते।
५. 'तदापि' इति मूलमातृकायां छ मातृकायाञ्च दृश्यते।
६. 'न तु नीवाराः' इति मूलमातृकायां नास्ति।
७. 'तत्संस्कारकतया' इति ख मातृकायां नास्ति।
'संस्कारकतयाङ्गा०' इति ङ मातृकापाठः।
'यागाङ्गत्वादङ्गाङ्गाच्च' इति मूलमातृकापाठः।
८. 'एवञ्च' इति छ मा० पा०।
९. 'खादिरोऽस्ति' इति ख ङ मातृकापाठः।
१०. 'यावन्न्यायेन' इति मू० मा० पा०।
११. 'ससदृशम्' इति ङ मा० पा०।

नियम्यते, तावद् वचनेन मन्दसदृशाः पूतीका नियम्यन्त इति प्रति[1]निधि-नियम एवायम् । अपूर्वविधितो नियमविधौ लाघवाच्च यदा न्यायलभ्येन वाचनिकेन वा प्रतिनिधिना प्रक्रमे तस्यायमाचारस्तदा न तत्सदृशमुपादेयम्, किन्तु मुख्यसदृशम् । प्रतिनिधेः स्वरूपेणानङ्गत्वात् । तद्गतानां मुख्य-स[2]दृशावयवानामाङ्गत्वात् । केषाञ्चित्तु[3] न[4] प्रतिनिधिः । यथा देवतायाः । यस्मिन् यागे येन शब्देन या देवता सैव तेनैव शब्देनोद्दिष्टा तत्र देव[5]तेति । देवतायाः विधिगम्यत्वेना[6]दृष्टद्वारा [7]यागाङ्गत्वात् तदपचारे प्रति-निहि[8]ताया तददृष्टं सिध्यती[9]ति प्रमाणाभावात् । तथाग्नेराहवनीयादे-राधानजन्यादृष्टसंस्कारत्वेन तदपचारेऽन्येन तत्कार्यसिद्धौ [10]मानाभावान्न[11] प्रतिनिधिः । तदादृष्टार्थप्रयाजादिक्रियापचारे क्रियान्तरेण तत्कार्यसिद्धय-ज्ञानान्न सः[12] । तथा मन्त्राणां दृष्टार्थत्वेऽपि तदप[13]चारे न सः । तत्कार्यं ह्यर्थस्मरणम् अपचरितमन्त्रार्था स्मरणे कमर्थं[14] स्मर्त्तुं[15] प्रतिनिधिरूपा-

---

१. 'निधि' पदं ङ मातृकायां नास्ति ।

२. 'मुख्यावयवानाम्' इति मू० मा० पा० ।

३. 'तु' पदं ङ मातृकायां नास्ति ।

४. 'न' स्थाने 'तत्' शब्दः दृश्यते ग मातृकायाम् ।

५. देवतेति पदं ङ मातृकायां नास्ति ।

६. °'बगम्यत्वेऽदृष्ट०' इति च मा० पा० ।

७. यागपदं ख ङ मातृकयोर्नास्ति ।

८. '°निहितया' इति मू० मा० पा० ।

९. 'इति' इत्यस्य स्थाने 'इत्यत्र' इति ङ मातृकायां दृश्यते ।

१०. नानाभावादिति ङ मा० पा० ।

११. न प्रतिनिधिरिति पदं ङ ख मातृकयोर्नास्ति ।

१२. 'सः' स्थाने 'प्रतिनिधिः' इति पदं ख ङ मातृकयोः दृश्यते ।

१३. °'चरेण' इति मू० मा० पा० ।

१४. किमर्थमिति च मातृकायाम् । छ मातृकायाञ्च 'कर्मर्थम्' इति पाठः ।

१५. 'स्मर्त्तुम्' इति पदं छ मातृकायां नास्ति ।

देयः। स्मरणे तु सिद्धे कार्ये किं प्रतिनिधिनेति। तथा यजमानस्य प्रोषितस्यान्यत्र व्यापृतस्य[1] मृतस्य वा न प्रतिनिधिः। [2]प्रतिनिध्युपात्तस्य तस्य स्वामित्वापरपर्याययजमानत्वा[3]सम्भवात्। फलिसंस्काराः वपनादयः प्रोषितव्यापृताभ्यां स्वयं कार्याः। आज्यावेक्षणादयस्तु याजमानमिति[4] विशेषसमाख्यया [5]बाधे आध्वर्यवमिति[6]। सामान्यसमाख्यया अध्वर्युणा कार्या इति। किं प्रतिनिधिना मृते तु पुरुषान्तरोपादानेऽऽध्वर्य[7]वादिप्रवर्त्तने च कर्त्तुरभावात्। पत्न्यास्त्वस्वतन्त्राया अनग्नेश्च तदकर्तृत्वान्न प्रतिनिधिः। सत्रादौ तु सप्तदशसु यजमानेष्वेकस्मिन् मृते संख्यापूरणायास्त्येव प्रतिनिधिः। यद्यपि प्रतिनिहितो न स्वामीमध्ये प्रविष्टत्वात् संख्यापूरणाय सा[8]मादिभिरा[9]नेयः, तथापि क्रत्वर्थपदार्थेषु फलिसंस्कारेषु कर्त्तृपरिच्छेदकसंख्या सम्पादनाय आनेय एव। यथाशक्तीत्युपबन्धात्। काम्यत्वेऽप्यारब्धानां नित्यत्वात्। एवमाध्वर्यवादिकर्त्तृणां दृष्टार्थावघातादिक्रियायाः[10] गुणस्य चास्ति प्रतिनिधिरित्यलम्।

## अथ प्रायश्चित्तानि

यस्य सर्वाणि हवींषि नश्येयु'रित्या[11]दिवाक्यात् प्रधानार्थावत्तनाशादावाज्येन यागः कार्यो, न शेषात् पुनरवदानम् अवि[12]कलपुरोडाशीय-

---

१. 'व्यावृत्तस्य' इति छ मा० पा०।
२. 'प्रतिनिध्यु०' इत्यारभ्य० सम्भवात् 'पर्यन्तं ख च मातृकयोर्नास्ति।
३. ०'मानासम्भ०' इति मू० मा० पा०।
४. 'इति' पदं ग मातृकायां नास्ति।
५. 'बाध्या' इति ग मा० पा०।
६. 'आध्वर्यवसामान्य' इति मू० मा० पा०।
७. 'आध्वर्यवादि' इत्यारभ्य 'सप्तदशशु यजमाने' पर्यन्तं ङ छ मातृकायोर्नास्ति।
८. 'सङ्ख्यादिभिः' इति मू० मा० पा०।
९. ०'रानमनात्' इति मू० मा० पा०।
१०. 'कियागुणस्य' इति ङ घ छ मातृकासु समस्त एव पाठः।
११. 'इत्यादिना वाक्येन' इति ख मा० पा०।
१२. 'विकल' इति ङ मा० पा०।

मध्यपूर्वार्द्धापादानकाव[1]दानस्य भाष्यकारमते यागहविष्टात् तस्य पुनरसम्भवात्। वार्त्तिकारमते[2]ऽपि सकलपुरोडाशस्य पात्रद्वयव्यासक्तस्य[3]-हविष्टवात्। तस्य च नाशात्। एवमेकदेदतोद्देशेन विहिता[4]नामनेकद्रव्याणां सकलहोमिकैकदव्यस्य चैकदेशविनाशे वार्त्तिकमते हविरन्तरमेवोत्पादनीयम्, हविष्ट्वस्य व्यासज्यवृत्तित्वात्।

भाष्यकारमते तु अनेकद्रव्याणामेकद्रव्यनाशे तदेवोत्पादयेत्। द्वयवत्तरूपहविपामितरद्रव्येषु सत्त्वात्। सकलहोमिकैकद्रव्यस्यैकदेशविनाशे तूभयमतेऽप्येतद्धविरुत्पाद इति। यथा करम्भ[5]पात्रप्राजापत्यचित्रेष्वेककपालेषु। एवं स्विष्टकृदाघर्थावत्तनाशेऽपि न पुन[6]रवदानम् किन्त्वाज्यमदृष्टार्थं स्विष्टकृदादौ। चतुर्द्धाकरणादेस्तु लोप एव। 'यस्य पुरोडाशं[7] क्षाययति, त[8] यत्रं निर्ऋतिर्गृह्णाति, यदा [9]तद्धविः सन्तिष्ठते। अथ[10] तदेव निर्वपेत्, यज्ञो यस्य प्रायश्चित्तिरि'ति। अत्र कृत्स्नदाहे पुनः प्रयोगात्मकं प्रायश्चित्तमेकदेशदाहस्यावर्जनीयत्वात्। 'भिन्ने जुहोति' 'स्कन्नेजुहोती'त्यत्र न [11]लौकिकं भेदनादिनिमित्तम्, [12]नैमित्तिकहोमस्य फलकल्पापातात्, किन्तु प्रकरवात् कपालभेदनं हवि[13]स्कन्दनं च। तत्राविशेषश्रुतेः कृत्स्नैकदेशभेदनयोर्निमित्तत्वम्, एवं स्कन्दनस्यापि न च

---

१. 'वदानस्य' इति च मातृकायां नास्ति।
२. 'अपि' पदं च मातृकायां नास्ति।
४. °'सक्तस्य व्यासज्य' इति ङ मा० पा०।
५. 'विटितान्य' इति मू० मा० पा०।
६. 'करम्भण' इति ङ मा० पा०।
७. 'पुनरेवाव०' इति ग मा० पा०।
८. 'पुरोडाशश्चाक्षयति' इति घ मा० पा०।
९. 'तं यज्ञं' इत्यस्य स्थाने 'तथा' इति ख मा० पा०।
१०. 'तया' इति ङ मा० पा०।
११. 'तेऽप्यु०' इति ङ मा० पा०।
१२. 'लैङ्गिकम्' इति च मा० पा०।
१३. 'तन्निमित्त०' इति मू० मा० पा०।
१४. °'स्पन्दनं' इति घ ङ मातृका पाठः।

होमस्य भिन्नकपालसंस्कारकत्वात् कृत्स्नभिन्नस्यानुपयोगित्वेनासंस्कार्यत्वादेकदेशभेद एव होम इति वाच्यम्। भिन्न[1]स्य संस्कार्यत्वेन निमित्ताश्रुतेर्नित्यवत् क्रत्वङ्गता होमस्य स्यात्। निमित्त[2]सप्तम्या। कर्मबोधनात्। संस्कार्यं चानित्यमिति नित्यानित्यसंयोगविरोधः स्यात्। प्रतिप्रयोगं भेदनं[3] कार्यमिति[4] चापद्येत। तस्मात्सप्तमीश्रुत्या निमित्तं भेदनम्। न च संघर्षण[5]स्वभावाना[6]मेकदेश[7]भेदस्यावर्जनीयत्वेन न[8] निमित्ततेति वाच्यम्। संघर्षण[9]भेदनयोर्भिन्न[10]त्वस्यानुभविकत्वेनैकदेष[11]भेदस्य कादचित्कत्वात्[12]। होमश्चायं प्रतिभेदनमावर्त्तते। प्रतिनिमित्तं नैमित्तिकावृत्तिरिति न्यायात्। एवं स्कन्दनेऽपि। 'यस्योभयं हविरार्त्तिमार्च्छेत्' इत्युभयात्तर्त्तौ पञ्चशरावयागः प्रायश्चित्तं दर्शकर्माङ्गत्वेन विधीयते, न त्वार्त्तदोहप्रतिनिधित्वेन दर्शे पञ्चशरावद्रव्यविधा[13]नम्। प्राप्तयागे द्रव्यविधौ। [14]महेद्रविकल्पितेन्द्रदेवतानियमविधौ च[15] वाक्यभेदात्। अन्यथैन्द्रमिति पाक्षिकानुवादोऽनर्थकः स्यात्। न च द्रव्यनाशेन दर्शकर्मणो

---

१. 'भिन्नसंस्कार्यत्वे निमित्ताश्रुतेः' इति ख ग घ ङ च छ मातृका पाठः।
२. 'निमित्त०' इत्यारभ्य 'बोधनात्' इति यावत् ख ग घ ङ च छ मातृकासु च नास्ति।
३. 'भेदेन' इति मूलमातृकापाठः।
४. 'इति' पदं घ मातृकायां नास्ति।
५. 'संघर्ष' इति च मा० पा०।
६. 'स्वभावत्वात्' इति ख मा० पा०।
७. 'भेदनस्य' इति ङ मा० पा०। 'कपालस्यायर्ज०' इति छ मा० पा०।
८. 'न' इति पदं ख मातृकायां नास्ति।
९. 'संघर्ष' इति च मातृका पाठः।
१०. 'स्यानुभविकत्वे०' इति ख मातृकायां नास्ति। 'लोकप्रसिद्धभिन्नत्वेनैकदेश०' इति ग घ ङ छ मातृका पाठः।
११. 'भेदत्वस्य' इति ग मा० पा०।
१२. °'चित्कप्रसङ्गात्' इति च मा० पा०।
१३. 'विधाने' इति ङ मा० पा०।
१४. 'माहेन्द' इति घ ङ मातृकयोः दृश्यते।
१५. 'च' इति नास्ति ङ च मातृकयोः।

निवृत्तौ तत्कर्मणो निवृत्तौ तत्कार्यस्य साधनाकाङ्क्षायामिदं कर्म तत्कर्म[1]स्थानापन्नं विधीयताम्, न तदङ्गत्वेनेति वाच्यम्। द्रव्यान्तरस्यापि सम्भवेन कर्मनिवृत्त्यभावात्। प्रकरणात्तु द्रव्यनाशनिमित्तवैगुण्यपरिहारार्थत्वेन तदङ्गत्वेन विधानम्। 'यस्य हविर्निरूप्तं पुर[2]स्तात् चन्द्रमा अभ्युदियात्। स त्रेता[3] तण्डुलान्विभजेत्, ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं [4]निर्वपेत्, ये स्थविष्ठाः तानिन्द्राय प्रदात्रे दध्नश्चरुं, ये क्षोदिष्ठास्तान्निष्णवे शिविविष्टाय शृत[5] चरुम् इति वाक्ये त्वकालोपक्रमे निमित्ते दर्शस्यैव पूर्वदेवतापनयेन देवतान्तरसम्बन्धो विधीयते, न तु कर्मान्तरम्, प्रकृतहविषां प्रत्यभिज्ञानात् सत्यां गतौ विशिष्टविध्यादिगौरवायोगाच्च। तथा[6] हि—'त्रेधा तण्डुलान्विभजेद्। इत्यत्र त्रेधा विभागस्य मध्यमादिवाक्यैरेव सिद्धेरविधानात् तण्डुलपदस्य प्रकृत[7]हविस्त्रयोपलक्षकत्वमाश्रित्य हवींषि विभजेदित्यर्थः। विभागस्य संयोगा[8]पेक्षत्वात् पूर्वहविषां देवता[9]संयोगेन श्रवणात् देवताभ्यौ विभागो विधीयते। ततश्चाप[10]रित्यक्तयागान्वयानां हविषां देवतान्तरसंयोगऽपेक्षितो हविषां देवतान्तरसंयोगोऽपेक्षितो मध्यमादिवार्यैर्विधीयते। मध्यमानुद्दिश्याग्निर्दाता[11] विधीयते। स्थविष्ठान् दधि चोद्दिश्येन्द्रः प्रदाता[12] क्षोदिष्ठान् शृतं चोद्दिश्य विष्णुः शिपिविष्टः, दात्रादिशब्दानां यौगिकत्वात् पदद्वय-

१. 'तत्कार्यापन्नं' इति मू० मा० पा०।
२. 'पुरस्ताद्' इति पदं घ ङ मातृकयोर्नास्ति।
३. 'त्रेधा' इति घ मा० पा०।
४. 'कुर्यात्' इति मू० मा० पा०।
५. 'शृते' इति मू० मा० पा०।
६. 'तथाहि' इति पदं ख च मातृकयोर्नास्ति।
७. 'प्रकृते' इति ङ मा० पा०।
८. ०'क्षेपकत्वात्' इति ख मा० पा०।
९. 'देवतान्तरसंयो०' इति घ मा० पा०।
१०. 'ततश्चोपरि०' इति छ मा० पा०।
११. 'होत्रवि०' इति ङ मा० पा०।
१२. 'प्रदाता विधीयते' इति च मा० पा०।

प्रतिपादितैकदेवताकारकविधानान्न वाक्यभेदः। यत्र[1] पुनः देवतावाचिपदानां योगासम्भवस्तत्र विशेषविशेष्यभावासम्भवात् क्रियाकृत्त्या वाक्यभेदः। यथा 'अग्नये कृतिकाम्य इत्यादौ विशेषणविशेयाग्निकृतिकासहितयोः देवतात्वम्, न तु केवलाग्नेः। कृत्तिका नाम एव वा 'सह श्रपयति' इति वाक्येन सम्प्रतिपन्नदेवत्ययोर्दधि[2]स्थविष्ठयोः शृतक्षोदिष्ठयोश्च सह श्रपणाद्दधिशृतयोरधि[3]करणत्वस्य चरुत्वस्य च प्राप्तेः[4]। उद्देश्यद्वयनिमित्त[5]को वाक्य[6]भेदस्तु वाक्यद्वये[7] गत्यभावादङ्गीक्रियते। यद्वा धात्वर्थभेदेऽपि सर्वकारकविशिष्टभावनान्यरविधानाद्[8] वाक्यभेदः। तदुक्तम्—

भिद्यते भावनाक्षात्रं धात्वर्थो नाय[9]जिश्रुतेः।

त० व० २.३.२४ इति।

एवञ्च दर्शे उपांशुयाजपक्षे तद्धविषोऽपि पूर्वदेवतापनयोस्त्येव। देवतान्तरासम्बन्धात्तु तस्य लोप एव[10]। यद्यपि तिमित्ते[11] निर्वापः श्रूयते तथापि कर्मोपक्रर्मो[12]पलक्षितश्चन्द्राभ्युदयो निमित्तम्। यस्य हविरभ्युदियादित्य-

१. 'यत्र' इत्यारभ्य 'नाम एव वा' इति पर्यन्तं मूलमातृकायां नास्ति।

२. 'विपुषोः' इति घ मा० पा०।

३. 'अधिक गुणत्वस्य' इति घ ङ मातृकयोः पाठः।

४. 'प्राप्तिः' इति मू० मा० पा०।

५. 'निमित्तो' इति मू० मा० पा०।

६. 'वाक्यभेदस्तु' इति ङ मातृकायां नास्ति।

७. 'वाक्यभेदद्वये' इति च मा० पा०।

८. °'नादवाक्य०' इति च मा० पा०।

९. 'न यजि' ग छ मातृकापाठः। 'धात्वर्थेनायजि' इति च मा० पा०।

१०. 'एव' इति पदं मूलमातृकायां नास्ति।

११. 'निमित्तवाक्ये' इति ग मा० पा०।

१२. 'क्रम' इति ङ मातृकायां नास्ति।

प्रवृत्तस्य हविषोऽभ्यु दय[1]सम्बन्धा[2]सम्भवात् प्रकृत्तं हविरिति बोधात्। तद्विशेषणस्य निर्वापस्याविक्षिततत्वात्। अतश्चतुर्दश्यां दर्शभ्रान्त्या कर्मोपक्रमे चन्द्राभ्युदयो भावीति ज्ञाते नैमित्तिको देवतान्तरसंयोगः कार्यः, न तु तण्डुलावस्थे हविषि[3]। तद् ग्रहणस्याविवक्षिततत्वात्। यदा त्वेकद्विमुष्टि-निर्वापानन्तरं चन्द्राभ्युदयज्ञानं तदा षिष्ट[4]निर्वायस्य[5] पूर्वदेवताभ्योऽपनयेऽपि देवतान्तरसंयोगस्यापदार्थेऽसम्भवात् तुष्णींकरणम्। विभागे हि संयोगमात्रापेक्षः पदार्थावयवेऽपि सम्भवति। संयोगस्तु प्राकृतीनां पदाथेनैव क्लृप्त इति तत्स्थानापत्त्या वैकृतीनामपि पदार्थेनैव[6] संयोगात्। असन्नयतोऽपीदं नैमि[7]त्तिकं प्रायश्चित्तं भवति। तस्य दधिशृताभावेप्युद्देश्य-साहित्यस्याविवक्षिततत्वात् तण्डुलानामेव देवतान्तरसंयोगसम्भवादिति।

संक्षिप्ता[8]भ्युदयेष्टिस्तु यथामूलमिहाप्यताम्।
निस्तरोऽस्या भ्रातृकृते[9] भाट्टालङ्कारेऽऽप्यताम्॥

एवमन्यानि प्रायश्चित्तान्यूक्तानि[10]। वक्ष्यन्ते चावसर इति दिक्।

सोऽयं प्रयोगविधिरङ्गवाक्यैकवाक्यता[11]पन्नः प्रधानविधि[12]रिति कल्प्यत्वादूहादिवदवेद[13] इति राणके। लिङ्गादिकल्प्यश्रुतिवद् वेद एवेति मिश्राः।

---

१. '°भ्युदयासम्ब०' इति घ ङ मातृकापाठः।
२. 'समभ्युदयाद्' इति छ मा० पा०।
३. 'हविषि इति' छ मा० पा०।
४. 'अवशिष्ट' इति च छ मा० पा०।
५. '°वापस्यपूर्वनिर्वापस्य' इति छ मा० पा०।
६. 'पदार्थे नैव' इति छ मा० पा०।
७. 'प्रायश्चित्तं नैमित्तिकम्' इति व्यत्ययः ख ङ मातृकायोः।
८. 'निगूठा०' इति ख ङ मातृकापाठः।
९. 'कृतो०' इति घ मा० पा०।
१०. °'न्युक्तानि' इति मू० मा० पा०।
११. °'त्वाप०' इति ख मा० पा०।
१२. 'विधिरेवतस्य' इति ख घ ङ मातृकासु दृश्यते।
१३. °'दवेदत्व' इति ख घ ङ मा० पा०।

प्रयोग[1]विधिः[2] राजर्षेर्विषयं गतसंशयम् ।
पश्यन्तु बहु[3]दृश्यन्तु जीवभौमिकदर्शितम् ॥१॥

## नियमविधिनिरूपणम्

पक्षप्राप्तार्थनियमबोधको[4] विधि[5]र्नियमविधिः । नियमश्चाप्राप्तांशपूरणम् । यथा 'व्रीहीनवहन्ति' इति । पुरोडाशद्वारा यागार्थत्वेनावगतानां व्रीहीणां वैतुष्याकाङ्क्षयां कदाचिदवघातः कदाचिन्नखविदलन-[6]मपि चाक्षेपात् प्राप्यते । तत्र विदलनादिपक्षेऽवघाताप्राप्तेस्तदंशेऽवघातकर्त्तव्यतानेन विधीयते । यद्यपि चाक्षेपात् प्रागेव शास्त्रप्रकृतेरपूर्वविधिरेवायमिति प्रतीयते, तथापि यदि शास्त्रं न स्यात् तदाक्षेपः प्रवर्त्तेतेत्यालोच्य फलतो नियमविधिरित्युच्यते । अप्राप्तांशपूरणे चावधातस्य कृते नख[7]-विदलनादिनिवृत्तिर्भवत्या[8]र्थिकी, न विधिफलम् । प्रथमोपस्थितौ[9] नियम एव भवतु[10], भावरूपस्तत्फलं भवती[11]ति नियमविधिः । एवं 'हविष्कृदेहि' इति 'त्रिरवघ्नन्नाह्व[12]यति' इत्यत्र मन्त्रे[13] [14]त्रिरभ्यासविशिष्टाह्वनस्य नियमविधानमिति राणके ।

---

१. 'अपूर्व०' इति ग ङ मातृकयोः पाठः ।
२. 'विधेः' इति ख मा० पा० ।
३. 'सन्दृश्यम्' इति मू० मा० पा० ।
४. 'बोधकस्तत्फलको' इति ङ मातृकायां दृश्यते ।
५. विधिपदं छ मातृकायां नास्ति ।
६. °'दलनादि' इति मू० मा० पा० ।
७. 'नख' पदं मूलमातृकायां नास्ति ।
८. 'वि० प्यार्थिकी' इति ग घ मा० पा० ।
९. °'पस्थितो' इति मूलमातृकायां छ मातृकायाञ्च पाठः ।
१०. 'तु' इत्येव ख ग मा० पा० । घ मातृकायां 'एव तु' इति पाठः ।
११. 'इति' पदं घ ङ छ मातृकासु नास्ति ।
१२. °इयतीति मू० मा० पा० ।
१३. 'मन्त्रे' इति ङ मा० पा० ।
१४. त्रिपदं ख मातृकायां नास्ति । घ ङ मातृकायोश्च 'मात्र' पदं नास्ति ।

अर्थप्राप्ताह्नानानुवादेन त्रिरभ्यासमात्रविधिरिति मिश्राः एवं द्वादशाहे 'पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्त' इति प्रागुक्तमादन्हः पत्नीसंयाजान्ता नियम्यते। द्वादशानामन्हां साङ्गानां साहित्येन फले विधानात्पूर्वोत्तरादृष्टा[1]र्थोऽण्गेन सह प्रयोगावगमात् पूर्वेषां दीक्षोपसदादीनामिवोत्तरेषामपि प्रत्यहम[2]नुष्ठानेनान्त्येऽन्हि सह प्रयोगावगतेः 'कियतां सह प्रयोग' इत्यपेक्षायामनियमे प्राप्ते 'पत्नीसंयाजान्तान्य[3]हान्येकादश कृत्वाऽन्त्येऽन्हि शेषाणां सह प्रयोग' इति नियम्यते। सर्वेष्वहस्सु पत्नीसंयाजान्तत्वविधौ कर्मशेषप्रतिषेधे सत्यपूर्वविधिः स्यात्। नियमविधौ तु लाघवम्। एवं व्रीहिभिर्यजेते'त्यादिर्द्रव्यस्य नियमः प्रकृतौ। विकृतौ 'जाघन्या पत्नीः संयाजयन्ति' इति दर्शपूर्णमासयोः पत्नीसंयाजेषु जाघन्याज्ययोर्विकल्पितयोः पशो प्राप्तयोर्जाघनीनियमः। गुणस्य 'अरुणया क्रीणाती'ति प्रकृतौ नियमः। विकृतौ[4] 'शुक्लाना व्रीहीणां चरु[5]मि'ति। देशकालकर्त्तॄणां नियमविषयः प्रागुक्ता एव। एषां[6] क्रियादीनां दृष्टार्थो यो विधिः, स नियमविधिः। तेन 'समिधो यजति', 'दध्नेन्द्रियकामस्य जुहु[7]यात्, यदि कामयेत वर्षुकः पर्ज्जन्यं स्यादिति नीचैः सदो मिनुयात्', 'पञ्चमे प्रज्ञाकाममुपन[8]यीत' इत्यादीनां व्यावृत्तिः[9]। भ्रान्त्या[10] पक्षप्राप्तावपि नियमो भवतीति केचित्। यथा—'आत्मा श्रोतव्यः। इति

---

१. 'दृष्टार्थोऽङ्ग' इति मू० मा० पा०।

२. °'मननुष्ठानेन' इति मू० मा० पा०।

३. 'अहानि' पदं मू० मा० नास्ति।

४. 'विकृतौ तु' इति छ मा० पा०।

५. 'चरुमतिदेश०' इति घ मा० पा०।

६. 'एवम्' इति ख मा० पा०।

७. 'जुहुयात्' पदं घ मातृकायां नास्ति।

८. °'मुपनयेत्' इति मू० मा० पा०।

९. 'व्याकृत्तिरित्यपि कश्चित्' इति घ ङ मातृकयोः पाठः।

१०. 'कश्चिद्भ्रान्त्या' इति ख मा० पा०।

[1]वाक्येन वैशेषिकादेरप्यात्मज्ञानार्थतया भ्रान्त्या प्राप्तौ वेदान्तश्रवणां नियम्मत इति तीर्थान्तरे विस्तर[2] इति दिक् ।

## परिसंख्याविधिः तद्भेदनिरूपणम्

इतर[3]निवृत्तिफलको विधिः परिसंख्याविधिः । परिः वर्जने, संख्या बुद्धिः । वर्जनबुद्धिहेतुरित्यर्थः । स चोभयोर्विधेय[4]निवर्त्ययोर्नित्यप्राप्तो भवति । परिसंख्या च शाब्दी फलतश्चे[5]ति द्विधा । 'तीणि ह वै यज्ञस्यादेराणि । गायत्रीवृहत्यनुष्टुप् च अत्र हयेवावयन्ति । अतएवोद्वपन्ति' ज्योतिष्टोमे वहिष्पवमानादिषु त्रिषु पवमानस्तोत्रेषु गायतयादिछन्दस्का एन[6] ऋचो विनियुक्ताः[7] । तानि छन्दांस्युदरवदभ्यर्हितानीति स्तुतिः[8] निवृद्धस्तोम[9]केषु एकविंशेनातिरात्रेण प्रजाकामं याजयेत्' इत्यादिषु य[10] स्तोमयूर्त्यर्थमृगन्तरावापोद्वायः, यश्च न्यूनसंख्यास्तोमेषु 'त्रिवृदग्नि[11]ष्टुदग्निष्टोम' इत्यादिषु स्तोम[12]साहचर्याद् ऋचामुद्वायः, ताविमौ गायनयादिष्वेन कार्यौ, नान्यत्रेति वचनार्थः । अत्र सर्वस्तोत्रेष्वावापोद्वापयोर्नित्यप्राप्तौ पवमानातिरिक्तस्तोत्रेषु तयोः परिसंख्याशाब्दी । 'अत्र हयेव' हत्येवकारेणान्ययोग[13]व्यवच्छेदार्थेनेतरनिवृत्तिप्रतीतेः । इयं श्रौती ।

१. 'इत्यनेन' इति पदं 'इति वाक्येन' इत्यस्य स्थाने घ ङ च छ मातृकासु दृश्यते ।
२. 'विस्तर' इति पदं ख ङ छ मातृकासु नास्ति ।
३. 'इतर' पदं ख ङ मातृकयोर्नास्ति ।
४. 'विधेयानिव०' इति ख मा० पा० ।
५. 'च' पदं मूलमातृकायां तथा घ मातृकायां नास्ति ।
६. 'एव' पदं मूलमातृकायां नास्ति ।
७. 'विनियुक्ताअपि' इति घ मा० पा० ।
८. श्रुतिः इति मू० मा० पा० ।
९. 'स्तोमेषु' इति मूलमातृकायाम् ।
१०. 'यत्सोम' इति मू० मा० पा० ।
११. '°दग्निष्टुत्' इति छ मातृकायां नास्ति ।
१२. 'स्तोमस्नूहासाय' इति मू० मातृ पा० ।
१३. 'योग' शब्दः घ मातृकायां नास्ति ।

लाक्षणिकी तु 'पञ्च पञ्चनखाः भक्ष्या' (वा० रा० कि० का० १७।३९)' इति। अत्र पञ्चानां[1] पञ्चनखानां [2]शशादीनां तद्भिन्नानां च भक्षणस्य रागतो नित्यप्राप्तौ तद्भिन्नभक्षणपरिसंख्या लक्षणया आश्रीयते। वाचकपदाभावात्। अतएवास्यां[3] त्रयो दोषाः—श्रुतहानिरश्रुतकल्पनाप्राप्तबाधश्चेति। श्रुतपञ्चपञ्चनखभक्षणस्य रागप्राप्तत्वेन विधेयताहानमश्रुतेतरनिवृत्तेर्विधेयताकल्पनं रागप्राप्तार्थबाध इति शब्दनिष्ठौ द्वौ, अन्त्य[4]ऽर्थनिष्ठः। चमने 'इमानगृभगन् रशनामृतस्य इत्यश्वाभिधामादत्ते' इति श्रुते वाक्ये फलतः परिसंख्या। इष्टकाहरणार्थाश्वगर्दभरशानाग्रहणयोर्मन्त्रय लिङ्गान्नित्यप्राप्तौ सम्भावितायायत्र[5] वाक्ये गर्दभरशनादानान्मन्त्रस्व निवृत्तिर्बोध्यते। यद्यपि लिङ्गा[6]त्प्राक् श्रुतिप्रवृत्तेरश्वाभिधान्यामयं मन्त्रविधिस्तथापि यद्ययं न स्यात्तदा लिङ्गादश्वाभिघान्यां मन्त्रः प्राप्नुयादेवेत्यालोच्य गर्दभाभिधान्यादाननिवृत्तिपरोऽमिति ज्ञायत इति भवति[7] फलतः परिसंख्या[8] उक्तञ्च[9]—

प्रयोजनं विधेः किं स्यादस्येति तु निरुणे।
न गर्दभाभिधानीतः फलमन्यन्निवर्त्तनात्॥इति।

त० व० ३.१.१४

एवं पूर्वोदाहृते गृहमेधीयगत 'आज्यभागौ यजति' इत्यत्राङ्गा[10]न्तराणां

---

१. 'पञ्चापञ्च' इति छ मा० पा०।
२. 'शशादीनाम्' इति पदं घ मातृकायां नास्ति।
३. '°वास्या' इति छ मा० पा०।
४. '°वन्त्यार्थ' इति मू० मा० पा०।
५. 'मन्त्रवाक्ये' इति मूलमातृकानाम्।
६. 'लिङ्गात्माच्छ्रुति' मूल मातृकायाम्।
७. 'भवति' पदं घ छ मातृकयोर्नास्ति।
८. '°संख्याविधिः' इति मू० मा० पा०।
९. उक्तञ्चेत्यारभ्य फलतः परिसंख्यापर्यन्तं ख ङ मातृकयोर्नास्ति।
१०. 'यजतीति वाक्येऽङ्गा°' इति छ मा० पा० ग मातृकायाञ्च 'यजतीति वाक्यान्तराणाम्' इति पाठः।

फलतः परिसंख्या। अत्र सर्वत्राप्राप्तांशाभान्न नियमः। [1]इतरनिवृत्तिरेव[2] एवमेव[3] त्रिविधो विधिर्भावनाविधानेन धर्मे प्रमाणम्। उक्तञ्च—

विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्ते परिसंख्येयि गीयते॥

इति। त० वा० १.२.३४

## निषेधनिरूपणम्

निषेधानां निवर्त्तनावोध[4]कत्वेनाधर्मे प्रामाण्यम् निषेधो नञ्। तद् युक्तानि वाक्यानि 'न ब्राह्मणं हन्यादित्'यादीनि निषेधा इत्युच्यन्ते। निवर्त्तना च निवृत्त्यनुकूलो व्यापारः। सा[5] च नञोच्यते। ब्राह्मणं[6] हन्यादिति[7] ब्राह्मकर्मक हनन[8]प्रतीते विधि[9]सम्बद्धनञ्श्रवणे च 'अयं मां निवर्त्तयति' इति [10]प्रतीतेः। केचित्तु निपातानां द्योतकत्वात् तत्सभिव्याहृतविधेरेव निवर्त्तनामां शक्तिमाहुः, तद्विधानेकशक्ति[11]कल्पनापत्तेर्नातीव युक्तम्। निपातानां तु न द्योतकत्वम्, किन्तु स्वातन्त्रमेणार्थाव[12]बोधकत्वम्। इहापि विधिसमभिव्याहृतेन नञा निवर्त्तना वोध्यते। अन्ये तु नञ्[13]विध्योः

---

१. 'इतर' इत्यतः पूर्व फल पदमपि दृश्यतेमूलमातृकायाम।
२. '°रेवतु' इति ग छ मा० पा०।
३. 'एवमेष' इति घ छ मा० पा०।
४. '°बोधक' इत्यारभ्य 'इत्युच्यन्ते' पर्यन्तं छ मातृकायां नास्ति।
५. 'सा च' इति घ छ मातृकापाठः।
६. 'ब्राह्मणं न' इति घ मातृकापाठः।
७. हन्यादित्यनन्तरं 'लिङ्गा रागतो, इत्यापि मूलमातृकायाम्।
८. 'हननानुवाद' ग छ मा० पा०।
९. 'ब्राह्मणं हन्यादिति ब्राह्मणकर्मकहननप्रतीते विधिसम्बद्धनञ् श्रवणे' इति च छ मातृकयोः दृश्यते।
१०. 'प्रतीतौ सम्बद्धेन नञा 'इति छ मातृकापाठ।
११. 'कल्पनोपपत्तेरिति घ मातृकापाठः।
१२. 'व' मूलमातृकायां च मातृकायाञ्चनास्ति।
१३. 'नञ् विध्योरेवतयोः' इति घ ङ मातृकयोः दृश्यते।

केवलयोरभावप्रवर्त्तनाशक्तयो[1]र्मिलितयोर्निवर्त्तनायां शक्तिमाहुस्तदति-क्लिष्टम्। तस्माद्विधिना प्रवर्त्तनां द्वेषदर्थप्राप्तामनूश्र[2] तद्विरुद्धा निवर्त्तना नञा बोध्यते। यद् ब्राह्मणं हन्यात् तन्नेति। ननु नञो विधिसम्बन्धे स्यादेवम् स[3] च ब्राह्मणपदेन सम्बद्धयताम्, 'अब्राह्मणं हन्यादि'ति। हन[4]नेन वा सम्बद्धयताम्, हननाभा[5]वं कुर्यादिति। अभावस्य च[6] कार्यत्व्यात् सङ्कल्पो लक्ष्य[7]ताम्, प्रधानविध्यबाधाय विधिनिषधैकरुप्याम च लक्षणाङ्गीकारो न दोष इति चेत्, न। सर्वपदार्थानां प्रधानभूतविध्य-न्वयदर्शनेन नञर्थस्यापि तथा प्रतीतेः। ब्राह्मणपदान्वये च नञः सुवन्त-सम्वन्धे 'नित्यं समासे' कत्यामनोक्तेः समासा[8]पत्त्या 'नलोपोनञः इति पा० सू० ६.३.७३ नलोपपत्तिः। [9]हननान्वये नञ्हन्त्योर्ललक्षणा स्यात्। पदश्रुत्या भावनोपसर्जनत्वाच्च धात्वर्थस्य न वाक्चान्नअर्थान्वयः अतएव नाख्याताभिहित[10]याऽऽर्थभावनयान्वयस्तस्याः समानाभिधानश्रुत्या प्रवर्त्तनो-पसर्जनत्वात्। अतः [11]पारिशेष्याद् विध्यन्वये[12] निवर्त्तनाभिधेया। सा च निषेध्यस्यानिष्टहेतुत्वं विना न धटत इति तदाक्षिप्ते।

## निषेधानां पुरुषार्थत्वक्रत्वर्थत्वनिरूपणम्

तच्चानिष्टं पुरुषार्थनिषेधेषु [13]पुरुषप्रत्यवायः क्रत्वर्थनिषेधेषु 'नावृतं

---

१. '°र्वर्त्तितयोः' इति ङ मातृकायाम्।
२. 'अनूघते' इति घ मा० पा०।
३. च स्थाने तु घ ङ च छ मातृकासु दृश्यते।
४. 'हनने' इति मू० मा० पा०।
५. '°भावं वा' ङ मा० पा०।
६. 'चाकार्य°' इति घ ङ मातृकयोः पाठः। 'च वाक्यार्थ°' इति मातृकापाठः।
७. 'लभ्यताम्' इति घ मातृकापाठः।
८. '°पत्त्या' नलोपो नञः 'इति नलोपा°' पर्यन्तं ख च मातृयोर्नास्ति।
९. 'स हनना°' इति च मा० पा०।
१०. '°मिहितार्थभावनया' इति घ ङ मातृकापाठः।
११. 'परिशेषाद्' इति मू० मा० पा०।
१२. '°न्वयेन' इति ग ङ मातृकापाठः।
१३. पुरुषार्थ' इत्याराभ्यनिषेधेषु यावत् ङ मातृयायां नास्ति।

वदेत्' 'न स्त्रियमुपेयात्' इत्यादिषु क्रतुवैगुण्यम् नन्वेषां पुरुषार्थनिषेधानुवादित्वमस्तु। पर्वणि ब्रह्मचर्यस्य पुरुषार्थतया विधानात्। क्रतूनां च प्रायेण पर्वणि विधानात्। अनृतोक्तिवर्जनस्य च[1] सदा पुरुषार्थतया विधानत्। पुनः श्रवणार्थ[2]वत्त्वाय वा क्रतुयुक्तपुरुष[3]धर्मतया विधिरस्तु, न शुद्धक्रत्वर्थ[4]तया। तद्[5] यथा 'जञ्जभ्यमानोऽनुब्रूयान्मयि दक्षक्रतू' इति क्रतुयुक्तजज्जभ्यमामानरुषा[6]र्थतया मन्त्रो[7] विधीयते। मैवम्। युक्तं तत्र पुरुषसंयोगेन श्रवणात्। इह त्वाख्यातेन कर्त्तुरनभिधानात् पुरुषाश्रुतेः प्रकरणात् क्रत्वर्थतैव। एतेनानुवादपक्षः प्रत्युक्तः। ते च निषेधाः प्रप्तिपूर्वा एव। अन्यथा नित्यानुवादता। यथा 'न पृथिव्वामग्निश्चेतव्यो, नान्तरिक्षे, न दिवि, हिरण्यं निधाय चेतव्य[8]' इति। अत्राधो[9] निषेधः[10]. प्राप्तिपूर्वकत्वात् द्वौ नित्यानुवादौ। एवमाज्यभागौ प्रकृत्य 'न तौ पशौ करोति, न सौम्येऽध्वर' इति श्रुतम। [11]तत्राप्यायो निषेधोऽन्त्यो नित्यानु[12]वादः। सोमयाज्ञस्यापूर्वत्वेनाज्यभागाप्राप्तेः। प्रतिश्च रागतः[13] शास्त्रतो वा। तत्राधा प्रागुक्तेषु। द्वितीया 'अतिरात्रे षोडशिनं गृह्णाति' इत्यादिना नातिरात्रे शोडशिनं गृह्णाति' इत्यादौ शास्त्रप्राप्तस्य [14]सर्वथा निषेधायोगा-

---

१. पदं छ मातृकायां नास्ति।
२. 'णार्थत्वाय' इति ञ छ मातृकयोः पाठः।
३. 'पुरुषार्थधर्मतया' इति ङ मा० पा०।
४. '°क्रत्वर्थता' इति मू० मा० पा०।
५. 'तद्' ङ च छ मातृकासुनास्ति।
६. 'पुरुषधर्मतया' इति ख ङ मा० पा०।
७. 'मन्त्रजपो' इति मू० मा० पा०।
८. 'चेतव्यम्' इति ङ च छ मातृकासुपाठः।
९. 'आद्योऽत्र' इति ङ मातृकायां व्यत्ययः।
१०. 'प्रतिषेधः' इति ख मा० पा०।
११. 'अत्र' इति मूलमातृकायाम्।
१२. 'नित्य' पदं च मातृकायां नास्ति।
१३. 'रागतोवा' इति ख ङ मातृकापाठः।
१४. 'सर्वथा' पदं छ मातृकायां नास्ति।

द्विकल्पा। [1]निषेधस्य च नानिष्टहेतुत्वम्, किन्तु करणेऽभ्युदयोऽन्यथा तदभावः। कल्पे[2] शास्त्र[3]प्राप्तेऽप्येवम्। यथा 'न तौ पशौ करोति' इत्यत्र। [4]कल्प्यस्यातिदेशशास्त्रस्योपजीव्यत्वेन कल्पना[5]विरोधासम्भवात् कल्पितस्य च रागादिवदत्यन्त[6]बाधायोगात्। एतच्च यदर्थ[7]प्राप्ति[8]स्तदर्थो निषेधस्तत्रैव[9]। यत्र तु प्राप्तिनिषेधयोरन्यार्थता, तत्र तु प्र्प्तिनिषेधयोरन्यार्थता, तत्र न विकल्पे निषेधस्य[10] चानिष्टहेतुत्वमस्त्येव। यथा[11] 'दीक्षितो न ददाति, न [12]जुहोति, न [13]यजती'त्यादौ पुरुषार्थत्वेन प्राप्तस्य होमदेः क्रत्वर्थो[14] निषेधस्तत्र होमादेर्नित्यम[15]करणं कृतस्य च क्रतुवैगुण्यहेतुत्वम्।

## पर्युदासनिरूपणम्

यत्र तु निषेधाश्रयणे किञ्चिद्बाधकं तत्र न विध्यन्वयेन नञो निषेधकत्वम्, विधिभिन्नान्वयेन पर्युदासत्वम् यथाहुः—

---

१. 'निषेध्यस्य' इति मू० मा० पा०।
२. 'कल्प्य' इति मू० मा० पा०।
३. 'शास्त्रे' इति मू० मा० षा०।
४. 'कल्प०' इति मू० मा० पा०।
५. मूलमातृकायां छ मातृकायाञ्च निरो०'इतिपाठः।
६. '°त्यन्ताबा°' इति घ ङ मातृकापाठः।
७. 'यदर्थम्' इति छ मातृकापाठः।
८. 'प्राप्तिस्तत्र' इति छ मातृका पाठः।
९. 'तत्र' पदं छ मातृकायां नास्ति।
१०. 'निषेध्यस्य' इति मू० मा० पा०।
११. 'सर्वथा' इति छ मा० पा०।
१२ अत्र जुहोतिददात्योर्व्यत्ययः ख मातृकायां दृष्यते।
१३. पचतीति ग छ मातृकयोः पाठः मूलमातृकाञ्च च मातृकायाञ्च जपति। इति पाठः दृश्यते। जयतिपदानन्तरं 'न यजति' इत्यपि च मातृकायां दृश्यते।
१४. 'क्रत्वर्थो' 'इत्यारभ्य होमादेः यावत् ख मातृकायां नास्ति। तत्र पर्यन्तं ङ मातृकायायि नायलोक्यते। 'क्रत्वर्थे' इति च छ मातृकायां दृश्यते।
१५. 'नित्यप्रकरणम्' इति मूलमातृका पाठः।

प्रतिषेधः विज्ञेयः क्रियया सह यत्र नञ्।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ।।

अन्वेतीति शेषः। उत्तरपदं क्रियावाधिविधिभिन्नपम्[1]। यथा—नानूयाजेषु ये यजामहं करोती'ति। अत्र 'यजतिषु ये यजामह ङ्करोती'ति सामान्यशास्त्रादनूयाजेषु प्राप्तं 'ये यजामह' इति[2] पदं निषिध्यते चेत्, पूर्वोक्त[3]न्यायेन विकल्पः प्राप्नोति। तद्भूयादनुयाजपदेन नञ् सम्बद्धयते। तस्य सामान्यशास्त्रैकवाक्यतयानुयाजभिन्नेषु यजतिषु ये यजामहं करोतीत्यर्थः।

तेनात्र विकल्पभवात्पर्युदासः। न चैवं षोडशिग्रहणादौ[4] पर्युदासः सम्भवति। प्रापक[5]शास्त्रस्यापि विशेषशास्त्रत्वेनैकवाक्यताया असम्भवात्। यद्यपि 'न तौ पशौकरोती'त्यत्रातिदेशशास्त्रस्य[6] सामान्यशास्त्रत्वेनाज्य[7]-भागवर्जमित्येकवाक्यत्वसम्भवस्तथापि दर्शपूर्णमासयोराज्यभागविधिसमकालप्रवृत्त[8]पर्युदासस्य तदानीमसता[9] पाशुकातिदेशेन[10] नैकवाक्यत्वसम्भव इति तु[11] विकल्पाश्रयणेन निषेधत्वम्। प्रकृते[12] तु पर्युदास एव। एवं

१. 'पदम्' इति ख घ ङ मातृकासु नास्ति।
२. 'इति' पदं घ ङ मातृकयोर्नास्ति।
३. 'पूर्वोक्तेनन्यायेन' इति ख घ ङ मातृकासु व्यस्तप्रयोगः।
४. 'ग्रहणादिषु' इति घ ङ मा० पा०।
५. 'शास्त्र' इति मूलमातृकायां नास्ति।
६. 'शास्त्रस्य' इति पदं ख ङ च छ मातृकासुनास्ति।
७. 'भाव' इति छ मातृकापाठः।
८. 'प्रवृत्तस्य' इति व्यस्तप्रयोगः ख ङ मातृकयोः।
९. 'मसत्वतात्' इति मूलमातृकापाठः।
१०. '°शितेशेनैकवा' इति ङ छ मातृकापाठः।
११. 'तु' स्थाने 'तत्र' इति ग ङ च छ मातृकासु पाठः।
१२. 'प्रकृतेतुपर्युदास एव' इति वाक्यं ङ मातृकायां नास्ति।

'विश्वजिति सर्वस्वं ददाति' इति शास्त्रादस्वादीनां दानप्रसक्तौ 'न केसरिणो ददाती'ति केसरिभिन्नं सर्वस्वमिति पर्युदासो विकल्पययादिति मिश्राः।

राणके तु 'नोभयतोदतः प्रतिगृह्णाती'त्य[१]सम्भवक्रत्वर्थत्व[२] प्रतिगृह[३]निषेधसाहचर्यात् स्नेहादिप्राप्ताश्वदानस्यापि च निषेधोपपत्ते- र्विध्यधीना[४]त्मलाभत्वाभावाद्विकल्पाभावेन सामान्यविधेः [५]सङ्कोच- कोऽयं[६] निषेध इत्युक्तम्। वार्त्तिकेऽप्येवम्। एवमनारभ्याधीतेन 'यत्प्रवर्ग्यं प्रवृजन्ती'त्यनेन प्रवर्ग्यं विधाय 'पुरस्तातुपसादां प्रवर्ग्येण चरन्ती'त्यनेनो- पषत्पूर्वकालसम्बन्धादुपसानां च ज्योतिष्टोमे विधानादनारभ्याधीतानां[७] प्रकृतौ सन्निवेश[८] इति[९] न्यायेन ज्योतिष्टोमाङ्गभूतं[१०] प्रकृत्य श्रूयते— 'न प्रथमयज्ञे प्रवृज्ज्यादि'ति। कौषीतकिब्राह्मणे तु ज्योतिष्टोमप्रकरणे एव प्रवर्ग्यं विधायेदं[११] श्रुतम्। अत्र[१२] प्रथमयज्ञशब्देनाग्निष्टोमसंस्थ[१३]ज्योति- ष्टोमस्य प्रथमः[१४] प्रयोग उच्यते। प्रथमशब्दस्याप्रवृत्त[१५]प्रवर्त्तनवाचि- त्वात्। यद्यपि 'एष वा व प्रथमो यज्ञो यज्ञानां यज्ज्योदिष्टोमः'। 'एत

---

१. '°तीत्यसम्भवात्' ख ग ङ मातृकापाठः।
२. 'क्रत्वर्थतत्प्रति°' इति घ ङ मातृकापाठः।
३. 'प्रतिषेध' इति ख घ ङ मातृकापाठः।
४. 'विध्यधीनानायात्म°' इयि घ मातृकापाठः।
५. 'सङ्कोचो°' इति घ ङ च छ मातृकापाठः।
६. 'अयम्' इति पदं च मातृकायांनास्ति।
७. '°धीतानाञ्च' इति घ ङ मातृकापाठः।
८. 'निवेश' इति ख ग च छ मातृकासुपाठः।
९. 'इत्यनेन' इति ङ मातृकापाठः।
१०. '°भूतम्' इति पदं ख ङ मातृकयोर्नास्ति।
११. 'इदम्' इति पदं छ मातृकायां नास्ति।
१२. 'अथ' इति मूलमातृकायां दृश्यते।
१३. 'संस्थे' इति छ मातृकापाठः।
१४. 'प्रथमम्' इति ङ मातृकापाठः।
१५. 'प्रवर्त्तना' इति घ मातृकापाठः। ङ मातृकाञ्च 'प्रवर्त्तनवर्त्तवा' इति पाठः।

एवाहिताग्नय इष्टप्रथम यज्ञा गृहपतिः सप्तदशीं दीक्षित्वा [1]समोप्यानी-स्तन्मुखाः सत्राण्यासत 'इत्यादौ तत्संस्थकर्मण एव ग्रहणम्[2] न प्रथम-प्रयोगस्य, तथापि प्रयोगगतप्राथम्य[3] गुणयोगेन कर्मणि तत्र प्रवृत्तेरत्र मुख्यवृत्त्या प्रयोगग्रहणम्[4] तस्मात्प्रथमं यजमानो 'अतिरात्रेण [5]यजेत' 'इतिविहितस्यातिरात्रसंस्थज्योतिष्टोमप्रथमप्रयोस्यापि प्रथमयज्ञशब्देन ग्रहणम्। [6]तदत्रोत्पत्तिवाक्यात् सर्वप्रयोगसाधारण्येन प्राप्तः प्रवर्ग्यः प्रथम-प्रयोगद्वये निषिध्यते। तेनोत्पत्तिवाक्य द्वितीयादिप्रयोगविषयम्। एवं निषिद्धस्य 'अग्निष्टोमे प्रवृणक्ति' इति[7] वाक्येनाग्निष्टोमप्रथमप्रयोगे प्रतिप्रसवः क्रियते। तस्यानन्यार्थत्वात्। तेन तत्र प्रवर्ग्यस्य विकल्पः। कामं तु 'योऽनुचयः श्रो[8]त्रियः स्यात्तस्य प्रवृज्ज्यात् इत्यनेन च विकल्प-कारिणः प्रतिप्रसववचन[9]स्य श्रोत्रियकर्तृकप्रयोग [10]उपसंहारात्तत्रैव सः अन्यवर्त्तृकप्रथमप्रयोगे तु प्रतिषेध इति वार्त्तिके। मिश्रास्त्वनुपसंहारमङ्गी-कृत्यास्वाद्ववचनाद्व्यवस्थितविकल्पः। अनूचानप्रयोगे नित्य[11]करणमन्य-कर्तृके त्वकरणमित्याहुः। अतिरात्र[12]प्रथमप्रयोगे तु प्रतिप्रसवाभानान्निषेध-

---

१. 'समारोप्येत्यर्थः' इति मातृका टिप्पनो। इत्यतः पूर्वं च मातृकायां 'सप्तदशा दीक्षित्वात्' इति पाठः।

२. 'ग्रहणं न' इत्यस्य स्थाने' 'प्रथमशब्देन ग्रहणं प्रथमप्रयोगस्य' इति ख घ ङ मातृकासु दृश्यते।

३. 'प्राथम्यम्' इति घ मातृकापाठः।

४. 'प्रहरणम्' इति ङ मातृकापाठः।

५. 'यजेत' इतस्य स्थाने 'यज्ञेन' इति पाठः घ मातृकायाम्।

६. 'तद्वदत्र' इति घ ङ मातृकापाठः। 'तदत्र' इति छ मातृकायाः।

७. 'इत्यनेन' इति घ मातृकापाठः।

८. 'श्रोत्रिय' इति ऽदं ग छ मातृकयोर्नास्ति।

९. 'वाक्यस्य' इति मूलमातृकापाठः। 'वाक्य' इत्येव च मातृकायाम्।

१० 'अनुपसंहारात्' इति छ मातृकापाठः।

११. 'करणे' इति च मातृकापाठः।

१२. 'प्रथमाहारेतु' इति ख ङ मातृकापाठः।

वशेन नित्यम[1]करणमेव । तस्मान्न 'प्रथमयज्ञ इत्ययं निषेध इति मिश्राः । वार्त्तिकेऽप्येवम् ।

राणके तु निषेधे विहितप्रतिषिद्धात्वादेव विकल्पसिद्धेः प्रतिप्रसव-वाक्यानर्थक्यप्रसङ्गादतिरात्रप्रथमप्रयोगेऽपि विकल्पापत्तेः । पर्युदास एवायं[2] 'प्रथपप्रयोगवर्जं[3] प्रवृणक्ति' इति । [4]पर्युदस्तस्य चाग्निष्टोमप्रथमाहारे प्रतिप्रसवाद्वि[5]कल्पः । अतिरात्रप्रथमाहारे तु[6] पर्मुदासादकरणमित्युक्तम् । विस्तरस्त्वाकरे ज्ञेयः[7] ।

एवं विकल्पभयादुपयदान्वयेन नञः पर्युदास[8]त्वमुक्तम् । क्वचित्तूप-क्रमविरोधाद्धात्व[9]र्थान्वयेनो[10]च्यते । 'तस्य व्रतमि'त्युपक्रम्य 'नोद्यन्तमा-दित्यमीक्षेत' इत्यादिश्रुतम् । व्रतमनुष्ठेयं स्नातकस्योच्यत इत्युपक्रमात् तस्याग्रे वक्तव्यत्वप्रतीतेर्नञो[11] निषेधत्वे च [12]निवर्त्तना[13]प्रतीत्योपक्रम-विरोधापत्तेर्धात्वर्थान्वये नानीक्षणपरोऽयं पर्युदासः । अभावस्माप्य[14]नुष्ठेय-त्वात्तदव्यभिचरितः सङ्कल्पो नञीक्षतिभ्यां लक्ष्यते सर्वत्र प्रकृत्तिनि[15]-

---

१. 'प्रकरणम्' इति मूलमातृकापाठः ।
२. 'प्रथम' शब्दः मूलमातृकायां नास्ति ।
३. 'वर्ज्यं' इति मूलमातृकापाठः ।
४. 'पर्युदासस्य' इति ङ मा० पा० । च मातृकायाञ्च 'पर्युदासः' इति ।
५. विकल्पानुष्ठानम्' इति ग छ मातृकापाठः ।
६. 'तु' इत्यस्य स्थाने 'ख' इति छ मा० पा० ।
७. 'द्रष्टव्यः' इति ख घ मातृकापाठः ।
८. 'पर्युद्सकत्वम्' इति घ मातृकापाठः ।
९. 'धात्वर्था०' इति छ मातृकायां नास्ति । अपि तु '°धात्वन्वये' इति वर्त्तत ।
१०. °'नेष्यते' इति च मातृकापाठः ।
११. 'नञो निषेधत्व' इत्यारभ्य 'प्रतीत्योपक्रम' इति यावत् घ ङ मातृकयोर्नास्ति ।
१२. 'निवर्त्तनिवर्त्तना' इति च मातृकापाठः ।
१३. 'प्रतीतेरूप०' इति ख मातृकापाठः ।
१४. °'प्यननुष्ठेय०' इति घ ङ मातृकापाठः ।
१५. 'निवृत्ति' पदं ङ मातृकायां नास्ति ।

कृत्स्योरव्यभिचरितो[1] मानसः सङ्कल्पः तेनाद्यदादित्यानीक्षणसङ्कल्पेनेष्टं भावयेदिति वाक्यार्थः । 'एतावता हेनसा युक्तो[2] भवती'ति वाक्यशेषाच्चेष्टः पापक्षयः ।

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
वनस्थपतिधर्मोऽयं शुक्लामेव सदा गृही ।। इति ।

कूर्माग्निदेवज्ञवचनत्वेनोदधृत नि० सि० ।

अस्यां स्मृतौ धर्मशब्देनानुष्ठेयवाचिनोपसंहारात्तदविरोधाय[3] पर्युदासाश्रयणेनाभोजनसङ्कल्पो विधीयत इति हेमाद्रौ ।

एवं 'दोक्षितस्यान्नं नाश्नीयादि'ति निषेधस्य संस्थितेऽग्नीषोमीमे 'दीक्षितस्यान्नमश्नीयादि'ति त्रय्या[4]मवधिश्रवणं 'क्रीतराजको भोज्यान्न' इत्यथर्ववेदे । न चैकस्यावधिद्वयापेक्षा गुरूलघुभावाच्च न विकल्प इत्यवधिद्वयान्यथानुपपत्त्या अयं पर्युदासस्तस्य त्रयीस्थोऽवधिः । अग्नीषोमीयावधिदीक्षितान्न[5]भोजनसङ्कल्पेनेष्टं भावयेदिति ।

द्वितीयस्तु तत्रत्य[6]निषेधस्यैवावधिः । सोमक्रयावधिदीक्षितान्नं न भोक्तव्यमिति वार्त्तिके । आपदनापद्विषयतयावधिद्वयव्यवस्थेति पक्षान्तरं[7]चानादृतम् । भाष्ये तु क्रीतराजकवचनस्य स्मार्त्तत्वाच्छ्रुतिविरोधेनाप्रामाण्यमुक्तम् । दीक्षितो न ददाति' इत्यादेर्निषेधस्य दीक्षोन्मोचनार्थोऽव[8]भृथोऽवधिः । तेन देवान्मानुषाद्वा[9]पराधादवभृथोत्कर्षे दीक्षानु[10]वृत्तेर्दानादिन

१. '°भिचारतो' इति मूलमातृकापाठः ।
२. 'अयुक्तो' इति च मातृकापाठः ।
३. '°धायाभयु°' इति ग मातृकापाठः ।
४ 'त्रय्यां वेदेऽवधि०' इति घ मातृकापाठः ।
५. '°तान्ना०' इति ग मातृकापाठः ।
६. 'स निषेध्य' इति घ ङ मातृकापाठः ।
७. 'च नादृतम्' इति ङ मातृकापाठः ।
८. 'अवभृथ' पदं ख ङ छ मातृकासुनास्ति ।
९. 'प्रतिबलाद' इति ख ङ मातृकापाठः ।
१०. 'दीक्षितानु०' इति घ मातृकापाठः ।

कार्यम् अग्निहोत्रहोमनिषेधस्य त्ववभृथानन्तरोदव[1]सानीयेष्टिः 'एतया पुनराधेयसम्मितये[2]ष्टयेष्ट्वाग्निहोत्रं जुहोती'ति वचनात् एषां दीक्षितान्नाशनादिनिषेधानां दीक्षानिमित्तत्वात् [3]दीक्षार्थदीक्षणीयानन्तरं प्रवृत्तिः। 'अग्नावैष्णवमेकादशकपालं निर्वपेत् दीक्षिष्यमाण' इत्यत्र क्रियार्थायां क्रियायामु[4]पपदे विहितया लृट्श्रुत्या दीक्षार्था दीक्षणीया गम्यते 'दण्डेन दीक्ष[5]यति' इत्यादिवाक्यैस्तु दण्डादीनि दीक्षाभिव्यक्त्यर्थानि विधीयन्त इति न दण्डादानोत्तरं [6]निषेधप्रवृत्तिः। एवमाहिताग्नि क्लिन्नं दार्वग्नौ नादध्यादि'ति निषेधस्याधा[7]नानन्तरं प्रवृत्तिः एवं अग्निचिद्वर्षति न धावेदि'त्यस्य सोमयागोत्तरं प्रवृत्तिः अग्निचिन्नाम—यश्चयनेनाग्निं संस्कृतवान्। चयनेन [8]चाग्नेः संस्कारो यावत्सोमप्रयोग[9]समाप्त्यग्नेर्धारणमेवेति ततुन्तरमग्नि[10]चित्त्वात्। एवं समावर्तिनां 'न कलञ्जं भक्षयेदित्यादीनामुपनयनोत्तरं प्रवृत्तिः प्रागुपनयनात 'कामचारवादभक्षः[11] (गौ० ध० सू० १, २.१) इत्यादि[12]स्मृतेः। महापातकादि[13]निषेधानां तु [14]सर्वदेति संक्षेपः[15]।

---

१ 'उदसादनीये०' इति घ मातृकापाठः।
२. 'इष्ट्या' इति घ मातृकायां नास्ति।
३. 'दीक्षार्थ' इति पदं घ मातृकायां नास्ति।
४. '°मुपपद' इति छ मातृकापाठः।
५ 'दीक्षति' इति ङ मातृकापाठः।
६. 'प्रवृत्तिः निषेधानाम्' इति ख घ ङ मातृकापाठः।
७. 'आधान' पदं नास्ति घ ङ मातृकयोः।
८. घ ङ मातृकायोः च पदं नास्ति। 'अग्निः' इति मूलमातृकायाञ्च दृश्यते।
९. 'प्रयोगस्य' इति छ मातृकापाठः।
१०. '°चितत्वात्' इति घ ङ मातृकापाठः।
११. '°भक्ष्याः इति ख मातृकापाठः।
१२. 'आदि' पदं ङ मातृकायां नास्ति।
१३. 'निषेधानां सर्ववेदाना मुपनयनोत्तरं प्रवृत्तः' ङ मातृकायां पाठः।
१४. 'सर्वदा' इत्यस्य स्थाने' सर्ववेदानाम् इति घ मातृकापाठः।
१५. 'संक्षेपः' इति घ मातृकायां नास्ति।

## अर्थवादप्रामाण्यनिरूपणम्

विधिनिषेधैकवाक्यतया[1] तदपेक्षितस्तुतिनिन्दार्थत्वेनार्थवादानां धर्मा[2]धर्मयोः प्रामाण्यम्। 'वायव्यं श्वेतमालभेत भूतिकामः' इति विधि-र्वायुदेवत्यश्वेतपशुद्रव्यकयागभावनायां भूतिकर्मिकायां पुरुषं प्रवर्त्तयन् द्रव्यव्ययामास[3]साध्यालोचनायां तत्प्रवृत्तिप्रतिबन्धकी[4]भूताङ्गस्य निर्वर्त्तिकां प्ररोचनां[5]तदर्थां च स्तुतिम[6]पेक्षते। तत्सन्निधौ 'वायुर्वै क्षेपिष्ठा देवता, वायुमेव स्वेन भागधेयेनोपधावति, स एवैनं भूतिं गमयती'-त्यर्थवादः श्रुतः। स स्वार्थपरत्वे[7] वैयर्थ्याल्लक्षणया क्षिप्रदेवतासाध्यो यागः क्षिप्रफलदातृत्वात्प्रशस्त इति स्तुवन् विध्यपेक्षितप्ररोचनाजननेन विध्येकवाक्यतया तद्बोधितधर्मे प्रामाण्यं भजते। 'बर्हिषि रजतं न देयमि'ति निषेधो यक्षे रजतदानात् पुरुषं निवर्त्तयन् सौकर्याद्या[8]यातनिवृत्तिप्रतिबन्ध-कोत्साहनिवर्त्तकं[9] द्वेषं तदर्थां च[10] निन्दाम[11]पेक्षते। तत्सन्निधौ 'यो बर्हिषि रजतं दद्यात् पुरास्य सम्वत्सराद् गृहे रोदनं भवती'त्यर्थवादः। सोऽपि रोदनहेतुत्वाद् रजतदानमप्रशस्तमिति निन्दन् निषेधापेक्षितद्वेषजननेन तदेकवाक्यतया तद्‌बोधिताधर्मे प्रामाण्यं भजते[12]। न च वैयर्थ्यमेवास्ताम्,

१. '°तायाः' इति घ मातृकापाठः।
२. 'धर्मे' इति मूलमातृकापाठः।
३. 'व्ययासाध्य०' इति ग ङ मातृकापाठः।
४. °'बन्धकालस्य' इति मूलमातृकापाठः।
५. 'तदर्थम्' इति मूलमातृकापाठः।
६. °'मपेक्ष्यते' इति ख ङ मातृकापाठः।
७. °'परत्वे वेदे' इति मूलमातृकापाठः।
८. °'द्यायात०' इति घ मातृकापाठः।
९. 'निवर्त्तकद्वेषम्' इति घ मातृकापाठः।
१०. 'च' पदं घ ङ मातृकयोर्नास्ति।
११. 'अपेक्ष्यते' इति ख मातृकापाठः।
१२. 'जनने' इति मूलमातृकापाठः।

किं लक्षणया स्तुतिनिन्दार्थत्वेनेति वाच्यम् । स्वाध्यायविध्य[१]ध्यापितेनानर्थवचनायोगात् वैयर्थ्यानुपपत्तेः ।

## अदृश्यविधेः दृष्टार्थत्वनिरूपणम्

न[२] चादृष्टार्थमेवाध्ययनम्, हुमायध्ययनवदिति वाच्यम् । अध्ययनविधेर्दृष्टार्थत्वात् । तथाहि 'स्वाध्यायोऽध्येतव्य' इत्यध्ययन विधौ तव्यश्रुतेरध्ययनकरणिकायां भावनायां स्वाध्यायस्य कर्मत्वं गम्यते । तच्च योग्यतया प्राप्यत्वम् तेनाध्ययनेन स्वाध्यायं प्राप्नुयादित्यर्थः । अनर्थकस्य प्राप्यत्वायोगात् । वाक्यान्तरेणार्थ[३]वत्त्वाज्ञानादीदृशं वचनं व्यज्यते । अधीतेन स्वाध्यायेन वच्छक्नुयात्तत्कुर्यादिति । [४]ततः शक्त्यालोचनेन यावत्सम्भवमर्थज्ञानार्थत्वम् । तस्य लौङ्गिककर्मविनियोगेनार्थवत्त्वात् तदसम्भवे हुफंडा[५]दिषु सामा[६] पेक्षित नियतकालपूरणार्थत्वं क्षत्रियाद्यधीतसत्रादिवाक्यानां षारायणार्थ[७]त्वमित्येनं कल्प्यते, न त्व[८]दृष्टम् । तेनाधीतेन स्वाध्यायेन यावत्सम्भवं[९] फलवदर्थज्ञानं कुर्यादिति वाक्यार्थ इति कार्त्तिकेऽर्थवादाधिकणे तृतीये[१०] च । मीमांस[११]रत्नेऽप्यधीतेन स्वाध्यायेन सच्छक्यं[१२]

---

१. 'विध्यध्यापितस्य' इति मूलमातृकापाठः ।

२. 'न च' इत्यारभ्य 'दृष्टार्थत्वात्' इति यावत् ख ङ मातृकायां नास्ति ।

३. °र्थवत्त्वातानां°' इति मूलमातृकायाम् ।

४. 'ततः' इति पदं ङ मातृकायां नास्ति ।

५. 'फड' इति मूलमातृकायां नास्ति ।

६. 'समा°' इति घ मातृकापाठः ।

७. 'पारायणाद्युपयो°' इति ख मातृकापाठः । °'णादावुप ' इति घ ङ मातृकापाठः ।

८. 'अदृष्टान्ते नाधीतेन' इति घ मातृकापाठः ।

९. 'यावच्छक्यं समीहितं तद्भावयेदित्युक्ते च' इति मातृकापाठः ।

१०. 'तृतीये च' छ मातृकायां नास्ति ।

११. 'रत्ने' इति मूलमातृकायां त्रुटिः ।

२१. 'शक्यम्' इति घ मातृकायां नास्ति ।

समीहितं तद्भावयतित्युक्तम्। न[1] केवालार्थविज्ञानसिद्धिरस्य प्रयोजनं दृष्टम्, यच्छक्यते कर्त्तुं तत्सर्वं फलमिष्येतेति।

मिश्रास्तु—न्यायरत्नमालायामाहुः[2]—संस्कारकेणाध्यनेन यच्छक्यते कर्त्तुं तत्कुर्यादिति। वहुषु स्थलेष्वध्ययन[3]करणमेव वाक्यार्थः[4]। भव[5]देवोऽप्येवम्। युक्तञ्चैतत्। स्वध्यायस्य कर्मत्वानुपपत्तावपि पदश्रुत्यवगता[6]ध्ययनकरणत्वावाधायाध्ययनेन[7] गुरुमुखोच्चानूच्चारणरूपेणापेक्षितं दृष्टं कुर्यादित्युक्ते लोके शब्दोच्चारणगोचरप्रवृत्तौ व्यवहारौपमिकार्थज्ञान[8]स्यैवद्देश्यत्वेन क्लृप्तत्वात्[9]। तस्मिन् भाव्ये कल्पिते सामार्थ्यात स्वाध्याया[10]वाप्तौ द्वारे कल्पिते स्वाध्यायस्य फलसाधनत्वं तदवाप्तेर्द्वारत्वानुपपत्तेस्तस्यापि[11] तत्साधनत्वमथात्सिध्यति।

एवं चार्थिकवाक्यार्थ[12]ज्ञानं प्रत्युपादेयतया स्वाध्यायैकत्वविवक्षता शाखान्तराधिकरणोक्ता सङ्गच्छते। द्वुमाद्य[13]ध्ययनस्य तु जपाद्युपयागिन्यक्ष-

---

१. 'न' इत्यारभ्य 'फलमिष्येतेति' इति यावत् मूलमातृकायां नास्ति।

२. 'आहुः' इति पदं ख घ ङ मातृकासु नास्ति।

३. °'अध्ययनमेव वाक्यार्थः' इति छ मातृकापाठः।

४. द्वादश संख्यास्थ 'न' इत्यारभ्य 'इष्येतेति' यावत् ख घ ङ मातृकासु वाक्यार्थपदानन्तरं दृश्यते। ङ मातृकायाञ्च 'भवदेवोप्येवम्' इत्यनन्तरम वलोक्यते। ङ मातृकायां 'वाक्यार्थम्' इति पाठः। छ मातृकायां 'अध्ययनमेव वाक्यार्थम्' इति पाठः।

५. 'भवदेवोऽप्येवम्' इति ङ मातृकयोर्नास्ति।

६. °'ध्ययनस्य' इति ख घ ङ मातृकापाठः।

७. °'ध्यायनेन' इति च मातृकापाठः।

८. 'एव' पदं घ मातृकायां नास्ति।

९. 'क्लृप्ले' इति घ मातृकापाठः।

१०. 'आप्तौ' इति घ मातृकापाठः।

११. 'अपि' पदं ङ मातृकायां नास्ति।

१२. 'वाक्यार्थेऽर्थज्ञानम्' इति ग छ मातृकापाठः।

१३. 'हुंफडा०' इति ग ङ मातृकापाठः।

रावाप्तिरेव [1]भाव्येति। न चैवमर्थज्ञानोपयोग्य[2]क्षरावाप्तेरेव भाव्यत्वमस्त्विति वाच्यम्। यावत्सम्भवं पुरुषार्थप्रत्यासत्तेरौचित्यात्। अर्थज्ञानस्य क्रत्वपूर्वोपयोगित्वेऽप्यव्यभिचरितक्रतुसम्बन्धाभावेन क्रत्वपुर्वोपस्थितेरत्रा[3]सम्भवात्। तेनाध्ययनेन यावत्सम्भवमर्थज्ञानं कुर्यादिति वाक्यार्थ[4] इति। कथमित्याकाङ्क्षायां ब्रह्मचर्यगुरूशुश्रूषादिनोपकृत्येति सम्बध्यते। तेषां च धर्माणामविघ्नसमाप्त्यर्थत्वेनाध्ययनस्वरुपोपकारित्वं नियमाच्चादृटमिति मिश्राः।

[5]जपपारायणाद्युपयोग्यदृष्टरूपवेदत्वसिद्ध्यर्थम्[6]। तक्षणादीनामिव यूपत्वसिद्ध्यर्थ[7]त्वमिति राणके। एवं दृष्टार्थोऽध्ययनविधिः। स चार्थाद्विधीनां पुरुषप्रवर्त्तनार्थत्वं [8]निषेधानां निवर्त्तनार्थत्वं च[9] गमयति। अधीतविधयः पुरुषं प्रवर्त्तयेयुर्निषेधाश्च निवर्त्तयेयुरिति। केनेत्मा[10]काङ्क्षायां प्रवर्त्तनाज्ञानेन[11] निवर्त्तनाज्ञानेन चेति[12] सम्बध्यते। प्रव[13]र्त्तना च शाब्दीभावना प्रागुक्ता। निवर्त्तना च कथमित्याकाङ्क्षायां प्ररोचनद्वेषामुपकृत्येति सम्बध्यते। फलप्रतिबन्धकालस्योत्सानि[14]वृत्तिश्चोपकारः।

---

१. 'प्रयोजनम्' इति ख घ ङ मातृकापाठः।
२. °'क्षरा°' इति मूलमातृकायां नास्ति।
३. '°तित्वास°' इति च मातृकापाठः।
४. 'वाक्यार्थे कथम्' इति ग छ मातृकयोः पाठः।
५. 'जपतप' इति मातृकापाठः।
६. °'र्थत्वम्' इति मूलमातृकापाठः।
७. 'त्वम्' इति घ मातृकायां नास्ति।
८. 'निषेधानां निवर्त्तनार्थत्वम्' इति घ च मातृकयोर्नास्ति।
९. 'च' पदं च छ मातृकयोः नास्ति।
१०. °'पेक्षायाम्' इति ख घ मातृकापाठः।
११. 'ज्ञानेन' इति पदं घ मातृकायां नास्ति।
१२. 'च' इति पदं घ मातृकायां नास्ति। ख मातृकायाञ्च 'इति च' इति व्यत्ययेन पाठः।
१३. 'प्ररोचना' इति मूलमातृकापाठः।
१४. 'निर्वर्त्तितोपकारश्च' इति घ ङ छ मातृकासु पाठः।

इत्थमंशत्रयान्वितां [1]प्रवर्त्तनां विधिकार्यत्वे[2]नार्थादध्ययनविधिर्बोधयति। निषेधार्थ[3]त्वेन च निवर्त्तनां प्ररोचनाद्वेषजनकयोश्च स्तुतिनिन्दयोः साधनमपेक्ष[4]माणेऽर्थवादाभावे विधि[5]निषेधावेव तत्साधनत्वेन कल्पयति। यथोक्तत—विध्युद्देशस्यैव द्वे शक्ती कल्पमिष्याम इति। यथा 'वसन्ताय कपिञ्जलानालभेते'[6]त्यादिषु विधिष्वर्थवादाभावाद्विधिस्तुतिशक्त्योः कल्पनम्। अर्थवादसद्भावे तु[7] तद्वै न्यर्थपरिहाराय सन्नि[8]हितविधिनिषेधैकवाक्यतानुसारेण स्तुतिनि[9]कार्थत्वं लक्षणया कल्पयति, न तु तदध्ययनमदृष्टा[10]र्थत्वं बोध[11]यति। लक्षणया[12] दृष्टत्वेनादृष्टकल्पनातो लाघवात्। सर्वार्थवाद[13]पदैश्चैकैव लक्षणा। न च प्रतिपदं शक्तत्वात्तथैव लक्षणेति कुलधर्माः। वाक्यार्थलक्षणावदेकस्या एव लक्षणायाः कल्प[14]नात्। तत्र ये[15] तावल्लोकसिद्धानुवादिनोऽर्थवादा, यथा 'वायुर्वैक्षेपिष्ठा देवते'-त्यादतः, ते स्वार्थसम्बधेन स्तुतिं लक्षयन्ति ये[16] तु मानन्तरविरुद्धार्थाः,

---

१. 'भावनाम्' इति घ ङ मातृकापाठः।
२. 'नार्थो०' इत्यारभ्य 'साधनमपे०' पर्यन्तं च मातृकायां ग्रन्थपातः।
३. 'निषेधकार्यत्वेन' इति ङ मातृकापाठः।
४. °'माणो' इति मूलमातृकापाठः।
५. 'विधिनिषेधावेव' इति च मातृकायां नास्ति।
६. °'त्यादि विधा०' इति मूलमातृकापाठः।
७. 'तु' पदं छ मातृकायां नास्ति।
८. 'विहितविहित' इति ङ मातृकापाठः।
९. °'र्थत्वम्' इति ङ मातृकायां नास्ति।
१०. °'मदृष्टार्थम्' इति ख ग घ च छ 'इत्यारभ्य' सर्वार्थ' पर्यन्तं ङ मातृकायां नास्ति।
११. 'बोधयति' मातृकापाठः।
१२. 'लक्षणायाः' इति ख मातृकापाठः। च मातृकायाञ्च 'लिलक्षणायाः'। इति पाठः।
१३. 'पदेष्वेकैव' इति च मातृकापाठः।
१४. 'कतप्यमानात्' इति च मातृकापाठः।
१५. 'एतावत्केचित्' इति च मातृकापाठः।
१६. 'ये' इत्यारभ्य 'लक्षयन्ति' यावत् मूलमातृकायां नास्ति।

यथा 'यजमानः प्रस्तरोऽग्नि र्वाहनणः इत्यादयस्ते गौण्या स्वार्थसत्यावं प्राप्य स्तुतिं लक्षयन्ति ।

## गौणीवृत्तिनिरूपणम्

गौणी नाम—स्वार्थनिष्ठगुणसदृश[1]गुणयोगादर्थान्तरे वृत्तिः। गुणश्च तत्सिद्धिजातिसरूप्यप्रशंसाभूमलिङ्गसमवाय (मी० सू० १.४.२३) भेदात् षड्विधः। तत्र 'यजमानः प्रस्तर' इत्यत्र तत्सिद्धचा तत्कार्यकारित्वेन[2] यजमानशब्दः प्रस्तरे[3] दर्भमुष्टौ गौणः। यजमानकार्यं यज्ञ[4]निर्वृत्ति प्रस्तरं करोतीति यजमात्वेन स्तूयते। 'अग्निर्ब्राह्मण' इत्यत्र जात्या [5]ब्रह्ममुखापादनकजन्माग्निशब्दो ब्राह्मणे गौणः। 'ब्राह्मणोऽस्य मुखमासीत्. मुखादिन्द्रश्चाग्निश्चे'ति श्रुतेः ब्रह्म[6]मुखापादानकजन्मकृतसादृश्यादग्नित्वेन ब्राह्मणः स्तूयते। 'आदित्यो यूप' इत्यत्र चक्षर्ग्राह्यतेजस्वि[7]त्वादिसा[8]रूप्येनादित्यशब्दो यूपे गौणः [9]तक्षणाञ्जनकृतं यूपस्य तेजस्वित्वम्[10]। 'अपशवो वाऽन्ये गो[11] अश्वेभ्यः, पशवो गो अश्वाः 'इत्यत्रापशुशब्दः[12] पशुभिन्नमनुष्यादिवाच्यजातिषु गौणाः गवाश्वगत[13]प्रशंसाभावो

---

१. 'सदृशगुण' इति मूलमातृकायां नास्ति ।
२. °'कारित्वे' इति ख मातृकापाठः ।
३. 'प्रस्तरदर्भ' इति छ मातृकापाठः ।
४. 'निर्वृत्ति' इति घ मातृकापाठः ।
५. 'ब्राह्मण' इति च मातृकापाठः ।
६. 'ब्राह्मण' इति मूलमातृकापाठः ।
७. °'त्यादि' इति ङ मातृकापाठः ।
८. 'रूपेण' इति घ ङ मातृकापाठः ।
९. 'लक्षणा०' इति मूलमातृकापाठः ।
१०. °'त्वात्' इति च मातृकापाठः ।
११. 'गो' पदं घ मातृकायां नास्ति ।
१२. 'शब्दपशु' इति समस्तपाठः छ मातृकायाम् ।
१३. 'गताः' इति ङ मातृकापाठः ।

[1]ह्यजादिषु मनुष्यादिषु [2]चास्तीति सादृश्यघटकाभावप्रतियोगित्वेन प्रशंसानिमित्त[3]मित्युच्यते । 'अपशव' इत्यत्र पशुशब्देन गवाश्वगतं प्राशस्त्यं लक्ष्यते । नञा तदभावोऽजा[4]दिषु बोध्यते । गवाश्वगतप्राशस्त्याभाववन्तोऽजादय इत्येवं गवाश्वस्तुतिः । चमनप्रकरणे 'सृष्टीरुपदधाती'ति श्रुतम् । तस्य सृष्टिलिङ्गकमन्त्र[5]प्रकाश्या[6] दृष्टका उपदधातीत्यर्थः तत्रासृष्टिलिङ्गकानानामपि केषाञ्चित् पाठात् । सृष्टिलिङ्गकानां वहुत्वात्[7]। भूम्ना सृष्टयसृष्टिलिङ्गकमन्त्रसमूहे सृष्टिशब्दः प्रयुज्यते । छनयच्छत्रि[8]-समूहे छत्रिवटत्वे 'छत्रिणो गच्छन्ति' प्रयोगवत्[9]। एवं 'प्राणभृत उपदधाती'-त्यत्रान्येषां वहुत्वात् प्राणाभृतामलपत्वात्तत्समूहे[10] लिङ्गसमवायेन प्राण[11]-भृच्छब्दः प्राणाभृदप्राणभृत्समूहे हि प्राणभृत्त्वं चिह्नं[12] समवैति । एवं 'पुरोडाशानलङ्कुर्वि'ति प्रैषमन्त्रे धानाः कटभ्यः परिवायः पुरोडाशः पयष्स्व[13]रूपपञ्च हविः षु पुरोडाशशब्दो लिङ्गसमवायेन [14]पुरोडाशापुरोडासमूहे हि पुरोडाशत्वं [15]चिह्नं समवैति । अतः समूहं[16] वहुवचनान्त-

१. 'हि' पदं घ ङ मातृकयोर्नास्ति ।
२ 'च' स्थाने 'वा' इति दृश्यते घ मातृकायाम् ।
३. 'निमित्तिः' इति घ मातृकापाठः ।
४. 'ऽजातिषु' इति मूलमातृकापाठः । च मातृकायाञ्च 'नादिषु' इति पाठः ।
५. 'मन्त्र' पदं ङ मातृकायां नास्ति ।
६. 'प्रकाश्या दृष्टका' इत्यारभ्य सृष्टयसृष्टिलिङ्गक पर्यन्तं छ मातृकायां नास्ति ।
७. 'बहुत्वमात्रात्' इति च मातृकापाठः ।
८. 'अच्छत्रि' पदं च मातृकायां नास्ति ।
९. एव नित्यारभ्य प्रयोगवत् पर्यन्तं मूलमातृकायां नास्ति । घ छ मातृकासु पुनरावृत्तः ।
१०. 'समूहो हि' इति च मातृकापाठः ।
११. 'प्राणभृच्छकः' इति च मातृकायां नास्ति ।
१२. 'चिह्न' पदं च मातृकायां नास्ति ।
१३. 'पयस्या' इति मूलमातृकापाठः ।
१४. 'पुरोडाशा' इति छ मातृकायां नास्ति ।
१५. 'चिह्न' पदं च मातृकायां नास्ति ।
१६. 'समूहबहु०' इति मूलमातृकापाठः ।

पुरोडाशशब्देनोद्दिश्यालङ्करणमाज्माभिधारणारूपं प्रेष्यते। एवं षड्विध-गुणयोगादर्थान्तरे वृत्तिर्गौणी। अन्येषामपि रूपप्राय[1]दूरभूयस्त्वादीनां गुणानामेषु तत्सिद्ध्यादिषु यथासम्भवमन्तर्भावोद्रष्टव्यः यथा 'स्तेन[2] मनोऽनृतवादिनी वाक् इत्यर्थवादे प्रच्छन्नगामित्वेत स्तेनसारूप्यात् स्तेनशब्दो मनसि प्रयुज्यते [3]वाचश्च प्रायशोऽनृतवादिनीत्वात्तथा प्रयुज्यते। अयञ्च 'हिरण्यं हस्ते [4]भवती'त्यस्य विधेरर्थवादः वाङ्मनःकृतदोषनिवृत्तये हिरण्यधारणं पुंसः प्रशस्तमिति। 'धूम एवाग्नेर्दिवा ददृशे नार्चिर्शर्चरेवाग्नेः रात्रौ ददृशे न धूम' इत्यत्र दूरतो भूयस्त्वेन दिवा धूमस्य रात्रौ चाग्ने-[5]र्दर्शनादवधारणनिर्देशः। तस्माद्दिवाग्निरादित्यमनुप्रविशिति, रात्रावादित्य-स्तमितस्यार्थवादस्योपपत्त्यर्थः। अयञ्च 'अग्निर्ज्योतिरिति सायं जुहोति, सूर्योज्योतिरिति प्रातरि'ति मन्त्रविध्योरर्थवादः। दिवा धूमस्य बाहुल्येन दर्शनादग्नेशदित्यानुप्रवेशात् सूर्यस्यैन ज्योष्ट्विमिति [6]मन्त्रेण प्रातर्होमः कार्यः। एव[7]मितरत्रापीति। न चैतद्विद्मो[8] ब्राह्मणा स्यो वयमब्रह्मणा वा' इत्यत्र ब्राह्मणत्वस्य स्तयपराधेन दुर्ज्ञेयत्वादेवं निर्देशः न चात्र[8] ब्राह्मणत्वा-ज्ञानसंशयविपर्ययाः शक्यन्ते वक्तुम्। ब्राह्मणत्वस्योत्पादकजातिज्ञानसहकृत-चक्षुर्गम्यत्वेन तदसम्भवादिति स्पष्टं वार्त्तिके। अयञ्च 'प्रवरे प्रव्रियमाणे देवाः पितर' इति ब्रूयादिति प्रवरानुमन्त्रणविधेरर्थवादः। निरुढ[9]ब्राह्मण्यस्य प्रवर्षिकङ्कीर्त्तनात्तत्प्रभवोऽयमिति ज्ञानादब्रह्मणोऽपि प्रवरानुमन्त्रणेन

---

१. 'प्रात' इति घ ङ छ मातृकासु दृश्यते।
२. 'स्तेनो' इति घ मातृकापाठः।
३. युक्तञ्चैतदित्या शक्तत्वात्तथैव लक्षणे यावत् अग्रिमः विषयोऽत्राः प्युद्दङ्कितः दृश्यते। अतः विरुक्ति सम्भावना सज्जायते।
४. 'भवति' इत्यनन्तरं 'अथ गृह्णाति' इत्यपि घ ङ मातृकयोः दृश्यते।
५. 'चार्चिषो' इति ङ मातृकापाठः।
६. 'तन्मन्त्रेण' इति ङ मातृकापाठः।
७. 'विधौ' इति ङ मातृकापाठः।
८. 'त्वत्र' इति च मातृकापाठः।
९. 'ब्राह्मण्य' इत्येव मूलमातृकायाम्।

ब्राह्मणः कुतो भवतीति स्तुतिः। एवं विध्यर्थवाद[1]ष्वपि माना[2]न्तर-विरुद्धार्थेषु गौण्या स्वार्थसत्यत्वेन स्तावकत्वं सर्वत्रोह्यम्। एवं निषेधार्थ-वादेष्वपि तादृशेषु गौण्या स्वार्थसत्यत्वेन निन्दकत्वम्। तद् यथा 'यो बर्हिषि रजतं दधादि'ति पूर्वोक्तार्थ[3]वादोपपादके 'सोऽरोदीत् यदरोदीत्, तद् रुद्रस्य रुद्रत्वम्। तन् यद्श्रुव्यव[4]शीर्यत, तद् रजतमभवदि'त्यर्थवादे। अत्र हि 'देवासुराः संयत्ता आसन्नि'ति पूर्वार्थवादपर्यालोचनयग्नौ रोदन-कर्तृवाचिरुडशब्दप्रयोगाद्रोदनकर्तृत्वोपचारेणाश्रुणश्च शौकल्याद्रजत-त्वोपचारेण रजतदाने च कुटुम्वपीडयां रोदनभवमोपचारेण च रजतदान-निन्दा क्रियते। येषु चार्थवादेषु स्तुतिनिन्दासन्देहस्तेषु विधिनिषेधैकवाक्य-तया तन्निर्णयः कार्यः। यथा 'यद् ऋचा स्तुवते तदसुरा अन्ववायन्, यत्साम्ना स्तुवते तदसुर नान्ववायन्, य एवं विद्वान् साम्ना स्तुवीत' इति श्रूयते 'तत्राप्रगीत[5]यर्चा स्तोतव्यं सामशब्दवाच्यया वा प्रगीतयर्चेति सन्देहे[6]ऽन्तिम सामविध्येकवाक्यतया निर्णयो भवति। प्रतीत[7]यार्चा स्तोतव्यम्। तस्या स्तुतिरप्र[8]गीतया निन्देति। अन्यथा पुनरप्रगीतायाः स्तुतिः प्रगीतया निन्देत्येपि[9] सम्भाव्यते। 'अतिक्रूरातसुरानप्येषा नयति[10] किमुत देवानि'ति स्तुतिः। शीघ्रगमनशीलानसुरानपि नानयति

---

१. °'वादेषु' इति मूलमातृकापाठः।

२. 'मानान्तर०' इत्यारभ्य '°वादेष्वपि' इति यावत् च मातृकायां ग्रन्थपातः।

३. °'वादेषूपपा०' इति च मातृकापाठः।

४. 'पतद्व्यव०' इति च मातृकापाठः। ग मातृकायान्न' व्यवशीर्यत' इति पदं नास्ति।

५. 'अर्चा' पदं ङ मातृकायां नास्ति।

६. 'सन्देहे····मसाम' इत्यनयोर्मध्ये मूलमातृकायां ग्रन्थपातः। 'सन्देहे सति' इति घ मातृकापाठः। 'सन्देहेतिमसा' इति ङ छ मातृकापाठः।

७. 'प्रगीतर्चा' इति ङ मातृकापाठः।

८. °'रप्रगीताया' इति मूल घ च छ मातृकापाठः।

९. 'निन्देत्यपि' इत्यारभ्य 'देवानिति स्तुतिः' पर्यन्तं च मातृकायां व्यतिक्रमेण बारद्वयमागतम्।

१०. 'नयन्ति' इति छ मातृकापाठः।

किं देवाननेष्यतीति निन्देत्यपि स्यात् । यथोक्तम्—न वयं निन्दितानन्दितान् वा सुरान् विद्मः'[1] त० वा० १.२.७ इति[2] । एवं 'जर्तिलयवाग्वा जुहुयात् गवीधुक् यवाग्वा वा जुहुयात् । नारण्यान् पशून् हिनस्ति न ग्राम्यान् । अथो खलवाहुरनाहुतिर्वै जर्तिलाश्च । तस्मादजाक्षीरेण जुहोती'ति श्रूयते । तत्र पयो[3]होमविध्येकवाक्यतया जर्तिलयवाग्वादेर्निन्दै[4]वेति निर्णयः । एवं अभिघार्यास्त्र्यम्बका नाभि[5]घार्या इति मीमां[6]सन्ते । यदभिधारयेत्तद्रुद्रायास्ये पशूनिन्नदध्यात् । यन्याभिघारयेन्न तद् रुद्रायास्ये पशून् निदध्यात् । अथो खल्वाहुरभिघार्या एवेत्यभिघारणविध्येकवाक्यतया त्र्यम्बकपुरोडाशदेवताभूतरुद्रास्यनिधानापदकतयाभिघारणस्तुतिरेवेति निश्चीयते । एवं 'होतव्यमग्निहोत्रं न होतव्यमिति मीमांसन्ते' ब्रह्मवादिनः । यद् यजुषा जुहुयादयथापूर्वमाहुतीर्जुहुयात्, यन्न जुहुयादग्निः पराभवेष्णीमेव होतव्यम्, सोऽग्निहोत्रमि'त्यत्रापि । एवं 'उदिते जुहोति' इति विध्येकवाक्यतया 'प्रातः प्रातरनृतं ते वदन्ति पुरोदया जुह्वति[7], येऽग्निहोत्रमि'त्यास्यानुदितहोमनिन्दार्थवादस्योदितहोमस्तावकत्वनिश्चयः । यथाहुः 'नहि निन्दा निन्द्यं निन्दितुं प्रवर्त्तते, अपि तु विधेयं स्तोतुमि' त० वा० १.२.७ ति ।

एवं फलहेतुक्रियाद्रव्यदेवतादिविधिसरूपाणामपि विध्येकवाक्यतया स्तावकत्वनिश्चयः । तद् यथा—'औदुम्रो यूपो भवती'ति विध्येकवाक्यतया 'अर्ग्वा उम्बरः अर्कपशवः अर्जैवास्या अर्जं पशूनाप्नोति, ऊर्जोऽवरुध्यै' इत्यस्योर्क्पर्यायान्नप्राप्तिफलपरतया प्रतीयमातस्यापि स्तावकत्वमेव । क्रत्वर्थयूपोद्देशेन विधीयनौतुम्वरतायाः फलाङ्क्षाभावात् । कामशब्दा-

१. 'विघ्न' इति मूलमातृकापाठः ।
२. 'इति' इत्यनन्तरं 'विध्येकवाक्यतां विनेति भाष्ये' पर्यन्तं मूलमातृकायां नास्ति ।
३. 'यो' इति ग मातृकापाठः ।
४. 'निन्दैव' इति ङ मातृकायां नास्ति ।
५. 'अभिधारयेत्' इति ग मातृकापाठः ।
६. 'मीमांसते' इति मूलमातृकापाठः ।
७. 'जुह्वोति' इति मूलमातृकापाठः ।

भावेनास्यापि फलपरत्वाप्रतीतेश्च। एवं 'यस्य पर्णमयी जुहूर्भवति, न स पापं श्लोकं शृणोती'त्यादीनामप्यपापश्लोकश्रवणादिफलबोधककानामर्थवादत्वम्। क्रत्वर्थजुह्वाद्युद्देशेन पर्णमयीत्वादिविधीनां फलाकाङ्क्षाभावात्। तथा च सूत्रम् 'द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात्' मी० सू० ४.३.१ इति। अत्र द्रव्ये फलश्रुतिः प्रागुक्ता। 'तीर्थे[1] स्नाती'ति तीर्थमेव [2]स्नानानां भवतीत्यादिसंस्कारे तीर्थस्नानादौ। 'वर्म वा एतद् यज्ञस्य क्रियते यत् प्रयाजानुयाजाइज्यन्ते, वर्म यजमानस्य भ्रातृव्यस्याभिभूत्यै' इत्या[3]दिके कर्मण्यारादुपकारके प्रयाजौ। उभयत्रापि प्रकरणात् क्रत्वर्थत्वावगतेरर्थवादत्वम् यत्र तु न क्रत्वर्थत्वा[4]वगमस्तत्रार्थवादिकं फलं गृह्यते। रात्रिसत्रादाविति[5] प्रागुक्तम्। एवं 'शूर्पेण[6] जुहोती'ति विध्येक वाक्यतापन्नस्य 'तेन ह्यन्नं [7]क्रियते' इत्यस्यान्तन्तरत्वरूपहेतुपरतया हिशब्द[8]प्रयोगात्प्रतीयमानस्यपि विधेर्हेत्वनपेक्षत्वादपेक्षित[9]स्तुत्यर्थत्वेनार्थवादत्वं हेतोर्निष्फलत्वाच्च। न च यद्[10] यदन्नकरणम्, [11]तत्तद्धोमसाधनमिति व्यप्तिकल्पनया [12]द्रव्यादिप्राप्तिः फलम्। प्रत्यक्षशिष्ट[13]शूर्पविरोधे

१. 'स्नाति० तीर्थमेव' ग घ मातृकापाठः।

२. 'सजातीनाम्' इति ङ मातृकापाठः। च छ मातृकयोः। सजातानाम् इति पाठः।

३. ङ मातृकायां 'क' मात्रं नास्ति। च मातृकायाञ्च तत्स्थाने 'का' इति दृश्यते।

४. 'त्वा' स्थाने 'ता' इति ङ मातृकायाम्।

५. 'इत्युक्तं प्राक्' इति ङ मातृकायां वाक्यविन्यासः।

६. 'भूर्जेया' इति छ मातृकापाठः।

७. 'क्रियते' इत्यनन्तरं 'द्रव्य इत्यन्त' इत्यधिकं मूलमातृकायां दृश्यते। तत्रापि द्रव्यपदं ग घ मातृकयोर्नास्ति। ग घ ङ छ मातृकासु च सम्पूर्णमेव दृश्यते।

८. 'प्र' इति घ च छ मातृकासु नास्ति।

९. 'स्तुत्यर्थवादत्वम्' इति मूलमातृकापाठः।

१०. 'पयदन्त' इत्येव घ ङ मातृकयोः पाठः।

११. 'तद्धोम०' इति मातृकापाठः।

१२. 'द्रव्यादि' ध च छ मातृकापाटः।

१३. 'भूर्ज' इति छ मातृकापाठः।

काल्पनिक[1]द्रव्यादिप्राप्त्ययोगात् । यत्र तु[2] हेतुविधेः फलवत्ता, तत्र स एवाश्रीयते । यथा 'आतिथ्यायां चतुर्गृहीतान्याज्यानि भवन्ति' । नह्यत्रानूयाजा भावरूपहेतुनिर्देशातदनुयाजौपभृतचतुर्गृहीताभावो विधिप्रमेयोऽवसीयते । अन्यथा प्रकृतितश्चतुर्गृहीतचतुष्टमप्राप्तौ कपिञ्जलाधिकरणन्यायेन चतुर्गृहीतत्रित्वं विदधतो विधेः[3]किं चतुर्गृहीत निर्वर्त्यमिति न ज्ञायेत एवं द्वादशाब्दे 'पत्नीसंयाजान्तान्यहानि सन्तिष्ठंते न वर्हिरनुप्रहरति' असंस्थितो हि तर्हि यज्ञस्य संस्था[4]रूपहेतुनिर्देशात् प्रागुत्तमान्हः पत्नीसंयाजान्तता विधीयते । तत्रैव हेतुसद्भावात् । अन्यथा विधौ सामान्यनिर्देशात् सर्वत्र सा[5]स्यात् । एवं 'उपव्ययते देवलस्यमेव तत्कुरुते' इति विध्येकवाक्यभूतानां 'निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवानामि'ति वाक्यानां निवीतादिपदाभिधेयपरिकरवन्धादि[6]क्रिया[7]विधित्वेन प्रतीयमाना[8]मुतवीतार्थवादत्वम् । स्वतन्त्र्येपण विध्यश्रवणात् । शास्त्रान्तरेण मनुष्यादिप्रधाने कर्मणि निवीतादिप्राप्तेश्च । यत्र तु न शास्त्रान्तरेण प्राप्तिस्तत्र स्वातन्त्र्येण[9] विधिकल्पनम् । यथा 'उपरि हि देवेभ्यो धार[10]यति' इत्यस्मिन् 'अधस्तात् समिधं धारयननुद्रवेत्' इति मृताग्निहोत्रगतविधिशेषे श्रुतम् । जीवदग्निहोत्रगतं स्तुतादन्दण्डोपरि समिद्धारणं शास्तान्तराप्राप्तेर्विधीयते । तथा च सूत्रम् 'विधिस्तु धारणेऽपूर्वत्वात्' आनन्दाश्रममुद्रित मी० स० त० वा० पृ० ३१८ इति । एवं नयनं दक्षिणं

---

१. 'द्रव्यादि' इति घ ङ मातृकापाठः ।
२. 'तु' पदं छ मातृकायां नास्त ।
३. 'किं' पदं ङ मातृकायां नास्ति ।
४. 'इत्यसंस्था' इति ग घ मातृकापाठः ।
५. 'साम्यात्' इति घ मातृकापाठः ।
६. '°दि००क्रि०' इति छ मातृकापाठः ।
७. 'विधि' पदं ङ मातृकायां नास्ति ।
८. '°मानानावीतं पितृणाम्' इति छ मातृकापाठः ।
९. '°णावधि०' इति ग मातृकापाठः ।
१०. 'धारयन्ति' इति घ मातृकापाठः ।

दीक्षितः[1] पूर्वमक्ते[2] सव्यं हि मनुष्याः पूर्वमञ्जन' इति[3]। दीक्षितसम्बन्धि-दक्षिण[4]पूर्वाञ्जनविधिशेषे मनुष्यसम्बन्धि[5]सव्यपूर्वाञ्जनं श्रुतमप्राप्तत्वाद्वि-धीयते। द्रव्यविधिसरूपाणां जर्तिलयवाग्वादिश्रवणानामर्थवादत्वं प्रागुक्तम्। चयने 'चरुमुपदधाति' इति विधिशेषस्य 'बृहस्पतेर्वा एतदन्नं यन्तीवाराः' इत्यस्य देवताविधिसरूपस्याप्यर्थवादत्वम्। चरूपधानविधेर्देवता नाकाङ्क्ष-त्वात्। अस्य च तद्धितचतुर्थ्यभावेन देवताविधित्वासम्भवात्एवमन्यत्रा-प्यर्थवादत्वमूह्यम्।

## अर्थवादभेदः

ते चार्थवादाः द्विविधाः—पर[6]कृतिपुराकल्पभेदात्। एककर्त्तृक-चरित्रान्वाख्यानं परकृतिः। यथा [7]इति ह स्माह वै वार्ष्णिमाषान्मे[8] पचेतेति न वा एतेषां हविर्देवा गृह्णन्ति' इति। 'तस्मादारण्यमेवाश्[9]नीयात्' इत्यर्थवादो [10]वृष्णिगोत्रोत्पन्नैककर्त्तृकचरित्रान्वाख्यानात्परकृतिः। 'उल्मुकैर्ह स्म पूर्वे समाजग्मुस्तानसुरा रक्षांसि निर्जघ्नुः। इति 'गृह्यतेरेवा ग्निषु निर्मथ्य निर्वपेरन्' इत्सय विधेः शेषोऽनेककर्त्तृकचरित्रान्वाख्याना-त्पुराकल्पः। यस्मात् पूर्वे सत्रिणः सत्रार्थं प्रत्यणानग्नीन्नयन्तऽसुरादिभिर्हत-स्तस्मात्समारोप्या[11]ग्नीस्तत्र नीत्वा निर्मथ्य गृह्यत्यग्निषु प्रक्षिपेरन्निति

---

१ 'दीक्षितम्' इति मूलमातृकापाठः।

२. '°मङ्क्ते' इति मूलमातृकापाठः।

३. 'इत्यस्मिन्' इति ग ङ छ मातृकापाठः।

४. 'दक्षिणनयन' इति ग छ मातृकापाठः।

५. 'सव्यनयन' इति ग छ मातृकापाठः।

६. 'परकृतिरेव सर्वत्र पठ्यते। इति छ मातृकापाठति।

७. वै' इत्यारभ्य माषान् पर्यन्तं त्रुटि : मूलमातृकायाम्।

८. 'मो' इति घ मातृकापाठः।

९. °श्रीयादित्यस्य० इति ङ मातृकापाठः।

१०. 'वृष्णिगोत्रोत्पन्नैक०' इति मूलमातृकायां नास्ति।
'एक' इत्यस्य स्थाने 'बहु' पदञ्च दृश्यते।

११. '°ग्नीस्तत' इति मूलमातृकापाठः।

विध्येकवाक्यता । तस्मात्सर्वार्थवादानां विधिनिषेधा[1]द्यपेक्षितस्तुतिनिन्दार्थत्वेन प्रामाण्यम् । केषाञ्चित्तु विधिनिर्णायकत्वेन । यथा चयने । 'अक्ताः शर्करा उपदधातीति[2] तद्विधौ[3] केनाक्ता इति सन्देहे 'तेजो वै घृतम्' इति वाक्यशेषाद् 'घृतेनैवे'ति निर्णयो भवति एवं चतुर्मास्येषु 'यवमयानि करम्भपात्राणि भवन्ती'ति विधौ लोके यव[4]शब्दस्य दीर्घशूकेषु प्रियङ्गुषु[5] च प्रयोगात्सन्देहे 'यदान्या ओषधयो म्लायन्ते, अथैते मोदमानस्तिष्ठन्ति 'इति वाक्यशेषाद्दीर्घशूका एव यवा इति निर्णयो भवतीत्यलं प्रपञ्चेन ।

## मन्त्रप्रामाण्यनिरूपणम्

मत्राणां प्रयोगसमवेतार्थस्मारकत्वेनार्थवत्त्वं पदार्थविधया च धर्मे प्रामाण्यम् । स्मृताः पदार्थाः तत्स्मरणं [6]वाक्यार्थप्रमाकरणमित्युक्तम् । पदार्थास्तत्स्मृतिर्वा स्यादिति । तेन 'देवस्य त्वेति निर्वपती'त्यादिमन्त्रविनियोजकवाक्यषु मन्त्रोऽपी[7]तिकरणान्तपदार्थत्वाद्भवति वाक्यार्थप्रमाकरणमिति प्रमाणम् भवति च प्रयोगसमवेतनिर्वायस्माप[8]कत्वादर्थवान् न च दधिव्रीह्यादेरपि पदार्थत्वात्प्रामाण्यापत्तिः । तेषामबोधकत्वेन तद्विशेषरूपप्रामाण्यासम्भवात् । मन्त्राणां तु[9] वाक्यत्वेन बोधकत्वात्तदुपपद्यते ।

राणके तु वाक्यविधयैव प्रामाण्यमुक्तम् । अपूर्वसाधनत्वो[10]पहिते लवनादौ स्वार्थे स्वरूपं विनियुञ्जन् मन्त्रः प्रामाण्यमश्नुते । यथोक्तम्—

---

१. 'आदि' पदं ग घ च मातृकासु नास्ति ।
२. 'उपदधातीति विधौ' इति च मातृकापाठः ।
३. 'तद्' इति ङ मातृकायां नास्ति ।
४. 'ब्दस्य दीर्घशूके' इति त्रुटिः मूलमातृकायाम् ।
५. प्रियङ्गुषु चेत्यारभ्य दीर्घशूका एवेति यावन्मूल मातृकायां नास्ति
६. 'वा वाक्यार्थ' इति घ मातृकापाठः ।
७. 'मत्तोऽपीतिकरणम्, तत्र पदार्थ०' इति ङ मातृकापाठः ।
८. ०'स्मारणेन' इति ङ मातृकापाठः ।
९. 'तु वाक्यत्वेन' इति च मातृकायां नास्ति ।
१०. ०'त्वोपहिते' इति ङ मातृकापाठः ।

अपूर्वसाधनत्वात्तु लवनादौ समीहिते।
आत्मनोऽङ्गत्वबोधेन मन्त्रः प्रामाण्यमश्नुते ॥

न्या० सु० पृ० ८८ इति।

न चार्थस्मरणस्य ध्यानाद्युपायान्तरेणापिसम्भवान्न मन्त्रप्रयोजनता युक्तेति वाच्यम्। दृष्टार्थाध्ययनविधिवशात् मन्त्रैरेव स्मर्त्तव्यमि'ति नियमांशेनादृष्टकल्पनात्। यथाहि—लौकिकवाक्यात्प्रमितो धर्मो नादृष्टाय, विधीनामेवाध्ययनविधिना नियमात्। तथा चार्थवादैरेव स्तुतो धर्मः फलाय, तथा मन्त्रैरेव स्मृतः[१] फलायेति कल्प्यते। न च नियमांशेना[२]दृष्टकल्पनावश्यम्भाविनी चेन्मन्त्रोच्चारणादेव सास्त्विति वाच्यम्। अध्ययनविधेर्यागवत्सम्भवं दृष्टफल[३]कल्पकत्वात्। अतश्च ये करणमन्त्राः करिष्यमाणक्रियातत्सम्बन्धिप्रकाशकाः 'देवस्य त्वे'त्यः। क्रियमाणानुवादिनो वा क्रियमाणा[४] क्रिया तत्सम्बन्धिप्रकाशकाः। अध्रिगुप्रैषादयस्ते दृष्टार्था एव। ये तु जयादिमन्त्राः प्रयोगौ[५]पयिकार्थाप्रकाशकास्तदुच्चारणमदृष्टार्थमेव। दृष्टार्थेष्वपि यानि प्रयोगातौपयिकार्थानि 'देवस्य त्वा'दिपदानि, तान्यपि कथञ्चिन्निर्वापादिविशेषणीभूनस्वार्थप्रतिपादनेन दृष्टार्थान्येव। साम[६]मन्त्रेष्वपि यानि हुंफडादिपदानि तान्यपि[७] गानापेक्षितनियत[८]कालपूरणार्थतया दृष्टार्थान्येव। नियमांशेन त्वदृष्टं सर्वत्र कल्प्यते। न च मन्त्राणां दृष्टार्थत्वे लिङ्गादेव [९]स्वार्थेविनियोगसिद्धेस्तद्विनियोजकशास्त्रवैयर्थ्यम्। तच्छास्त्रस्य

---

१ 'स्मृतो धर्मः' इति ग मातृकापाठः।

२. °'मांशेऽदृष्ट०' इति घ ङ मातृकयोः पाठः।

३. 'दृष्टफलकत्वात्' इति ग ङ छ मातृकापाठः।

४. °'माण' इति घ मातृकापाठः।

५. 'प्रयोगोपत्तिक' इति ङ मातृकापाठः।

६. 'नियमांशेत्व दृष्टं सर्वत्र कल्प्यते। न च मन्त्राणां दृष्टार्थत्वे' इत्यग्रिमा पंक्तिरत्रैव पठिता वर्त्तते ङ मातृकायाम्।

७. 'अपि' पदं ङ च मातृकयोर्नास्ति।

८. 'नियम' इति छ मातृकापाठः।

९. 'स्वार्थविनि०' इति घ मातृकापाठः।

गुणार्थवादपरिसंख्यार्थत्वात् । तथाहि—'अभ्रिरसी'त्यादयश्चत्वारो मन्त्राः लिङ्गादेवाभ्र्यादाने प्राप्तास्तद्विनियोजकं शास्त्रं 'तां चतुर्भिर[1]भ्रिमादत्ते' इति । तच्चतुर्णां मन्त्राणां समुच्चयरूपगुणविधानेनार्थवत् । अन्यथा दृष्टार्थत्वाच्चतुर्णां विकल्पः स्यात् । उरु प्रथस्वोरु ते यज्ञपतिः प्रथतामि'ति मन्त्रः प्रथने लिङ्गादेव प्राप्तस्तद्विनियोजकं शास्त्रं उरु प्रथस्वेति पुरोडाशं प्रथयती'ति 'तद् यज्ञपतिमेव प्रजया पशुभिश्च प्रथयती'त्यर्थवादोपपत्त्यर्थं यज्ञपतिपदयुक्तेन मन्त्रेण पुरोडाशप्रथनेक्कृते यज्ञपतेरेव प्रथनं कृतं भवतीति तदुपपत्तिः। अन्यथा पुरोडाशप्रथनाभिधायिनो मन्त्रस्य यज्ञपतिप्रथनेन स्तुतिर्निरालम्बना[2] स्यात् । 'इत्यश्वाभिधानीमादत्ते' इत्यस्य परिसंख्यार्थत्वं प्रागुक्तम् । एतत्प्रयोजनाभावे तु नित्यानुवादत्वम् । यथा—अध्रिप्रैषे 'न्वेनं माता मन्यतामि'त्यदि[3]मन्न्नगतमात्रादिशब्दानां पशुगणे परार्थत्वेनेडानिगदगतयज्ञपतिपदवदूहाप्रसक्ते'र्नमातावर्द्धतेनपिते'त्यादिशास्त्रमूहनिषेधकंनित्यानुवादः, तस्य गुणाद्यर्थत्वासम्भवात् । न च प्रोक्षणीरासादये'त्यादिप्रैषमन्त्राणां दृष्टार्थत्वे वंयर्थ्यम्, पर[4]स्परविरुद्धत्वेन तद्बोधनवैयर्थ्यादिति वाच्यम् । तेषां प्राप्तकालताबोधकत्वात्परसम्बोधनार्थत्वेऽपि वा नियमांशेनादृष्टकल्पनादिति संक्षेपः ।

ननु किं मन्त्रत्वं प्रयोगौपयिकार्थस्मारकत्वं चेत्तदामन्त्रकेषु पदार्थेषु ब्राह्मणवाक्यानामप्यस्ति । अस्यन्तत्वादि तु न सर्वमन्त्रा[5]नुयायिब्राह्मणव्यवृत्तं च किञ्चिदस्ति । ऊहप्रवरनामधेयप्रक्षेपेण चान्यथाभावात् कथं वेदावयत्वं मन्त्राणाम् । न हि विध्यर्थवादयोः क्वचिदन्यथाभावो दृष्टः। उच्यते—अध्यायकादिगतमन्त्रत्वप्रसिद्धिविषयत्वमेव मन्त्रत्वम् न च [6]तद्ब्राह्मणादावपठितेऽस्तीति तेषाममन्त्रत्वेऽपि पठितानामभि[7]हितं मन्त्र-

१. 'अभि' पदं घ ङ च मातृकासु नास्ति ।

२. 'निरालम्बा' इति घ ङ मातृकापाठः । ३. 'वाक्यागत' इति मूलमातृकापाठः ।

४. 'परस्य विद्वत्त्वेन' इति मूलमातृकापाठः । 'परस्य परस्य' इति ग मातृकायाम् ।

५. 'मन्त्रेऽपि' इति ङ मातृकापाठः ।

६. 'तद् ब्राह्मणादावपि' इति ङ मातृकापाठः ।

७. °'नामविहितं' इति मातृकापाठः । च मातृकायाञ्च 'नामविहृतं' इति ।

त्वम्। तथा च सूत्रम्—'अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः स्यात्' मी० सू० २.१.३४ इति। दृष्टश्च विध्यर्थवादयोरप्यन्यथाभावः स्वर्गकामादिपदप्रक्षेपेणेति। न तावता वेदावयवत्वक्षतिः। ननु तथापि[1] कथं विधान्तरमेतद्विधित्वमेवास्तु। 'देवांश्च याभिर्यजते ददाति [2]चे'त्यादिषु विधिदर्शनादन्यत्रापि तदुन्नयनात् अर्थवादत्वं वास्तु। देवस्य त्वा'दिपदानां स्तावकत्वदर्शनात्। उच्यते—यच्छब्देन पूर्वप्राप्तानुवादिनात्यन्ताप्राप्तप्रापकविधिशक्ति प्रतिबन्धान्न 'देवश्चे'त्यत्र यागादिविधानम्, किन्तु विधिप्राप्ततत्स्मृतिरेव कार्यम् एवं दामि गृह्णामीत्यादावुत्तमपुरुषादिप्रयोगाद्विधिशक्तिप्रतिबन्धः। नहि विधिरस्मदर्थमात्रविषय, तस्य साधारण्यात्। उक्तञ्च—

तुलनीयम्—यच्छब्दादिभिरेतेषां विधिशक्तिर्विहन्यते। शा० दी० २.१.६ मूलमातृकायां 'सिध्यत्व' इति पाठः। 'वक्त्रा०' इत्यस्य स्थाने'वक्ता' इति च। 'अप्राप्तौ तु तद्‌मङ्गाद्' इति मूलमातृकापाठः। च मातृकायाञ्च 'अप्राप्ते तु न तद्‌भङ्गात्' इति पाठः। 'विधिशक्तिविहन्तृ' इति ग घ मातृकापाठः।

सिद्धत्वद्योतनाद्वक्त्राभिमुख्यासम्भवद्विधौ।
आत्मनि प्रेरणायोगान्निमित्तस्याभिधानतः॥
विधिशक्त्यभिहन्तृ स्याद् यच्छब्दादि चतुष्टयम्।
अप्राप्तेऽर्थे तु तद्‌भङ्गात् क्वचिद् स्यादविहन्तृता॥

कर्त्तव्यार्थविशेषणतया स्तावकत्वान्नार्थ[3]वादत्वम्। स्वतन्त्रस्तुतौ ह्यर्थवादत्वम्। न च सर्वमन्त्रेषु स्तुतिरपि प्रतीयते। तस्माद्विधान्तरत्वं मन्त्रत्वम्। तद्‌भेदाश्च—ऋग्यजुःसामरूपा, प्रागुक्ता एव। निगदश्चौच्चैः[4] पठ्यमानो यजुर्भाग एव प्रैषापरनामा नितरां गद्यत इति व्युत्पत्त्योच्यते, न

---

१. 'अपि' पदं ङ मातृकायां नास्ति।
२. 'च' पदं मातृकायां नास्ति।
३. °'त्वाच्चार्थ'° इति घ मातृकापाठः।
४. '°दश्वो°' इति मूलमातृकापाठः।

तु विधान्तरम् 'उच्चैर्निगदे[1]ने'ति वाक्यं[2] तूपांशु यजुषे'त्येतत्प्रशंसार्थो[3] नित्यानुवादः। परसम्बोधनकार्यवशादेवोच्चैष्ट्वप्राप्तेः। अतएव सामान्य-विहितापांशुत्वबाधः। अपरिपूर्णार्थेषु च मन्त्रेषु क्वचिद्वैदिकवाक्यशेषानु-षङ्गस्तत्सहितस्यैव च मन्त्रत्वम्, तस्य सकृत्पठितत्वात्। यथा 'या ते अग्ने [4]अयाशया। ये [5]त्वस्यानन्तरं 'तनूर्वर्षिष्टे'त्यादिशेषः पठितोऽनन्तर-पठितयोरपि 'त ते अग्ने [6]रजाशया, या ते अग्ने हरा[7]शया' इत्यनयोर-प्यनुषज्यते। आकाङ्क्षायोग्यतासत्तीनां सत्त्वात्। वास्तवाकाङ्क्षाभावेऽपि चोत्था[8]प्याकाङ्क्षया क्वचिदनुषङ्गः। यथाचित्पतिस्त्वा पुनातु, वाक्यात्ते-स्तुत्वा पुनातु, देवस्त्वा[9] सविता पुनात्वि'ति मन्त्रणां शेषो 'च्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरित्ययं सकृत्पठितोऽपि त्रिष्वनुषज्यते। पवनक्रिया[10]-करणप्रकाशको [11]ह्ययम्। पवनक्रिया च त्रिषु प्रकाश्यैरेकैवेति तच्छेष-स्त्रिभिः सम्बध्यते। 'प्रधानं नीयमानं हि तक्षाङ्गान्यपकर्षती'ति न्यायात्। [12]असम्बद्धपदव्यवाये च नानुषङ्गो भवति। यथा—[13]सं ते वायुर्वातेन गच्छताम्, संयजत्रैरङ्गानि संयज्ञपयतिराशिषे'त्यत्रान्ते गच्छतामित्यस्य नानुषङ्गः। मध्ये गच्छतामिति बहुवचनाध्याहारेण व्यवायात्। आसत्ति-

---

१. 'निगदेति' च मातृकापाठः।
२. 'वाक्यात्तूपांशु०' इति घ मातृकापाठः।
३. 'प्रशंसार्थम्' इति घ मातृकापाठः।
४. 'अग्ने पाश' इति गमातृकापाठः।
५. 'इत्यस्यानन्तरं' घ मातृकापाठः।
६. 'अत्राशया' इति घ ङ मातृकापाठः।
७. 'हिक्षणरूपा' इति ग मातृकापाठ।
८. 'अन्यतराङ्क्षया' इति मातृकापाठः।
९. 'देवस्त्वा सविता पुनातु' इति छ मातृकायां नास्ति।
१०. 'प्रकरण' इति मूलमातृकापाठः।
११. 'हि' इति ङ मातृकायां नास्ति।
१२. सन्दर्भेऽस्मिन् ग मातृकाप्रान्तभागे 'अधिकोऽर्थो नास्ति, मन्त्रात् विशिष्टं भवति' इति।
१३. मूलमातृकायां घ मातृकायाञ्च 'वा सं ते' इति पाठः। ङ मातृकायां 'व' इति।

रपि ह्यन्वयहेतुः सा च व्यवाये नास्तीत्यध्याहारेणैवात्र मन्त्रपूरणम्। अध्याहृतस्य [1]चापाठादमन्त्रम्। तेन तद्क्षेपेन मन्त्रलोपप्रायश्चित्तं कार्यम्, किन्त्वङ्गभेषप्रायश्चित्तम्। एवं 'इषे त्वे'त्यादिषु, विनियोगानुसारेण 'छिनद्मि' इत्यादिपदाध्याहारेऽप्यूह्यमित्यलम्।

## नामधेयप्रामाण्यनिरूपणम्

नामधेयानां विधेयार्थपरिच्छेदकत्वेन धर्मे प्रमाण्यम्। परिच्छेदश्चेतरव्यावृत्तिबोधो व्यवहारसौकर्यञ्च यत्र नाम्नैव भेदस्तत्राद्यो यथो '[2]अथैष ज्योतिरि'त्यादौ यत्र तु मानान्तरेण भेदस्तत्र द्वितीयो। यथा—ज्योतिष्टोमादिष्वसंस्कारार्थं चेदमुक्तमुभयत्रोभयसम्भवात्। ननु कथं नाम्नः पदमात्रस्य प्रामाण्यम्।

'पदमभ्यधिकाराभावात्स्मारकान्न विशिष्यत' श्लो० वा० श० ख० १०७ इति न्यायात्। अथ लौकिकपदं गृहीतसङ्गतिकत्वात्स्मारकम्। इदं त्वलौकिकत्वादनुभावकमित्युच्यते। तथा सति स्वार्थे प्रमाणं भवतु नाम, न तु श्रेयः साधनतारूपे [3]वाक्यार्थे धर्मे। सत्यम्। स्वातन्त्र्येण [4]नास्य धर्मे प्रामाण्यम्, किन्तु विध्येकवाक्यतया। प्रकारभेदकथनार्थं तु पृथक् कीर्त्तनम्। नाम च द्विविधम्—यौगिकं रूढञ्च। 'तत्र किञ्चिन्मत्वर्थलक्षणाभयान्नाम। किञ्चिद् वाक्यभेदभयात्। किञ्चित्तत्प्रख्यन्यायेन। किञ्चित्तद्व्यपदेशेन।

## मत्वर्थलक्षणाभयान्नामधेयत्वनिरूपणम्

तत्राद्यम् 'उद्भिदा यजेत पशुकाम' इत्यत्रोद्भिच्छब्दो यौगिको

---

१. 'च पाठात्' इति मूलमातृकापाठः ; 'चाप्यपवाद' इति ङ मातृकापाठः।
२. 'यथैष' इति मूलमातृकापाठः।
३. 'धर्मे वाक्यार्थे' इति घ ङ मातृकयोः व्यत्ययः।
४. 'वाक्य' इति ङ मातृकापाठः।

गुणविधौ मत्वर्थलक्षणाभयात् यागनामधेयं भवति। उत्पूर्वस्य भिदेर्विदारणार्थत्वादूर्ध्वविदारणसाधन खनित्राद्युद्भिच्छब्दाभिधेयं यदि यागसाधनत्वेन विधीयेत, ततो यागस्याप्राप्तत्वेन फलकरणतया [1]विधानात् तत्करणतया च गुणस्य विधानाद्वाक्यभेदापत्तिः। यागेन फलं कुर्याद्, उद्भिदा च यागं कुर्यादिति। न चैवं न[2] यागकरणतया गुणविधानम्, किन्तु फलभावनाकरणतयेति वाच्यम्। तस्याः समानपदोपात्तयागावरोधेन करणान्तरानन्वयात्। करणयोः परस्परा[3]नन्वयेन वाक्यभेदापत्तेश्च ननु न यागस्य भावनायां करणत्वेनान्वयः, किन्तु यागसम्बद्धायां भावनायां पदश्रुत्यवगतायां गुणफलयोः करणत्वेन कर्मत्वेन[4] वान्वये सति यागस्य फलं प्रतिकरणत्वेन गुणं प्रति कर्मत्वेन तन्त्रेण सम्बन्ध[5] इति न वाक्यभेद [6]इति चेत्। उच्यते—कारकत्व[7]कल्पनं विना यागभावनयोः सम्बन्धः सम्भवति। कारकमेव क्रिययान्वेतीति नियमात् न च विरुद्धयोः कर्मत्व[8]करणत्वयोः युगपत्कल्पनं सम्भवति। कर्मत्वं ह्यसिद्ध धर्मः। करणत्वन्तु सिद्धधर्म इति न युगपद्बोधसम्भवः क्रमेण तु कल्पने वाक्यभेदः। तेन गुणविधानेऽवश्यमुद्भिच्छब्देन तद्वन्तं यागं लक्षयित्वा 'उद्भिद्वता यागेन फलं भावयेत्' इत्येवमन्वयो वाच्यः। तत्र मत्वर्थलक्षणा स्यात्। तद्भमात्तु[9] उद्भिच्छब्दो यागनामेति ज्ञावते फलोद्भेदनकारित्वेन च कथञ्चिद् यागेऽपि योगसम्भवात्। अतश्च यौगिकानामेव मत्वर्थलक्षणाभयान्नामत्वम्, न रूढानाम, 'सोमेन यजेते'त्यादौ मत्वर्वलक्षणाया एवाङ्गीकारात्। ततुक्तम्—

---

१. विधानादित्यारभ्य 'यागकरणतया' इति यावत् ङ मातृकायांनास्ति।
२. 'न' इति पदं ग च मातृकयोर्नास्ति।
३. 'परस्परान्वयेन' इति मूलमातृकापाठः।
४. 'कर्मत्वेनान्वये' इति मूलमातृकापाठः। 'चान्वये' च मातृकापाठः।
५. 'सम्बद्ध' इति ङ मातृकापाठः।
६. 'इति चेत्' मूलमातृकायां नास्ति।
७. 'कारक' इति मूलमातृकापाठः।
८. 'कर्म' इति मूलमातृकासुपाठः।
९. 'तु' शब्दः च मातृकायां नास्ति।

**एवमज्ञातसन्दिग्धं प्रसिद्धैरपृथक्श्रुति ।**
**निर्णीयते निरूढं तु न स्वार्थादपनीयते ।।**

त० वा० १.४.२ इति ।

## वाक्यभेदभयान्नामधेयत्वनिरूपणम्

'चित्रया यजेत पशुकामः' इत्यत्र वाक्यभेदभयाच्चित्रापदस्य[१] कर्मनामत्वम् । गुणविधित्वे [२]ह्यग्नीषोमीयपशुयागानुवादेन चित्रत्वस्त्रीत्वरूपगुणद्वयविधानं स्यात् । यः प[३]शुसाधनत्वेन कामयमानो यागं कुर्यात्स चित्रवर्णेन स्त्रीलिङ्गेन च[४] पशुना यागं कुर्यादित्यर्थः । तथा सति ।

'प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः' त० वा० २.२.६ इति न्यायेन वाक्यभेदप्रसङ्गः । गुणद्वयविशिष्टैककरणकारकविधानाद्वा विध्यावृत्त्यभावेऽपि विधितात्पर्यभेदकल्पनात् । 'दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यमि'ति सन्निहितवाक्योत्पन्नस्य यागस्य दध्यादिचित्रद्रव्यकत्वादि[५]विशिष्टत्वेन स्त्रीलिङ्गत्वात् चित्राशब्देनाभिहितस्यकमेतद्वाक्यमिति प्रतीयमानैकवाक्यतावाधेन पूर्ववाक्ये विश्वजिन्न्यायावगतस्वर्गफलकयागविधानम्, चित्रावाक्ये[६] च दूरस्थाग्नीषोमीयानुवादेन गुणविधानमिति वाक्यभेद[७]कल्पनापत्तेश्च । तेन वाक्यभेदभयाच्चित्रापदस्य कर्मनामत्वम् ।

## तत्प्रख्यन्यायान्नामधेयत्वनिरूपणम्

'अग्निहोत्रं जुहोती'त्यग्निहोत्रपदस्य तत्प्रख्यन्यायेन कर्मनामत्वम् । तथाहि—अग्नये होत्रं हूयमानं द्रव्यमस्मिन्निति व्युत्पत्त्याग्नि[८]दैवत्वद्रव्या-

१ 'शब्दस्य कर्मनामधेयत्वम्' इति घ ङ मातृकापाठः ।
२. 'हि' पदं घ मातृकायां नास्ति ।
३. 'पशुं साध°' इति मूलमातृकापाठः ।
४. 'च' पदं घ ङ मातृकयोर्नास्ति ।
५. 'शिष्टत्वेन' इति मातृकापाठः ।
६. 'वाक्येन' इति ङ मातृकापाठः ।
७. 'कल्पन' इति ग मातृकायां नास्ति ।
८. 'देवस्य' इति मूल ङ मातृकायाम् ।

भिधायिनोऽग्निहोत्रपदस्य न तावद्द्रव्यविधित्वम्, 'दध्नाजुहोती'त्यादिवाक्यैरेव द्रव्यप्राप्तेः नाग्निदेवताविधित्वम्। 'यदग्नये च प्रजापतये च सायं जुहोती'तिशास्त्रेण सायं होमे समुच्चितदेवताद्वयविधायकेनाग्निदेवताप्राप्तेरिति राणके। भाष्यवार्त्तिकयोरप्येवम्।

मिश्रास्तु सायंकालविशिष्टहोमानुवादेन देवताद्वयविधौ च वाक्य[१]-भेदापत्तेर्नेदं वाक्यमग्निदेवताप्रापकम्, किन्तु 'अग्निर्ज्योतिरग्नि स्वाहेति सायं जुहोती'ति मन्त्रविध्यर्थापत्तिकल्पितवचनेन तत्प्राप्तिः। मन्त्रो हि क्रियां तत्सम्बन्धं वा प्रकाशयन्नङ्गं भवतीत्युक्तम् तेन होमसम्बन्धिदेवतां प्रकाशयन्मन्त्रोऽङ्गत्वं भजेतेत्येतत्प्रकाश्याग्निदेवतायाः होमाङ्गत्वबोधाय वचनं कल्पते। 'यदग्नये चे'ति [२]वाक्येन तु प्राप्ताग्निसमुच्चितं प्रजापतिमात्रं विधीयते। प्रकरण[३]प्राप्ते होमे [४]सायङ्कालमात्रोद्देशेनेति न वाक्यभेद इत्याहुः। आधाराग्निहोत्राधिकरणवार्त्तिकेऽप्येवम्। सर्वथा तत्प्रख्यशास्त्रान्तरसद्भावान्नाग्निहोत्रशब्दो देवताविधिः। तस्य विधित्सितगुणस्य प्रख्यापकं ज्ञापकं शास्त्रं यत्रास्ति, स तत्प्रख्यन्यायः। अतो होमनामधेयमग्निहोत्रेण होमेनेष्टं भावयेदिति वाक्यार्थः। द्वितीया चासाधितस्य करणत्वानुपपत्तेरर्थाक्षिप्तसाध्यत्वानुवादः।

एवं 'वाजपेयेन स्वराज्यकामो यजेते'त्यत्र वाजपेयशब्दस्तत्प्रख्यन्यायेन यागनामधेयम्। सुराग्रहाणामङ्गत्वेन विधानात् वाजं [अन्नं] पेयं सुराद्रव्यमस्मिन्निति व्युत्पत्तेः। 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यत्र ज्योतिष्टोमशब्दोऽपि तथा ज्योतींषि स्तोमा यस्मिन्निति व्युत्पत्तेः। 'तानि वा एतानि ज्योतींषि येऽस्य स्तोमाः' इत्यर्थवादेन ज्योतिरूप[५]स्तोत्रीयर्क्-परिच्छेदकत्रिवृदादिसंख्यारूपस्तोमसम्बन्धप्राप्तेः। 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यत्र दर्शपूर्णमास[६]शब्दोऽपि तथा। 'यदाग्नेय' इत्याद्युत्पत्ति-

१. 'वाक्यभेदान्नेदम' ङ मातृकापाठः।
२. 'तु वाक्येन' इति मूल घ ङ च मातृकापाठः।
३. 'प्रकरणम्' इति च मातृकापाठः।
४. 'सायङ्कालानुवादेनेत्यवाक्ययम्। इति ग मातृकापाठः।
५. 'स्तोत्रायका' इति घ मातृकापाठः। ६. 'शब्दावपि' इति ङ मातृकापाठः।

वाक्येषु येषामाग्नेयोपांशुयाजाग्नीषोमीयानां [1]पौर्णमासीकालसम्बन्धोऽवगतस्तेषां 'य एवं विद्वान् पौर्णमासीं यजते' इति [2]वाक्ये पूर्णमासीपदेन समुदायोऽनूद्यते। येषां चाग्नेयैन्द्रदधि[3]-पयोयागानां दर्शकालसम्बन्धोऽवगातस्तेषां 'य एवं विद्वानमावास्यायां यजते' इत्यत्रामावास्यापदेन समुदायोऽनूद्यत इति कालयोगप्राप्तेः समुदायद्वित्वयोगप्राप्तेश्च दर्शपूर्णमासशब्दः षण्णां नामधेयम्। 'दाक्षायणयज्ञेन [4]स्वर्गकामो यजेत' 'सा[5]कम्प्रस्थाय्येन यजेत पशुकामः' इति वाक्ययोस्तु दर्शपूर्णमासाश्रितयोरेव गुणयोः फले विधानम्, न तु कर्मान्तरनामत्वम्। दाक्षायणसाकम्प्रस्थाय्यशब्दयोः 'द्वे पौर्णमास्यौ द्वेऽमावास्ये' इति वाक्याद्धि द्विरावृत्तिरूपो गुणो दाक्षायणशब्दाभिधेयः। दक्षस्य समर्थस्य यजमानस्येमे ऋत्विजो[6] दाक्षास्तत्कर्त्तृकमयनमावृत्तिरिति व्युत्पत्तेः। 'सहकुम्भीभ्यामतिक्रमेत्' इति [7]वाक्याच्च दधिपयःकुम्भीसाहित्यविशिष्टा[8]तिक्रमणरूपो गुणः साकम्प्रस्थाय्यशब्दा[9]भिधेयः। उत्पत्तिवाक्येष्वाग्नेयादिशब्दोऽपि। देवताविधिर्न तु कर्मनामधेयम्। तत्प्रख्यन्यायाभावात् न च सन्निहिताग्नेयं[10] याज्यानुवाक्यायुगलाद्देवताप्राप्तिः। तस्य क्रमपाठाभावादित्युक्तं प्राक्। [11]यज्यश्रुतेस्तत्कल्पनार्थं देवताविधेरावश्यकत्वाच्च। न चानेकगुणविधाने वाक्यभेदः।

'अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः। त० वा० २.२.६ इति न्यायेनानेकगुणविशिष्टयागविधिकल्पनात्।

---

१. 'पूर्णमासी' इति मूलमातृकापाठः।
२. 'वाक्येन' इति घ ङ मातृकापाठः।
३ 'दधि' इत्यारभ्य 'समुदायो' इति मूलमातृकायां नास्ति।
४. 'सुवर्ग' इति ग मातृकापाठः।
५. साकं प्रस्थातुं योग्यः साकम्प्रस्थाय्यः। इति ग मातृकायां प्रान्त टिप्पणी।
६. 'दाक्षा ऋत्विजः इति मातृकायां वाक्यविनियासः।
७. 'वाक्यशेषाच्च' इति ग मातृकयोः।
८. ' तिक्रमण'' इत्यारम्भ 'न तु कर्मनामधेयम्' इति यावत् ग मातृकायां नास्ति।
९. 'शब्दाविधेयः' इति घ मातृकापाठः।
१०. 'आग्नेया' इति घ ङ मातृकापाठः।
११. 'याज्य ' इति घ मातृकापाठः।

अत्रान्योक्तिपद्यम्—

नान्यत्र क्वचन श्रुता गुणगणाः[1] स्युर्यद्वचः संश्रिता—
स्तेऽत्राख्यातमपि ध्रुवं विधिपदारूढं विदध्युः स्फुटम्।
प्राप्नोत्येष विशिष्टमर्थमपि तैः प्राप्तं न केनापि हि,
प्रज्ञातं गुणिनां महत्त्वमतुलो ह्यर्थः पदं वाच्य[2] ते।।

तस्मान्नाग्नेयादिशब्दो याग[3]नामधेयम्, किन्तु दर्शपूर्णमास शब्द एव। [4]इष्टशब्दस्तु प्रकृतिविकृतिसाधारणं नामधेयम्। पौर्णमास्यां पौर्णमास्या यजेते'त्यादौ प्रकृतौ 'य इष्टया' इत्यादौ विकृतौ च प्रयोगात् एवं चातुर्मास्येषु वैश्वदेवे प्रर्वणि 'आग्नेयमष्टाकपालं निर्वपति' इत्यादिवाक्यैरष्टौ यागा विहितास्तदन्ते 'वैश्वदेवेने यजेत' इति श्रुतेः वाक्ये वैश्वदेवशब्दस्तेषां यागानां[5] नामधेयम्, न तु या[6]गान्तरे देवताविधिः 'यद्विश्वेदेवाः समयजन्त, तद्वैश्वदेवस्य वैश्वदेत्वम्' इत्यर्थवादावगतविश्वेदेवकर्तृकत्ववशेन तत्प्रख्यन्यायात्। विश्वेदेव देवत्यत्व[7]मपि तद्देवत्यामिक्षायागघटितसमुदाये लिङ्गसमवायेन प्राप्यत एवेति न यागान्तरकल्पनागौरवमाश्रयणीयम्। 'अष्टौ हवींषी'त्यवन्यगतिकलिङ्गविरोधश्च। न च [8]प्रकृतयागेषु [9]विश्वेदेवदेवताविधिरस्त्विति वाच्यम्। तेषामुत्पत्तिशिष्टाग्न्यादिदेवतावरुद्धत्वात्। अतएवोत्पत्तिशिष्टगुणवलीयस्त्वमेवात्र नामधेयत्वज्ञापकमिति राणके।

पुर्वोक्त तत्प्रख्यन्यायेनेति मिश्राः। वार्त्तिकेऽप्येवम्। विस्तरस्त्वस्मत्पितृचरणकृतन्यायप्रकाशे बोध्यः।

---

१. 'गुणा' इति पदं घ ङ मातृकयोर्नास्ति।
२. 'चाप्यते' इति घ ङ मातृकापाठः।
३. 'याग' इति मातृकायां नास्ति।
४. 'इष्टिशब्दस्तु' इत्यारभ्य 'विकृतौ च प्रयोगात्। इति यावत् ग छ मातृकयो नास्ति।
५. यागानाम्' इति घ ङ मातृकयोर्नास्ति।
६. 'यागान्तरविधिः यागान्तरे द्रव्यदेवताविधिर्वा' इति घ ङ मातृकापाठः।
७. °त्व°'इति ग मातृकायांनास्ति।
८. 'प्रकृति' इति मूलमातृकापाठः।
९. 'विश्वदेव' इति घ मातृकापाठः।

## तद्व्यपदेशन्यायन्नामधेयत्वनिरूपणम्

'श्येनेनाभिचरन् यजेते'त्यत्र श्येनशब्दस्य तद्व्यपदेशन्यायेन[1] यागनामधेय[2]त्वम् । यद्यत्र[3] यागानुवादेन श्येनद्रव्यं विधीयेत, ततो विधिविहितस्यैव स्तुतिरिति श्येनद्रव्यस्यैव स्तुतिः स्याद् 'यथा वै श्येनो-नियत्यादत्ते, एवमयं द्विषन्तं भ्रातृव्यं नियत्यादत्ते' इति । न श्येनस्यैव श्यनोपमानेन स्तुतिः सम्भवति, अभेदोपमानोपमेयभावानुपपत्तेः । विशिष्ट-विधौ तु मत्वर्थलक्षणादिगौरवापत्तिः । अतस्तेन गुणेन व्यपदेशादुपमानात् श्येनशब्दो यागनामधेयम् । दृश्यैवा[4]र्थवादप्रयोजनं यच्छयेनसादृयज्ञापनमुखेन नामत्वज्ञापनन् । एवं 'इषुणाभिचरन्यजते'त्यत्रेषुशब्दस्य यागनामत्वभिषूप-मानार्थवादादितिसंक्षेपः ।

## अथद्रव्यनामानिविविच्यन्ते

वर्हिराज्यपुरोडाशशब्दाः संस्कृतेषु वर्हिरादिषु याज्ञिकैः प्रयुज्यमाना अपि जातिमात्रवचनाः, वर्हिरादाय गावो गता इत्यादौ जातिमात्रे प्रयोगात् । याज्ञिकप्रयोगेऽपि जातेरव्यभिचारात् । एव[5]माज्यपुरो-डाशयोरप्यूह्यम् । प्रोक्षणीशब्दस्यापि याज्ञिकैः संस्कृताप्वप्सु प्रयुज्य-सानस्य 'प्रोक्षणीभिरुद्वेजिताः स्म' इति जातिमात्रे प्रयोगादव्यभि-चाराज्जातिमात्रनामत्वम् । यौगिकश्चायं प्रोक्षणीशब्दः । प्रकृष्टोक्षणकरण-त्वादपाम्, लृप्ते च योगे[6] रूढेरकल्पनात् । निर्मन्थ्यशब्दस्याप्यग्नित्वजाति-मात्रवाचित्वम् 'निर्मन्थ्यमान[7]य [8]यक्ष्यामहे' इति प्रयोगान्न मन्थनसंस्कृता-

---

१. 'न्यायेनेति' इति मूलमातृकापाठः ।
२. °'नामत्वम्' इति मूलमातृकापाठः ।
३. 'यदि ह्यत्र' इति च मातृकापाठः ।
४. 'इदमेवचार्थ' इति घ मातृकापाठः ।
५. एवमित्यादिः °'रप्यूह्यम् 'इति यावन्मूलमातृकायां नास्ति ।
६. 'योगरूढे' इति छ मातृकापाठः ।
७. °'मानानाम्' इति छ मातृकापाठः ।
८. 'यक्षा°' इति ङ मातृकापाठः ।

ग्निनामत्वम्। यौगि[1]कत्वे च साक्षात्परम्परया वा मन्थनोत्पन्नत्वयोगसद्-भावात्। क्वचिल्लोकप्रसिद्धेर्बलव[2]त्त्वाद्वेदप्रसिद्धा नामत्वनिर्णयः। यथा त्रिवृच्छब्दो लोके त्रैगुण्ये प्रसिद्धोऽपि वेदप्रसिद्ध्या स्तोत्रीयानवकं ब्रूते। चरूशब्दस्थाल्यां लोके प्रसिद्धोऽपि वेदप्रसिद्ध्यौ[3]दनवाची भवति। अश्ववालशब्दोऽप्यस्वकेशेषु प्रसिद्धः काशतृणवाची भवति। ऐक्षवीशब्दोऽपीक्षुदण्डे प्रसिद्धः काशमूलवाची भवति। केषाञ्चिच्छिष्टाप्रसिद्धार्थानां [4]शब्दानां म्लेच्छप्रसिद्ध्यार्थनिर्णयः। यथा पिकशब्दः कोकिलनाम[5], नेम[6]शब्दोऽर्द्ध-नाम, शत[7]शब्दः शतच्छिद्र[8]पात्रनाम, तामरसशब्दश्च कमलनाम। न चैषा निगमादिवशेनार्थकल्पनं सम्भवति। क्लृप्तार्थसम्भवे कल्पनायोगा-न्म्लेच्छप्रशिद्धेरपि शब्दाविप्लववदर्थाविप्लवनिश्चयेन प्रामाण्यनिश्चयात्। उक्तञ्च—

पिकादिशब्दवाच्यं वा म्लेच्छैर्यदवधारितम्।
अविरोधात् प्रमाणेन तद्विद्याद्वेद[9]चोदितम्॥

त० वा० १.३.१० इति।

क्लृप्तार्थप्रसिद्धिविरोधे त सा वाध्यते। [10]यथा—पीलुशब्दस्य वृक्षवाचित्व-मार्यप्रशिद्धेर्द तु म्लेच्छप्रसिद्ध्या गजवाचित्वमिति संक्षेपः।

## स्मृतिप्रामाण्यनिरूपणम्

एवं कृत्स्नस्य वेदस्य प्रामाण्यं निरूपितम्। अधुना मन्वादिस्मृतीनां

---

१. 'यौगिकत्व' इति मूलमातृकायां।
२. °'वत्या' इति ग मातृकापाठः।
३. 'प्रसिद्धोनन' इति घ मातृकापाठः। '°यौदनवाची' इत्यारभ्य 'प्रसिद्धा' पर्यन्तं ङ मातृकायां नास्ति।
४. 'शब्दानाम्' इति पदं घ मातृकायां नास्ति। छ मातृकायाञ्च 'शब्दार्थानां शब्दा-नाम्' इति पाठः।
५. 'वाची' इति घ ङ मातृकयोः पाठः।
६. 'शब्दोऽर्द्धवाची' इति ङ मातृकायां नास्ति। ७. 'सात' च मातृकापाठः।
८. 'छिद्रन्न पात्र' च मातृकापाठः।
९. 'नोदितम्' इति चौखम्बाप्रकाशितग्रन्थधृतपाठः।
१०. 'तथा' इति च मातृकापाठः।

प्रामाण्यमुच्यते । वेदमूल[1]कत्वेनासां प्रामाण्यम्, नापौरुषेयत्वेन, दृढकर्त्तृ-स्मरणात्। न प्रत्यक्षादिमूलत्वेन, तेषां धर्माधर्मयोरप्रामाण्यात्। न च भ्रान्तादि[2]मूलत्वेन, किञ्चित्प्रत्यक्षवेदविहि[3]तार्थनिवन्धनेनावधारिताप्त-त्वानां 'वेद एव धर्मे प्रमाणम्। नान्यदि'त्यभिदधानानां मन्वादीनां भ्रान्त्यादिकल्पनानुपपत्तेः।

यः कश्चित्कस्यचिद्धर्मो मनुना परिकीर्त्तितः।

स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ॥ मनु० २।७

इत्यादिना वेदमूलत्वाभिधानाच्च। नापि स्मृतिपरम्परामूलत्वेन, अन्ध-परम्पराप्रसङ्गात्। अतएव न नित्यानुमेयवेदमूलत्वम्, नाप्यु[4]त्सन्नवेद-मूलत्वम्, अन्यन्तावहिताध्येतृकानां[5] वेदानामुत्सादासम्भवात्[6]। शाक्यादि-वाक्येष्वप्यनयोः पक्षयोः सुवचत्वात्। अतः प्रत्यक्षवेदमूलत्वेनैव स्मृतीनां प्रामाण्यम्। न चैनं स्मृतिप्रणयनवैवर्थ्यम्, नानाशाखागतप्रकरणान्त[7]र्गतार्थ-वादमन्त्रकल्प्य[8]श्रुत्यार्थोपसंहारकत्वेन र्थवत्त्वात्। न हि 'द्वयोः प्रणयन्ती'-त्यस्याह्वनोयादध्वर्युप्रतिस्थाप्रराविति शाखान्त[9]रीयवाक्यैकाक्यता सर्वैरव-गन्तुं शक्या। दर्शपूर्णमासप्रकरणाधीतानां वा रजस्वलाव्रतानां तत्रासम्वन्धेन रजस्वलाधर्मेषूत्कर्षः 'तद् यथैवादो मनुष्यराज आगते-ऽन्वस्मिन् वार्हत्युक्षाणं वेहतं वाक्ष[10]दन्त' इत्यर्थवादमूला 'महोक्षं व महान्तं

१. मूलत्वेन' इति च मातृकापाठः।

२. 'मूलकत्वेनाप्रामाण्यम्' इति ग छ मातृकापाठः।

३. °'तार्था' इति मूलमातृकापाठः।

४. °'प्युच्छिन्न' इति मातृकापाठः।

५. 'ध्येतृणाम्। इति मातृकापाठः।

६. 'अतएव नित्यानुमेया इत्यारभ्य °वहिताध्येतृ° पर्यन्तं पुनरत्र च मातृकापठति। अतःद्विरुक्तिः।

७. '°णान्तरगत°' इतिमूलमातृकाठः।

८. 'कल्प' इयि मूलमातृकापाठः।

९. 'शाखान्तरवाक्यै' इति मूलमातृकापाठः।

१०. 'वा दीक्षन्तम्' इति ग मातृकापाठः।

वा श्रोतियायोपकल्पयेत्' स्मृ० या० १।१०९ इति स्मृतिः। 'केवलाघो भवति केवलादी'ति[1] मन्त्रमूला[2] च 'न पचेदन्नमात्मने' इति स्मृतिः। न ह्यर्थवादमन्त्राभ्यां श्रुतिकल्पनं प्रागेवेदानींतनानां सम्भवति। तेनार्थवत्स्मृतिप्रणयनम्। एव कल्पसूत्रेतिहासपुराणादीनां प्रामाण्यमूह्यम्। वेदविरुद्धानां चैषामप्रामाण्यम्। यथा 'औदुम्वरीं स्पृष्ट्वोद्गायेद्' इति श्रुतिविरुद्धा 'सर्वा[3] सा वेष्टयितव्या' इति [4]स्मृतिप्रमाणम्। श्रुतिविरोधेन मूलश्रुत्यनुमानासम्भवादितिभाष्ये।

वार्त्तिके तु विरुद्धानामननुष्ठानलक्षणमप्रामाण्यम्। न तु सर्वथा, सर्वशाखागतमूलश्रुत्यभावानिश्चयातित्युक्तम्। कासाञ्चित्तु विरुद्धानामपि प्रामाण्यम्। यथा क्रत्वङ्गाचमनादिस्मृतीनाम्। प्रयोगमध्ये क्षुतादिनिमित्ताचमनादिकरणे हि वेदं कृत्वा वेदिं कुर्याद्' इत्यादिश्रुतिविहितक्रम[5]-बाधः। कदाचित् प्रसज्यते पूर्वाह्ण[6]दिकावबाधश्च श्रौतपदार्थपरिमाण-वाधश्च। तत्रैवं विरोधे सति क्रयादिवाधेनाचमनाद्यनुष्ठेयम्। पदार्थानां क्रमाद्यपेक्षया प्राधान्यात्। प्रधानानुरोधे च गुणवाधस्योचितत्वात्। वस्तुतस्तु विरोध एव नास्ति, सर्वपदार्थ सङ्ग्रहोत्तरकालं[7] प्रयोगनिधानात्तदनु[8]-सारिक्रमाद्यनुष्ठापनादिति प्रपञ्चितं प्राक्।

## वेदविरुद्धस्मृतीनामप्रामण्यनिरूपणम्।

वौद्धादिस्मृतीनां तु वेदविरुद्धानां तदविरुद्धानां चाप्रामाण्यम्। वेदविद्वेषीकरणपरिग्रहाभ्यां वेदमूलत्वासम्भवात्। अतीन्द्रियार्थगोचरत्वेन

---

१. 'केवलादीति श्रुतिविषम्' मूलमातृका पाठः।
२. 'मूला' पदं घ मूलमातृकापाठः।
३. 'सा सर्वा' इति मूलमातृकापाठः।
४. 'स्मृति' पदं ग मातृकायां नास्ति।
५. 'क्रमाद्' इति मूलमातृकापाठः।
६. 'हृणा' इति च मातृकायां नास्ति।
७. '°कालमृ' इति मूलमातृकायां नास्ति।
८. 'विधिना' इति च छ मातृकापाठः

च[1] प्रत्यक्षादिमूलत्वासम्भवात्। परिशेषाद् भ्रान्त्यादिमूलत्वात्। दृढकर्तृस्मरणाच्च नापौरुषेयत्वमिति संक्षेपः।

## सदाचारप्रामाण्यनिरूपणम्

सदाचाराणां श्रुतिस्मृतिमूलत्वेन प्रामाण्यम्। तदुक्तम्—

**'आचारात्तु स्मृतिं ज्ञात्वा श्रु[2]तेश्च परिकल्पनम्'।**

त० वा० १ ३.६ इति।

न च स्मृतिवत् साक्षाच्छ्रुतिमूलत्वमास्तामिति वाच्यम्। मन्वादिवदाचरितॄणां शिष्टानामनेकशाखाविप्रकीर्णश्रुत्युपसंहारासामार्थ्यात्। स्मृत्यालोचनेनाचारप्रवृत्तेरभ्युपगमात्। यद्वा आचरितॄणामेवाचारमूलं स्मरणं[3]कल्प्यते, स्मृतिं विनानुष्ठाना[4]सम्भवात्। तन्मूलं च श्रुतिरिति[5] द्वयन्तरितं प्रामाण्यम्। अतएव स्मृतिविरोधे सदाचारस्य बाधः। यथा—मातुलकन्यापरिणयनादिषु।

**'मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च।**
**समानप्रवरांश्चैव त्यक्त्वा चान्द्रायणं चरेत्'॥**

शातातप स्मृतिः

इति स्मृतिविरुद्धो मातुलदुहितृद्वाहाचारो बाध्यते।

राणके तु तृतीयेऽध्याये 'तृप्तां जहुर्मातुलस्येव योषा' [6]इत्यादिवैदिकलिङ्ग[7]मूलत्वादयमाचारः प्रमाणमेवेत्युक्तम्। अन्येषां तु स्मृति-

---

१. 'च' पदं ङ मातृकायां नास्ति।
२. श्रुतिर्विज्ञायते ततः इत्यानन्दाश्रममुद्रितग्रन्थधृतपाठः।
३. 'कल्पते' इति मूलमातृकापाठः।
४. °'अननुष्ठा°' ग मातृकापाठः। 'अनुष्ठान सम्भवात्' इति घ मातृकापाठः।
५. °'रिति' स्थाने 'हि' ग मातृकायाम्।
६. आदिस्थाने 'प्रभृति' शब्दः ङ मातृकायाम्।
७. 'लिङ्ग' पदं ङ मातृकायां नास्ति।

विरुद्धानामप्रामण्यमेव । श्रुतिविरुद्धानामप्येयम् । यथा वधूवस्त्रपरिधानाद्याचाराणां 'आश्लीला[1] तनूर्भवति' इत्यादि श्रुतिविरुद्धानाम् ।

वार्त्तिकमते त्वन[2]नुष्ठानलक्षणमप्रामाण्यं स्मृतिवदेषां द्रष्टव्यम् । उभयाविरुद्धानां धर्मबुद्धया शिष्टैरनुष्ठीयमानानां धर्मे प्रामाण्यम् यथा वसन्तोत्सवादीनाम् । अतश्च व्यतिक्रमसाहसाद्याचाराणामप्रामाण्येऽपि न क्षतिः । तेषां लोभादिमूलत्वात् । शिष्टाचारवत् शिष्टात्मतुष्टेरपि सन्दिग्धनिर्णये प्रामाण्यमुक्तं वार्त्तिके । एतेन वैदिकानां तु धर्मधीसंस्कृतात्मनामात्मतुष्टेः प्रामणत्वं प्रसिद्धं धर्मशुद्धये इति । सामर्थ्यस्यापि सन्दिग्धार्थ[3]निर्णये प्रामाण्यम् । यथा 'स्रुवेणावद्यति', 'स्वाधितिनावद्यति', 'हस्तेनावद्यति' इति [4]विधिविहितस्रुवादीनां द्रवाद्यवदादनेषु सामर्थ्याद्विनियोगः । तत्सिद्धये विधिषु द्रवादिपदकल्पनम् द्रवं मासं कठिनमिति, शाब्दं शाब्देनान्वेतीति न्यायात्[5] । तस्य चोहादिवदवेद[6]त्वेऽपि [7]वेदैकदेशत्वादस्त्येव प्रामाण्यमिति दिक् ।

[8]अनन्तदेवपौत्रस्यापदेवसुतस्य च ।
अगान्मानपरिच्छेद जीवदेवस्य निर्मितौ ॥१॥

इति श्रीमदापदेवात्मजजीवदेवकृतौ भाट्टभास्करे धर्मप्रमाणपरिच्छेदः ।

अथ वेदादिप्रमेयं धर्मस्वरूपं निरूप्यते ।

तत्र यागहोमदानस्वरूपम् ।

---

१. 'मश्रीरातनूः इति ग च मातृकापाठः । 'मशरीरा' इति ङ छ मातृकापाठः । 'अश्लोला' इति घ मातृकापाठः ।
२. '°त्वनुष्ठान°' इति ङ मातृकापाठः ।
३. 'अर्थ' पदं मूलमातृकायां नास्ति ।
४. 'विधेयपदं घ ङ मातृकयोर्नास्ति ।
५. 'नियमात्' इति घ ङ मातृकापाठः ।
६. 'वेद' पदं ङ मातृकायां नास्ति । घ मातृकायां 'पद' इति दृश्यते ।
७. वैदिकदेश०' ग मातृकापाठः ।
८. श्लोकोऽयं मूलमातृकादौ न दृश्यते । श्लोकानन्तरञ्च घ ङ मातृकयोः 'इति मीमांसाप्रकरणम्' इत्यप्यवलोक्यते ।

तत्र यागहोमदानस्नानध्यानजपाद्यनेकरूपे धर्मे [1]प्रसिद्धमपि याग-होमदानस्वरूपं विविच्यते। देवतोद्देशेन द्रव्यत्यागो यागः। देवतानाम—विधिगतशब्देन द्रव्यत्यागं प्रत्युद्दिश्यमानोच्यते। यथा 'आग्नेयोऽष्टाकपाल इत्यत्राग्निशब्देनोद्दिश्याष्टाकपालं त्यजेदित्यर्थे सति वह्न्यादिशब्दोद्दिष्टा न देवता भवति। तस्यां च त्रीणि प्रमाणानि। तद्धितचतुर्थीमन्त्ररूपाणि। तत्राद्यमुक्तमेव। 'सास्यदेवता' पा० सू० ४.२.२४ इति देवतायामेव तद्धितविधानात्। 'अग्नोषोमाभ्यामाज्मभागौ यजतीति चतुर्थ्यादितोच्यते। त्यज्यमानद्रव्योद्देश्यत्वे सति प्रतिग्रहीतृत्वरूपसम्प्रदानत्ववाचिनी हि चतुर्थी। देवतायाश्च न प्रतिग्रहीतृत्वम्, विग्रहाभावात्। तत्प्रतिपादका-नामर्थवादानां स्वार्थे प्रामाण्याभावात्। तेन चतुर्थ्या सम्प्रदानत्वैकदेशभूतं देवतात्वं लक्षणयोच्यते। अतएव तद्धिताद्दौर्बल्यमस्याः मन्त्रेण तु न देवतात्वमुच्यते, किन्तु तदधिष्ठानमग्न्यादि। वाच[2]निकमन्त्रविनियोगा-पयत्त्या तु देवतात्वकल्पनमित्युपपादितं प्राक्। अतश्चतुर्थीतोऽप्यस्य दौर्बल्यम्। यथाहुः—

तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा[3] पुनः।
देवताया[4] विधिस्तत्र दुर्बलं तु परं परम्॥

त० वा० २.२.२३ इति।

एवं देवतोद्देशेन द्रव्यस्य च पुरोडाशादेस्त्यागो मानसः सङ्कल्पः याग इत्युच्यते। स एवाग्न्याद्यधिकरणकप्रक्षेपाधिको होमः। स्वस्वत्वत्यागपूर्वकं परस्वत्वापादानं दानम्।

## कर्मभेदकप्रमाणनिरूपणम्।

एषां भेदे प्रमाणानि षट्। शब्दान्तराभ्याससंख्यासंज्ञागुणप्रकरणा-

---

१. 'प्रसिद्धे' इति मूलमातृकापाठः।
२. 'वाचक' इति च मातृकापाठः।
३. 'चेष्यते' इत्यानन्दाश्रममुद्रितग्रन्थधृतपाठः।
४. 'देवतासङ्गतिः। इत्यानन्दाश्रममुद्रितग्रन्थधृतपाठः।

न्तररूपाणि । तत्रा[1]पर्यायधातुनिष्पनान्येकप्रकरणगतान्याख्यातान्युदा[2]-हरणम् । शब्दान्तरं यथा—'सोमेन यजेत', 'हितममात्रेयाय ददाति', दाक्षिणानि जुहोती'त्येकज्योतिष्टोमप्रकरणपठितानि त्रीण्याख्यातपदानि धात्वर्थभेदभिन्नास्तिस्रो भावनाः प्रतिपादयन्ति । एकधात्वर्थानुरक्तायां धात्वर्थान्तरानुरागासम्भवाद् । भावनाभेदाच्चापूर्वभेदः ।

अनन्यपरः[3] विधिः । पुनःश्रवणमभ्यासः । यथा दर्शपूर्णमासयोः 'समिधो यजती'त्यादिपञ्चकृत्वो यजतिरभ्यस्तस्तावतिधात्वर्थभावनापूर्वाणि बोधयन्ति । अन्यथा वैयवर्थ्यापत्तेः । समिदादिदेवतानां क्रमपठितमन्त्रैरेव प्राप्तेः समिदादिपदानां नामधेयत्वात्तस्य चाविधेयत्वात् ।

साङ्ग्रहणीष्टिप्रकरणे श्रुतम् 'आननमस्यामनमस्य देवाः । इति तिस्र 'आहुतीर्जुहोति' इति तत्र 'त्रित्वश्रुतेर्होमत्रय' विधीयत इति भाष्यकारः संख्योदाहरणमाह । वार्त्तिककारस्तु 'सप्तदश प्राजापत्यान् पशूनालभेत' इत्युदाजहार । अत्र हि द्रव्यागतसंख्यया[4] यद्यपि[5] न कर्मभेदः स्पष्टः प्रतीयते, तथापि द्रव्यदेवतासम्बन्धबहुत्वाद्भवति यागभेदः । प्राजापत्या-नित्यत्र हि प्रथमं प्रजापतिदेवता पशूनान्वितानां पशूनां पश्चाद्बहुत्वान्वयः । प्रजापतिर्देवता यस्यासौ प्राजापत्यः । प्राजापत्यश्च प्राजापत्यश्च प्राजा-पत्यश्चेति प्राजापत्याः इति । तेन प्रतिपशुभिन्नैर्देवतासम्बधैस्तावन्तो यागाः कल्प्यन्ते । यदि तु बहुत्वान्वयपूर्वकं पशूनामेक एव देवतासम्बन्ध कल्प्येत । पशुश्च पशुश्च पशुश्च पशवस्ते प्राजापत्या इति । तथा सत्येको यागः

---

१. 'पर्याय' ग च मातृकापाठः ।

२. 'उदाहरणम्' इति मूलमातृकायां नास्ति । 'शब्दान्तराणि । इति बहुवचनान्त-त्वमपि दृश्यते ।

३. 'अनन्यार्थविधि' इति च मातृकापाठः ।

४. '`संख्याया' इति मूलमातृकापाठः ।

५. 'यद्यपि' पदं च मातृकायां नास्ति ।

सर्वपशुद्रव्यको भवेत्। सा चाग्नीषोमीयविकृतित्वादेक[1]पशुनिष्पन्नत्व-मवदानगणस्य वाध्येत। एकादशाधिकानाञ्च वैयर्थ्यं स्यात्। यदि तूपदेशः, सप्तदशपशुद्रव्यकैकादशावदानगणे नानुष्ठेयः। तत्रेतरपशूनामनार्थक्यं स्यात्। यदि प्रतिपशुहृददयाद्यैकैकमवदानं गृह्येत। तदैक[2]यागविधानार्थ इति निर्णीयेत, तदा तद्वशेन चोदको वाध्येत। स तु पशुगतदेवतान्वयवहुत्वा-न्वयपौर्वापर्यसन्देहात्सन्दिग्धः। एवञ्च वाक्यशेषरूपेण चोदकेन वहुयाग-विधायितया निर्णीयते। तथा च पशूनां देवतान्वयपूर्वक एव वहुत्वान्वयः। तदुक्तम्—

> प्राजापत्येषु यागानामेकानेकत्वसंशये।
> कृतः प्रकृतिवच्छब्दःत्वाक्यशेषेण निर्णयः।।
>
> त० वा० ३.१.१ इति।

ज्योतिष्टोमानन्तरं 'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्व-ज्योतिः। एतेन सहस्तदक्षिणेन यजेत' इति श्रुतिवाक्ये ज्योतिरादिसंज्ञाभि-र्ज्योतिष्टोमाद्भिन्नानि कर्माणि विधीयन्ते, न तु 'वसन्ते वसन्ते ज्योतिषा यजेत' इतिवन्नामैकदेशेन ज्योतिःशब्देन ज्योतिष्टोमग्रहणम्। अथशब्देन प्रकरणविच्छेदात्। वसन्तवाक्यं तु प्रकरणपाठाज्ज्योतिष्टोमविषयम्। एवञ्च ज्योतिरादिसंज्ञाभेदात्तदभिधेयान् भिन्नानेव यागान् सहस्रदक्षिणा-विशिष्टान्विधिर्विधत्त इति संज्ञया कर्मभेदः।

चातुर्मास्येषु वैश्वदेवे पर्वणि 'वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्। इति श्रुतम्। तत्रयेन वचसा विश्वदेवदेवतामिक्षाद्रव्यविशिष्टो यागो विधीयते। अपरेण तु वाजिदेवता वाजिनद्रव्यविशिष्टं यागान्तरम्। न

---

१. 'पशुनिष्पन्नत्व०' इत्यारभ्य 'द्रव्यकैक' पर्यन्तं च मातृकायां नास्ति। छ मातृकायाञ्च 'निष्पन्नैकादशावदानगणेनानुठेयः इति पाठः।

२. 'अत्र' तदैकपशुनिष्पन्नत्वमवदानगणस्य 'बाध्येत' एकादशाधिकानां च वैयर्थ्यं स्यात्। यदि तूपदेशः सप्तदशपशुद्रव्यकैकयागविधानार्थऽतिनिर्णीयेत इति वाक्यम्' ग च छ मातृकास्वधिकं दृश्यते।

चाद्यवाक्यविहितयागानुवादेन वाजिनद्रव्यं विधीयताम्। वाजिपदं तु वाजसंज्ञकान्नरूपामिक्षायोगाद् वाजं विद्यते। येषामिति युत्पत्त्या विश्वेदेवानुवादकमस्त्विति वाच्यम्। उत्पत्तिशिष्टामिक्षाद्रव्यनिराकाङ्क्षस्य पूर्वयागस्योत्पन्नशिष्टेन वाजिना[1] नासम्वन्धात्। वाजिपदस्य यन्त्रादिगतप्रसिद्धया तेवताविशेषे रूढस्य योगेन विश्वेदेवपरत्वासम्भवात् तेनोत्पत्तिशिष्टगुणावरुद्धे कर्मण्यनिविशमानो गुणोऽत्र कर्मभेदकः वाक्यभेदादादयोऽपि गुणः कर्मभेदकः। यथा—सान्नाय्यं प्रकृत्य 'यस्योभयं हविरार्त्तिमार्च्छेद्, ऐन्द्रं पञ्चशरावमोदनं निर्वपेत' इति श्रुतम् अत्र सान्नाय्याभिधदधिपयोरूपहविर्नाशे निमित्ते पूर्वं यागे[2] नष्टहविष्ये पञ्चशरावपरिमितोदनद्रव्यं विधीयते। तस्मिन् वैकल्पिकेन्द्रमहेन्द्रदेवताद्वयवतीन्द्रनियमस्य द्रव्यस्य च विधौ वाक्यभेदापत्तेः। तेनेन्द्रदैवत्यं पञ्चशरावद्रव्यकं यागान्तरं हविर्नाशेनिमित्ते पूर्वयागाङ्गत्वेन विधीयते। एवं यत्र[3] विधेयानेकगुणश्रवणम्, यथा—आग्नेयोऽष्टाकपाल' इत्यादौ। यत्र वाक्यभेदापादकगुणात् कर्मभेदो द्रष्टव्यः।

कुण्डपायिनामयने सत्रे 'मासमग्निहोत्रं जुहोती'ति श्रुतम्। तत्र प्रकरणान्तरान्नित्याग्निहोत्रतः कर्मान्तरं मासकालविशिष्टं विधीयते। प्रकरणान्तरं नाम—पूर्वकर्माविपरिवृत्तिस्तत्सहकारी चानु[4]पादेयव्याप्यत्वोपादेयपञ्चकाव्यतरसम्वन्धः[5]। नाम्नश्चाख्यात—पारतन्त्र्यम्। अस्ति च प्रकृते दूरस्थं नित्याग्निहोत्रानुपस्थितिः। अग्निहोत्रमिति नाम्नस्त्वाख्यातसमानाधिकरणत्वेन तद्विहितार्थ[6]परामर्शित्वात्स्वातन्त्र्येण कर्मानुवादकत्वासम्भवात्। यत्र तु नाम स्वतन्त्रम्, दूरस्थकर्यानुवादक भवति। यथा—

---

१. 'वाजिनेन' इति मूलमातृकापाठः।
२. 'योगे' इति मूल छ मातृकापाठः।
३. 'यत्र' इति च मातृकायां नास्ति।
४. 'चानुकृत्य' इति मूलमातृकापाठः।
५. 'सम्बन्धान्नाम्नः इति च मातृकापाठः।
६. 'अर्थ' पदं च मातृकायां नास्ति।

दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते'त्यत्र दर्शपूर्णमासपदेन दूरस्थकर्मानुवादेन तदुत्तरकालता सोमयागे विधीयते। अत्र तु नाम्नः पारतन्त्र्यादाख्यातेनाप्रकृत्तप्रवर्त्तनस्वभावेनापूर्वं कर्म विधीयते। तस्यैवेदं नाम गौण्या वृत्त्या भवति। अनेकशक्तिकल्पनस्यान्याय्यत्वात्। नित्याग्निहोत्रसादृश्यं चास्य गौणवृत्तिनिमित्तम्, न मानान्तरावगतमित्यनेनैव पदेन वत्यर्थ[1]-लक्षणया नित्याग्निहोत्रधर्मातिदेशोऽस्मिन् कर्मान्तरे क्रियतेऽग्निहोत्रवज्जुहोतीति। सोऽयं नामातिदेशः पूर्वमुक्तः। भवति च मानान्तरानवगतसादृश्यानां सादृश्यं विधायापि गौणः प्रयोगः, अमी पिष्टपिण्डाः सिंहाः क्रियन्तामित्यादिः। तथायमपि भविष्यति। न चात्रतोमानुवादेन विधेयो गुणो दृश्यते। येन गुणसंक्रान्तशक्तिना विधिना दूरस्थमपि कर्मानूद्येत। 'यदाहवनीये जुहोती' तिवत्। मासकालस्यानुपादेयस्योपादानरूपविधिशक्त्यगोचरत्वात्सिद्धे हि काले कर्मोपादीयते, न तु कालः।

एवं देशनिमित्तफलसंस्कार्याणामनुपादेयानां सम्बन्धे सति प्रकरणान्तरेण भेदो द्रष्टव्यः। तद् यथा 'सरस्वत्याः दक्षिणे तीरेऽऽग्नेयोऽष्टाकपाल' इत्यत्र दार्शपौर्णमासिकाग्नेयात्कर्मान्तरं देशसम्बन्धसहकृतेन प्रकरणान्तरेण 'सत्रायागूर्यं विश्वजिता यजेते'त्यत्र सत्रस्या[2]गोरणे सङ्कल्पे कृते तदशक्तौ निमित्ते विश्वजित्कर्मान्तरमेकाहकाण्डपठिताद्विश्वजितो विधीयते। आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः। इत्यत्र रुक्पदाभिधेयकान्तिफलसम्बन्धेनकर्मान्तरमाग्नेयो। विधीयते।' त्रैधातवीया दीक्षणीया भवती'त्यत्र दीक्षणीया कार्या। दोक्षासंस्कारोद्देशेन त्रैधातव्याख्यं कर्मान्तरं स्व[3]तन्त्रफलार्थं त्रैधातव्यातो विधीयते। एवमन्यत्रानुपादेयसम्बन्धसहकृतो सन्निधिप्रकरणान्तरं कर्मभेदकमूह्यम्। सन्निधौत्वनुपादेयसम्बन्धे सत्यपि[4] न

---

१. 'वत्यर्थः' इति मूलमातृकापाठः।
२. '०गूरणे' इति च मातृकायां।
३. 'स्वतन्त्रा फलार्थी' इति च मातृकापाठः।
४. 'सत्त्वेऽपि' इति च मातृकापाठः।

कर्मभेदः । यथा 'सायं जुहोती'त्यादौ सन्निहिताग्निहोत्रस्यैव कालसम्बन्ध-विधिरिति दिक् ।

एवं शब्दान्तरादिप्रमाणसहकृतेन विधिना भिन्नत्वेन बोधितानि यागादीनि स्वरूपेणविविच्यन्ते । तत्राग्निहोत्रम्, दर्शपूर्णमासौ, चातुर्मास्यानि, पशुः, सोमस्तद्विकृतयश्चेति ।

## अग्निहोत्रस्वरूपनिरूपणम्

वैदिकं क्रममाश्रित्याग्निहोत्रं विविच्यते । 'अग्निहोत्रं जुहोती' त्युत्पत्तिविधिः । अग्निहोत्रेण होमेनेष्टं भावयेदिति वाक्यार्थः इष्टविशेषा-काङ्क्षायाम् 'अग्निहोत्रं जुहुयात्स्वर्गकामः', 'यावज्जीवमग्निहोत्रं जुहुयात्' इत्यधिकारविधिभ्यां [1]स्वर्गसाधनत्वेन जीवने निमित्ते पापक्षयसाधनत्वेन च स एव होमो विधीयते । तेन काम्यनैमित्तिकौ प्रयोगौ भिन्नौ प्रतियोगं चापूर्वभेदः पुनः 'सायं जुहोतिप्रातर्जुहोतीत्याभ्यां[2] प्रयोगविधिभ्यां द्वयोः कालयोः[3] प्रयोगद्वयाभ्यासौ विधीयेते । प्रत्यभ्यासं चापूर्वभेदः । पुनश्चतस्रो गार्हपत्ये, चतस्रोऽन्वाहार्यपचने, द्वे आहवनीये, 'य एवं विद्वान् विराट् सम्पन्नमग्निहोत्रं जुहो'ति वाक्यादाहवनीयाधारभेदेन दशाभ्यासाः । द्वे आहवनीये, द्वे गार्हपत्ये, द्वे अन्वाहार्यपचने इति पक्षे तु षडभ्यासाः । प्रत्यभ्यासं चापूर्वभेदः । 'दध्ना जुहोती'त्यादिदशभिर्वाक्यैर्होमानुवादेन द्रव्याणि विधीयन्ते ।

**पयोदधि यवागूश्च सर्पिरोदनतण्डुलाः ।**
**सोमो मांसं तथा तैलमापश्चोक्तानि वै दश ।।**

तेषां चोत्पन्नशिष्टत्वाद्विकल्पः । 'दहनेन्द्रियकामस्य जुहुयादि'त्यत्र होमाश्रितं

---

१. 'स्वर्गकाम' इति मूलमातृकापाठः ।

२. 'तीभ्याम्' इति मूलमातृकापाठः ।

३. 'कालं यः' इति च मातृकापाठः ।

दधि फलोद्देशेन विधीयते, न तु होमान्तरमिति प्रागुपपादितम्। भावनापूर्वौ तु भिद्येते। 'अग्निर्ज्योतिरग्नि स्वाहेति', 'सूर्यो ज्योतिर्ज्योतिसूर्य स्वाहेति-मन्त्राभ्यां सायंप्रातःकालहोमयोर्विनियुक्ताभ्यां प्रकाशितावग्निसूर्याविाहवनीयाधारयोर्होमाभ्यासयोर्देवते भवतः। 'यदग्नये च प्रजापतये च सायं जुहोति', 'यत्सूर्याय च प्रजापतये च प्रातरि'ति वचनाभ्यां मन्त्रप्राप्तमग्निसूर्यसमुच्चितो प्रजापतिर्देवता सायंप्रातःकालयोर्विधीयते। अतश्च न मन्त्रवलाज्ज्योतिष्ट्वगुणविशिष्टयोरग्निसूर्ययोर्देवतात्वम्। नापि चतुर्थ्या वोधितप्रजापतिदेवतया तयोर्वाधः। 'अग्नेः पूर्वाहुतिः प्रजापतेरुत्तराहुतिरि'-त्याहुतिक्रमवोधवचनाभ्यां चैवम[1]वगम्यते। अतएव 'अग्निर्ज्योतिर्ज्योतिः सूर्य स्वाहेति सायंजुहोति', 'सूर्यो ज्योतिर्ज्योतिरग्निस्वाहेति प्रातरि'ति वाचनिकयोर्मिश्रलिङ्गकमन्त्रयोर्न देवताद्वयकल्पकत्वम्, किन्त्वेकदेवता-प्रकाशनेनै[2]वाङ्गत्वम् [3]तेनानयोः शुद्धलिङ्गकमन्त्रयोश्चैकार्थत्वाद्विकल्पः। होमार्थं चोद्धृतेग्नौ होमात्पूर्वं नष्टे प्रायश्चित्तं श्रूयते। 'अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं [4]निर्वपेद्, यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वाहेदि'ति। तत्र यदा दर्शार्थमुद्धृतेऽग्नावग्निहोत्रमनुष्ठीयते, तन्नाशे नेदं प्रायश्चित्तं कार्यम् तस्य होमार्थोद्[5]धृतनष्टाग्निसम्पादनद्वारा होमाङ्गत्वात्। दर्शार्थोद्धृतस्य च होमार्थो[6]द्धरणाभावात्। अतएव होमकालाभ वेऽपि होमाङ्गोद्धरणं मन्त्राभावेऽपि न तस्य वैगुण्यम्। प्रसङ्गेन च तु सोऽग्निर्होमस्योपकरोति यथा [7]निशीष्टौ०। 'अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्, यो रक्षोभ्यो विभीयादि'ति विहितायां रक्षोभयादा-

१. 'चैव गम्यते' इति मूलमातृकापाठः। 'चैवमयमव' इति ग मातृकापाठः।

२. 'एव' इति च मातृकायां नास्ति।

३. 'ते' इति च मातृकायां नास्ति।

४. 'निर्वपति' इति च मातृकापाठः।

५ 'द्धृत' इति मूलमातृकायां त्रुटिः।

६. 'द्ध' इति मूलमातृकायां त्रुटिः।

७, 'विशिष्टावग्नये' इति च मातृकापाठः।

पतितायां स एवाग्निः प्रसङ्गेनोपकरोती'ति, तद्वत्। [1]तस्माद्धोमार्थमुद्धृतेऽग्नौ नष्टे ज्योतिष्मतीष्टिः कार्या।

एवं यजमाने देशान्तरे मृते तत्संस्कारपर्यन्तं पुत्रादिना क्रियमाणमग्निहोत्रं मृताग्निहोत्रम्। तत्र श्रूयते—'अधस्तात् समिधं धारयन्नुद्रवेत्, उपरि हि देवेभ्यो धारयती'ति। जीवतो यजमानस्याग्निहोत्रं दैवम्। तत्र समिधमग्निहोत्रहवण्यामुपरि[2] धृत्वा आहवनीयं प्रति गच्छेत्। मृताग्निहोत्रे त्वधस्ताद्धारयन् गच्छेदित्यर्थः। तता 'प्राचीनावीती दोहयेत्' 'यज्ञोपवीती हि देवेभ्यो दोहयती'ति। अत्र प्राचीनावीत[3]होमार्थदोहनाङ्गत्वेन विधीयते। यज्ञोपवीतस्य तु सामान्वचनेन [4]सर्वकर्मार्थितया प्राप्तस्यानुवादः।

॥ [5]इत्यग्निहोत्रवाक्यानि व्याख्यातानि ॥

## ॥ अथ दर्शपूर्णमासौ व्याख्यायेते ॥

तत्राग्नेयोपांशुयाजोऽग्नीषोमीय इति पूर्णमाससंज्ञास्त्रयो यागाः। आग्नेय [6]ऐन्द्रदधियागः पयोयागश्चेति दर्शसंज्ञाः। तेषामुत्पत्तिविधयः—'यदाग्नेयोऽष्टाकपालोऽवावामास्यायां च पौर्णमास्यां च च्युतो भवती'त्युभयाग्नेयविधिः। अत्रैकस्याग्नेय[7]यागस्याभ्यासेन कालद्वयान्वय इति मिश्राः।

एकत्रानिविशमानात् कालद्वयरूपात् गुणात् यागभेद इति राणके' अत्राग्निदेवताष्टाकपालपुरोडाशरूपदेवताद्रव्यसम्वन्धकल्पितो[8] याग सकल-

---

१. 'तस्मात्' इति पदं च मातृकायां नास्ति।
२. '०हवण्याः' इति च मातृकापाठः।
३. ०वीतेर्होमा० इति च मातृकापाठः।
४. 'सर्वकमर्थितया' इति च मातृकायां नास्ति।
५. 'इत्थम' इति ग च मातृकापाठः।
६. 'ऐन्द्र' पदं च मातृकायां नास्ति।
७. 'यागस्य भेद इति। अस्याभ्यासेन' इति चमातृकापाठः।
८. 'कल्पिते' इति मूलमातृकापाठः।

गुणविशिष्टो विधीयते। 'उपांशुयाजमन्तरा यजतीत्यनेनाग्नेयाग्नीषोमीययागयोरन्तराले उपांशुयाजो विधीयते' यद्यप्यकृतसोमयागस्य [1]पौर्णमासीप्रयोगेनाग्नीषोमीयोऽस्ति। 'आग्नेयो वै ब्राह्मणोदेवतया स सोमेनेष्ट्वाग्नीषोमीयो भवति, पदेवादः पौर्णमासं हविस्तत्तर्ह्यनुनिर्वपेत् तर्ह्युभयदेवतो भवती'त्यग्नीषोमीयपुरोडाशयागस्य सोमयागोत्तरमुत्कर्षविधानात् तथाप्याग्नेयोत्तरं तदुपलक्षितोऽन्तरालोऽस्त्येव। 'उपलक्षणापायेऽप्युपलक्ष्यानपाय' इति न्यायात्। शङ्खवेलायामागन्तव्यमिति नियमे कदाचिच्छङ्खंस्वध्वन्यभावेऽपि तदुपलक्षितागमनकालबोधवत् दर्शेऽप्यकृतसोमयागस्याग्नेयैन्द्राग्नपुरोडाशद्वयान्तरालसद्भावेऽपि 'तावब्रूतामग्नीषोमावाज्यस्यैव तावुपांशु पौर्णमास्यां यजन्' इति पुराकल्पार्थवादकल्पितेन विधिना [2]पौर्णमासीकालसम्बन्धविधानान्नोपांशुयाज इति मीमांसकाः।

याज्ञिकास्तु दर्शेऽप्युपांशुमागमिच्छन्ति। स्वीकृतं चैतन्मतं[3] क्वचिन्मीमांसकैस्तदवसरे वक्ष्यामः। इत्थमुत्पन्नस्यपांशुयाजस्य 'सर्वस्मै वा एतद् यज्ञाय गृह्यते, यद्ध्रुवायामाज्यम्। इत्यविहितद्रव्यकयागेष्वाज्य विधिना द्रव्यं विधीयते। विष्णु[4]प्रजापत्यग्नीषोमरूपा वैकल्पिवचो देवता मन्त्रेभ्यः कल्प्यन्ते। एतत्सन्निधौ विष्ण्वादिदेवत्यानां त्रयाणां याज्यानुवाक्यायुगलानां शाखाभेदेनाम्नातात्। अतश्च 'जामिवा एतत् यज्ञस्य क्रियते, यदन्वञ्चौ पुरोडाशौ इत्युपक्रम्य 'उपांशुयाजमन्तरा यजती'ति यागं विधाय 'विष्णुरुपांशु यष्टव्योऽजामित्वाय', 'प्रजापतिरुपांशु यष्टव्योऽजामित्वाय', '[5]अग्नीषोमावुपांशु यष्टव्योऽजामित्वाय' इति श्रुतानां वाक्यानामर्थवादत्वमेव, न तु देवताविशिष्टयागविधित्वम्। अन्तरालसंयुक्तवाक्येनैव यागप्राप्तेः। येषां देवतात्रयविशिष्टयागत्रयविधायक[6]त्वापत्तेर्वाक्ये भेदः

१. 'पूर्णमासी' इति मूलमातृकापाठः।
२. 'पूर्णमासी' इति मूलमातृकापाठः। 'पूर्णमास' इति ग मातृकायाम्।
३. 'च तन्मतम्' इति मातृकापाठः।
४. 'प्राजापत्य' इति च मातृकापाठः।
५. 'अग्नीषोमा०, इत्यारभ्य जामित्वायेति यावन् मूलमातृकायां नास्ति।
६. 'विधायकत्वे' इति च मातृकापाठः।

स्यात्। जामिदोषोपन्यासोपक्रमादजामित्वोपसंहाराच्चैकवाक्यत्वं प्रतीयते। तेनार्थवादत्वमेव युक्तम्। 'ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्' इति परकृत्यर्थवादकल्पितविधिना द्रव्यदेवतासम्बन्ध-कल्पितो यागो विधीयते। अयं[१] च कृतसोमयागस्यैव पौर्णमास्यामित्युक्तम्। अकृतसोमस्य तु तेन विनैव [२]पौर्णमास्या फलसिद्धिः, वचनात्। अस्याग्नेयात् पूर्वं[३] विधिपाठेऽपि मन्त्रपाठक्रमेण पश्चादनुष्ठानमित्युक्तं प्राक्। दर्शेऽप्या-ग्नेयः। स एव ऐन्द्रं दधि, ऐन्द्रं पय इत्याभ्यां दधि पयोयागौ विधीयेते। तयोश्चैकदेवत्यत्वात् सहप्रयोगेऽपि कर्मभेदोऽस्त्येव 'एतौ च कृतसोमयागन्य-स्यात्विन्द्राग्नी अमावस्यायामसन्न[४]मृत। इत्यैन्द्राग्नयागो विहितः। द्वाभ्यामेव च यागाभ्यां कालसिद्धिः[५] वचनात्। समुत्पन्नानां षण्णां[६] यागाना 'दर्श-पूर्णमासाभ्यां स्वर्गकामो यजेत' 'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ' इत्याभ्यां स्वर्ग[७]फलार्पता स्वर्गातिरिक्तपश्वादिफलार्थता च गोबलीवर्दन्यायेन विधीयते। सर्वकामवाक्येन स्वर्गसम्बन्धे सम्भवत्यपि पृथग्वाक्याम्नान-सामर्थ्यात्तिद्वाक्यावबुद्ध एव स्वर्गो भवति, नान्यथेति कल्प्यते। 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेते'त्यनेन [८]पौर्णमास्यामावस्याकालावच्छिन्ने जीवने निमित्ते पापक्षयार्थता तेषां बोध्यते। तेन नित्यकाम्यप्रयोग भेदात्तज्जन्या-पूर्वभेदः। काम्यप्रयोगभेदात्तज्जन्यापूर्वभेदः। काम्यप्रयोगे च नित्यस्य प्रसङ्गसिद्धिः। दर्शपूर्णमासाभ्यामिति द्वित्वं च समुदायद्वयाभिप्रायेण।

---

१. अत्र 'सम्प्रतिपन्नदेवताकानां द्रव्याणां सह प्रदानम्' इति च मातृकायां प्राप्त टिप्पणी।

२. 'पूर्ण०' इति मूलमातृकापाठः।

३. 'पूर्वविधि०' इति मूलमातृकापाठः।

४. ०मसम्भवत' इति मूलमातृकापाठः।

५. 'सिद्धिर्वच०' इति च मातृकापाठः।

६. 'षड्' इति च मातृकापाठः।

७. 'काम' पदं ग च छ मातृकासु नास्ति।

८. 'पूर्ण०' इति मूलमातृकापाठः।

उत्पत्तिवाक्यावगत '[1]पौर्णमासीकालयोगानां त्रयाणां समुदायो 'य एवं विद्वान् पौर्णमासीं यजते' इत्यत्र वाक्ये[2] पौर्णमासीपदेवानूद्यते। य एवं विद्वानमावास्यां[3] यजते' इत्यत्र चामावास्यापदेन तत्कालयोगानां त्रयाणां समुदायोऽनूद्यते। एवं विद्वद्वाक्यद्वयसिद्धसमुदायद्वयाभिप्रायेण दर्शपूर्णमासाभ्यामिति द्विवचनम्। न च तावता दर्शपूर्णमासशब्दः समुदाय नाम। उत्पत्तिवाक्येषु समुदायिनां यागानामेव कालसम्बन्धावगमात्तेषामेव नामधेयम्। तेषां च सहितानां फलसम्बन्धेऽपि प्रत्येकं कालसम्बन्धाद्भिन्न प्रयोगप्राप्तौ '[4]पौर्णमास्यां [5]पौर्णमास्या यजेत', 'अमावास्यायाममावस्यया यजेते'ति वाक्याभ्यां द्वयोः कालयोस्त्रिकस्य त्रिकस्य प्रयोगद्वयं विधीयते। पौर्णमास्यां साङ्गैस्त्रिभिर्यागैरपूर्वं कुर्यादिति। एवममावास्यामपि। एवञ्च फलवाक्येषु षण्णां फलसाधनत्वानुपपत्त्या यदेकं फलापूर्वं कल्पितं यस्येतिकर्त्तव्यताकाङ्क्षायामङ्गान्वये जाते साङ्गैः षड्भिस्तदुपपत्तेरवधारणादाशुतरविनाशिनां यागानां तत्पर्यन्तमन[6]वस्थानात् षड्भ्यः षडुत्पत्त्यपूर्वाणि कल्पितानि, तानि समुदायेन[7] कालवाक्यद्वये भाव्यतां प्रतिपद्यन्ते। साङ्गसहितयागत्रयकरणकभावना भाव्यत्वेन समुदायापूर्वद्वयं [8]कल्प्यते। एवं न चापूर्वाणि प्रधानयागैर्जन्यते। अङ्गानि तु यद्यपि फलापूर्वं कथं भावाकाङ्क्षयैव गृह्यन्ते। फलवाक्ये तथापि समुदायापूर्वजननद्वारा फलापूर्वार्थानि भवन्ति। कालवाक्यद्वये समुदायापूर्वजनकत्वावगमात् 'अतएव प्रतिसमुदायमावर्त्तन्ते। तत्रापि सन्निपत्योपकारकाणि उत्पत्त्यपूर्वार्थत्वात् तद्भेदेन भिद्यन्ते। आरादुपकारकाणि तु फलापूर्वार्थान्यपि समुदायापूर्वजननद्वारत्वात् तद्भेदेन भिद्यन्ते। सन्निपत्योपकारकेष्वपि कानिचित् प्रधानमात्रार्थानि।

---

१. 'पूर्णमास' इति मूलमातृकापाठः।
२. 'पूर्ण०' इति मूलमातृकापाठः।
३. '०वास्यायाम्' इति मूलमातृकापाठः।
४. 'पूर्ण' इति मूलमातृकापाठः।
५. '०मवस्थानात्' इति मूलमातृकापाठः।
६. 'समापिनास्मिन्' इति मूलमातृकापाठः।
७. 'कल्पते' इति मूलमातृकापाठः।

यथा निर्वापप्रोक्षणावघातपेषणसंयवनादीनि । औषधद्रव्यकयागोत्पत्त्यपूर्वार्थानि । 'व्रीहिभिर्यजेत' 'यवैर्यजेत' इति वाक्याभ्यां पुरोडाशद्रव्यप्रधानयागानुवादेन पुरोडाशप्रकृतिद्रव्यत्वेन व्रीहियवौ नियम्येते । तयोश्चैकार्थत्वेन निरपेक्षविधानाद्विकल्पः । तत्र यद्यपि निर्वापादीनि व्रीह्युद्देशेन विधीयन्ते, तथापि व्रीहिस्वरूपे तेषामानर्थक्यात् तण्डुलनिर्वृत्तिप्रणाड्या यद् व्रीहीणामाग्नेयाद्यपूर्वसाधनत्वं 'व्रीहिभिर्यजेते'ति वाक्यावगतम्, तद् व्रीहिपदेन लक्षयित्वा [1]तादर्थ्येन विधीयन्ते । तेन निर्वापादिवाक्येष्वयमर्थः । यत्तण्डुलनिर्वृत्तिप्रणाड्याग्नेयाद्यपूर्वसाधनं तन्निर्वापादिभिः संस्कुर्यादिति । तादृशाश्चयवा अपीति तेऽपि निर्वापादिभिः संस्कर्त्तव्या भवन्ति । तत्र निर्वापावघातादीनि पृथक्करणवैतुष्यादिदृष्टसंस्कारार्थानि । अतो यानि तदङ्गातिचतुःसंख्यामुष्टिपरिमाणनियमादीनि, तानि दृष्टस्वरूपे वैयर्थ्यात् तत्साध्यप्रधानापूर्वार्थान्येव । प्रोक्षणादीनित्वदृष्टसंस्कारार्थानि । तदङ्गानि तु 'प्रोक्षणीरुत्पुनातो'त्यादिवाक्यविहितान्युत्पवनादीनि, तदपूर्वार्थान्येव । तत्रैवानर्थक्यपरिहारात् । एवमाज्यसंस्कारकाण्युत्पवनावेक्षणादीनि, तान्याज्यासाध्योपांशुयाजापूर्वार्थानि । सान्नाय्यार्थानि दोहनातञ्चनादीनि । तत्साध्ययागापूर्वार्थान्येव कानिचित् सन्निपातान्यङ्ग[2]प्रधानार्थानि । यथान्वाधानम् । 'पूर्वेद्युरग्निं गृह्णाति, उत्तरमहर्यजेते'ति विहितमग्निषु समित्प्रक्षेपरूपममग्निसंस्कारत्वादग्नीनां च 'यदा[3]हवनीयेजुहोति' 'गार्हपत्ये हवींषि श्रपयति', दक्षिणाग्नावन्वाहार्यं पचती'ति [4]वाक्यैरङ्गप्रानार्थहोमहविश्रपणान्वार्यपाकार्थत्वावगते ङ्गप्रधानार्थम् । [5]एवं परिसमूहनपर्युक्षणपरिधिपरिधानादयोऽप्यग्निसंस्कारा ऊह्याः ।

---

१. 'तदर्थेन' इति मूलमातृकापाठः ।

२. '०न्यङ्गानि' इति ग मातृकापाठः ।

३. '०हवनीये' इत्यारम्भ 'दक्षिणाग्नावन्वा' पर्यन्तं च मातृकायां बारद्वयं पक्ति दृश्यते ।

४. 'वाक्यैरङ्ग०' इत्यारम्य 'श्रपणान्वाहार्य०' इति भावत् च मातृकायां नास्ति ।

५. 'एवम्' इत्यारम्य 'ऊह्याः' पर्यन्तं च मातृकायां ग्रन्थपातः ।

एवं 'वेद्यां हवींष्यासादयति' बर्हिषि हवींष्यासादयति, इति वाक्याभ्यामङ्गप्रधानहविरासादनार्थत्वेन विहिते वेदिर्बर्हिषि अङ्गप्रधानार्थे। तद्धर्माश्च खननलवनादयोऽङ्गप्रधानार्थाः वेदिकरणं च पूर्वेद्युरमावास्यायां 'वेदि करोती'ति पुर्वेद्युरविहितम्। पौर्णमास्यां तु हविः श्रपणोत्तरं क्रियते। एवं ऋत्विग्वरणदक्षिणादाने ऋत्विजां सर्वार्थत्वात् सर्वार्थे दर्शपूर्णमासयोर्यज्ञक्रत्वोश्चत्वार ऋत्विजस्तेषां यत्प्रयोगारम्भे वरणम्, तद् आनत्यर्थत्वात् दृष्टार्थम्। यत्तुप्रयोगमध्ये ब्रह्मणो वरणं [1]विहितं 'भूयत' इत्यादिमन्त्रेण तददृष्टार्थम्। प्रणीतास्तु 'प्रणीताभिर्हवींषि संयौती'ति प्रधानहविः संयवनार्थत्वेन विहिताः प्रधानमात्रार्थाः। सर्वार्थाः प्रणीता इति कात्यायनीयाः। 'अन्तर्वति प्रणीतां निनयती'ति तासामन्त्रे प्रतिपत्तिः। प्रोक्षणीधर्मा उत्पवनादयोऽप्यङ्गप्रधानार्थाः, प्रोक्षणीनां [2]पात्रवेदीध्मप्रोक्षणार्थतया सर्वार्थत्वात्। इध्माधानमग्निसमिन्धनार्थत्वादग्नेश्च सर्वार्थत्वादङ्गप्रधनार्थम्। एवं सामिधेन्योऽपि 'प्र वो वाज' इत्याद्याः पञ्चदशर्चः समिधाग्निप्रकाशकाः। 'सप्तदश वैश्यस्ये'ति वैश्यकर्त्तृकप्रयोगे सप्तदशविहिताः। 'एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्ये'ति काम्याः तत्रयद्यप्येकादशर्चः [3]पठयन्ते तथापि 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इति वचनात् पञ्चदश सम्पद्यन्ते। साप्तदश्यादि तु 'पृथुपाज[4]वत्यौ धाय्ये उष्णिक्ककुभौ धाय्ये' इति वचनाद्धय्यासंज्ञकानामृचां प्रक्षेपाद्भवति। प्रक्षेपश्च समिध्यमानवतीसमिद्धवत्योरन्तराले। 'इयं वै समिध्यमानवती, असौ [5]समिद्धवती यदन्तरा तद्धाय्या' इति श्रुतेः।

---

१. 'विहितम्' इति पदं च मातृकायांनास्ति।

२. 'पात्रे' इति मूलमातृकापाठः।

३. 'प्रथन्ते' इति मूलमातृकायाम्। तथा 'पधन्ते' इति ग मातृकायां दृश्यते।

४. °'पाजा' इति मूलमातृकायाम्। च मातृकायां 'वृथुयान' इति तथा छ मातृकायां 'पाजी' इति दृश्यते।

५. 'समेद्धवती' इति मूलमातृकापाठः।

एवं निर्विन्मन्त्रा अपि 'देवेद्धोमन्विद्ध[1]' इत्यादयोऽग्निप्रकाशकाः। प्रयाजशेषाभिधारणं प्रयाजशेषप्रतिपत्त्यर्थमप्यधिकरणनियमांशेन हविःसंस्कारत्वादङ्गप्रधानार्थम्। एवं हि श्रूयते—'स वै ध्रुवामेवा[2]ग्नेरभिधारयति'। ततोहि प्रथममाज्यभागौ यक्ष्यन् भवतीति। एवमादीनि प्रधानयागप्राग्वर्त्तीनि सन्निपत्योपकारकाणि प्रधानयागोत्पत्त्यपूर्वोत्पत्तौ व्याप्रियन्ते[3]। उत्तरकालानि तु तदपूर्वस्थितौ। तान्यपि कानिचित् प्रधानमात्रार्थानि कानिचिदुभयार्थानि। यथा 'उत्तरार्द्धात्स्विष्टकृते समवद्यती'ति स्विष्टकृद्यागस्याङ्गप्रधानहवि[4]रुत्तार्द्धप्रतिपत्त्यर्थत्वेन मन्त्तांशेन चाङ्गप्रधानदेवतास्मारकत्वेनोभयार्थता। एवमिडाप्राशित्रचतुर्द्धाकरणशंयुवाककालभक्षणामुभयार्थता। एते च हविः प्रतिपत्त्यर्था एवेति प्रतिपाद्य हविर्नाशे लुप्यन्ते। स्विष्टकृद् यागस्तु त्यागांशेनादृष्टार्थोऽपीति प्रतिपाद्योत्तरार्द्धनाशेऽप्याज्येन कार्यः। 'यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वा ज्यैनैता देवताः परिसंख्याय यजेते'ति वाक्यात्। अत्र हविषां नाशादिषु निमित्तेषु नष्टहविः प्रतिनिधित्वेनाज्यं विधीयते। तच्चादृष्टार्थेष्वङ्गप्रधानयागेषु सर्वत्र भवति सूक्तवाङ्गप्रधानार्थस्तद्वाक्यं पूर्वपरिच्छेदे व्याख्यातम्। दक्षिणाग्न्यधिकरणकपिष्टलेपहोमस्तु प्रधानमात्रार्थपिष्टलेपप्रतिपत्त्यर्थत्वात् प्रधानार्थ एव। [5]सपिष्टयजुर्होमो ध्रौवाज्यप्रतिपत्त्यर्थत्वादङ्गप्रधानार्थस्त्यागांशेनादृष्टार्थश्च। एवमध्वर्युकर्त्तृकाः प्रायश्चितहोमाः साङ्गप्रधानवैगुण्यपरिहारार्थत्वादुभयार्थाः। एवं ब्रह्मकर्त्तृका अपि 'य घृताक्तो यज्ञ आर्त्तिमयाद् भूः स्वाहेति गार्हपत्ये जुहुयाद्, यदि यजुषो भुवः स्वाहेति दक्षिणाग्नौ, यदि सामतः स्वरित्याहवनीये सर्वतोविज्ञाते वा[6] भूर्भुवः

---

१. 'होमन् विरुद्ध' इति मूलमातृकापाठः।

२. '°मेवा° रेभिधारयति' ग मातृकापाठः। '°वाग्निभ°' इति मूलमातृकापाठः।

३. °'प्रियते' इति मूलमातृकायाम्। गमातृकायाञ्च 'प्रियेते' इति पाठः।

४. 'उत्तरार्द्ध' पदं च मातृकायां नास्ति।

५. 'समिष्ट' इति मूलमातृकापाठः।

६. 'वा' इत्यस्य मूलमातृकायां त्रुटिः।

स्वरित्याहवनीय [1]एवेत्यादयः। इत्थं सन्निपत्योपकारकाणि प्रागुत्तरकालान्यङ्गानि प्रायशो[2] निर्दिष्टानि।

आरादुपकारकाणि तु सर्वाणि स्वापूर्वद्वारा परमापूर्वोत्पत्त्यर्थानि। यथा द्वावाघारौ। स्तौवाघारः, प्रजापति देवत्यः। स्तुच्याधार इन्द्रदेवत्यः। प्रयाजाः पञ्च। पञ्चमस्तु प्रयाजो मन्त्रांशेन देवतासंस्कारोऽपि। स तु व्याख्यातः पूर्वपरिच्छेदे। 'अग्नीषोमाभ्यामाज्यभागौ यजती'ति वाक्यविहितौ द्वावाज्यभागौ। आग्नेयाजभागः प्रधानयागाङ्गाग्निदेवतायाः संस्कारोऽस्त्विति चेत्, न। एकस्मिन् वाक्ये सौम्यस्या[3]रादुपकारकत्वमाग्नेयस्य[4] सन्निपातित्वमित्युभयासम्भवात्। सौम्येनापूर्वं कुर्यादपरेणाग्निं संस्कुर्यादिति वचनव्यक्तिभेदेदेन वाक्यभेदापत्तेः। तेन सौम्ये[5] साहचर्यादयमप्यारादुपकारकः। एवं नारिष्ठहोमौ प्रधानयागोत्तरकालीनावारादुपकारकौ। एवं त्रयोऽनूयाजाः शंयुब्रवाकाश्च। एवं पत्नीसंयाजाः गार्हपत्याधिकरणकाः। 'आज्येन पत्नीः संयाजयन्ति', 'जाघन्या पत्नीः संयाजयन्ती'ति वाक्याभ्यामाज्येन पशुजघन[6]स्थमांसेन[7] कार्याः।

इत्थं प्रायशः सर्वाङ्गयुक्तौ दर्शपूर्णमासौ व्याख्यातौ। पौर्णमास्यां तु संस्थाप्य पौर्णमासीं 'वैमृधमनुनिर्वपती'ति वाक्येन वैमृधेष्टिः प्रयोगबाहिर्भूतमङ्गं विधीयते।

याज्ञिकास्तु [8]समानतन्त्रामनुतिष्ठन्ति। इयं स्वापूर्वद्वारा पौर्णमासी-

---

१. 'एव' इति मूलमातृकायां नास्ति।
२. 'प्रायशः' इति पदं च मातृकायां नास्ति।
३. 'स्य' च मातृकायां नास्ति।
४. °'स्यासन्नि' इति च मातृकापाठः।
५. 'सौम्य च' इति मूलमातृकापाठः।
६. 'जघन्यस्थ' इति मूलमातृकापाठः।
७. 'मांसेन वा' इति च मातृकापाठः।
८. 'समानं' इति च मातृकापाठः।

समुदायापूर्वं स्थापयति । तदभावे निष्पन्नमपि समुदायापूर्वं विनश्यतीति कल्प्यते ।

।। इति [1]श्रीजीवदेवकृतौ भट्टभास्करे[2] दर्शपूर्णमासविवेकः ।।

अथ चातुर्मास्यानि विविच्यन्ते ।

वैश्वदेवम्, वरुणप्रघासाः, साकमेधाः, शुनासीरीयमिति चतुर्णां पर्वणां चातुर्मास्यसंज्ञा । चतुर्षु चतुर्षु मासेष्वेकैकस्य पर्वणोऽनुष्ठानात् । तत्र वैश्वदेव [3]पर्वण्यष्टौ यागाः । 'आग्नेयमष्टाकपालं निर्वपति' 'सौम्यं चरुम्' 'सवित्रं द्वादशकपालम्', 'सारस्वतं चरुम्' 'पौष्ण चरुम्' मारुत⁀सप्तकपाम्' 'वैश्वदेवीमामिक्षाम्' 'द्यावापृथिव्यमेककपालमि'ति वाक्यैर्विहिताः ।

।। अपूर्णम् ।।

---

१. '०मदेवात्मज०' इत्यपि दृश्यते च मातृकायाम् ।

२. 'भास्करः समाप्तः' इति च मातृकायांपाठः ।

३. 'पर्वाऽष्टौ' इति मूलमातृकायां पाठः ।

## अथ प्रथमं परिशिष्टम्

[ शब्दान्तरादिभिः कर्मभेदकैः षड्भिः प्रमाणैः त्यजतिजुहोत्यादीनां परस्परं भिन्नत्वं प्रसाधितम्। प्रसङ्गप्राप्तत्वात्तदनन्तरमेव प्रतिजानाति ग्रन्थकारः 'अग्निहोत्रं दर्शपूर्णमासौ, चातुर्मास्यानि, पशुः सोमस्तद्विवकृतयश्च' इति। शास्त्रप्रमेयत्वेनैते निर्दिष्टाः सन्ति। अतएव मीमांसाशास्त्रप्रमेयत्वेन प्रसिद्धत्वात् यागानामेषां स्वरूपं प्रदर्शयिष्यतीति सम्भाव्यते प्रतिज्ञावाक्येन। तत्राग्निहोत्रं निरूप्य दर्शपूर्णमासौ निरूपितौ। अवसरप्राप्तत्वाच्चातुर्मास्यनिरूपणमपि कृतमासीदिति प्रतीयते हस्तलेखत्रुटचवलोकनेन। परन्तु चातुर्मास्यादिसोमविकृतिपर्यन्तं मातृका नोपलब्धा कुत्रापि। तस्माद् ग्रन्थस्यास्यापूर्णता स्वाभाविकी एव। ग्रन्थादस्मात् दर्मपूर्णमासं यावदध्ययनानन्तरं चातुर्मास्यादीनामपि स्वरूपज्ञानाय जिज्ञासा पाठकानां हृदि अवश्यमेवोदेष्यति। सा च जिज्ञासा कथमपगता भवेदिति विचार्य तेषां सामान्यं स्वरूपं परिशिष्टरूपेणायोज्य जिज्ञासुभ्यः उपहारीकरोति सम्पादकः। यथावत् ग्रन्थपूरणे नाहं क्षमः, अल्पमतित्वात्, तथापि किञ्चित् स्वरूपप्रतिपादनाय प्रयतिष्ये। यद्येकोऽपि पाठकः कश्चिद् सन्तुष्येच्चेत् अस्माकमपि सन्तोसावहं स्यदिति निवेदनं विदुशां विधेयस्य सम्पादकस्य। ]

### भास्करपरिशिष्टम्

गुरुं गजाननं नत्वा सर्वविद्याविधायिनम्।
श्रीकृष्णञ्च नमस्कृत्य राधया सहितं विभुम्॥
आश्रितार्त्तिनिहन्तारं सर्वाभीष्टप्रदायकम्।
रामनन्दनपुत्रोऽसौ करोति परिशिष्टकम्॥

तत्र तावत् वेदेषु पञ्चविधः यज्ञः पञ्चविधोऽग्निनोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः। इति। अत्रैवान्येषामप्यन्तर्भावसम्भवात् आग्रयणादीनामाधिक्येऽपि न दोषः। एतानि च वैदिकानि कर्माणि सन्ति। स्मृतावपि स्मार्त्तयागानां प्रतिपादनमवलोक्यते। अत्रावधेयम्—प्रायशः सर्वे यागाः संस्थात्रयेषु विभक्ताः दृश्यन्ते। यथा—पाकयज्ञसंस्था, हविर्यज्ञसंस्था

चेति संस्था प्रकारः। पाकयज्ञसंस्थायां प्रतिपादिताः यागा स्मार्त्ताः भवन्ति। ते च सप्त यथा—औपासनहोमः, वैश्वदेवम्। पार्वणम् अष्टका, मासिश्राद्धम्, श्रवणा, शूलगव इति अग्न्याधेयम् अग्निहोत्रं दर्शपूर्णमासौ, आग्रभागम्, चातुर्मास्यानि, निरूढपशुबन्धः, सौत्रामणी इति सप्त हविर्यज्ञसंस्थाशब्देन ज्ञायन्ते। पिण्डपितृयज्ञादयोऽपि अत्रैवान्तर्भवन्ति। सोमसम्बन्धाभावाच्चैतेषांमियं संज्ञा बोध्या। एवमेव अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ षोडशी, वाजपेयः, अतिरात्रः, आप्तोर्यामः इति सप्त यागाः सोमसंस्थापदवाच्याः भवन्ति। अत्र सोमस्य प्राधान्यात् सोमसंस्थेति नाम। गौतमधर्मसूत्रस्य प्रथमे प्रश्नेऽष्टमेऽध्यायेे एकोनविंशत्यदिसूत्रेषु सर्वमेतन्निरूपितं वर्त्तते। क्रमभेदः शब्दान्तरप्रयोगो या भवेन्नाम्, परं पदार्थे न भेदः। तथा च सूत्राणि—अष्टका पार्वणः श्राद्धं श्रावण्याग्रहायणी चैतमाश्वयुजीति सप्त पाकयज्ञसंस्थाः। (१.८.१९)

अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रमणं चातुमास्यानि निरुढपशुबन्धः सौत्रायणीति सप्त हविर्यज्ञसंस्धाः (१.८.२०) अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रीऽऽप्तोर्याम इति सप्त सोमसंस्थाः। (१.८.२१) इति। तत्र भाट्टभास्करग्रन्थमनुसृत्याग्निहोत्रप्रभृतिर्हविर्यज्ञसंस्थानां निरूपणमादौ ततश्च सोमसंस्थानां तद्विकृतीनाञ्च स्वरूपस्थापयिष्यामि तत्रापि च ग्रन्थकारेण श्रीमता जीवदेवेनोल्लिखितावग्निहोत्रदर्शपूर्णमासौ विद्येते मातृकायाम्। तदनन्तरञ्च चातुर्मास्यस्य द्वित्राः पङ्क्तय एवोपलब्धाः सन्ति। तस्माच्चतुर्मास्यमारभ्यैव किञ्चित् प्रदर्श्यते।

**चातुर्मास्यभागः**—चत्वारो च ते मासा इति चतुर्मासाः। चतुर्मासशब्दात् 'चतुमासाद् यज्ञे ण्यो वक्तव्यः' इति वार्त्तिकेन ण्यप्रत्यये कृतेऽनुबन्धलोपे णित्त्वाच्चादिवृद्धौ चातुर्मास्यमिति। चतुर्षु चतुर्षू मासेष्वनुष्ठीयमानत्वात् चातुर्मास्यानीति नाम तेषां कर्मणाम्। अतएवोक्तं कर्केणापि चातुर्मास्यैरयजते' इति यजतिशब्दसमानाधिरण्यात् यजतिनामधेयमिति प्रथमं वैश्यदेवं पर्व फाल्गुन्यां पूर्णिमायामनुष्ठेयं भवति तदन्तरं चतुर्षु मासेषु व्यतीते आषाढ्यां पूर्णिमायां द्वितीयं वरुणप्रघासं पर्व, ततश्चतुर्षु मासेषु गतेषु कार्त्तिक्यां पूर्णिमायां तृतीयं साकमेधं पर्व, ततश्चतुर्षु मासेषु व्यपगतेषु फाल्गुनशुक्लप्रतिपदि चतुर्थं सुनासीरीयं पर्व अनुष्ठितं भवति एवमेव पुनः पुनरावर्त्तते। अत्र च यागे एतान्येव चत्वारि पर्वाणि भवन्ति। यथासंख्यमेते निरुप्यन्तेऽधस्तात्।

**वैश्यदेवम्**—विश्वे देवा अपश्यन् प्रथमं यत्पर्व तद्वैश्वदेवं पर्व। विश्वदेवशब्दात् 'सास्यदेवता' इत्यनेनाण कृतेऽऽदिवृद्धौ च वैश्वदेवशब्दः व्युत्पन्नः तथा—चार्थवादवाक्यम्—'यद् विश्वे देवास्समयजन्त, तद्वैश्वदेवस्य वैश्वदेवत्वम्' इति। प्रथमेऽस्मिन् पर्वणि आग्नेयोद्रष्टाकपालः पुरोडाशः, सौम्यश्चरुः, सावित्रोऽष्टाकपालो द्वादशकपालो वा पुरोडाशः, सारस्वतश्चरुः पौष्णः पैष्टश्चरुः, केवलेभ्यो मरुद्भ्यः स्वतवद्गुणविशिष्टेभ्यो वा मरुद्भ्यः सप्तकपालः पुरोडाशः वैश्वदेवी पयस्या, द्यावापृथिवीय एककपाल इत्यष्टौ हवींषि भवन्ति। इमे च यागाः दर्शपूर्णमासप्रकृतिभूताः भवन्ति। अतएव पृथक् धर्माः नातिदिश्यन्ते। दर्शपूर्णमासापेक्षया नवानुयाजाः न व च प्रयाजाः अधिका अतिदिश्यन्ते। एवमेव त्रीणि समिष्टयजूंषि वाजिदेवतामुद्दिश्य वाजिनयागश्चाधिकः। अयमेवोभयोर्विशेषः। अस्यैव वैश्यदेवपवागो धर्मा उत्तरपर्वसु प्रवर्त्तन्ते तदुक्तं कात्यायनेन वैश्वदेवधर्माश्चातुर्मास्येषु वचनप्रकृत्तिभ्याम्। (४ ३.४) इति। वैश्यदेवमिति चातुर्मास्यानां प्रथमं पर्व। तस्य धर्मा उत्तरेषु पर्वसु प्रवर्त्तन्ते, वचनात्' इत्यादिना च व्याख्यातं कर्केण स्वोपज्ञे भाष्ये। सप्तमाध्यायस्य प्रथमे त्रयोविंशतितमे सूत्रे 'तस्यदेककपालानां वैश्वदेविकः प्रवृत्तिः' इत्यादिवचनैः उत्तरपर्वसु वैश्वदेवधर्माणामतिदेशः सूच्यते मीमांसकवर्यैः शवरस्वामि प्रभृतिभिः वैश्वदेवपर्वणि य आमिक्षायागो भवति स एवान्येषामामिक्षायागानां प्रकृतिर्भवति। एवमेव द्यावापृथिवीय एककपालोऽपि सर्वेषामेककपाल'नां प्रकृतिरिति। एतत्सर्वं कर्कापस्तम्बप्रभृतिभिः समर्थितं दृश्यते। मीमांसका अप्येवमेवाभप्रयन्ति। आमिक्षायास्तु दाक्षायाणान्तर्गतामिक्षायागस्य विकृतिरूप इति कर्कस्य विशेषः ऋत्विजः दर्शपूर्णमासवद् भवन्ति।

**वरुणप्रघासः**—इदञ्चचातुर्मास्यस्य द्वितीयं पर्व। तथा च व्युत्पत्तिः—प्रकृष्टः घासः भक्ष्यविशेषः प्रघासः। स एव एषु हविर्विषेषु तेऽपि प्रघासः। वरुणाय प्रघासाः वरुणप्रघासाः। अत्रोद्देश्यत्वं चतुर्थ्यर्थः। अतः यत्र वरुणमुद्दिश्य प्रघासाः दीयन्ते, तत्पर्व एव वरुणप्रघासशब्देनोच्यते। वरुणस्य पाशरूपं कर्म घ्नन्तीति वा वरुणप्रघासा इत्यपि केचित् पर्वणोऽस्य आषाढ्यां पूर्णिमायामनुष्ठानं भवति। वैश्वदेवपर्वणि यानि हवींषि विहितानि सन्ति, तेष्वादितः पञ्च हवींषि अत्राप्यनुष्ठेयानि भवन्ति। ततोऽन्यान्यपि चत्वारि हवींषि अत्र विहितानि विद्यन्ते। यथा—ऐन्द्राग्नो द्वादशकपालः, वारुण्यमिक्षा, मारुत्यामिक्षा, काय एककपाल इति।

—२५—

कशब्दोऽकारान्तः, हैरण्यगर्भवाची। चतुर्थ्यां काय इति रूपम्। अर्थात् ब्रह्मदेवताक एककपालश्रपितपुरोडाशद्रव्यको याग इत्यर्थः पर्वण्यस्मिन् वेदिद्वयं भवति। प्रथमा दक्षिणा वेदिः। द्वितीया चोत्तरावेदिः ऋत्विजां व्यवस्था वैश्वदेवपर्ववत् बोध्या। तदपेक्षया एकः प्रतिप्रस्थाता अत्राधिको भवति। प्रतिप्रस्थाता एव दक्षिणवेद्याश्रितानां समेषामनुष्ठयमानानां कर्मणां सम्पादयिता भवति। उत्तरवेद्यां सम्पाद्यमानानि आग्नेयादीनि हवींषि सर्वाणि अध्वर्युणा सम्पाद्यन्ते। दक्षिणे विहारे मारुतीमामिक्षां प्रतिप्रस्थाता एवानुतिष्ठतीति विशेषः। अङ्गानामनुष्ठाने चायं क्रमः— अध्वर्यु येषामङ्गानामनुष्ठानं उत्तरस्यां वेद्यां करोति, तेषां सर्वेषामङ्गानामनुष्ठानं प्रतिप्रस्थाता दक्षिणस्यां वेद्यां करोति। अध्वर्योरपेक्षया केचन एव पदार्थाः प्रतिप्रस्थातुः अल्पीयांसः। तथा चोक्तं कात्यायेन—'प्रणीतापत्नीसन्नद्धनाग्निमन्थनाश्रुतप्रत्याश्रुतप्रैषयजमानवाचनहोतृषदनवरणप्राशित्राङ्गुलिपर्वाङ्निावान्तरेडाभागापराग्न्यवभृथान्नप्रतिप्रस्थाता' (५.४.२३) इति। अस्मिन् पर्वणि उत्तरवेदिरग्निप्रणयनश्चाधिकं बोध्यम्। एवमेव करम्भपात्रनिर्माणं तद्धोमश्चाधिकोऽस्मिन् पर्वणि। ईषद्भ्रष्टयवपिष्टनिर्मितानि दीपसदृशानि पात्राणि करम्भयात्राणि भवन्ति। अध्वर्युः चतुर्दश्यां यवपिष्टेन वर्त्तुलाकाराणि चत्वारि पात्राणि कुर्यात्। एवमेव पूर्णिमायां मेषमध्वर्युः मेषीं च प्रतिप्रस्थाता कुर्यात्। यजमानपत्नौ तानि सूर्ये निधाय स्वशिरसि स्थापयेत्। तदनन्तरञ्च दक्षिणेऽग्नौ जुहुयात्। मेषीहोमश्चाप्यत्रैवाग्नौ भवति, परन्तु प्रतिप्रस्थाता अनुतिष्ठति। मेषहोमश्चाध्वर्युकर्त्तृक उत्तरतस्या वेद्यामिति। होकप्रसङ्गेऽस्मिन् यजमानपत्नीप्रतिप्रस्थात्रोर्मध्ये प्रश्नोत्तरमप्येकं भवति। यथा यदा करम्भयात्रहोमार्थं पत्नी आगच्छति तदा तां दृष्ट्वा प्रतिप्रस्थाता पृच्छति 'केन चरसि' इति'। प्रश्नस्य कोऽभिप्राय इति चेत्—शृणु। पाणिग्राहकं पतिमतिरिच्य जारा अपि ते सन्ति किम्? इति। यदि सन्ति तर्हि तेषां नामानि ब्रूहीत्यभिप्रायः। जारस्तूपपतिः। यदि जाराः सन्ति तर्हि अवश्यमेव ब्रूयात्। न तु गोपनीयतामाचरेत्। ननु साध्व्या पत्न्या सह कथमयं प्रश्नः सङ्गच्छत इति चेत्—उचयते--तासामपि कदाचिन्मानसिकदोषसम्भवात्। तन्निकृत्त्यर्थोऽयं प्रश्नः, न तु वस्तुतो जारसत्तामभिप्रेत्येति मन्तव्यम्। अत्र च शतपथतैत्तिरीयब्राह्मणकात्यायन श्रौतसूत्राणि प्रमाणभूतानि। एकमपरमपि वैशिष्ट्यं दृश्यतेऽस्मिन्पर्वणि सौमिकानामन्येषां धर्माणामत्र प्राप्तिर्भवति परन्तु तूष्णीमेव गमनम्, न तत्र यन्त्रोचारणमिति शतपथब्राह्मणे कात्ययनश्रौतसूत्रे च प्रतिपादितम्। एवं वारुण्यामिक्षानिष्काषेण सहावभृथस्थलं

गत्वा तत्र च षडाहुतीर्दशाहुतीर्वा हुत्वा दम्पती तीर्थे स्नातः। अस्मिन् पर्वणि धेनुः अश्वः षड् वा द्वादश वा गावः दक्षिणः भवतीति विकल्पोऽपि दृश्यते ।

**साकमेधाः**—चातुर्मास्यस्य तृतीयमिदं पर्व साकमेधाख्यम्। साकमेधन्ते वर्द्धन्ते देवता एभिर्हविर्विशेषैरिति साकमेधाः । कार्त्तिक्यां पूर्णिमायामस्यानुष्ठानम् । पर्वण्यस्मिन् अनेकासामिष्टीनामनुष्ठानं दृश्यते । तत्र पूर्वस्मिन् दिने प्रातरनीवतोष्टिरुद्धरणादिकर्मापवर्गान्तानुष्ठिता भवति। तत्र चानीकवान् देवता, अष्टाकपालः पुरोडाशो द्रव्यम्, अन्वाहार्यो दक्षिणा । मध्याह्ने च सान्तपनेष्टिर्भवति । तत्र सान्तपना मरुतो देवताः, चरुर्द्रव्यम् दक्षिणान्वाहार्य इति । सायं गृहमेधीयेष्टिः । तत्र गृहमेधिनो मरुतो देवताः । पयसि पक्वश्चरुर्द्रव्यम्, ऋषभो दक्षिणेति । गृहमेधीयानन्तरं शिष्टस्य पायसस्योपनीतयजमानगृह्यैः अन्यैर्ब्राह्मणैश्च भक्षणं कर्त्तुं शक्यते । सर्वमिदं कात्यायनश्रौतसूत्रे पञ्चमेऽध्याये स्पष्टमुदीरितम्। अत्र प्रयाजानामकुयाजाना वानुष्ठानं न भवति । आज्यभागादीन्यङ्गान्यनुष्ठीयन्ते । अत्र सायं प्रातरग्निहोत्रहोमो यवाग्वा कर्त्तव्यः । ततः पूर्णिमायामुद्धरणादिकर्मायवर्गान्तः प्रातर्दर्विहोमः कार्यः । अत्र च सर्वाः क्रियास्तूष्णीमेव कार्याः । दक्षिणा ऋषभः । तदनन्तरं क्रीडनीयेष्टिर्भवति । अत्र च मरुतः क्रीडिनो देवताः भवन्ति । द्रव्यञ्च पुरोडाशः । दक्षिणान्वाहार्यः । ततश्चादितीष्टिः । अत्रादितिदेवताकश्चरुः दक्षिणा चान्वाहार्यः । ततो महाहविसंज्ञकेष्टिरुत्तरस्यां वेद्यामनुष्ठेया । अत्र चोत्तरवेदिरग्निप्रणयनमधिकं भवति । वैश्वदेवोक्तानि आदितः पञ्च हवींषि अत्राप्यतिदिश्यन्ते। तदितराणि च ऐन्द्राग्नोद्वादशकपालः माहेन्द्रश्चरुः, वैश्वकर्मण एककपाल इति । दक्षिणा च ऋषभः । ततः पश्चात् पितृयज्ञोऽनुष्ठेयः । पित्त्येष्टिशब्देनापि कल्प्योऽयम्। एतत्सम्पादनार्थं दक्षिणस्यां दिशि दक्षिणामुखः विहारः सम्पादनीयो भवति । तन्मध्ये च दक्षिणाग्निखरः। तत्र च दक्षिणाग्निः। तत्रैव सर्वेहोमा कर्त्तव्याः। अत्रेष्टौ पितरः सोमवन्ता सोमपितृमान् वा पितरो वर्हिषदः, पितरोऽग्निष्वत्ता इति देवताः भवन्ति । षट् कपालः पुरोडाशः, धानाः मन्त्र इति यथासंख्यं द्रव्याणि । भर्जिता यवा धानाशब्देन कथ्यन्ते । मृतवत्साया परकीयवत्सेन दुह्मानाया गोर्दुग्धे सक्तुं प्रक्षिप्य यद् द्रव्यं सम्पाद्यते, तद् मन्थशब्देन व्यवह्रियते । अत्रचत्वारो प्रयाजाः द्वौ चानुयाजौ भवतः । दक्षिणा चान्वाहार्य इति । ततस्त्र्यम्बकेष्टिरनुष्ठीयते । अत्रस्त्र्यम्बको रुद्रः देवता, चत्वार एककपाला पुरोडाशाः

द्रव्याणि। एक एवाध्वर्युर्ऋत्विक्। सर्वं चतूष्णीमेवकार्यम्। उदङ्मुख एव सर्वमनुतिष्ठेत्। अतएवोदीची प्राचीवदिति दिग्विर्यासोऽपि बोध्यः। ऋषभश्चात्र दक्षिणा। दक्षिणाऽन्युलमुकमादाय चतुष्पथं गच्छति। तत्र पञ्चभूसंस्कारान् कृत्वा अग्निं संस्थाप्य पलाशपत्रेण पुरोडाशत्रयतोऽवदाय होमः कर्त्तव्यः। जुहूस्थानीयं पलाशपत्रमिति बोध्यम्। चतुर्थस्य तु आखूत्करे प्रक्षेपो भवति। तदन्तरं तमग्निं सपरिवारः यजमानः प्रदक्षिणी कृत्यावशिष्टान् पुरोडाशान् हस्ताभ्यामुपरि प्रक्षिपेदुच्छालपेच्च। पततस्तान् पुरोडाशान् गृहीत्वा समं विभज्य च शिक्ययोः निर्माय वंशयष्टचामावध्य वीवधवत्कृत्वोत्तरस्यां दिशि स्थाणो वृक्षे वंशे वल्मीके वा रोपयेदिति।

**शुनासीरीयम्**—चातुर्मास्यस्येदं शुनासीरीयनामकं चतुर्थं पर्व। शुनो वायुः, सीर आदित्यः। शुनश्च सीरश्चेति शुनासीरौ तौ देवतेऽस्येति शुनासीरं पर्व। 'सास्य देवता' इत्यनेन तद्धितीयप्रत्ययविधानात् शुनासीरीय-मिति। फाल्गुनशुक्लप्रतिपदि अस्य पर्वणोऽनुष्ठानम्। पौर्णमासधर्मा अप्यत्रातिदिश्यन्ते। साकमेधवदत्रापि वैश्वदेवोक्तपञ्चहवींषि अतिदिश्यन्ते। तदितराण्यपि हवींषि भवन्ति, यथा—शुनासीराभ्यां द्वादशकपालः, वायव्यं पयो यवागूर्वा, सौर्य एककपाल इति। दक्षिणा च षड्गवयुक्तो हलो महान्तौ बलीवर्दौ वा। सैरस्य श्वेतोऽश्वो गौर्वेति विकल्पः। एतानि च चातुर्मास्यानि ऐष्टिकानि सम्वत्सरे पूर्यमाणत्वात् साम्वत्सरिकाणि चोच्यन्ते। अयमत्रानुष्ठाने विशेषः। पक्षद्वयमत्र दृश्यते। तत्र प्रथम उत्सर्गपक्षः। द्वितीयश्च यावज्जीवपक्षः। चातुर्मास्यैस्सकृदिष्ट्वा अनन्तरं पशुसोमादिना यो यजति, न पुनः चातुर्मास्यमावर्त्तते, स उत्सर्गपक्षः। चातुर्मास्यैरेव प्रतिवर्षं जीवनपर्यन्तं यो यजति, स यावज्जीवपक्षः। तत्रायं विशेषः—उत्सर्गपक्षे साकमेधपर्वानुष्ठानान्तरं फाल्गुनशुक्लप्रतिपादि शुना-सीरीयेनेष्ट्वा आगामिन्यां पौर्णमास्यामग्निष्टोमः पश्वादिर्वानुष्ठेयः। यावज्जीवपक्षे च फाल्गुन्या चतुर्दश्यां शुनासीरीयेनेष्ट्वा पूर्णिमायां पुनः वैश्वदेव पर्व। ततश्च पुनः वरुणप्रधासादय इति। एवमेव पुनः पुनः यावज्जीवमावर्त्तते। सर्वञ्चैतत् 'आवृत्तिरनीजानस्य' इत्यादिषु सुत्रेषु स्पष्टम्।

## चातुर्मास्यानां त्रैविध्यम्

चातुर्मास्यान्युक्तानि। तत्रैव तत्प्रकारश्चिन्त्यते। चातुर्मास्यानि तावत् त्रिविधानि भवन्ति। यथा—ऐष्टिकानि, पाशुकानि सौमिकानि

चेति। तत्र पर्वं प्रतिपातिपादितानि ऐष्टिकानि। इष्टिरूपेणानुष्ठीयमान-त्वात्। एतान्यपि च त्रिविधानि सन्ति। यथा—साम्वत्सरिकाणि पञ्चाहिकानि, ऐहिकानि चेति। सम्वत्सरे एव पूर्यमाणत्वात्पूर्वोक्तानि साम्वत्सरिकाणि वोध्यानि। पञ्चभिरेव दिनैः साध्यानि यानि तानि पञ्चाहिकानि भवन्ति। तत्रापि देवतादिकं सर्वं पूर्ववदेव भवति। यदेक-स्मिन्नेन दिने तानि सर्वाण्यमनुष्ठीयन्ते, तानि ऐहिकानि भवन्ति। अत्रापि न देवताभेदः, न व हविर्भेदः। सर्वं पूर्ववदेव। एकस्मिन्नेव दिने सर्वेषामङ्गानां कथं यथायथमनुष्ठानमिति चेत्—उच्यते—चतुर्णां पर्वणामेक-कालानुष्टीयमानत्वात् येषामङ्गानां तन्त्रेणानुष्ठानं सम्भवं तेषां तन्त्रेणा-नुष्ठानम्। येषाञ्च तन्त्रानुष्ठानसम्भवं तेषां पार्थक्येनानुष्ठानम्। अतः यथाप्राप्पि आवृत्तिः तेषाम्। वरुणप्रधासानां महत्त्वात्तत्र तन्त्रमावश्यकम् इमान्येव चातुर्मास्यानि पशुसहितानि भवन्ति यदा तदा पाशुकानि भवन्ति। तत्र च पशुतन्त्रस्यैव प्रधानत्वेन पशुकानीत्युच्यते। अतएवैकादशप्रयाजा एकादशानुयागाश्च भवन्ति। प्रथमे वैश्वदेवपर्वणि वैश्वदेवदेवताकः पशुः, द्वितीये पर्वणि वारुणः वरुणदेवताकः, तृतीये च महेन्द्रदेवताकः माहेन्द्रः पशुः, चतुर्थे भुनासोरयेः पशुः। पशोरस्य शुनासीरौ देवते। अत्रापि पक्षत्रयमवलोक्यते – पशूनामेतेषामैष्टिकैर्हविभिः सह समानतन्त्रेणानुष्ठन-मिति प्रथमः पक्षः। तत्तत्पर्वारम्भे पृथक् तन्त्रेणानुष्ठानं सम्पाद्य पश्चात् ऐष्टिकानामनुष्ठानमिति द्वितीयः पक्षः पर्वणणोऽन्ते पृथक् तन्त्रेण वानुष्ठान-मिति तृतीयः।

सौमिकेषु चातुर्मास्येषु वैश्वदेवपर्वस्थानेऽग्निष्टोमसंस्थमहः। वरुण-प्रघानसस्थानेग्निष्टोसंस्यमुक्थ्यसंस्थं वा प्रथमं दिनम्। द्वितीयं दिनमुक्थ्य-संस्थम्। साकमेधपर्वस्थाने प्रधमं दिनमग्निष्टोमसंस्थं षोडशिसंस्थं वा। द्वितीयञ्चदिनमुक्थ्यसंस्थम्। तृतीयदिनमतिरात्रसंस्थम्। भुनासीरयस्थाने ज्योतिष्टोम इति। एतेषु सप्तसु दिवसेषु क्रमशः वैश्वदेवः वारुणः, मारुतः, आग्नेयः ऐन्द्राग्नः, ऐकादशिनाः वायव्य इति सप्तदशवः भवन्ति। अवभृथ-स्नानञ्च प्रतिपर्व पार्थक्येनानुष्ठेयम्। एवं संक्षेपेश चातुर्मास्यानि निरुपतानि।

अवसरप्राप्तत्वान्निरुढपशुबन्धः निरूप्यते। अयमपि प्रतिसम्वत्सरं वर्षर्त्तौ अनुष्ठेयः। अस्य चोत्तरायणे दक्षिवायने चेति वारद्वयमनुष्ठानं चोदितं दृश्यते अस्मिन् यागे द्रव्यं छागः। 'अग्नीषोमीयं पशुमालभेत'

इत्यादिभिः वाक्यैः यो पशु प्रचोचितः वर्त्तते द्रव्यत्वेन, तत्र न साक्षात् पशुत्वे हहिष्ट्वम्, अपि तु तत्तदवयवद्वारा पशोर्हविष्ट्वं भवति। अतः पशोः वपा, हृदयं, जिह्वा, वक्षः, सव्यस्यबाहोः प्रथमं नडकमंसादधो वर्त्तमानम्, पार्श्वद्वयम्, यकृत, वृक्कौ, गुदमध्यम्, दक्षिणा श्रोणि। इमानि जौहवानि द्रव्याणि सन्ति। सव्यः बाहुः सव्या श्रोणि गुदतृतीयम्। इमन्यौपभृतानि हवींषि भवन्ति। पशोरमाशयस्योपरि अमाशयमाच्छाद्य वर्त्तमानोऽति-सूक्ष्मश्वेतवस्त्राकृतिरूपोऽङ्गविशेषः वपा। कुक्षिस्थौ गीलकौ वृक्कौ भवतः। अन्यत्सर्वं स्पष्टम्। इन्द्राग्नी, सूर्य, प्रजापतिर्वा वैकल्पिकी देवतात्र। सपत्नीकेन यजमानेन सह अध्वर्युः ब्रह्मा, होता, आग्नीध्र प्रतिप्रस्थाता तथा मैत्रवरुण इति षट् ऋत्विजः भवन्ति। सर्वेषां धर्माणामत्रैव पाठात् प्रकृति-भूतोऽयं याग इति सूत्रकारः। ज्योतिष्टोमाङ्गभूताग्नीषोमीयपशुयागप्रकृति-रेवायमित्यङ्गत्वमिति मीमांसकाः। आलभ्यमानस्य पशोः बन्धनार्थं यूपः निखातव्यः। स च खादिरो वैल्वो वा भवति। यूपश्च तयरत्निश्चतुर-रत्निर्वा त्वग्रहितोऽष्टकोणश्च भवति। ऋत्विक् पशुसंज्ञपनं न करोति। तदन्यो यो वा को वा संज्ञपयति। याज्ञीयपशुः शास्त्रघातादिना नालब्धव्यो भवति अपि तु तद्विनैव मुखबन्धनेन श्वासप्रश्वासं निरोध्य प्राणवियोगं सम्पादयति। एतदेव संज्ञपनशब्देनोच्यमे। तदनन्तरं सर्वप्रथमतो वपा-मुत्खिद्य तां वपाश्रपण्योराहवनीये श्रमयति। ततः सकृदवदाय निरवशेषां समग्रां जुहोति। ततश्च हृदयादीन्यङ्गान्यवदाय शामित्रसंज्ञकेऽग्नौ श्रपयति। ततः यद्देवताकः पशुयागो भवति तद्देवताकं पुरोडाशं निर्माति। तेन पुरो-डाशेन तस्यै देवतायै यागं करोति। पुनश्च श्रृतानि हवींश्यादाय तानि स्वधितिना जुह्वमवद्यति। ततोऽष्टौ हृदयादीन्यङ्गानि तस्यै देवतायै जहोति। ततस्त्र्यङ्गैः स्विष्टकृतं हुत्वा अनुयाजादिकमनुतिष्ठति। अत्रैक-दश प्रयाजाः भवन्ति तथा तावन्त एवा नुयाजा इति। अयमत्र विशेषः — सर्वासु इष्टिषु हविरासादनानन्तरं प्रयागाः इज्यन्ते, परन्तु पशुयागे यूप-समीपे पशौ तिष्टत्येव सति दश प्रयाजा इज्यन्ते। एकादशतमस्तु प्रयाजः पशुविशनानन्तरमेवेति। दक्षिणा चात्र गवादिपशुः, धेनुर्वरो वेत विकल्पः। अग्नीषोभीयप्रकृतिकोऽयमिति पूर्वमेवोपपादितम्। अग्नीषोमीयपशुयाग एव सर्वेषां काम्यानां सवनीयस्य च प्रकृतियागः। सोमयागे यस्मिन् दिने सोमरसोऽभिसूयते तथा ग्रहचमसादिषु पात्रेषु गृहीत्वा अनुष्ठीयते। तस्मिन्नेव दिनेऽनुष्ठेयत्वेन पशुर्विहितः। स च पशुरगेऽगे वर्द्धते। यथा अग्निष्टोम् संस्थाके ज्योतिष्टोमे एकः, उक्थ्यसंस्थाके द्वौ, षोडशिनि त्रयः, अतिरात्रे चत्वारः वाजपेये च पञ्च। एवमेव सत्रादिषु च इतोऽप्यधिकः

पराव: विवर्द्धन्ते। अनेन सह ज्योतिष्टोमे पश्वेकादशिन्वपि विकल्प्यते। एकादशिनानां प्रकृतिभूत: सवनीयपशु:। ऐकादशिनास्तु प्राजापत्यपशुगणस्य वाजपेयाङ्गभूतस्य, अन्येषाञ्च पशुयागानास्तु प्राजापत्यपशुगणस्य वाजपेयाङ्गभूतस्य, अन्येषाञ्च पशुयाजानाम्। अग्नीषोमीय: पशुयाग: सर्वेषां पशुयागानां प्रकृतिभूतस्तथापि सान्नाय्यविकृतभूत एव। तत्रापि पयोयागविकृतिरिति शम्।

**आग्रयणेष्टि:**—'अग्रे अयनं भक्षणं येन कर्मणा तदाग्रयागमिति आश्वलायनटीकायां व्युत्पत्ति: प्रदर्शिता। अग्रे नवान्नोत्पत्त्यनन्तरमयनमाचरणं यस्य तदाग्रयागमिति केचित्। 'यदा वर्षस्य तृप्ति: स्यादथाग्रयणेन यजेत' 'अपि वा क्रिया यवेषु' इत्याद्याश्वलायन वचनानुसारं शरदि वसन्ते च कर्त्तव्येयमिष्टि:। एवमेव शतपथब्राह्मापस्तम्बकात्यायनबौधायनप्रभृतिषु द्रष्टुं शक्यते। अत्र पुरोडाशश्चरुश्च द्रव्यम्। शरदि तण्डुलप्रकृतिभूतं धान्यमुपपद्यते वसन्ते च यव: समुत्पद्यते। अतस्तत्र यवाग्रहयणं भवति। एतदनुष्ठानानन्तरमेव नूतनमन्नं भोक्तव्यमित्याशय: इन्द्राग्नीभ्यां पुरोडाशो द्यावापृथिवीयश्चरु:। वैश्वदेवेभ्य: यावश्चरु:। अयञ्च पयसि श्रपणीय:। नवा व्रीहयो यवाश्चात्र प्रधानभूतानि द्रव्याणि। दक्षिणा चात्र भग्न: सन् पुना संस्कृतो रथ: क्षौमंवस्त्रम् मधुपर्कं, वर्षाधृतं वा वास:। क्षौमं वस्त्रम्, गोवत्सा, दक्षिणाग्निश्भृततण्डुलश्चेति दक्षिणेति जैमिनीया:। इस्टिरियं नित्या अस्या अनुष्ठानानन्तरमेवाहिताग्निर्नवान्नमश्नीयात्। अनाहिताग्नेरौपासनिकस्यापि कर्त्तव्यमिदं कर्मेति बोध्यम्। व्रीहयाग्रयण कृत्वा यवाग्रयणं यावत व्रीहिफिरेव सर्वे यागा अनुष्ठेया:। एवमेव यवाग्रयणानुष्ठानानन्तरं व्रीहयाग्रयणं यावत् यवैरेव सर्वे यागा: कर्त्तव्या इयि। नवान्नेष्टिरित्यपरमस्या नामधेयमिति दिक्।

**सौत्रामणी**—पशुयागेष्वेक: सौत्रामणी नाम सोमभिन्न: याग:। यागेष्टयो: सम्मिश्रणरूपोऽयमिति केचित्। सुत्रामा नाम देवता इन्द्रापर पर्याय:। सुत्राम्ण इयमित्यर्थे 'नस्येदम्' इत्यनेनाणि कृतेऽऽदिवृद्धौ ङीपि सौत्रामणो इति। अथव: सुत्रामादेवतास्येति विग्रहे 'सास्यदेवता' इत्यनेन तद्धितप्रत्यय:। अयञ्च याग: द्विविध:—स्वतन्त्रोऽङ्गभूतस्चेति। चयनानन्तरं तदङ्गरूपेणानुष्ठीयमानाऽयमङ्गभूता भवति। स्वतन्त्ररूपेणस्या एव यदानुष्ठानं भवति तदा प्रधानभूतेति। सा चेयं नित्या काम्या नैमित्तिकी चेति भेदात् त्रिविधा विद्यते। तत्र किञ्चित्फलमनुद्दिश्य कर्त्तव्यत्वेन विहिता

हविर्यज्ञान्तर्गता नित्या। इयमेव यदि ऋद्धयादिफलोद्देशेनानुष्ठीमाना भवति तर्हि काम्या सज्जायते। एवं सोमवमनादिषु निमित्तेषूत्पन्नेषु तदन्तरमनुष्ठेयतया विहिता नैमित्तिकी भवति, निमित्तप्राप्तवात्। स्वतन्त्ररूपेणानुष्ठीयमानायां सौत्रामण्यां केवलं ब्राह्मणस्यैवाधिकारः। परन्तु अङ्गभूतायां सौत्रामण्यां द्विजातिमात्रस्याधिकारः। अत्र अजो मेष ऋषभश्चेति त्रयः पशवः भवन्ति। तथैव यथा—संख्यमश्विनौ सरस्वती इन्द्रश्च देवतेति। एतस्यैव पशुसमुदायस्य सौत्रामणी इति संज्ञां वदन्ति अन्यत्र च इन्द्रस्थाने इन्द्रः सुत्रामा देवतेति दृश्यते। एतदेव युक्तं प्रतीमः, व्युत्पत्तेः चारितार्थ्यात्। त्रिपशुकामिमां सौत्रामणीं नित्यामभिदधाति आपस्तवः। कौकिलचरणभेदादपि सौत्रामणी द्विविधा। कौकिलसौत्रामणी पञ्चपमुका भवति। तत्र प्रथमः पशुरैन्द्र, अन्तिमश्च वायोधस इति। शेषं पूर्ववत्। कात्यायनेन पञ्चमपशुका प्रधानभूता भवतीति प्रतिपादिता। आपस्तम्बेन च त्रिपशुकायाः प्राधान्यमभिहितम्। तस्मादयं निष्कर्षः—कात्यापनीयानाम्मते पञ्चपशुका नित्या। आपस्तम्वानुयायिम्मते त्रियपशुका नित्येति। अत्र च प्रथमत आदित्यश्चरुः, तदन्तरमैन्द्रः पशुरनुष्ठेयः। अथवा वैपरीत्येनाटयनुष्ठातुं शक्यते। दिनचतुष्टयेण्त्रयं सम्पन्नो भवति। अध्वर्युः, ब्रह्मा, होता, अग्नोत्, अग्नीत्, प्रतिप्रस्थाता, मैत्रावरुणश्चेति षड् ऋत्विजः भवन्ति। अत्र च तत्रः पयोग्रहाः त्रयः सुराग्रहाश्चोपयुज्यन्ते। अश्विनौ, सरस्वती, इन्द्र, सुत्रामा चेति ग्रहाणां देवताः विपन्ते। प्रयोगमध्ये होमसम्पादनार्थं सुरापि निष्पाद्यते। प्रथमदिने अर्थात् द्वादश्यां ऐन्द्रेण पशुना सह अनुष्ठानक्रमे निकल्प्यते। ऐन्द्रं पशुमनुष्ठाय चरुरनुष्ठेयः। अथवा चरुमनुष्ठाय ऐन्द्रो पशुश्नुष्ठेयः। चरोरस्यान्तेऽप्यनुष्ठानं भवति। त्रिपशुदेशाद्दक्षिणतो ऐन्द्रपशोरनुष्ठानदेशः। सौत्रामण्यां पयीग्रहैः सह सुराग्रहाणमपि विधानं दृश्यते, परन्तु स्मृतिपुराणादौ निषिद्धत्वात् शिष्टैरननुष्ठानाच्च नास्माकं श्रेयसे कल्पते। अतः सुराग्रहाः नैव प्रयोक्तव्याः। तत्स्थाने 'पयोग्रहः वा स्युः' (१९.२.२३) इत्यनेनापस्तम्ववचनेन पयोग्रहाणामेवादानं कर्त्तव्यम्। तथेव चाचरन्ति आपस्तम्वनुयायिनः। कात्यायनीयैरपि 'अनुक्तमन्यतो ग्राह्यम्' इति न्यायेन तमेव पक्षं स्वीकृत्यानुष्ठेया सौत्रामणी। एवमेव वाजपेयेऽपि सुराग्रहस्यास्ति विधानम्, परन्तु कलौ सुरायाः वर्जितत्वात् तद्विकल्पस्याप्यनभिधात् वाजपेये नास्त्यधिकारः कलाविति युक्तम्। ननु सौत्रामण्यां निषेधे कथं सर्वत्र निषेधः सेत्स्यतीति चेत् न। त्रहैकत्वन्यायस्यश्रयणीयत्वात्। याज्ञिकानां तावदियं प्रक्रिया—ताम्रपात्रस्थं दुग्धं सुरासमं भवतीति स्मृतिपुराणादौ प्रतिपादितम्। अतः तत्पयः

ताम्रमात्रे गृहीत्वा प्रतिनिदधाति। तेनैव प्रतिनिधिभूतेन सुराग्रहेण सह सोमग्रहं गृहीत्वा वाजपेयमनुतिष्ठन्ति। अत्र नास्ति कश्चिद् दोष इति।

ननु स्मृतपुराणादीनां यागानुष्ठानं प्रति कथं प्रामाण्यमिति चेत्। न स्मृतिप्रामाण्याधिकरणन्यायेन वेदमूलकत्वेनैव तेषामपि धर्माधर्मयोः प्रामाण्यस्वीकारात्। सौत्रामण्यङ्गभूतपशुपुरोडाशयागे तद्भिन्ना यागीय-पशूपुरोडाशवत् पशुयागीयाः देवताः न भवन्ति, अपि तु इन्द्रो वरुणः सविता चेति देवता। इवमेव च पश्चपशुका सौत्रमणी कौकिवली नाम्ना व्यवहृता आपस्तम्बेन।

चरणसौत्रामणी—इयञ्च राजसूयाङ्गभूता भवति। अतएव त्रय एव पशवः भवन्ति। अन्यत्सर्वमनुष्ठान समानमेव। अत यादृशीव्यवस्था कौकिलीसौत्रामण्यां वर्त्तते तादृशी एवास्यामपीति बोध्यम्।

[यद्यपि अग्न्याधेयं सर्वप्राथम्येन परिगणितं दृश्यते। अतोऽस्य निरूपणमपि प्रथममेवावश्यकम् तथापि मूलहस्तलेखानुरोधात् अग्निहोत्र-दर्शपूर्णमासानन्तरं चातुर्मास्यस्य, क्रमप्राप्तत्वात् तेनैव कमेण निरूपणमत्र परिशिष्टे कृतम्। अग्न्याधेयं न प्रतिपादितम्। प्रतिपाद्यश्च वर्त्तते। अतोऽत्र भिन्नक्रमेऽपि निवेशितम्। ]

**अथाग्न्याधेयम्**—अग्न्याधेयमिति मन्थनोत्पादनस्थापनादिसमुदायस्य कर्मनायधेयम्। आहवनीयशब्दय संस्कार एव प्रवृत्तिनिमित्तम् न तु जायिर्योगवा। अतएव 'अतश्च यावान् कश्चिद् दृष्टार्थोऽदृष्टार्थो वा तत्संस्मारायाम्नायते स सर्वोऽग्न्याधेयशब्दवाच्यः 'इति कर्कः। अग्न्याधेय-स्य चामानास्याकालत्वेन विहिता वर्त्तते तथापि गौण्या वृत्त्या प्रतिप-द्विषयोऽपि, 'यदहरेवैष न पुरस्तान्न पश्चाद् दृश्येत तदहरुपवसेत्' इति वचनप्रामाण्यात्। अयमभिप्रायः—रङ्गभूतानि कानिचित् कर्माणि अमायां भवति। ततश्च प्रधानभूतानि कार्याणि प्रतिपदि सम्पाद्यन्ते। अत्र कृतिकारोनिणीभृगशिरःफल्गुनीनक्षत्राणि सामान्यरूपेण विहितानि सन्ति। अत्र फल्गुनीशब्देन पूर्वोत्तरा ग्राह्या। कृत्तिकन्स्वग्नी आदधीत' इति निरपेक्षविधानदर्शनात् विकल्पोऽप्यत्र बोध्यः। 'अथ यो नक्षत्र आधत्ते' इत्यादिप्रामाण्यात् नक्षत्रविकल्पोऽपि बोध्यः' तत्तद्विशेषकामनावशेनान्या-न्यपि नक्षत्राणि विहितानि दृश्यन्ते। यथा—लाभकामः पुरषः हस्तनक्षत्रे-

—२६—

ऽऽदध्यात्। लाभशब्देनात्र विशेषलाभ एव गृह्यते 'य इच्छेत् प्र मे दीयते' इत्यनेन प्रतिग्राहर्थबोधनात् ब्राह्मणविषयोऽयमिति कर्कः। लाभकामः क्षत्रियः चित्रायामादधीत। 'तस्माद् ब्राह्मणो वसन्त आदधीत। तथा 'ब्राह्मवर्चसकामो वसन्त आदधीत' इत्याभ्यां वचनाभ्यां ब्राह्मणः ब्रह्मवर्चस-कामश्चवसन्तौ आदध्यात्। सकामनिष्कामयोर्ब्राह्मणयोरत्र ग्रहणमिति कर्कः क्षत्रियो वा श्रीकामपुरुषो वा ग्रीष्मेऽऽदध्यात्। 'तस्मात् क्षत्रियो ग्रीष्म आदधीत' तथा 'श्रीकामो ग्रीष्म आदधीत' इति वचने प्रमाणभूतेऽत्र। श्रीकाम 'इत्यत्र विशेषानवगमात् सर्वविषयमिदंवचनमिति। एवमेव प्रजाकामः, पशुकामः, वैश्यः, रथकारश्च वर्षर्त्तौ आदधीत। कामसम्बन्धश्च सर्वैः सह, न केवलाभ्यां वैश्यरथकाराभ्यां निष्कामयोरपि वैश्यरथकारयो-राधानविधानात्। आधानार्थं गृहश्च निर्मातव्यं भवति। तच्च उदक्वंशं प्राग्वंशं वा भवेत्। दक्षिणस्यां पूर्वस्याञ्च द्वारे भवनः। पौर्णमासवत् अशिखं वपनं विहितम्। क्षौमं अहतं वा वस्त्रद्वयं यजमानः पत्नी च धारयति। परिसमाप्तेऽऽधाने तानि वस्त्राणि अध्वर्यवे देयानि। अरणिभ्यां मन्थनात् निष्पन्नोऽग्निम्। तत्रागारे संस्थापयति। अथवा वैश्यकुलात् लौकिकोऽग्निः हुतोच्छिष्टो का परिगृह्यते अथवा अम्बरीषात् अम्बरीषो भ्राष्ट्रापरपर्यायः। अथवा महानसाद्वा अग्निपरिग्रहः, लौकिकसत्रवत्। यो पुरुषोऽन्याधेयमनुष्ठास्यति स दिवा रात्रौ वा यथाकाममश्नीयादिति योजनाविकल्पः। ततश्च पित्राह्वानम्। अग्न्यागारे पूर्वद्वारेण प्रविशति यजमानः, दक्षिणद्वारेण च पत्नी। अग्नेः पश्चाद्यागादागत्य दक्षिणतः पत्नी उपतिष्ठति। ततश्चाग्निमन्थनं भवति। तदर्थं यजमानाय शमीगर्भाश्वत्थ-त्थकाष्ठनिर्मितारणी प्रयच्छति। शमीगर्भाश्वत्थाभावेऽश्वत्थमात्रस्य ग्रहणं भवति। ततश्च वाग्यमनम्। गार्हपत्यागारेऽजं गध्नातीति केषाञ्चिन्मतम्। ततश्च रक्तानडुहे चर्मणि चत्वारि हविष्ययात्राणि मिमीते। 'अथ चातुष्प्राश्यमोदनं पचन्ति' 'तं चातुष्प्राश्यं पचति' इति वचनप्रामाण्यात् हविष्यशब्देन व्रीहीणामेव ग्रहणम्, न तु यवानाम्। ततः 'समिधाग्निनम्' इत्यादिमन्त्रेण घृताक्तस्तिस्रः समिधः आदधाति। अध्वर्युः 'उप त्वे ति ऋचं 'समिद्धाये०' इति वा ऋचं जपति। यजमानः जपं करोतित्यीच्छन्ति केचित्। तमोदनं चत्वार ऋत्विजः प्राश्नान्ति। तदनन्तरं 'राद्धस्ते' इति ब्रह्मौदनः' इति यजमानं प्रति अध्वर्युकर्तृकः प्रैषः। ततश्च यजमात ऋत्विग्भ्यो वरदानं करोति। ततश्च रात्रौ दम्पत्योः जागरणं अग्नि-धारणञ्च भवति। तत अपरस्मिन् दिने दक्षिणाग्निकुण्डेऽग्निस्यायनम्। ततश्च पुनः उपशमिताग्नेः स्थाने स्फ्येन रेखोल्लेखः, तदुपरि च हिरण्यं

निदधाति । क्षारमृत्तिकाभिश्च आखुकीर्णपांसुभिः शर्कराभिश्च वृत्तत्रय-निर्माणम् । शर्करात्र क्षुद्रपाषाणाः । एवमेवाहवनीयदक्षिणाग्न्योः स्थानेऽपि सम्पादनीये सूर्ये उदिदे सति गार्हपत्यकुण्डस्य समक्षमश्वं संस्थाप्य तस्यैव कुण्डस्य पश्चाद्भागेऽध्वर्युरग्निमन्थनं कुर्वीत । तदनन्तरमध्वर्यवेवरदानम् । यजमानः समृद्धयर्थमुत्पन्नमग्निं फूत्कुर्यात् । कार्यमिदं समन्त्रकं भवति । इदमेव च निःश्वासशब्देनोच्यते । अनन्तरञ्चोच्छ्वासः । वायूपादान-मुच्छ्वासः । यजमानस्यायं संस्कारः । मथितं तमग्निं समिद्भिः प्रज्जवलन्तं 'यद्यङ्गिरा अङ्गिरसां त्वा देवानाम् अथवा यदिभृगवः तर्हि' भृगूणां त्वा देवानां व्रतपते व्रतेनादधे । इति मन्त्रेण सम्भारेष्वाद धाति । प्रसङ्गेऽत्र यदि आधानकर्त्ता क्षत्रियो वर्त्तते तर्हि 'वरुणस्य त्वा देवानां व्रतपते व्रते-नादधे' इति । यदि राजन्यः, तर्हि 'इन्द्रस्य त्वा व्रतपते व्रतेनादधो' इति । ब्राह्मणात् क्षत्रियायां जातः राजन्यः । यदि वैश्य आदधाति, 'मनोष्ट्वा ग्रामण्यः देवानां व्रतयते व्रतेनादधे' इति ब्रूयात् । यदि रथकारस्तर्हि 'ऋभूणां त्वा देवानां व्रतायते व्रतेनादधे' इति ब्रूयात्' तत अध्वर्युणा प्रेषितः सन् रथन्तरं गायेत् । अध्वर्युरिति केचित् 'तन्न' ब्राह्मणः वेतत्रयसम्बन्धात्' इति गार्हपत्याधानम् ।

**अथाहवनीयाधानम्**—गार्हपत्याग्नौ इध्म प्रज्वाल्य तस्याग्रभागं कर्परास्वादधाति 'ततश्चाहवनीयोद्धरणं कुर्वीत' धूमः यजमानं प्रति यथा गच्छेत् तथैवाचरितव्यम् । ततश्चाध्वर्युः ब्रह्माणं प्रैषं ददाति । ब्रह्मा च तदनन्तरं वामदेव्यं साम गायति । मन्थनकाले उद्धरणकाले चानीतोऽश्वः आहवनीयस्याग्रतो गच्छेत् । अश्वं सम्भारानाक्रमयेत् । ततः बृहत्साम गानार्थं ब्रह्माणं प्रेष्यति । ततश्चाश्वपदस्पर्शनम् । तत्रैव च समन्त्रकमग्न्या-धानम् । इत्याहवनीयाधानम् ।

आधानसमये च यजमानान्वारम्भः । यजमानश्च 'द्यौरिव भूम्ने' इति मंत्रं पठेत् । ततः सार्पराक्षोणामभिमन्त्रैरूपस्थापनं कुर्यात् । एतद-न्तरञ्च दक्षिणाग्न्याधारम् । अत्राग्निमन्थनानन्तरं ·भ्यमग्निमादध्यात् । गां पणं कृत्वा ऋत्विजां द्यूतक्रीडनं भवति । एवमग्न्याधानं सम्पाद्य खत्तराङ्गानि अनुष्ठेयानि । तत्र श्यैतवारवन्तीययज्ञायज्ञियसाम्नां गानम् । अग्निपरिक्रमणम् । अश्वोत्सर्गः तूष्णीमग्निहोत्रम्, पूर्णाहुतिः, वरदानम्, वाग्विसर्गश्च । तदनन्तरं 'अग्नये । पवमानाय, अग्नये पावकाय, अग्नये शुचये' इति तिस्तः पवमानेष्टयः भवन्यि । सर्वत्र चाष्टाकपालः पुराडाशो

द्रव्यम् । अदितिदेवताकश्चरुद्रव्यकश्च यागो भवति । पवमानेष्टीनामग्नि-सम्पादकत्वमिति शवरस्वामिनः । आधानाङ्गत्वमिति भट्टपादा । इत्युभयोर्विशेषः । एषु गार्हपत्यस्याजीवनं सन्ततं धारणं भवति । तत एवनीय क्रत्वनुष्ठानमपि भवति पश्चात् । प्रतीष्टिविभागेन षड् द्वादश चतुर्विंशतिर्वा दक्षिणा भवति । तदरिक्तं च 'भूयसीश्च यथाश्रद्धम्' इति न्यायेन भूयसीदक्षिणा प्रदातव्या । एता दक्षिणा इष्टयङ्गभूता भवन्ति, न त्वाधानाङ्गभूता । 'स एष यज्ञो हतो न ददक्षे तं देवा दक्षिणाभिरदक्षयन्' इति मन्त्रलिङ्गात्' 'नानृतं वदेत्' 'अप्रणोद्योऽतिथिः' इति स्मृतिभ्याम-नृतवदनादेर्निषेधः । पूतिशब्दस्य दुर्गन्धवाचकत्वात् तद्युक्तद्रव्याणि निषिद्धानि सन्ति । 'योऽमृवीसे पृथिव्यामग्निः' इति नैरुक्तवचनात् पृथिव्याः गर्त्ते पक्वं फलादिकं परिहरेत् । 'स यदुधृतेऽनावभ्यागतो नोदकं याचन्ते' इति मन्त्रलिङ्गात् अग्निहोत्रार्थमुद्धृतेऽग्नादुदकाननिषेधः । नौशब्दस्यात्रा-ग्निहोत्रविषयत्वात् 'नौर्ह वं एषा स्वर्ग्या यदग्निहोत्रम्' इति मन्त्रप्रामाण्यात् । आहिताग्निना यजमानेन द्वादशरात्रं षड्रात्रमन्तिमपक्षे । त्रिरात्र वा ब्रह्मचारिणा भाव्यम् । दुग्धेनैवाग्निहोत्रं कुर्यात् तथाग्निसमीपे एव च भूमौ शयीत । यते चात्र पुरुषार्थाः, क्रत्वर्थाः ।

## इत्यग्न्याधेम्

**अथ पिण्डपितृयज्ञः** —पिण्डैः पितॄणां यज्ञ इति यौगिकी समाख्या । तथैवार्थानुगमात् । तथापि पिण्डपितृयज्ञ इति कर्मनामधेयं भवति । पौर्णमासस्यपूर्वमनुष्ठानं भवति ततश्च दर्शानुष्ठानम् । दर्शानुष्ठात्पूर्वं पिण्डपितृयज्ञानुष्ठानं भवति । तच्चापरान्हे एवेति 'अपरान्हे पिण्डपितृयज्ञ-श्चन्द्रादर्शनेऽमावस्ययाम्' इति कालविषये सूत्रितं सूत्रकारेण । अन्होऽपरो भागोऽपरान्हः । केच्चिच् अह्नः तृतीयभाग इति व्याचक्षते । 'अपरान्हः पितॄणाम्' इति वचनप्रामाण्यात् । पितॄनुद्दिश्य पिण्डदानस्यैवात्राभिधानम्, न जपहोमादीनाम् । 'मासि मासि वोऽशनम्' इत्यारभ्य 'पदैवैश न पुरास्तान्न पश्चाद्ददृशऽन्यैभ्यो ददाति' इति मन्त्रलिङ्गात् अमावास्यायां सत्यां चन्द्रदर्शनं यदा भवेत्तदैवानुष्ठेयोऽयं यज्ञः 'यदैवैष' इत्यादिना परमस्त क्षयस्य वोधो भवति । 'तस्मिन् क्षीणे ददाति' इत्यपि श्रूयते । अन्यत्र च प्रात्यहिक क्षयस्यैव वोधः । तस्मात् परमक्षयविशिष्टे काले पिण्डपितृयज्ञा-नुष्ठानमिति । खर्विकानाम्न्याममावस्ययां यद्यपि चन्द्रमा दृश्यते पूर्वान्हे तथापि अपरान्हे परमज्ञयस्य दृष्टत्वात् तत्राप्यनुष्ठीयत एवायं यज्ञः । अत्र

दक्षिणावेव श्रयणहोमो भवतः, न गार्हपत्याहवनीयादौ। ततश्चैकैकशः परिस्तृणाति । 'अपूर्णं पितृणाम्' इति वचनेन चरोः स्तुचश्चापूर्णतापि दृष्यतेऽत्र तूष्णीमेव तयोः ग्रहणं विहितम् । तत्रापूर्वत्वान्मन्त्रप्राप्तस्तु नास्त्येव, लौकिकवागुच्चारणमपि न भवति। ततश्च फलीकरणं भवति। पुनः पुनर्लोकप्राप्तमेव फलीकरणमत्र। तच्चापि सकृदेव । 'श्रृताश्रृतं पितृणाम्' इति वचनेन ईषत् श्रपितमेव तण्डुलं भवति। अतएव सूत्रकारः 'अपूर्णं श्रपयित्वा' इति । ततश्च तण्डुलश्रपणानन्तरमाज्येनाभिघारणं कुर्यात्। अत्र नास्ति कश्चिन्नियमविशेषः। ततश्च पितृकर्मत्वात् दक्षिणत उद्वासनं कुर्वीत। अग्नये सोमाय च मेक्षणेन जुहोति। स च होमः 'काव्यवाहनाय पितृमते' इति वचनेन पितृसम्बन्धात पित्र्यकर्मवदेव कर्त्तव्य इति। ततश्च 'अपहता' इत्यादिना मन्त्रेण रेखोल्लेखान्तरं तदनन्तरं 'ये रूपाणि' इत्यादिना च उलमुकपरिभ्रमणं कार्यम्। ततश्चायसत्यं भूत्वा उदपात्रमादाय पितृतीर्थेनावनेजनं दद्यात् । 'असाववनेनिक्ष्व' इत्युक्त्वा यजमानस्य पितापितामहं यावत् त्रीनवनेजयति । ततश्च यथावनेजनं पिण्डान् प्रददाति तत्र च 'असावेतत्ते पिण्ड' इत्यादि वदति यत्र ये च त्वमनु' इत्यादि मन्त्रं पठन्ति केचित्। ततः पितृसम्मुखं अत्र पितरः इत्यादिमन्त्र-मुक्त्वा अप्रदक्षिणक्रमेणोत्तरदिशि गत्वा तिष्ठेत्। तेनैव च मार्गेणावर्त्तनं कृत्वा 'अमीमदन्त' इत्यादिमन्त्रं जपति। ततश्च पुनश्वनेजनक्रमेण प्रत्यवनेजनं कुर्यात्। नीविं विस्रंसति ततश्च 'नमो व' इत्याद्युक्त्वाञ्जलिं वद्ध्वा नमस्करोति। षटकृत्वो नमस्करोति' इति वचनेन प्रतिनमस्कारम-ञ्जलिकरणम्। महापितृयज्ञे 'षड् वा नमस्कारान्' कात्यायनेनाप्युक्तम्। ततश्च प्रतिपिण्डं त्रीणि सूत्राणि 'एतद्वो वास' इत्युक्त्वा प्रदद्यात्। अथवा ऊणर्वासूत्राणि, तदभावे उत्तरे वयसि स्थितस्य यजमानस्य लोमान्यपि दद्यात्। ततः 'तर्पयत मे पितृन्' इति मन्त्रलिङ्गात् 'ऊर्जम् इत्यादि पठित्वा पिण्डमूलेषु जलं ददाति। ततो यजमानः पिण्डानि अवजिघ्रति' 'स यजमानभागः' इति वचतात् यजमानस्यैवायं संस्कारः 'अग्नौ सकृदाच्छ-न्नानि' इति वचनप्रामाण्यात् आच्छिन्नानि आस्तृणानि सर्वाणि अग्नौ आदध्यादिति प्रसवसमर्था पुत्रकामा यजमानपत्नी 'आधत्ते' इत्यादि पठित्वा पैतामहं मध्यमपिण्डं प्राश्नाति। पितृकर्मणि मृतपितृकस्यैवाधिकार इति सर्वसम्मतम्, तथाप्यत्रानुष्ठाने जीवत्पितृकोऽप्यधिक्रियन्ते इति विशेषः। मतमिदं कात्यायनस्य प्रतिभाति जीवत्पितृकस्य होमान्तमेव कर्मानुष्ठेयं भवति। अथ वा जीवितेन पित्रा व्यवहितत्वात् तेषामनुष्ठानमेव 'न जीवन्तमति ददादि' इति श्रुतिप्रामाण्यात् 'न जीवन्तमतीत्य ददाति' इति

शाखान्वरेऽपि पठ्यते। तस्मान्न जीवत्पितृककर्त्तृकमिदं कर्म इति जातूकर्ण्यः। दर्शाङ्गत्वात्तस्मात्पूर्वमेव पिण्डपितृयज्ञानुष्ठानम। मन्त्र-वर्णोवर्णोप्यत्र भवति 'पूर्वेद्युः पितृभ्यो यज्ञं निष्क्रीय प्रातर्देवेभ्यः प्रतनुते' इति। यद्यपि दर्शाङ्गत्वेप्यनेके हेतवः दृश्यन्ते, यथा—पिण्डपितृयज्ञो न दर्शप्रकरणे पठयते। यदि दर्शाङ्गता भवेत्तर्हि प्रकरणपाठोऽपि भवेत्। नास्ति प्रकरणपाठः। अतोऽनङ्गत्वम्। कालभेदोऽपि, यथ—दर्शानुष्ठनं पूर्वान्हे, पिण्डपितृयज्ञस्य चानुष्ठानमपरान्हे। इति 'अङ्गानाञ्चैककालता दृश्यते। अतोप्यनङ्गत्वम् यस्मणा गृहीतः पौर्णमासेन यजेत' इत्यादिना मन्त्रवर्णेन दर्शं विनाप्यनुष्ठानं विहितमवलोक्यते। सत्यङ्गत्वेन स्वतन्त्रा-नुष्ठानं सम्भवम्। अतोऽप्यनङ्गत्वमस्य। 'कथं पितृयज्ञोऽनन्तरितो भवति' इत्यनेन दर्शाद् पृथगनुग्रहवचनं दृश्यते। यद्यङ्गत्वं स्यात्तर्हि अमावास्यानु-ग्रहेणैव पितृयज्ञोऽनुगृहीतो भवेत्। पृथगतुग्रहवचनं नोपलभ्यते अतोऽनङ्ग-त्वमेतस्य। 'अप्यनाहिताग्निना कार्यः' इत्यपि श्रूयते। यदि दर्शाङ्गत्वं स्यात्तर्हि दर्शं विनानुष्ठानं न प्रतिपाद्यते। प्रतिपाद्यते च 'अतोऽप्यनङ्गत्वं प्रसिद्धयति। परन्तु प्रमाणैरेतेरनङ्गत्वं प्रतिभाति, न त्वस्ति। तथाहि—वाक्येन प्रवलप्रामेण दुर्बलानां प्रकरणादीनां वाधान्नानङ्गत्वमस्य पितृ-यज्ञस्य। समभिव्यहाररूपेण वाक्येन दर्शाङ्गत्वं पितृयज्ञस्य सेत्स्यति। समित्येकीभावेनाभिव्याहरणं समभिव्यवहारो वाक्यमिति व्युत्पत्तिः। पूर्वेद्युः पितृभ्यो निष्क्रयं कृत्वा प्रातर्देवेभ्यः प्रतननं प्रतिपादितम्। यच्च येन विना न सम्भवति तत्तकर्थं भवति। अनेन प्रकारेण तादर्थ्यलक्षणं शेषत्वं सिद्धयति। तस्माच्छेषशेषीभावेन वाक्येन प्रमाणेनाङ्गत्वं भवष्यित्येव। न वारयितं शक्यते। प्रवर्ग्यसौत्रायणीवच्च प्रकरवान्तराधीमप्यङ्ग भवितु-मर्हत्येय। अग्निहोत्रार्थमुद्धरणं भवति न चैककालता उभयोः अनुग्रहवचन-श्चार्थवादत्वेप्युपपद्यते। तस्माद्दर्शाङ्गमेव पिण्डपितृयज्ञ इति। नात्र काच्छिङ्केति शम्।

## इति पिण्डपितृयज्ञसंक्षेपः

हविर्यज्ञसंस्थाः निरुप्य प्रसङ्गप्राप्तसोमयज्ञसंख्याः निरुप्यन्ते। तत्रापि सर्वप्रथमं सोमपदार्थं प्रस्तौति।

**सोमः**—सोममधिकृत्यानेकाः कल्पनाः वैदेशिकेषु प्रचलिताः सन्ति, परन्तु न ताः प्रामाण्यं भजन्ते। स्वकपोकल्पितत्वात् 'सोमः लताविशेष

इत्येकः। अपरश्च नवग्रहमध्ये सोमश्चन्द्रापरपर्यायः वर्त्तते 'लताभूतो सोमः पृथिव्यामुत्पद्यते' तस्या एव रसं निस्सार्य यागानुष्ठानं भवति। नवग्रहस्थः यः सोमः, स आकाशे एव तिष्ठति, न तस्य यागादिषु निश्च्योतनं सम्भवम्। अत उभयोः पर्यायत्वमत्र प्रसङ्गे न स्वीकारमर्हम्। यागादिषु रसरूप-द्रव्याभावात्। ये केचिद् वदन्ति पर्यायत्वम्, तन्न विचारसहमतएव। उभयोः सोमचन्द्रयोः कश्चन प्रगाढः सम्बन्धोऽस्तीति श्रूयते। ऋग्वेदे दशमस्य पञ्चाशीतेः प्रथमे द्वितीये च मन्त्रे उभयोः सम्बन्धः प्रतिपादितः दृश्यते। तमेव सम्बन्धमाश्रित्य कश्चित् पर्यायत्वेनापि व्यवहरित चेत् तदपि न दोषावहः 'यो अप्सु चन्द्रमा इव सोमश्चमूषु ददृशे (ऋ० ८.२८.८) इत्यत्रापि उपमानोपमेयभावः दृश्यते। एकस्मिन्नेव वस्तुनि उपमानोपमेय-भावस्यानौचित्यात् कश्चित् भिन्न एव पदार्थः परिकल्पनीयः। सोमो मा देवो कञ्चतु यमाहुश्चन्द्रमा' इति (अथर्व० १.१.६.७) मन्त्रेऽस्मिन् सोमापर-पर्यायत्वेन चन्द्रमसः वर्णनं विद्यते। सोमशब्ददर्शनमात्रेण सोमलतायाः भानं नैवं समुचितं प्रतिभाति। सोमलतया सह चन्द्रमसः सम्बन्धमधिकृत्य श्रूयते--यथा चन्द्रमस एकैकाकला चन्द्रमा तथैवास्यां लतायामपि एकैकं पत्रं निःसरति, पूर्णिमायाञ्च पञ्चदशपत्र सम्बलिता भवति। पुनश्च कृष्णपक्षे यथा चन्द्रमसएकैका कला प्रक्षीयमाणा भवति, अमायाञ्च सर्वकलाशातनं सञ्जायते तथैवास्यां लतायामपि कृष्णपक्षे एकैकं कृत्वा सर्वाणि पत्राणि विनष्टानि भवन्ति। अमायाञ्च निष्पत्रा भवतीयं लता। तस्मात्सादृश्यात् चन्द्रशब्देनापि कुत्रचित् व्यवह्रियत इत्यन्यदेतत्। चन्द्रेण सहास्याः सम्बन्ध ऋग्वेदे (१०.८५०.१-२) प्रतिपादितः। अतः सोमयागप्रशङ्गे प्रयुक्तः सोमशब्दः लतावचनः। शबरस्वामिनापि भाषितं भाष्ये—'सोमशब्दः क्षीरिण्ययां लतायां प्रसिद्धः' इति। तत्स्वरूपमप्युक्तमन्यत्र—

**श्यामला च निष्पत्रा क्षीरिणी त्वचि मांसला।**
**श्लेष्मला वमली वल्ली सोमाख्या छागभोजनम्॥** इति।

ऋग्वेदप्रणयनात्पूर्वस्यादेव सोमपरम्परा प्रचलिता आसीदिति यद्वदन्ति तत्तुच्छम्। वेदात्पूर्वं कस्यापि वस्तुनः सद्भावात्। भगवते नारायणस्य नाभिकमलात् ब्रह्मणः हिरण्यगर्भस्योत्पत्तिः श्रूयते दृश्यते च शास्त्रे। तदनन्तरं श्रूयते 'वेदांश्च प्रहिणोति तस्यै' इति। हिरण्यगर्भमुत्पाद्य तस्मै वेदान् प्रायच्छत्' तदनन्तरं तेनैव प्रदत्तेन वेदज्ञानेन सृष्टिं प्रारब्धवान्। ततश्चैव यज्ञानां वितानम, तर्हि कथं वक्तुं शक्यते वेदात्पूर्वमेव सोम-

परम्परेति। तदिदं प्रलापमात्रमेवेति मन्तव्यम्। सोमलता च प्राचीनकालादेव सुदुर्लभा आसीदिति प्रतीयते, न सर्वत्रोपलब्धा आसीत्। ऋग्वेदे स्थानद्वयं विनिर्दिष्टं दृश्यते। दशममण्डलस्य चतुस्त्रिंशत्तमेऽध्याये मूजवतः पर्वतस्य नाम आयाति यत्रसोमलता मिलतिस्म। अन्यच्च स्थानं सुषोमा नाम्नः नदीकूलं वर्त्तते। आर्गीकीयदेशे सोमलता समभूत् (ऋग्० ८.१६.४.१) इति। सोमलताप्राप्तौ कठिन्यमासीदिति गम्यते। अतएव शतपथब्राह्मणे (४.५.२०) सोमस्थावेऽनुकल्परूपेण फाल्गुनदूर्वाहरितकुशप्रभृतीनां विधानं दृश्यते। ताण्डब्राह्मणेऽपि (९.३३.) तत्स्थाने पूतीकस्य यद्वर्णनमवलोक्यते। एवमेवामेखलायनेऽपि (६.५.५१) दृश्यते। महाराष्ट्रदेशे सोमयागे सोमस्थाने रांशेरः प्रयुज्यते। भवतु नाम, तत्रानुकल्परूपेण या लता दृश्यते विहिता सैवोपयुज्यते तत्र। पूतीकादिष्वेव सोमे क्रियामाणान् सर्वान् संस्कारान् सम्यग् रूपेण कृत्वा अभिसुत्य च तद्रसेनैव यागानुष्ठानं सम्पाद्यते।

**ज्योतिष्टोमः**—'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति श्रूयते। वाक्यमिदं स्वर्गमुद्दिश्य ज्योतिष्टोमाभिन्नं यागं विधत्ते। तथा च स्वर्गयागयोः साध्यसाधनभावः प्रतीयते। अथश्चोभयोः सम्बन्धोऽलौकिकः, न लौकिकेन प्रमाणेनावगन्तुं शक्यते। इदमेव च वैशिष्टचम्। सप्त सोमसंस्थाः भवन्तीति पूर्वमेवोक्तम्। तत्राग्निष्टोमोक्थ्यषोडश्यतिरात्रेति चतसृणां संस्थानां ज्योतिष्टोम इति संज्ञा। ज्योतींषि एव स्तोमाः यस्य स ज्योटिष्टोम इति व्युत्पत्तिः। सामसाध्यस्तुतिः स्तोमशब्देनोच्यते। स्तोमा एव ज्योतिः पदाभिधेयाः। तदुक्तं ताण्डयब्राह्मणे (१.५.११) त्रिवृत्पञ्चदश सप्तदश एकविंश, एतानि वा व तानि ज्योतींषि य एतस्य स्तोमाः' इति। एते चत्वार स्तोमाः ज्योतिः पदे नाभिधीयन्ते। 'तिस्तो वृतः त्रिरूरावयवा यस्य स्तोमस्य स त्रिवृत्' इति तैत्तरीये ब्राह्मणे प्रतिपादितम्। एवमेव पञ्चदशादिसंख्या आवृत्त्या सम्पादनीया। त्रिवृत्स्तोमे साम्न आवृत्तिर्न भवति तथापि ऋचां जवत्वात् संख्यासाम्यमिति। एताश्चः संस्था अन्यासां संस्थानां प्रकृतिभुता सन्ति। एतास्वेवापोद्वापादिभिरपरास्तिस्तः संस्थाः सम्पाद्यन्ते। तत्रादावग्निष्टोमः निरुप्यते। ज्योतिष्टोमयागस्येयं प्रथमा संस्था भवति। यद्यपीयं संस्था दिनैकसाध्या एव तथापि अङ्गैः सहानुष्ठाने पञ्चदिनानि प्रयुज्यन्ते। षोडशर्त्विजोऽत्र भवन्ति। ऋत्विजः चतुर्षु गणेषु विभक्ता भवन्ति, यथा—अध्वर्युगणः, ब्राह्मगणः, होत्रगणः, उद्गातृगणश्चेति। प्रत्येकस्मिन् गणे चत्वार ऋत्विजः

भवन्ति। यथा—अध्वर्युगणेऽध्वर्युः, प्रतिप्रस्थाता, नेष्टा, उन्नेता इति चत्वारः। ब्रह्मगणे ब्रह्मा, ब्राह्मणाच्छंसी, आग्नीध्रः, पोता इति चत्वारः। होतृगणे होता, मैत्रावरुणः (प्रशास्ता) अच्छावाकः, ग्रावस्तुत् इति चत्वारः। उद्गातृगणे उद्गाता, प्रस्तोता, प्रतिहर्त्ता, सुब्रह्मण्यः इति चत्वारः। अध्वर्युर्ब्रह्महोत्रुद्गातारः गणपतयः भवन्ति। येन क्रमेणैते पठिताः सन्ति तेनैव क्रमेण परिगणनमपि भवति। यथा प्रथमः द्वितीयः तृतीयः चतुर्थ इति। अध्वर्युगणेऽध्वर्युः प्रथमः प्रतिप्रस्थाता द्वितीय इति। अयमेव कमः सर्वत्र वोध्यः। क्रमस्यास्य दक्षिणायामप्युपयोगो भवति। सम्पूर्ण दक्षिणा समांशत्वेन चतुर्षुगणेषु विभज्यते। तत्र पुनरध्वर्योरपेक्षया प्रतिप्रस्थात्रेऽर्द्धं नेष्ट्रे तृतीयांशमुन्नेत्रे चतुर्थांश इति। अतएवैषामर्द्धिन तृतीयिनः पादिन-इत्यपरापि संज्ञा भवति। अयमेव प्रकारोऽन्येष्वपि गणेष्वनुसर्त्तव्यः सोमयागे वेदत्रयाणामुपयोगो भवति। अन्यत्राग्निहोत्रपशुदर्शपूर्णमासादिषु वेदैकस्य वेदद्वयस्य वा उपयोगो दृश्यते। अग्निहोत्रे यजुर्वेद उपयुज्यते। दर्शपूर्णमासयोः ऋग्वेदयजुर्वेदयोरुपयोगः। केषाञ्चिन्मते तु केवलं यजुर्वेद-स्यैवोपयोगः। पशुयागे च ऋग्वेदयजुर्वेदयोरेव सम्बन्धः तस्मात् सोमयागे एव वेदत्रयसम्बन्ध इति सिद्धम्। तदुक्तमापस्तम्बेन—'यज्ञं व्याख्यास्यामः, स त्रिभिर्वेदैः' इति। अत्र सोमयागाभिप्रायेणैव त्रिभिर्वेदैरित्युक्तम्। याजुर्वैदिकं कर्मानुष्ठानायाध्वर्युगणो भवति। वाह्वृच्यकर्मसम्पादनाय-होतृगणः, सामवैदिककर्मकारणाय उद्गातृगण इति। एतैरनुष्ठीयमानं कर्मावेक्षितुं मनसा त्रुटीः पूरणार्थञ्च ब्रह्मगणस्य प्रयोजनम्। अग्निष्टोम इति साम्नः नामधेयम्। सामवेदे 'यज्ञायज्ञा वो अग्नये' इत्यस्मिन्नृचि गेयत्वेन विहितं साम अग्निष्टोमनाम्ना व्यपदिश्यते। अग्निष्टोटसंस्थाकत्वेनायं सोमयागोऽग्निष्टोम संज्ञया व्यपदिश्यते। संस्थाशब्दश्चात्र समाप्तिवचनः। अनेनैव साम्नाक्रतुः समाप्ति गच्छति। एतदनन्तरमन्यस्य साम्नः प्रयोगो न भवति। अतोऽग्निष्टोमसाम्ना समाप्यमानत्वादयं यागोऽपि तेनैव नाम्नः प्रसिद्धिंगतः। सर्वेषु सोमयागेष्वियमेव व्यवस्था दृश्यते नामधेयविषये। विषयोऽयमग्रे स्फुटीभविष्यति। ज्योतिष्टोमस्यास्यां संस्थायां द्वादश स्तोत्राणि द्वादश च शस्त्राणि भवन्ति। तथाहि—वहिष्पवमानस्तोत्रमेकम् 'उपास्मै' इति प्रथमं सूक्तम्। 'दवि द्युतत्या' इति द्वितीयम्। तृतीयञ्च 'पवमानस्य ते' इति। इमानि तृचात्मकानि सूक्तानि उत्तराग्रन्थे श्रुतानि। ज्योतिष्टोमयागस्य प्रातः सवनुष्ठानसमये सूक्तेष्वेतुषु गायत्रं नाम साम गातव्यमिति। सूक्तत्रयगानसाध्यमिदं स्तोत्रं वहिष्पवमानशब्देनोच्यते।

ऋत्विग्भ्यो मधुपर्कवदानम्। एतावत्पर्यन्तं कर्म गृहे एवानुष्ठीयते। ततोग्निसमारोपणम्। तदनन्तरं यज्ञस्थलीं गच्छन्ति यत्र सोमेन यियक्षति। गत्वा च तत्र सर्वप्रथमं शालानिर्माणदिकं कृत्वा अरणीं मथित्वा अग्निमुत्पादयेत्। ततोऽग्निं कुण्डेषु स्थापयेत्। अपरान्हे च दम्पत्योः स्वाभीष्टभोजनं भवति। अस्मिन् दिने भोजनानन्तरं पुनश्चतुर्षु दिनेषूपवास एव भवति। पुनश्चयोर्दम्पत्योरवभृथस्नानानन्तरमेवाभीष्टभोजनम्। मध्ये च चतुर्षु दिनेषु व्रतप्राशनमेव विहितम्। ततः यजमानस्य वपनं स्नानञ्च। ततः दीक्षणीयेष्टिरनुष्ठीयते। इष्टौ यास्यमग्नावैष्णव एकादशकपालः पुरोडाशो द्रव्यम्, अग्नाविष्णू च देवते भवतः। दृष्टिसम्पादनानन्तरं दम्पत्योः आपादमस्तकं नवनीतेनाभ्यञ्जनम्। पुनश्च तयोः मुष्टिवन्धनम्। प्रङ्गेऽत्र हस्तद्वयेऽपि सर्वासामङ्गुलीनां वन्धनं भवति। परं अङ्गुष्ठप्रदेशिनी परित्यक्ते भवतः। वन्धनञ्च वस्त्रादिना भवति। वन्धनमिदं माध्यन्दिनसवनं यावत् तिष्ठति। वद्धमुष्टिभ्यामेव दम्पतिभ्यां सर्वाणि कर्माणि सम्पादनीयानि भवति ततश्चौदग्रभणहोमा अनुष्ठेयाः। तदनन्तरं कृष्णाजिनादिदीक्षा। अत्र कर्मणि केवलः यजमानः कृष्वाजिनमारुध्य मेखलां वध्नाति। शिरसश्चोष्णीषेण प्रावरणं करोति। अत्र पत्नी न भवति। पत्न्यै च मेखलायोक्त्रयोरन्यतरस्य वन्धनं विहितम् तथा शिरसि जालस्योष्णीषस्य वा प्रावरणमिति वैकल्पिको व्यवस्था। गात्रखर्जनार्थं कृष्णमृगश्रृङ्गमेकं भवति। तच्च परिधानीयवस्त्रान्ते वदध्वा संरक्षेत्। कण्डूयने च प्राप्ते तेनैव कण्डूयनं कर्त्तव्यम्। ततः यजमानः दण्डधारणं करोति। पुनश्च सायंकाले प्रतिप्रस्थाता 'दीक्षितोऽयं ब्राह्मणः' इत्युच्चैर्निवेदयेत्। यदि क्षत्रियवैश्यावपि यजमानौ स्याताम्, तथापि 'ब्राह्मणः' इत्येव निवेदनमिति विशेषः दीक्षानन्तरमवभृथं यावत् दन्तधावनस्नानानाग्निहोतृहोमदर्शपूर्णमासादिवैश्वदेवार्थपाकस्मार्त्तोपासनानुष्ठानदानशूद्रसम्भाषणप्रत्यु - त्थानाभिवादजलावगाहनानि न कर्त्तव्यानत्यायस्तम्बेन (१२.१०.१६) निषिद्धानि।

**महावीरसम्भरणम्**—यद्यपि महावीरः प्रवर्ग्याख्ये होमे प्रयुज्यते। प्रवर्ग्याख्यः होमः द्वितोग्रदिनेऽनुष्ठीयते, :तथापि तन्निर्माणमद्यैव भवति। प्रवर्ग्याख्यहोमसम्पादनार्थं यत्पात्रं तन्महावीरशब्देनोच्यते, न तु महांश्चासौ वीर इति। तन्निर्माणञ्चाद्यैव भवति। तच्चोलूखलाकृति प्रादेशमात्रमुच्चं नवाङ्गुलिपरिमितमुपरि मेखलासम्वलितं मध्येडमरुवत् संगृहीतं तथा गर्त्तयुक्तं पात्रं भवति। अत्र दध्यादिप्रक्षेपणं सम्भवेत्। तदर्थं मृत्तिका

भवन्ति। यथा—अध्वर्युगणेऽध्वर्युः, प्रतिप्रस्थाता, नेष्टा, उन्नेता इति चत्वारः। ब्रह्मगणे ब्रह्मा, ब्राह्मणाच्छंसी, आग्नीध्रः, पोता इति चत्वारः। होतृगणे होता, मैत्रावरुणः (प्रशास्ता) अच्छावाकः, ग्रावस्तुत् इति चत्वारः। उद्गातृगणे उद्गाता, प्रस्तोता, प्रतिहर्त्ता, सुब्रह्मण्यः इति चत्वारः। अध्वर्युर्ब्रह्महोतृद्गातारः गणपतयः भवन्ति। येन क्रमेणैते पठिताः सन्ति तेनैव क्रमेण परिगणनमपि भवति। यथा प्रथमः द्वितीयः तृतीयः चतुर्थ इति। अध्वर्युगणेऽध्वर्युः प्रथमः प्रतिप्रस्थाता द्वितीय इति। अयमेव कमः सर्वत्र बोध्यः। क्रमस्यास्य दक्षिणायामप्युपयोगो भवति। सम्पूर्ण दक्षिणा समांशत्वेन चतुर्षुगणेषु विभज्यते। तत्र पुनरध्वर्योरपेक्षया प्रतिप्रस्थात्रेऽर्द्धं नेष्ट्रे तृतीयांशमुन्नेत्रे चतुर्थांश इति। अतएवैषामर्द्धिन तृतीयिनः पादिन-इत्यपरापि संज्ञा भवति। अयमेव प्रकारोऽन्येष्वपि गणेष्वनुसर्त्तव्यः सोमयागे वेदत्रयाणामुपयोगो भवति। अन्यत्राग्निहोत्रपशुदर्शपूर्णमासादिषु वेदैकस्य वेदद्वयस्य वा उपयोगो दृश्यते। अग्निहोत्रे यजुर्वेद उपयुज्यते। दर्शपूर्णमासयोः ऋग्वेदयजुर्वेदयोरुपयोगः। केषाञ्चिन्मते तु केवलं यजुर्वेद-स्यैवोपयोगः। पशुयागे च ऋग्वेदयजुर्वेदयोरेव सम्बन्धः तस्मात् सोमयागे एव वेदत्रयसम्बन्ध इति सिद्धम्। तदुक्तमायस्तम्बेन—'यज्ञं व्याख्यास्यामः, स त्रिभिर्वेदैः' इति। अत्र सोमयागाभिप्रायेणैव त्रिभिर्वेदैरित्युक्तम्। याजुर्वैदिकं कर्मानुष्ठानायाध्वर्युगणो भवति। वाह्वृच्यकर्मसम्पादनाय-होतृगणः, सामवैदिककर्मकारणाय उद्गातृगण इति। एतैरनुष्ठीयमानं कर्मावेक्षितुं मनसा त्रुटीः पूरणार्थञ्च ब्रह्मगणस्य प्रयोजनम्। अग्निष्टोम इति साम्नः नामधेयम्। सामवेदे 'यज्ञायज्ञा वो अग्नये' इत्यस्मिनृचि गेयत्वेन विहितं साम अग्निष्टोमनाम्ना व्यपदिश्यते। अग्निष्टोटसंस्थाकत्वेनायं सोमयागोऽग्निष्टोम संज्ञया व्यपदिश्यते। संस्थाशब्दश्चात्र समाप्तिवचनः। अनेनैव साम्नाक्रतुः समाप्ति गच्छति। एतदनन्तरमन्यस्य साम्नः प्रयोगो न भवति। अतोऽग्निष्टोमसाम्ना समाप्यमानत्वादयं यागोऽपि तेनैव नाम्नः प्रसिद्धिंगतः। सर्वेषु सोमयागेष्वियमेव व्यवस्था दृश्यते नामधेयविषये। विषयोऽयमग्रे स्फुटीभविष्यति। ज्योतिष्टोमस्यास्यां संस्थायां द्वादश स्तोत्राणि द्वादश च शस्त्राणि भवन्ति। तथाहि—बहिष्पवमानस्तोत्रमेकम् 'उपास्मै' इति प्रथमं सूक्तम्। 'दवि द्युतत्या' इति द्वितीयम्। तृतीयञ्च 'पवमानस्य ते' इति। इमानि तृचात्मकानि सूक्तानि उत्तराग्रन्थे श्रुतानि। ज्योतिष्टोमयागस्य प्रातः सवनुष्ठानसमये सूक्तेष्वेतुषु गायत्रं नाम साम गातव्यमिति। सूक्तत्रयगानसाध्यमिदं स्तोत्रं बहिष्पवमानशब्देनोच्यते।

ऋत्विग्भ्यो मधुपर्कवदानम्। एतावत्पर्यन्तं कर्म गृहे एवानुष्ठीयते। ततोग्निसमारोपणम्। तदनन्नरं यज्ञस्थलीं गच्छन्ति यत्र सोमेन यियक्षति। गत्वा च तत्र सर्वप्रथमं शालानिर्माणादिकं कृत्वा अरणीं मथित्वा अग्निमुत्पादयेत्। ततोऽग्निं कुण्डेषु स्थापयेत्। अपरान्हे च दम्पत्योः स्वाभीष्टभोजनं भवति। अस्मिन् दिने भोजनानन्तरं पुनश्चतुर्षु दिनेषुपवास एव भवति। पुनश्चयोर्दम्पत्योरवभृथस्नानानन्तरमेवाभीष्टभोजनम्। मध्ये च चतुर्षु दिनेषु व्रतप्राशनमेव विहितम्। ततः यजमानस्य वपनं स्नानञ्च। ततः दीक्षणीयेष्टिरनुष्ठीयते। इष्टौ यास्यमग्नावैष्णव एकादशकपालः पुरोडाशो द्रव्यम्, अग्नाविष्णू च देवते भवतः। दृष्टिसम्पादनानन्तरं दम्पत्योः आपादमस्तकं नवनीतेनाभ्यञ्जनम्। पुनश्च तयोः मुष्टिवन्धनम्। प्रङ्गेऽत्र हस्तद्वयेऽपि सर्वासामङ्गुलीनां वन्धनं भवति। परं अङ्गुष्ठप्रदेशिनी परित्यक्ते भवतः। वन्धनञ्च वस्त्रादिना भवति। वन्धनमिदं माध्यन्दिनसवनं यावत् तिष्ठति। वद्धमुष्टिभ्यामेव दम्पतिभ्यां सर्वाणि कर्माणि सम्पादनीयानि भवति ततश्चौदग्रभणहोमा अनुष्ठेयाः। तदनन्तरं कृष्णाजिनादिदीक्षा। अत्र कर्मणि केवलः यजमानः कृष्वाजिनमारुह्य मेखलां वध्नाति। शिरसश्चोष्णीषेण प्रावरणं करोति। अत्र पत्नी न भवति। पत्न्यै च मेखलायोक्त्रयोरन्यतरस्य वन्धनं विहितम् तथा शिरसि जालस्योष्णीषस्य वा प्रावरणमिति वैकल्पिकी व्यवस्था। गात्रखर्जनार्थं कृष्णमृगश्रृङ्गमेकं भवति। तच्च परिधानीयवस्त्रान्ते वदध्वा संरक्षेत्। कण्डूयने च प्राप्ते तेनैव कण्डूयनं कर्त्तव्यम्। ततः यजमानः दण्डधारणं करोति। पुनश्च सायंकाले प्रतिप्रस्थाता 'दीक्षितोऽयं ब्राह्मणः' इत्युच्चैर्निवेदयेत्। यदि क्षत्रियवैश्यावपि यजमानौ स्याताम्, तथापि 'ब्राह्मणः' इत्येव निवेदनमिति विशेषः दीक्षानन्तरमवभृथं यावत् दन्तधावनस्नानानाग्निहोतृहोमदर्शपूर्णमासादिवैश्वदेवार्थपाकस्मार्त्तौपासनानुष्ठानदानशूद्रसम्भाषणप्रत्यु - त्थानाभिवादजलावगाहनानि न कर्त्तव्यानत्यायस्तम्वेन (१२.१०.१६) निषिद्धानि।

**महावीरसम्भरणम्**—यद्यपि महावीरः प्रवर्ग्याख्ये होमे प्रयुज्यते। प्रवर्ग्याख्यः होमः द्वितीयदिनेऽनुष्ठीयते, :तथापि तन्निर्माणमद्यैव भवति। प्रवर्ग्याख्यहोमसम्पादनार्थं यत्पात्रं तन्महावीरशव्देनोच्यते, न तु महांश्चासौ वीर इति। तन्निर्माणञ्चाद्यैव भवति। तच्चोलूखलाकृति प्रादेशमात्रमुच्चं नवाङ्गुलिपरिमितमुपरि मेखलासम्वलितं मध्येडमरुवत् संगृहीतं तथा गर्त्तयुक्तं पात्रं भवति। अत्र दध्यादिप्रक्षेपणं सम्भवेत्। तदर्थं मृत्तिका

आनेया। स च केवलं शुद्धा मृत्तिका वा भवेत् अथवा वल्मीकोत्था वराहोत्खाता वा। तया सह पूतीकायाः अजाक्षीरस्य गवेधुकायाश्च मेलनं कृत्वा महावीरो सम्पाद्यते। ततः यूपार्थं काष्ठच्छेदनार्थं वनं प्रति गमनम् काष्ठमानीय तक्षणादिना यूपनिर्माणञ्च भवति। ततः सूर्यास्तमिते व्रतभक्षणं क्रियते। व्रतशब्देनात्र पय आदीनां ग्रहणम्। अतएव ब्राह्मणानां पयः पानम्, राजन्यानां यवागूभक्षणम्, वैश्यानाञ्चभिक्षाभक्षणं विहितम्। तत्सम्पादनप्रकारश्चेत्थम्—प्रथमदिने दुग्धदोहनार्थमेकागौः शालायामानीयते। तस्या चकमेव स्तनं दुहयात्। ततो यावत्पयो लभ्यते तद् द्वेधा विभज्यते। ततः यजमार्थं गार्हपत्ये पत्न्यर्थञ्च दक्षिणाग्नौ श्रपयेत् तदनन्तरं दम्पतिभ्यां प्रयच्छेत्, तौं च पिबेताम्। एवमेव द्वितीयतृतीयदिनमोर्मध्यान्हे रात्रौ च वारद्वयं व्रतप्राशनं भवति। तत्र द्वितीये दिने स्तनद्वयं दुहयात्। तल्लब्धपयसा एव व्रतप्राशनम्। तृतीये च दिने स्तनत्रयलब्धपयोभिः। व्रनप्राशनम्। चतुर्थे पञ्चमे च दिने केवलं हविःशेषभक्षणमेव पयःपानं न भवति। ततः रात्रौ भूमावेव दक्षिणोऽग्निमुखः शयीत।

॥ इति प्रथमदिनकृत्यम् ॥

**अथ द्वितीयदिनकृत्यम्**—द्वितीयदिने सर्वप्रथमं प्रायणीयेष्टिरनुष्ठीयते। प्रयन्ति स्वर्गं यया सा प्रायणीया। अस्मादेव दिनात् सोमयागः प्रारभ्यते। तदुक्तम्—'यदहः सोमः क्रीयते तदहः प्रायणीया नामेष्टिः कार्या' इति। एतच्च तैतिरीयसंहितायां (७.१.५.१) शतपथब्राह्मणे (३.२.३.२) च द्रष्टव्यम्। अत्रेष्टौ पञ्चदेवताः भवन्ति—अदितिः, पथ्या, स्वस्तिः, अग्निः, सोमः, सविता चेति। अदित्यै चरुर्भवति, अवशिष्टेभ्यश्चाज्यं द्रव्यं विहितम्। समाप्तौ च सलेपां चरुस्थालीमेक्षणं चोदयनीयार्थं निदध्यात्। तदनन्तरमेव सोमक्रयः क्रियते। कश्चिद् कौत्सगोत्रीयब्राह्मणः शूद्रो वा सोममानयति विक्रीणाति च। तत एव सोमं क्रीणीयात्। क्रयणे च नैकं द्रव्यं प्रयुज्यते, अनेकेषां द्रव्याणां विहितत्वात्। 'सोमो वै राजा' इत्यादिवचनैः सोमस्य राजवत् प्रतिष्ठा गम्यते। अतस्तं क्रीतं सोमं प्रतिष्ठया सह शकटे निदधाति। शकटञ्चानडुद्भ्यामूढं शालायामानयति। ततश्चोदुम्बरकाष्ठनिर्मातायामासन्द्यां निदधाति शालायामेकत्र स्थापयति च। स सोमोऽतिथिः। अतोऽऽगते तस्मिन् आतिथ्येष्टिः कर्त्तव्या। तत्रेष्टौ विष्णुर्देवता नवकपालः पुरोडाशो द्रव्यम्। इयञ्च खण्डेष्टिरेवेति। अतः प्रभृति मदन्तीसंज्ञकैरुष्णजलैरेव सर्वाण्युदककार्याणि दम्पतिभ्यां

गृहीत्वा येन मार्गेण तदानयनं विहितमस्ति, तेनैव तदानीयाग्नीध्रे

॥ इति चतुर्थदिनकृत्यम् ॥

**अथ पञ्चमदिनकृत्यम्**—इदमेव दिनं सुत्यादिनमित्युच्यते यस्मिन् दिने सोमोऽभिषूयते तत्सुत्यादिनम्। यागेऽस्मिन् अयमेव प्रधानः दिवसः। चतुर्थदिवसानन्तरयागतायाः रात्रेरपरभागे सौत्यकर्मसम्पादनार्थं यजमानः ऋत्विजः प्रतिबोधयति। प्रतिबुध्य चर्त्विजः प्रातःकालीनं स्नानादिकं नित्यकर्म सम्पाद्य सोमं द्वेधा विभजन्ति। तत उपरिवोपरि निक्षिप्तानां ग्रावणां मुखे सोमं निदधाति। ततः प्रातरनुवाकस्य शस्त्रं होता पठति। रात्रिव्यतीतानन्तरं प्रातःकाले प्रतिबुध्य पक्षिणः वदन्ति तस्माद्वादात्पूर्वमेव प्रातःकाले होत्राऽनूच्यः पठनीयः। ऋक्समूहः प्रातरनुवाक्शब्देन व्यपदिश्यते। तस्मिश्च काले जाग्रदवस्थावामेवाध्वर्युर्होतृसमीपेऽऽसीत् प्रातःसवनीयपुरोडाशान् निर्वपति। अत्र ऐन्द्र एकादशकपालः, इन्द्राय हरिवते धानाः, इन्द्राय पूषणवते करम्भः, इन्द्राय सरस्वतोमते दधि, इन्द्राय मित्रावरुणवते पयस्येति पञ्चहवींषि भवन्ति। तथैव पञ्च देवता एवमेवाग्नीत् प्रातरनुवाकशस्त्रकाले एव पुरोडाशादिनिर्वादान् पयस्यां च यथावत्सम्पादयति। तत उन्नेता ऐन्द्रवायवादीनि पात्राणि योजयति। पात्रयोजनानन्तरं चत्वार ऋत्विजः सोमाभिषवसम्पादनार्थमधिषवणफलकयोः द्वयोः दिशोः समुपविशन्ति। तत्राध्वर्युप्रतिप्रस्थातृप्रस्तोतृप्रतिहर्तृयजमानाः ब्रह्मा चोपवेष्टारः सन्ति। तत्राप्युत्तरतोऽध्वर्युयजमानौ दक्षिणतश्च ब्रह्मा, प्रतिप्रस्थात्रुन्नेतृष्टाश्च तिष्ठेयुः। अभिषवार्थानां वस्तूनामीषान्तरेणैवानयनं भवति। तदनन्तरमध्वर्युरधिषवणलके उपांशुसवननामकं प्राषाणं निदधाति। ततश्च पुनः तदुपरि पञ्चकृत्वः सोमं मिनुयात्। अत्र प्रातःसवनपर्याप्तस्य सोमस्य मानं भवति अर्थात् अर्द्धाधिकः सोनोऽत्र नेतव्यः। तदनन्तरं सोमाभिषवः क्रियते।

**अथाभिषवभेदाः**—स चाभिषवः द्विविधिः—महाभिषवक्षुल्लकाभिषव भेदात्।

**अथ महाभिषवः**—अत्र सोमस्यार्द्धाधिकभागोऽभिषूयते। अतएव महाभिषव इति अत्र चाध्वर्युप्रतिप्रस्थातृनेष्ट्रुन्नेतारः कर्त्तारो भवन्ति। ते च सोमं चतुर्धा विभाज्य प्रहरन्ति। प्रहारस्य संख्या न परिमिता वर्त्तते।

आनेया। स च केवलं शुद्धा मृत्तिका वा भवेत् अथवा वल्मीकोत्था वराहोत्खाता वा। तया सह पूतीकायाः अजाक्षीरस्य गवेधुकायाश्च मेलनं कृत्वा महावीरो सम्पाद्यते। ततः यूपार्थं काष्ठच्छेदनार्थं वनं प्रति गमनम् काष्ठमानीय तक्षणादिना यूपनिर्माणञ्च भवति। ततः सूर्यास्तमिते व्रतभक्षणं क्रियते। व्रतशब्देनात्र पय आदीनां ग्रहणम्। अतएव ब्राह्मणानां पयः पानम्, राजन्यानां यवागूभक्षणम्, वैश्यानाञ्चभिक्षाभक्षणं विहितम्। तत्सम्पादनप्रकारश्चेत्थम्—प्रथमदिने दुग्धदोहनार्थमेकागौः शालायामानीयते। तस्या चकमेव स्तनं दुहयात्। ततो यावत्पयो लभ्यते तद् द्वेधा विभज्यते। ततः यजमानार्थं गार्हपत्ये पत्न्यर्थञ्च दक्षिणाग्नौ श्रपयेत् तदनन्तरं दम्पतिभ्यां प्रयच्छेत्, तौं च पिबेताम्। एवमेव द्वितीयतृतीयदिनमोर्मध्यान्हे रात्रौ च वारद्वयं व्रतप्राशनं भवति। तत्र द्वितीये दिने स्तनद्वयं दुहयात्। तल्लब्धपयसा एव व्रतप्राशनम्। तृतीये च दिने स्तनत्रयलब्धपयोभिः। व्रतप्राशनम्। चतुर्थे पञ्चमे च दिने केवलं हविःशेषभक्षणमेव पयःपानं न भवति। ततः रात्रौ भूमावेव दक्षिणोऽग्निमुखः शयीत।

॥ इति प्रथमदिनकृत्यम् ॥

**अथ द्वितीयदिनकृत्यम्**—द्वितीयदिने सर्वप्रथमं प्रायणीयेष्टिरनुष्ठीयते। प्रयन्ति स्वर्गं यया सा प्रायणीया। अस्मादेव दिनात् सोमयागः प्रारभ्यते। तदुक्तम्—'यदहः सोमः क्रीयते तदहः प्रायणीया नामेष्टिः कार्या' इति। एतच्च तैत्तिरीयसंहितायां (७.१.५.१) शतपथब्राह्मणे (३.२.३.२) च द्रष्टव्यम्। अत्रेष्टौ पञ्चदेवताः भवन्ति—अदितिः, पथ्या, स्वस्तिः, अग्निः, सोमः, सविता चेति। अदित्यै चरुर्भवति, अवशिष्टेभ्यश्चाज्यं द्रव्यं विहितम्। समाप्तौ च सलेपां चरुस्थालींमेक्षणं चोदयनीयार्थं निदध्यात्। तदनन्तरमेव सोमक्रयः क्रियते। कश्चिद् कौत्सगोत्रीयब्राह्मणः शूद्रो वा सोममानयति विक्रीणाति च। तत एव सोमं क्रीणीयात्। क्रयणे च नैकं द्रव्यं प्रयुज्यते, अनेकेषां द्रव्याणां विहितत्वात्। 'सोमो वै राजा' इत्यादिवचनैः सोमस्य राजवत् प्रतिष्ठा गम्यते। अतस्तं क्रीतं सोमं प्रतिष्ठया सह शकटे निदधाति। शकटञ्चानडुद्भ्यामूढं शालायामानयति। ततश्चोदुम्बरकाष्ठनिर्मितायामासन्द्यां निदधाति शालायामेकत्र स्थापयति च। स सोमोऽतिथिः। अतोऽऽगते तस्मिन् आतिथ्येष्टिः कर्त्तव्या। तत्रेष्टौ विष्णुर्देवता नवकपालः पुरोडाशो द्रव्यम्। इयञ्च खण्डेष्टिरेवेति। अतः प्रभृति मदन्तीसंज्ञकैरुष्णजलैरेव सर्वाण्युदककार्याणि दम्पतिभ्यां

गृहीत्वा येन मार्गेण तदानयनं विहितमस्ति, तेनैव तदानीयाग्नीध्रे

।। इति चतुर्थदिनकृत्यम् ।।

**अथ पञ्चमदिनकृत्यम्**—इदमेव दिनं सुत्यादिनमित्युच्यते यस्मिन् दिने सोमोऽभिषूयते तत्सुत्यादिनम्। यागेऽस्मिन् अयमेव प्रधानः दिवसः। चतुर्थदिवसानन्तरयागतायाः रात्रेरपरभागे सौत्यकर्मसम्पादनार्थं यजमानः ऋत्विजः प्रतिवोधयति। प्रतिबुध्य चर्त्विजः प्रातःकालीनं स्नानादिकं नित्यकर्म सम्पाद्य सोमं द्वेधा विभजन्ति। तत उपरिवोपरि निक्षिप्तानां ग्रावणां मुखे सोमं निदधाति। ततः प्रातरनुवाकस्य शस्त्रं होता पठति। रात्रिव्यतीतानन्तरं प्रातःकाले प्रतिबुध्य पक्षिणः वदन्ति तस्माद्वादात्पूर्वमेव प्रातःकाले होत्राऽनूच्यः पठनीयः। ऋक्समूहः प्रातरनुवाक्शब्देन व्यपदिश्यते। तस्मिश्च काले जाग्रदवस्थावामेवाध्वर्युर्होतृसमीपेऽऽसीत् प्रातः-सवनीयपुरोडाशान् निर्वपति। अत्र ऐन्द्र एकादशकपालः, इन्द्राय हरिवते धानाः, इन्द्राय पूषणवते करम्भः, इन्द्राय सरस्वतीमते दधि, इन्द्राय मित्रावरुणवते पयस्येति पञ्चहवींषि भवन्ति। तथैव पञ्च देवता एवमेवाग्नीत् प्रातरनुवाकशस्त्रकाले एव पुरोडाशादिनिर्वादान् पयस्यां च यथावत्सम्पादयति। तत उन्नेता ऐन्द्रवायवादीनि पात्राणि योजयति। पात्रयोजनानन्तरं चत्वार ऋत्विजः सोमाभिषवसम्पादनार्थमधिषवण-फलकयोः द्वयोः दिशोः समुपविशन्ति। तत्राध्वर्युप्रतिप्रस्थातृप्रस्तोतृप्रति-हर्त्तृयजमानाः ब्रह्मा चोपवेष्टारः सन्ति। तत्राप्युत्तरतोऽध्वर्युयजमानौ दक्षिणतश्च ब्रह्मा, प्रतिप्रस्थात्रुन्नेतृष्टाश्च तिष्ठेयुः। अभिषवार्थानां वस्तूनामीषान्तरेणैवानयनं भवति। तदनन्तरमध्वर्युरधिषवणलके उपांशु-सवननामकं प्राषाणं निदधाति। ततश्च पुनः तदुपरि पञ्चकृत्वः सोमं मिनुयात्। अत्र प्रातःसवनपर्याप्तस्य सोमस्य मानं भवति अर्थात् अर्द्धाधिकः सोनोऽत्र नेतव्यः। तदनन्तरं सोमाभिषवः क्रियते।

**अथाभिषवभेदाः**—स चाभिषवः द्विविधिः—महाभिषवक्षुल्लका-भिषव भेदात्।

**अथ महाभिषवः**—अत्र सोमस्यार्द्धाधिकभागोऽभिषूयते। अतएव महाभिषव इति अत्र चाध्वर्युप्रतिप्रस्थातृनेष्ट्रुन्नेतारः कर्त्तारो भवन्ति। ते च सोमं चतुर्धा विभाज्य प्रहरन्ति। प्रहारस्य संख्या न परिमिता वर्त्तते।

अतोऽपरिमितकृत्यो प्रहारः अर्थात् रसप्रच्युर्चिति यावत् प्रहरेयुरिति । अयमेव महाभिषवशब्देन व्यवह्रियते ।

**अथ क्षुल्लकाभिषवः**—क्षुल्लकाभिषवसम्पादनार्थं महाभिषवाय परिमितात्सोमादल्पानंशून् गृहीत्वा होतृचमसस्थाञ्जलान्निग्राभ्यासंज्ञकात् किञ्चिन्मात्रं नीत्वा तच्च पातान्तरे पृथक्कृत्य यत्नपूर्वकं स्थापयेत् । अयमेवोपांश्वभिषव इति कथ्यते । 'स्तोकाल्पक्षुल्लकाः' 'स्वल्पेऽपिक्षुल्लकस्त्रिषु' इत्यमरकोषात् 'क्षुल्लकस्त्रिषु नीचेऽल्पे' इति मेदिनीकोषात् हलायुधाच्च क्षुल्लकशब्दस्याल्पत्ववाचकत्वात् । अत्रैकैवाध्वर्युः कर्ता भवति । पूर्वगृहीतानल्पानंशून् पात्रान्तरे स्थापितानिग्राभ्याश्च होतृचमसे करोति । ततः सोमोपरि आसेचनं कृत्वा अष्टकृत्वः प्रहरेत् न त्वपरिमितिकृत्वः । अभिषवान्ते चोपांशुग्रहपात्रं स्वहस्ते धारयेत् प्रतिप्रस्थाता । अभिषुतं तं सोममध्वर्युर्मुष्टिना निष्पीड्य रसं निःसार्य उपांशुग्रहं गृह्णाति । तस्मिन्नेव काले पूर्वगृहीतांश्च मध्यतः द्वौ द्वावंशूग्रहस्योपरि सन्धारयेत् । पुनश्च पूर्ववत् त्रिपर्यायोऽभिषवो भवति अत्रैकादशकृत्वः प्रहरति । पुनश्च प्रतिप्रस्थाता पात्रे गृहीतेऽध्वर्युः अंशुद्वये तदुपरि तेन धारिते गृह्णीयात् । एवमेव तृतीयवारमपि द्वादशकृत्वः प्रहरणं करोति पूर्ववच्च परिगृह्णाति । अङ्गुल्योमध्ये धृतान् षडंशून् सोमेऽन्तर्दध्यात् । तदनन्तरं प्रतिप्रस्थातृहस्तात् अध्वर्युः ग्रहं नीत्वा दशवित्रेण परिमार्ष्टि, अधः भूमौ च निदधाति । ततः ग्रहस्तः सन्नेव हविर्धानान्मण्डपान्निष्क्रामति । ततश्चोपांशुग्रहं सशेषं तिष्ठन् जुहोति । तदनन्तरमाग्रयणस्थांतयां शेषैकदेशमासिञ्चति । अंशुपात्रश्चासादर्पयते । तत्समीपे एव चोपांशुशवनं निदध्यादिति क्षुल्लकाभिषवः । ऋत्विजां यजमानस्य चात्रैव सन्ध्यावन्दनादिकं भवति । ततः सूर्योदयानन्तरमन्तर्यामनामकस्य ग्रहहय ग्रहणं होमेऽऽसादनञ्च भवति । एतदनन्तरं धाराग्रहाणामादानम् । एते च ग्रहाः षट्संख्याकाः भवन्ति । तत्र प्रथममैन्द्रवायवग्रहः । अस्य च वारद्वयं ग्रहणं विहितम् । अर्थात् प्रथमं वायवे गृहीत्वा धारां विच्छिद्य पुनस्तत्रैव ऐन्द्रवायूभ्यां गृह्णाति । तदनन्तरं खरेऽऽसादयति । ततश्च मैत्रावरुणसंज्ञक ग्रहस्य ग्रहणम् । ततः शुक्रस्य ततश्च मन्थिनः ग्रहणम् । तत आग्रहणस्य धाराद्वयेन ग्रहणम् । प्रकारश्चायम्—आग्रमणस्थातयां ग्रहणकाले यः सोमः विद्यते तस्यैका धारा होतृचमसस्था भवति, अपरा च सोमस्यैका धारा अस्तीति धाराद्वयम् । तत उक्थ्यस्य तदनन्तरं ध्रुवस्य ततश्च वैश्वानरग्रहस्य ग्रहणं सञ्जायते ।

अत्र विकल्पोऽपि विद्यते सूत्रादिषु। एतदनन्तरं स्वस्वस्थाने संस्थापितेषु सत्सु अध्वर्युप्रभृतयः परस्परं कटिदेशे समन्वारब्धाः हविर्धानान्निष्क्रामन्ति। ततश्च ते षड् विप्रुड्ढोमं कुर्वन्ति। ततः वहिष्पवमानस्तोत्र-सम्पादनार्थं चात्वालदेशं प्रति गच्छन्ति, तत्रैव तिष्ठन्ति च। उपवेशन-प्रकारश्चेत्थम्—उदङ्मुखः प्रस्तोतः दक्षिणाभिमुखः प्रतिहर्त्ता प्रत्यङ्मुखौ चाध्वर्युप्रतिप्रस्थातारौ तिष्ठतः। तदनन्तरमध्वर्युः पवमानस्तोत्रारम्भार्थं प्रस्तोत्रे ऋत्विजे तृणं वा कुशमुष्टिं वा प्रयच्छति। ते चर्त्विजः 'उपा स्मै गायता नरः' इत्यादिर्नवभिर्ऋत्विग्भिः स्तोत्रं कुर्वन्ति। स्तोत्रान्तरेष्विवात्र नावृत्तिर्विहिता। अत्र च गाने प्रस्तोत्रुद्गातृप्रतिहर्त्तृणामेव सम्बन्धः नान्येषाम्। एवमन्यत्रापि द्रष्टव्यम्। स्तुवत्सु तेषु उन्नेता आधवनीयस्थं सोमं पूतभृति आसिञ्चति। स्तोत्रान्तेऽध्वर्युः सवनीयहतिरलङ्करणार्थं सवनीयपश्वर्थं वा अग्नीत्प्रतिप्रस्थातारौ प्रेष्यति। ततोऽऽग्नीध्रः आग्नीध्रीयादङ्गारान् गृहीत्वा धिषण्येषु निर्वपति। ततश्चाश्विनग्रहणम्। तदनन्तरं यजमानेन ग्रहाणामवेक्षणं कारयितव्यम्। इति।

**अथ सवनीयपशुः**—अभिषवसम्पादनान्तन्तरं सवनीयपशोरनुष्ठानम् तत्र पक्षद्वयं विद्यते—स्तोमायनं पश्वेकादशिनी च। ज्योतिष्टोमस्य चतस्रः संस्थाः भवन्तीत्युक्तं प्राक्। तत्राग्निष्टोमसंस्थायामेक एवाग्नेयः सवनीयः पशुर्विहितः। उक्थ्यसंस्थायाञ्चाग्नेय ऐन्द्राग्नश्चेति पशुद्वयं दृश्यते। षोडशिनि आग्नेय ऐन्द्राग्न ऐन्द्रो वृष्णिरिति पशुत्रयम्। अतिरात्रसंस्थायां षोडश्युक्तपशुत्रयेण सह सारस्वती मेषी चतुर्थः पशुर्भवति। चतुर्णामेतेषां पशूनां स्तोमायनमिति संज्ञा। पश्वेकादशिनी चाग्नेयः, सारस्वतः, सौम्यः पौष्णः, बार्हस्पत्य, वैश्वदेवः ऐन्द्रश्चेति। वारुण एकादशः पशवः भवन्ति। एतेषां पशूनां नियोजनार्थं यूपोऽपेक्षितः। तत्रापि पक्षद्वयमवलोक्यते। एकयूपयक्षः यूपैकादशिनी पक्षः। तत्रैकयूपपक्षे यूपे प्रथममाग्नेयं पशुं नियोज्य तस्य गलेऽन्यं पशुं तस्य च गलेऽन्यं पशुमिति क्रमेण सर्वेषां नियोजनं सम्पन्नं भवति। यूपैकादशिनीपक्षे पृथक् पृथक् एकैकस्मिन् यूपे एकैक एव पशुर्नियोक्तव्यः। पश्वेकादशिन्यपि नियतां भवति। एकादश-यूपनिखननार्थं वेदिवृद्धिरपि कर्त्तव्या। एवं सवनीयपशोर्वपामार्जनान्तं कृत्यं परिसमाप्य धिषण्याद्युपस्थानं भवति। एतदेव च सर्पणशब्देन व्यपदिश्यते। तदनन्तरं पूर्वं श्रपितानां पुरोडाशादीनां प्रातःसवनीयहविषां प्रचारः। ततः पश्चात् त्रयाणामैन्द्रवायमैत्रावरुणाश्विनानां द्विदेवत्यग्रहाणां प्रचारः। उन्नेता हुतेषु तेषु त्रिषु नवसंख्याकान् चमसानुन्नयेत्। होतृचमसः,

पोतृचमसः, नेष्टृचमसः, ब्रह्मचमसः, ब्राह्मणाच्छंसिमसः, आग्नीध्रचमसः, मैत्रावरूणचमसः अच्छावाकचमस यजमानचमस इति नवसंख्याकाः चमसाः भवन्ति। उद्गातृप्रतिहर्त्तृ प्रस्तोतृणामेकैकः चमस इति दश संख्या सम्पद्यते। तत्राच्छाकचमसोन्नयनमग्रे भवति' अतोऽत्र नवैव संख्या विज्ञेया। ततः शुक्रामन्थिग्रह्योः प्रचारो भवति। तत्रापि शुक्रग्रहमध्वर्युः मन्थिग्रहञ्च प्रतिप्रस्याता जुहुयात्। अध्वर्युप्रतिप्रस्यातारौ च पूर्वोक्तं गृहीत्वा यूपसमीपं गच्छति। तत्र स्थित्वा आत्मनोऽरत्नी सन्धत्तः। सन्धानमिदमन्येष्वपिग्रहेषु भवति। ततश्च होमार्थं प्रवृत्तो भवतः। तत्र पूर्वोक्तान् नवचमसान् आदाय प्राङ्मुखास्तिष्ठन्तः सदैव ताभ्यां ग्रहाभ्यां जुह्वति। अनेन प्रकारेण शुक्रामन्थिग्रहयोश्चमसानाञ्च युगपद्धोमः सिद्ध्यति। ब्रह्महोतृद्गातृयजमानचमसानां वषट्कारेऽनुवषट्कारे च होमो विहितः। शिष्टानां चमसेषु प्रथम वषट्कारस्य होमः पश्चादन्येषाम्। अतस्तेषां पञ्चानामपि चमसाध्वर्यवानां प्रथमवषट्कारे सकृदेव जुहुयाव। ततः पुनरून्नयनार्थं द्रोणसंज्ञककलशसमीपे चमसान् स्थापयेयुः। ततः पञ्चापि प्रशास्तृब्राह्मणाच्छंसिपोतृनेष्ट्रानीत्सम्बन्धिनो चमसान् अध्वर्युरेव जुहुयादिति।

**अथ द्विदेवत्यभक्षः**—यद्यपि 'याज्याया अधिवषट्करोति। इति वाक्येन वषट्कारो विहितः। तस्य चानुष्ठाता होता भवति। 'वषट्कर्त्तुः प्रथमभक्षः। इति वचनेन होतुरेव प्रथमभक्षत्वं प्रतीयते तथापि कात्यायनीमानां होमकर्त्तुरेव प्रथमभक्षत्वेन विधानं दृश्यते। अतः होमकर्त्तुः प्रथमभक्षः तदनन्तरं वषट्कर्त्तुरित्येतेषां व्यवस्था। अतोऽध्वर्युप्रतिप्रस्थात्रोः प्रथमभक्षणः भवति, होमाभिवकर्त्तृत्वेन तन्निमित्तत्वात्। तदनन्तरञ्च वषट्कर्त्तुः भक्षणम्। ततश्च समाख्यानिमित्तः भक्षो विदितः। उद्गातृचमसे उद्गातुरेव भक्षः नान्यस्य भक्ष इति बोध्यः। येन येन चमसेन ग्रहेण वा यस्य यस्य सम्बन्धो वर्त्तते। तदनुज्ञामादायैव तत्तच्चमसग्रहादीनां भक्षणं भवति। सा अनुज्ञैवोपह्वशब्देन कथ्यते। तत्प्रकारश्च 'अध्वर्यव उपहूयस्व' ब्रह्मन्नुपह्वयस्वे'ति। अनेन प्रकारेण पृच्छति सति अनुजानाति। वचनमप्यत्र दृश्यते 'नानुपहूः न सोमः पातव्यः' इति। भक्षणप्रकारश्चेत्थम्—ऐन्द्रवायवं ग्रहं होता समर्पयति। अध्वर्युश्च गृह्णाति। ततचाध्वर्युः सकृत् सशेषं स्वतपञ्च भक्षयति। ततः गात्रालम्भनादिकं करोति। पुनश्चोदकं स्पृशति। ततः होतृचमसे ग्रहशेषैकदेशमवनीयग्रहं होत्रे प्रदद्यात्। होता च तं ग्रहं नीत्वा अध्वर्युणानुज्ञातः सन् भक्षयेत्। अत्र स्वस्वसूत्रानुसारमेव भक्षणमुचितमिति बोध्यम्। एवं भक्षयित्वा स्वचमसे शेषैकदेशे तेनासिक्ते सति

प्रनरध्वर्य्वोः । अनेनैव प्रकारेणाध्वर्युर्होता च मैत्रावरुणाश्विनग्रहावपि भक्षयेत् । अत्रैव च पुरोडाशादिहविःशेषभक्षणमपि विहितं वर्त्तत इति ।

अथ चमसभक्षः—शुन्द्रामन्थिग्रहशेषसचिवहोतृचमसेऽध्वर्युप्रतिप्रस्थात्रोः होमाभिषवंकर्त्तृत्वनिमित्तं सकृद्भक्षणं विहितम् । होतुः वषट्कारनिमित्तमपि भक्षणं भवति । अतस्तस्य भक्षणद्वयं सञ्जायते । एवमेव ब्रह्मयजमानचमसयोरपि भक्षणं बोध्यम् । प्रशास्त्रादीनां वषट्कारकर्त्तृत्वनिमित्तत्वात् पञ्चसु चमसेषु सकृदेव भक्षणम् । अनुवषट्कारे तेषां होमाभावात् तन्निमित्तं भक्षणं न भवति । भक्षप्रकारश्चेत्थम्—अध्वर्युः होतृप्रशास्तृभ्यामनुज्ञां गृहीत्वा होतृचमसं प्रथमं भक्षयति । ततः प्रतिप्रस्थाता अध्वर्युहोतृभ्यामनुज्ञां गृहीत्वा होतृचमसमेव सकृद् भक्षयति । ततश्च होता अध्वर्युप्रतिप्रस्थातृभ्यामनुज्ञां नीत्वा तमेव होतृचमसं वारद्वयं भक्षयेत् । ततश्च पुनर्होता ब्रह्मचमसे ब्रह्माणं स्पृष्ट्वा वारद्वयं भक्षयेत् । ब्रह्मा च होता आज्ञामादाय तमेव चमसं वारद्वयं भक्षयेत् । एवमेवाग्रेऽपि यजमानप्रशास्तृप्रभृतीनां चमसानां विषयेऽपि तत्तच्चमसिभ्योऽनुज्ञां गृहीत्वैव भक्षयितव्यमिति । यजमानचमसं विहाय इतरत्र सकृदेव भक्षणम् । चमसिनश्च स्वं स्वं चमसं पोत्रध्वर्यूपह्वानपूर्वकमेव सकृत्सकृद् भक्षयेरन् । सर्वत्र च सशेषमेव भक्षणं विहितम्' । अन्ते च पुनर्होता अध्वर्युप्रतिप्रस्थातृभ्यामाज्ञां नीत्वैव समाख्यानिमित्तं सकृद् भक्षणं कुर्यादिति । अयमेव भक्षो महाभक्षशब्देनाभिधीयते । येषु येषु चमसेषु पुनरुन्नयनं भवति तेषु तेषु च तन्निमित्तभक्षः कर्त्तव्यः । अस्य भक्षस्य पुनरभ्युन्नीतभक्ष इति संज्ञा । तत्र चाध्वर्युः पञ्चसु चमसेषु तत्तच्चमसिभ्योऽनुज्ञां गृहीत्वा सकृद्भक्षणं कुर्यात् । ते ते च चमसिनः होत्रध्वर्युभ्यामाज्ञां नीत्वा वषट्कारद्वयनिमित्तं भक्षणद्वयं सम्पादयेयुः । अनेनैव भक्षणेन समाख्यानिमित्तकभक्षणस्यापि प्रसङ्गात्सिद्धिर्वोध्या । अत्रापि सशेष एव भक्षयितव्यः । भक्षणसम्पादनानन्तरं । पुनः चमसान् रसेन पूर्णं कृत्वा हविर्धानस्य पश्चादधो निदध्यात् । एतेषामेव नाराशंश इति संज्ञा भवति । तदनन्तरं सर्वे भक्षणकर्त्तारः मन्त्रपूर्वकं मात्रालम्भनं कुर्युः । तदनन्तरमच्छावाकचमसस्यापि उन्नयनादिकं सर्वं पूर्ववत् सम्पादयेत् ।

ऋतुग्रहाः—भक्षानन्तरं ऋतुग्रहाः ऋतुदेवताकाः ग्रहाः ऋतुग्रहाः । षड् ऋतवः तदन्तर्गताश्च मासाः देवतात्वेनात्र विहिताः । यद्यप्यत्र द्वे एव पात्रे भवतः । एकं पात्रमध्वर्युहस्ते भवति, द्वितीयञ्च प्रतिप्रस्थातृहस्ते ।

तथाप्युभाभ्यां वारषट्कं वारषट्कं ग्रहीतव्यम् । अतएव कलनया द्वादशवारं भवति । तस्मादेव च द्वादशग्रहा इत्यपि सम्व्यवहारः । याज्ञिकानां कुत्रचित् त्रयोदशोऽपि ग्रहो विकल्पेन विहितः दृश्यते । नैषा सार्वत्रिकी व्यवस्था । प्रथमोदन्तिमौ च ग्रहौ युगपद् ग्राह्यौ । मध्ये येऽष्टौ ग्रहास्ते व्यत्यासेन ग्राह्याः । तात्पर्यमिदं यत् यदा अध्वर्युः ग्रहं गृहीत्वा जुहोति तदा प्रतिप्रस्थाता ग्रहणं करोति । एवमेव यदा प्रतिप्रस्थाता स्वकीयं ग्रहमादाय होमसम्पादनाय प्रयतते तदाध्वर्युः समनन्तरं ग्रहं गृह्णाति । अतोऽध्वर्युः यदा स्वकीयं ग्रहं नीत्वा हविर्धानमण्डपाद्बहिर्निष्क्रामति तस्मिन्नेव काले प्रतिप्रस्थाता मण्डपं प्रविशति, तथैव प्रतिप्रस्थाता यदा मण्डपान्निर्गच्छित तदैवाध्वर्युः होमं सम्पाद्य अन्तःप्रविशति । एवं तयोर्मिलनं द्वारि एव सञ्जायते । होमेऽत्र पक्षद्वयं दृश्यते । तत्र द्वादशग्रहाः सर्वे निरवशेषं हूयन्ते, शिष्टौ द्वौ सशेषाविति प्रथमः पक्षः । सर्वेषां सशेष एव होमः इति द्वितीयः पक्षः । तदा च पूर्वशेषे सति उत्तरस्य ग्रहस्य ग्रहणम् । तेषु हुतेषु द्वयोः पात्रयोः यस्मिन् कस्मिंश्चित् एकस्मिन् पात्रे शेषौ कृत्वा प्रतिप्रस्थाता रिक्तेन पात्रेण ऐन्द्राग्नं ग्रहं गृह्णाति । तदनन्तरं तदासाद्य ऋतुग्रहभक्षार्थं पात्रमादायाध्वर्युप्रतिप्रस्थातारौ सदसि समुपातिष्ठतः । अत्र सर्वहुत्वाहुतत्वभेदात् पक्षद्वयमुपतिष्ठते । तत्र सर्वहुतत्वपक्षेऽध्वर्युप्रतिप्रस्थातृहोतारः यथासंख्यं स्वेतरावुपहूय सकृत्सकृदेव भक्षयेयुः । अध्वर्युप्रतिप्रस्थात्रोः सशेषंभक्षणम्, होतुस्तु सर्वभक्षणमित्युभयोर्विशेषः । सर्वेषामहुतत्वपक्षे भक्षणप्रकारः सूत्रादिग्रन्थेभ्योऽवगन्तव्यः । तदनन्तरं पूर्वगृहीतस्य ऐन्द्राग्नस्य ग्रहस्य पूर्वमेवासादितैर्नाराशंसचमसैः सह भक्षान्तकर्मणि सम्पादिते सति वैश्वदेवं ग्रहं गृह्णाति आसादयति च । ततोऽऽग्नीध्रः सवनीयदविष्णु हुतेषु वैश्वदेवं स्तोत्रमुपाकरोति । तदीयस्तोत्रशस्त्रयोः परिसमाप्तयोः चमसकम्पनेन सह वैश्वदेवग्रहं जुहोति । ततश्च तेनैव सह चमसानां सर्वभक्षणं कर्त्तव्यम् । तदनन्तरं ग्रहेषु दशसु चमसेषु च तान् प्रक्षाल्य यथास्थानमासादयेत् । तत उक्थ्यं त्रेधा विभज्य परिगृह्णति । तत्रापि च प्रथमः प्रशास्तुः द्वितीयः ब्राह्मणाच्छंसिनः तृतीयोऽच्छावाकस्य । तं तमुक्थ्यं गृह्णाति आसादयति च । ततः स्वस्वसम्बन्धिनां शस्त्राणां समग्रे दशापि चमसान् स्वस्वस्थानस्थितानेवोन्नयति । विग्रहस्य चमसं पूर्वमुन्नयेत् । तदनन्तरं हुतेषु सर्वेषु तत्तद्ग्रहसम्बन्धिनः सर्वानुपहूय पूर्ववत् निरवशेषं सकृद् वा तत्र स्वस्वभागानुसारं भक्षणं कुर्युः । एतदनन्तरं सर्वेष्वनुष्ठितेषु 'प्रशास्तः प्रसुहि' । इत्यध्वर्युः वक्ति । तेन प्रसुताः सर्वे सदसो मध्यान्निष्क्रामेयुः ।

## इति प्रातःसवनिककर्मसंक्षेपः ।

**अथ माध्यन्दिनं सवनम्**—माध्यन्दिने सवने सर्वप्रथमं लोकद्वारि सामगानं भवति तदनन्तरं यजमानेन सहिताः सर्वे ऋत्विजः प्रातःसवनवत् सर्पणं कुर्वन्ति। ततोऽध्वर्युयजमानौ सदसोऽभिमर्शनादिकं कुरुतः। ततः प्रातःसवनवत् माध्यन्दिनसवनसम्पादनार्थं सोममभिषुवन्ति । ततोऽध्वर्युः ग्रहान् गृह्णाति। तेष्वपि ग्रहेषु शुक्रामन्थ्याग्रमणमरुत्वतीयोक्थ्यानां पञ्चानां प्रथमं ग्रहणं भवति। ततश्च होत्रध्वर्युर्ब्रह्मप्रस्तोतृसुन्वन्तः समन्वारब्धा एव माध्यन्दिनपवमानार्थं सर्पेयुः प्रातःसवनवत्। तत्र प्रातःसवनवदेव सर्वं कार्यं सम्पादनीयं भवति । ततः सर्वे सदसि उपविशन्ति । अध्वर्युश्च माध्यन्दिनपवमानमुपाकरोति। ततो यदि सोमः सम्प्रवर्ग्यस्तदा दधिधर्मस्य भक्षणान्तं कर्मानुष्ठापयति । तत एव सवनीयपशुपुरोडाशस्य तन्त्रं प्रक्रमेत् तत्रापि यथाविहितमार्गेणाध्वर्युहोतृब्रह्माग्नीध्रयजमानमैत्रावरुणैः षड्भिः पशुपुरोडाभक्षणे परिसमाप्तेऽऽग्नीध्रेण सवनीयहविषां निर्वपणादिकं पयस्यारहितं कार्यं प्रातःसवनवत्। ततश्च प्रातःसवनवदेव सर्वेषां हविषां होमान्तं कर्म सम्पादितं भवति। तत इडाहरणं करोति होतृधिष्ण्ये च निदधाति। ततः शुक्रामन्थिग्रह्योर्होमादिभक्षणान्तं कर्म सचमसं कार्यम्। तत्र सर्वमनुष्ठानं प्रातःसवनवदेव भवति। नेष्टुः पूर्वं पश्चाच्चाच्छ वकस्येति भक्षणमिति विशेषः। सशेषभक्षणानन्तरं प्रातःसवनवदेव भक्षिताप्यायितांश्च चमसान् स्वस्वस्थाने संस्थापयति। तव ऋत्विजः सवनीयहवींषि भक्षयन्ति। तत ऋत्विग्भ्यो सङ्कल्पकाले प्रतिज्ञातं दक्षिणादानम् । तदतिरिक्तमपि वस्त्रादिकं स्वस्वसूत्रानुसारं प्रदातुं शक्यते। ततश्च मरुत्वतीयं ग्रहं गृह्णाति आसादयति च। पुनश्चाध्वर्युस्तथा होता पूर्वहुतं मरुत्वतीयं भक्षयति। ततः होता मरुत्वतीयं शस्त्रमारभते। तत्रोपविष्टोऽध्वर्युः प्रतिगृह्णाति। शस्त्रपरिसमाप्ते च प्रतिप्रस्थाता तृतीयसंख्याकं कुण्ठमरुत्वतीयं ग्रहं गृह्णाति । पुनश्चाध्वर्युणा साकं होमस्थानं गच्छति तत्र गत्वा पूर्वं महामरुत्वतीयं जुहोति, तदनन्तरं कुण्ठमरुत्वतीयं जुहोति। ततश्च सर्वेषां भक्षणम्, तथापि कुण्ठमरुत्वतीयं प्रतिप्रस्थाता एवानुपदवपूर्वकं भक्षयतीति विशेषः। ततो नाराशं सचमसभक्षणं भवति। ततो माहेन्द्रं ग्रहं गृह्णाति आसादयति च। तदनन्तरं पृष्ठस्तोत्रमुपाकरोति। निष्कासितरसं शुष्कञ्च सोमं पुनरभिषुणोति। अत्र सवने निग्राभ्या जलसेचनमपि न भवति। अत एव शुष्कामिषवशब्देनोच्यते। एवमभिषवणानन्तरमुद्गात्रादयः पृष्ठेन स्तुवन्ति। ततश्चाभिषुतं शुष्कं सोममाधवनीयकलशेऽवदधाति। ततोऽग्नीत्

तृतीयसवनीयहविषां निर्वापं करोति । निर्वापेऽत्र वारुण एककपालः सौम्यश्चरुश्चाधिको भवतः । अन्यच्च सर्वं प्रातः सवनवदेवानुष्ठेयम् । पृष्ठस्तोत्रे परिसमाप्ते होता तस्मिन्नेव पुनः शंसति ततः पूर्वमासादितं माहेन्द्रं ग्रहमादय जुहोति । तदनन्तरं कम्पितैर्नीराशंसैश्चमसैः सह भक्षणं भवति । ग्रहेऽस्मिन् अध्वर्योः सकृत् सशेषं भक्षण विहितम् होतुस्तु बारद्वयं भक्षणं निःशेषञ्चेत्युभयोर्विशेषः । ततश्चमसिनामुहवरहितं चमसभक्षणं विहितम् । ततश्च सर्वभक्षाश्चमसाः कर्त्तव्या इति । तदनन्तरं प्रातःसवनवत् उक्थ्यग्रहाणां प्रचारः । ततश्चाध्वर्युः 'प्रशास्तः प्रसुहि' इति वदति' ततः सर्वे ऋत्विजः सदसो बहिर्निष्क्रामेयुरिति ।

## इति माध्यन्दिनसवनम् ।

**अथ तृतीयं सवनम्**—तृतीयसवनमिदं सायंसवनशब्देनापि व्यवह्रियते । अत्र सर्वप्रथममादित्यग्रहं गृहीत्वा आदित्यस्थाल्या तमपिधाय होमस्थानं प्रति गच्छति । ततश्च तं ग्रहं स्थालीं चोभयोः सशेषं जुहोति । ततश्च शेषौ प्रतिप्रस्थात्रे ददाति । ततो लोकद्वारि यजमानः सामगानं करोति । अत्र सवनेऽपि सर्पणं सवनादिभूतं सदोऽभिमर्शनादिकञ्च सर्वं पूर्ववदेव सम्पादनीयम् । तत आग्रह्यणस्योक्थ्यस्य च ग्रहणम् । ततः समन्वारब्धा एव आर्भवपवमानोपाकरणार्थं सर्वे सदसो निष्क्रामन्ति । एतदनन्तरं सवनीयहविषां परवङ्गानाञ्च प्रचारः । ततश्चमसानामुन्नयनादिकमारभ्य भक्षणान्तं कर्म सम्पादनीयम् । भक्षणानन्तरमाप्यायितानां ग्रहाणां हविर्धाने निधानम् । तत ऋत्विजः पिण्डपितृयज्ञवत् यजमानपितृभ्यः पिण्डान् दद्युः । ततश्च सावित्रग्रहग्रहणाम् । तं ग्रहमनासाद्यैव निरवशेषं होमान्तं कर्म सम्पादयति । ततश्चाभक्षितेनैव तेन पात्रेण महावैश्वदेवग्रहं परिगृह्णाति । ततो वैश्वदेवं शंसति । तदन्ते च चमसानां कम्पनेन सह तं जुहोति । ततश्चाध्वर्युः सकृत्सशेषं भक्षयति । होता च बारद्वयं भक्षयति । अत्र चमसिनामुपहवन नावश्यकम् । ततः सौम्यचरोः प्रचारः । ततश्च प्रतिप्रस्थाता पात्नीवतग्रहस्य प्रचारं करोति । तदनन्तरं । 'यज्ञायज्ञिय' नामकं स्तोत्रमारभते । अस्यैव स्तोत्रस्याग्निष्टोम इति संज्ञा । अग्निष्टोमस्तोत्रानन्तरमाग्निमारुतं शस्त्रं होता शंसति । तदनन्तरं ध्रुवं ग्रहं होतृचमसेऽवनीय तं जुहोति । ततश्च तस्य भक्षणमपि करोति । ततः सर्वे चमसिनः स्वस्वचयसान् सकृत् सर्वञ्च भक्षयन्ति । ततः प्रशास्ता निष्क्रमणायानुजानाति । ततः सवनान्तभूतं सर्पणं सर्वे कुर्वन्ति । ततोऽनुयाजानामनुष्ठानम् । ततश्चवाजिनहोमानुष्ठानं तस्य भक्षणञ्च भवति । ततः

द्रोणकलशे हारियोजननामकं ग्रहं निरवशेषं गृहीत्वा तत्र धानाः प्रक्षिपति। तत उन्नेता स्वमूर्द्धनि कृत्वा तेनैव सर्वं जुहोति। अत्र भक्षणेऽपि विकल्पः। तत्र भक्षणपक्षे सर्वहोमो भवति। ततः पत्नीसंयाजादिकं सर्वं पाशुकं कर्मानुतिष्ठति।

## इति तृतीयसवनम्।

**अथावभृथ :**—तृतीयसवनानन्तरमवभृथः। सोमलिप्तानि यानि ग्रहचमसस्थालीपूतमृदाधवनीयादीनि पात्राणि सन्ति, तान्यादाय यत्र जलेऽवभृथेष्टिं कर्तुं वर्त्तते, तज्जलसमीपं गत्वा तत्रैव जले तानि सर्वाणि पात्राणि प्रक्षिपेत्। गमनप्रारम्भेऽर्द्धमार्गे जलसमीपे च सामगानं भवति। अत्रावभृथेष्टिं कृत्वा तत्रैव सयजमाना ऋत्विजः स्नान्ति। ततः देवयजनं प्रति गच्छति। ततश्च प्रायणीयावत् उदयनीयेष्टिं सम्पादयेयुः। ततोऽग्नीषोमीयपशुयागवत् मित्रावरुणदेवताकं पशुयागमनुतिष्ठेत्। अयञ्च पशुः स्त्रीगवी वन्ध्या च भवति। वशाभावेऽनडवान्, तदभावे च पयस्या कार्या। यज्ञमनुबध्यमानत्वात् अनूबध्येति संज्ञा अस्याः। परन्तु 'गोमेधश्च तथा मखः' 'ज्येष्ठांशं गोवधं तथा' 'सपिण्डाच्च विवाहो गोवधस्तथा' 'गोसंज्ञप्तिश्च गोसवे' 'अग्निहोत्रं गवालम्भं सन्यासं पलपैतृकम्' इत्यादिभिर्वचनैः गवालम्भस्य कलौ निषिद्धत्वात् गवोक्षाणौ परित्यज्य पयस्यैव तत्र द्रव्यत्वेन ग्राह्या। ततश्चोदवसानीयेष्टिर्भवति। तत्राग्नेयः पञ्चकपालः पुरोडाशो द्रव्यं भवति। यद्यत्राशक्तिस्तर्हि 'उरु विष्णुः' इति चतुर्गृहीतेनाज्येन होमोऽनुष्ठेयः। ततश्च पुनः सायंकालीनाग्निहोत्रादिनित्यक्रियासम्पादनम्। सहस्रब्राह्मणभोजनसङ्कल्पश्च कर्त्तव्यः।

## इत्यवभृथः।

अत्रायं विशेषः अधुना यावत् यदुक्तमग्निष्टोमसंस्थाकः सोमयागः स ब्राह्मणयजमानकः, परन्तु कर्मसु त्रैवर्णिकानामधिकारसत्त्वात् राजन्यवैश्यावप्यधिक्रियेतेऽत्र। तत्र यदि राजन्यो वैश्यो वा अग्निष्टोमं चिकीर्षति तदा तत्र सोमो द्रव्यं न भवति, अपि तु तत्स्थाने न्यग्रोधस्तिभिनी फलानि वा आनीय पेषयित्वा लौकिकेन च दध्ना सह सम्मेल्य तदेव च द्रव्यं सोमस्थाने स्वीकृत्य यजेत। सोमे सम्पाद्यमानाः क्रयादयः सर्वे संस्काराः अत्रापि यथावत् भवति। सोमपदघटितानां मन्त्राणामनूहेनैव प्रयोगः कर्त्तव्यः, न तूहस्तेषाम्। यजमान इदमेव द्रव्यं भक्षयति, परन्तु ऋत्विजः सोमरसमेव भक्षयन्ति। अत एव सोमेन सहैव न्यग्रोधस्तिभिनीनामपि क्रयणं

भवति। तस्य च फलचमसमित्यपि नाम कुर्वन्त याज्ञिकाः। अयञ्च सर्वतोमुखोप्यनुष्ठीयते। तत्र च चतसृष्वपि दिक्षु चतस्रः महावेद्यो भवन्ति। देवयजनान्यपि चत्वारि भवन्ति, परन्तु गार्हपत्य एक एव चत्वारोऽऽहवनीयाश्चत्वारो दक्षिणाग्नयश्च। ऋत्विजश्च प्रतिवेदि षोडश इति सङ्कलनया चतुःषष्ठी भवन्ति। यजमान एक एव। अत्र पूर्वदक्षिणयोर्वेद्योरग्निष्टोमसंस्था पश्चिमोत्तरयोः षोडशिसंस्था क्रियते याज्ञिकैरिति।

## इति सोमयागेऽग्निष्टोमसंस्थासंक्षेपः।

**अथ उक्थ्य :**—सर्वासां सोमसंस्थानाग्निष्टोम एव प्रकृतिः। अन्याश्च विकृतिभूता एव। अत एवाग्निष्टोमस्य साङ्गोपाङ्गं निरूपणं सञ्जातम्। अन्यासु संस्थासु यो यो विशेषः स एवात्र प्रदर्शयिष्यते। उदथ्यशब्देनापि भागस्चास्य व्यवहारो दृश्यते। अग्निनष्टोमसामानन्तरं यत्र यागे उक्थ्यसाम्ना स्तूयते, स उक्थ्यसंस्थाकः ज्योतिष्टोमः। अतः परं न किमपि साम दृश्यते। येन साम्ना यागस्य परिसमाप्तिः तेनैव नाम्ना तस्य यागस्य व्यवहार इति याज्ञिकसम्प्रदायः। उत्थाप्यते सोमोऽनेनेत्युक्थ्य इति व्युत्पत्तिः। यागेऽस्मिन् अग्निष्टोमातिरिक्तानि त्रीणि स्तोत्राणि त्रीणि च शस्त्राणि भवन्ति। अतोऽस्मिन् पञ्चदशस्तोत्राणि पञ्चदश च शस्त्राणि विद्यन्ते। सायंकालीन सोमाभिषवसमये प्रयुज्यन्ते एतानि। पश्वादिफलप्राप्त्यर्थमनुतिष्ठन्ति। द्रव्यदेवतापश्वादयोऽग्निष्टोमदेव भवन्ति। तदतिरिक्तत्वेन छागोऽप्यत्र विहितो वर्त्तते। दक्षिणायाश्चापि व्यवस्थाग्निष्टोमवदेव। इतरत् सर्वं प्रकृतिवद् वोध्यम्।

**षोडबिसंस्था**—उक्थ्यस्तोत्रानन्तरं षोडशिनामकं स्तोत्रं यत्र क्रियये, न ततः परं किमपि सामान्यत् दृश्यते। सा षोडशिसंस्था। येन साम्ना समाप्यते यागः तनैव नाम्ना व्यवह्रियते इति पूर्वमेवोक्तम्। षोडशशस्त्राणि अस्मिन् क्रतौ स शोडशी क्रतुः। अयञ्च यागो न स्वतन्त्रः। अतएवाग्निष्टोमवत् पृथगनुष्ठातुं न शक्यते। अपि तु पृष्ठचषडहचतुर्थे दिवसेऽस्य प्रयोगः। तदुक्तं तैत्तिरीये षष्ठस्य षष्ठे—'न वै षोडशीनाम यद्वोऽस्ति, यज्ञ व षोडशं शस्त्रं षोडशं स्तोत्रम्, तेन षोडशी "इति उक्थ्ये प्रयुक्तपञ्चदशस्तोत्रेण सह स्तोत्रमेकमतिरिक्तमत्र भवति। तदेव च षोडशसंख्यापुरकमिति। एवमेव षोडशी ग्रहः षोडशिशस्त्रञ्च भवति। तदुक्तं शतपथस्याष्टमे 'एतत्त्रयं सह क्रियते ग्रहः स्तोत्रं शस्त्रम्' इति। सोमरसाधारत्वेनैकमधिकंपात्रमपि भवति

आपस्तम्बमते। तच्च पात्रं खादिरं चतुष्कोणं भवति। पूर्वोक्तैः पशुभिः सहात्र ऐन्द्रं मेषोऽपि पशुर्भवति। दक्षिणायामत्र लोहितपिङ्गलाइवो वा अश्वतरी वा प्रदीयते। शेषं सर्वमग्निष्टोमवदिति बोध्यम्।

## इति षोडशिसंस्था।

**अथात्यग्निष्टोमः**—यत्र यागेऽग्निष्टोमस्तोत्रसम्पादनानन्तरं प्राप्त मप्युक्थ्यं परिवर्ज्य षोडशी क्रियते, सोऽत्यग्निष्टोमनामकः सोमयागः। उक्थ्यमतिक्रामति, अतोऽपि अत्यग्निष्टोमः। अत्र षोडशिस्तोत्रं षोडशि-पात्रञ्च भवति। ऐन्द्रः पशुरतिरिक्तो भवति। अन्यत् किमपि वैशिष्ट्यं न प्रतीयते। शिष्टं सर्वमग्निष्टोमवदेवानुष्ठानं बोध्यम्।

## इत्यग्निष्टोमसंस्था।

**अथातिरात्रसंस्था**—यत्र षोडशिस्तोत्रानुष्ठानन्तरमतिरात्रसंज्ञकानि सामानि गीयन्ते, सोऽतिरात्रसंज्ञको यागः। तेनैव साम्ना परिसमाप्य-मानत्वात्। एकस्मिन्नेव दिने रात्रौ चास्य परिसमाप्तिर्भवति। अग्निष्टो-मात्पूर्वमेवानुष्ठीयते इत्यपि केचित्। परन्तु अग्निष्टोमानन्तरमेवानुष्ठीयते इति याज्ञिकमर्यादा। अतिरात्रे एकोनत्रिंशत्स्तोत्राणि भवन्ति। एवमेव शस्त्राण्यपि एकोनत्रिंशदेव। अत्रातिरिक्ते स्तोत्रशस्त्रे रात्रौ चतुर्षु पर्यायेषु पयुज्येते। पर्यायोऽयं त्रिषु स्तोत्रेषु त्रिष्वेव शस्त्रेषु भवति। अनेन प्रकारेण द्वादशसंख्या पूरिता भवति। अत्राश्विनं शस्त्रमपि प्रयुज्यते। रात्रौ षडाहुतिश्च पदीयते। आश्विनशस्त्रं च प्रातरनुवाकवद्भवति। सूर्योदयं यावदेव प्रायशः सहस्रमन्त्राणां प्रयोगो परिसमाप्यते। सन्ध्यायां सन्धिस्तोत्रं पठ्यते। स्वरश्चास्य रथन्तरसामवद् भवति। यदि सूर्यः नोदेति तर्हि ऋग्वेदं पठति होता, सूर्योदये सति सौरी ऋक् पठ्यते। सोमाभिषवदिने सारस्वती मेषी मेषो वानुष्ठीयते। रात्रौ इन्द्राय अपिशर्वराय वा प्रमुखः चमसः प्रदीयते। प्रतिप्रस्थाता कपालद्वयपरिनिष्पन्नं पुरोडाशं सोमरसञ्चा-शिखयां प्रददाति। दक्षिणादिकं सर्वमग्निष्टोमवद् बोध्यम्।

## इत्यतिरात्रसंस्था।

**अथ आप्तोर्यामः**—यागोऽयमतिरात्रस्यैव विस्ताररूपं प्रतीयते। उभयोश्चात्यन्तं सादृश्यमवलोक्यते। अतिरात्रयागापेक्षयात्र चत्वारि स्तोत्राणि चत्वारि च शस्त्राणि अधिकानि भवन्ति। अग्नीन्द्रविष्णुविश्वेदेवाः देवताः। तेभ्यः सोमरसपूरिताश्चमसाः भवन्ति। पशुधनरक्षार्थं वा उत्तम-पशुधनप्राप्त्यर्थं वास्यानुष्ठानं कुर्वन्ति स्म सहस्रगावोऽत्र दक्षिणा।

गर्दभीयुक्तं रजतादिखचितं रथं होत्रे दक्षिणात्वेन प्रदद्यात् । प्रायशोऽस्यानुष्ठानं केनापि यज्ञेन सहैव कुर्वन्तीति परम्परा । यजमानवाञ्छितफलप्राप्त्यर्थकत्वास्याप्तोर्यामत्वं सिद्ध्यति । प्राप्त्यर्थकाद् आप्लृधातोर्निष्पन्नत्वात् । अन्यत्सर्वमतिरात्रवज्ज्ञेयम् ।

## इति आप्तोर्यामः ।

**अथ वाजपेयः**—सोमसंस्थाया अन्तिमोऽयं यागः । 'वाजपेयेन स्वाराज्यकामो यजेते'ति वाक्येन विहितः । वाजाप्यो वा एषः । वाजं ह्येतेन देवा ऐप्सन् । सोमो वै वाजपेयः ..........अन्नं वै वाजपेयः' इति तैत्तिरीयब्राह्मणस्य प्रथमे । शांख्यायनश्रौतसूत्रे 'पानं वं पेयाः' अन्नं वाजः । पानं वै पुर्वमथान्नम् । तयोरुभयोराप्त्यै 'इत्युक्तम्' 'अन्नवाची वाजशब्दः' तच्चान्नं पेयं सुराद्रव्यम्' इति न्यायमालायां माधवः । अतोऽस्येयमन्वर्थिका संज्ञेति । अत्रावधेयम्—अस्यानुष्ठानस्य च प्रकारचतुष्टय दृश्यते । यथा—स्वतन्त्ररूपेण सप्तसोमसंस्थान्तर्गतसोमसंस्थारूपेण च । तत्र स्वतन्त्ररूपेणास्यानुष्ठाने ब्राह्मणक्षत्रियावधिक्रियेते । सप्तसोमसंस्थान्तर्गतेऽनुष्ठाने च वैश्योप्यधिक्रियते । अतोऽत्र त्रैवर्णिकस्याधिकार इति सिद्ध्यति । अनुष्ठानकाबश्चास्य शरदृतुरेव । अस्योभयतो बृहस्पतिसवस्यानुष्ठानं भवति । तत्राप्यस्तिपक्षद्वयम् । यदाश्विन्यां वाजपेयानुष्ठानं क्रियते तदा ततः पूर्वस्यां भाद्रपद्यां अपरस्याञ्च कार्त्तिक्यां बृहस्पतिसवद्वयमनुष्ठेयं भवति । अयं तावत्प्रथमः पक्षः । द्वितीये च पक्षे बृहस्पतिसवस्यानुष्ठानं न भवति । अपि तु अग्निष्टोमसंस्थस्य ज्योतिष्टोमस्यैवानुष्ठानम् । अथवैवमपि कुर्वन्ति—द्वादशसु शुक्लपक्षेषु वाजपेयस्य द्वादशयागानुष्ठानम् । तत्राप्ययुग्मेपु षट्सु शुक्लपक्षेषु अग्निष्ठोमसंस्थो, योतिष्टोमः क्रियते । युग्मेषु च षट्सु शुक्लपक्षेषु यथासंख्यं पृष्ठयषडहसम्बन्धान्यहानि क्रमशः रथन्तरबृहद्वैरूपवैरागशाक्वररैवतनामानि सामषट्कसाध्यानि स्तोत्राण्येकैकस्मिन्नहनि भवन्ति । स्तोमाश्च त्रिवृत् पञ्चदश सप्तदशैकविंषत्रिणवत्रयस्त्रिंशरूपाः क्रमशः एकैकस्मिन् दिने । युग्मेषु च शुक्लपक्षेषु वाजयेयानन्तरं ज्योतिष्टोम एव । अयुग्मेषु षट्सु पूर्वानुष्ठानवैपरीत्येन पृष्ठयस्तोत्राणामनुष्ठानमिति तृतीयपक्षः । अथवा वाजपेयस्य पूर्वं पौषोप्रभतिषु भाद्रपद्यन्तेषु नवसु शुक्लपक्षेषु राजसूर्यान्तर्गतानां पवित्राभिषेचनीयदशपेयकेशवपनीयव्युष्टिद्विरात्रक्षत्रधृतित्रिष्टोमज्योतिष्टोमानां यथासंख्यमनुष्ठानम् । उपरि तेषामेव प्रातिलोम्येनानुष्ठानमिति चतुर्थः पक्षः । अत्र स्तोत्राणां शस्त्राणाञ्च संख्या सप्तदश भवति । पशवोऽपि प्राजापत्याः सप्तदश एव

सन्ति। दक्षिणायामपि सप्तदशपदार्थाः प्रदीयन्ते। सप्तदशारत्निमात्राः यूपास्तथा तत्परिधानीयान्यपि सप्तदश एव' सप्तदशदिनसाध्योऽयं यागः। प्रजापतिदेवताकाः सप्तदशसुराग्रहाः सप्तदशसोमग्रहाश्च भवन्ति। एवमेवाश्वयुक्ताः सप्तदश रथाः सप्तदश दुन्दुभयश्च विहिताः सन्ति। एवं सप्तदशसंख्यायाः महत्त्वमधिकमत्र दृश्यते। कार्त्तिकी आश्वयुजी वा अमावास्या सुत्यादिनं भवति। यदि कार्त्तिक्याममायां सुत्या भवति तदा आश्विनशुक्लदशम्यां मातृपूजादिकृत्यमनुष्ठीयते। तदारभ्य सप्तदशदीक्षाः सम्पाद्यन्ते। तस्मिन्नेव च दिवसे सोमक्रयणम्। सुराद्रव्यस्यापि क्रयणादिकं तस्मिन्नेव दिने। सुरासाधनीभूतानि द्रव्याणि तथा तत्साधनप्रकारश्च सौत्रामणीवदेव बोध्यः। तदनन्तरं दिनत्रयेषु सायंप्रातः प्रवर्ग्योपसदावनुष्ठीयेते। चतुर्दश्याश्चाग्नीषोमीयः पशुरनुष्ठीयते। तन्नियोजनार्थं सप्तदशारत्निपरिमितः सप्तदशभिर्वासोभिर्वेष्टित एको यूपः। पूर्णिमायां पात्रयोजने षोडशिपात्रमधिकं दृश्यते। सुराग्रहनिर्माणार्थं सप्तदशपात्राणि भवन्ति। सवनीयाः पशवः द्वाविंशतिसंख्याकाः। तत्र प्रथमाग्नेयः, द्वितीय ऐन्द्राग्नः, तृतीय ऐन्द्रः, चतुर्थी सारस्वती मेषी, पञ्चमी वशा गौः। तदभावेऽजा। वशा वन्ध्या। ततश्च पूर्वोक्ताः सप्तदशप्राजापत्याः पशवः श्यामाः शृङ्गविहीनाः प्रजननसमर्थाश्च। आग्नेयादीनां पञ्चानामपि पशूनां वपायाः देवताभेदात् पृथक् पृथग्घोमः। प्राजापत्यानां सप्तदशानामपि पशूनां सकृदेव वपाहोम इति वैशिष्टयम्। यदा सवनीयहविर्निर्वापस्तदैव धानाभिः पञ्चभिर्हविर्भिः सह सप्तदशशरावपरिमितस्य बृहस्पतिदेवताकचरोरपि निर्वापः कर्त्तव्यः। दक्षिणादानान्ते मरुत्वतीयहोमः। ततश्च माहेन्द्रग्रहग्रहणात्पूर्वमाग्नीध्रीयव्यसमीपेऽध्वर्युरेकस्य रथस्योपरि द्वितीयं रथं स्थापयति। प्रवश्च तं मन्त्रपूर्वकमवतारयति। ततः धुरि गृहीत्वा वेदिसमीपमानीय तत्र रथे चतुरोऽश्वान्नियोजयति। ततः षोडशस्वपि रथेषु चतुरश्चतुरोऽश्वान्नियोजयति। ततश्चाग्नीध्रस्य पश्चात् स्तम्भद्वयं पूर्वापरं निखाय तयोरूपरि सप्तदशशङ्कुसम्वलितं काष्ठमेकं प्रागग्रंनिदधाति। ततस्तेपु शङ्कुषु सप्तदश दुन्दुभीन् क्रमेणासजेत्। ततश्च सर्वान् दण्डेन वादयेत्। तत एकः क्षत्रियश्चात्वालोत्करयोरन्तरालादारभ्योदीच्यां दिशि सप्तदशसंख्यानिषून् निरस्येत्। तत्र प्रथममेकमिषुं बलात्प्रास्यति। स च यावति दूरे पतितस्तत्र मत्वा स्थित्वा च द्वितीयमिषुं प्रास्यति। अनेनैव प्रकारेण सप्तदशानामपीषूणां भवति। यत्र सप्तदशतम इषुः पतति तत्रावधिभूतामौदुम्बरीं शाखां निखनेत्। ततो यजमान, रथमाराहेत्। अन्येऽपि सर्वे स्वं स्वं रथमारोहेयुः। ततः पूर्वनिखातामौदुम्बरी शाखामुद्दिश्य सर्वे स्वान् स्वान्

प्रधावयेयुः। इदमेव कर्माजिधावनशब्देनोच्यते। तेषां गमनसमये ब्रह्मा रथचक्रोपरि उपविश्य सामगानं करोति। अग्रे यजमानः गच्छति। तमनुसृत्यैवान्य गच्छेयुः। तदनन्तर सर्वे तामौदुम्बरीं प्रदक्षिणीकृत्य देवयजनं प्रत्यागच्छेयुः। तदनन्तरमेव ब्रह्मा रथचक्रादवरोहेति दुन्दुभीश्चावतारयति। ततो यजमानः स्वीयं रथमध्वर्यवे ददाति। ततश्चावशिष्टेषु यो यो यस्य यस्य रथस्तं तं तस्मै तस्मै प्रदद्यात्। ततश्च मधुग्रहसौरग्रहयोः प्रचारः। ततो पत्नीसहितः यजमानः पूर्वं सम्पादितायां यूपोपरि शायितायामार्द्रकाष्ठ-विनिर्मितैकविंशतिसंख्यासोपानयुक्तायां निश्रेण्यामारोहति। ततश्चाधः-स्थिता यजमानस्य पुत्रपौत्रादयः सप्तदशसंख्याकैरश्वत्थपर्णबद्धक्षारमृत्तिका-पुटैर्यजमानं विध्येयुः। इदमेव च कर्म स्वर्गारोहणशब्देनकथ्यते। ततश्चैकमन्नं वर्जयित्वा ग्राम्यानामारण्यानां च समेषामन्नानां सप्तभिर्मन्त्रैः सप्तवारं होमः। होमशेषेण चान्नेनासन्द्या मुपविष्टस्य यजमानस्याभिषेको भवति। ततश्चाज्याहुतयः भवन्ति। ततो वशाप्रचारादिकार्यम्। अत्र चोदयनीया-स्थाने त्रैधातवीया भवति।

## इति वाजपेयसंक्षेपः।

**अथारभ्यते राजसूयः**—यागेऽत्राभिषिक्तस्यैव क्षत्रियस्यैवाधिकारः, न तु त्रैवर्णिकस्य। 'राजा राजसूयेन स्वाराज्यकामो यजेत' इत्यनेन वाक्येन राजसूयस्य विधानात् फाल्गुनशुक्लप्रतिपदि आरभ्यते, फाल्गुनशुक्ला-ष्टम्याञ्चपरिसमाप्यतेऽयं यागः। अतोऽष्टदिनसाध्योऽयमिति अत्रानुमत्याद्या इष्टयः मतहाद्याः पशुयागाः, पवित्राद्याः सोमयागाश्चानुष्ठीयन्ते। सर्वे एते समप्रधानाः भवन्ति। परस्परमङ्गाङ्गिभावाभावात् अत्र चतस्रो दीक्षाः तिस्र उपसद एका च सुत्या भवति। यागोऽयं राजकर्तृकः तस्य च सोमभक्षणनिषेधः। अतः न्यग्रोधस्य सफलाङ्कुरानादाय तस्य सोमेन सहैव क्रयणादीन् संस्कारान् निदधाति। ततः दध्ना संयौति। ततश्चम-सोन्नयनकाले यजमानचमसे तमेव रसं गृह्णीयात्। होमकाले तमेव हुत्व शेषं भक्षयेत्। अन्येषां चमसेषु सोमरस एव भवति। तस्यैव होमः भक्षणञ्च। अतोऽत्र फलचमससम्पादितरसो यजमानस्यैव, तस्यैव क्षत्रियत्वात्, नान्येषाम्। अवभृथान्ते च तिस्रोऽनूबन्ध्याः पशवः। उदवसानीयास्थाने त्रैधातवीयाः पशवः। तदनन्तरं दशम्यामनुमतीष्टिरनुष्ठीयते। अत्रेष्टौ अष्टाकपालः पुरोडाशो द्रव्यम्। एकादश्यामाग्नवैष्णवो द्वादशकपालः द्वादश्यामग्नीषोमीय एककपालः। त्रयोदश्यामैन्द्राग्नो द्वादशकपालः।

चतुर्दश्यां यवाग्रयणं व्रीह्याग्रमणञ्च भवतीति पञ्चेष्टयः। ततश्च फाल्गुन्यां पूर्णिमायां राजसूयान्तर्गतचातुर्मास्यप्रयोगः। तत्रापि प्रथमं पूर्णिमायां वैश्वदेवं पर्व। ततः पश्चात् चैत्रकृष्णप्रतिपदमारभ्व चेत्रामासान्तं प्रतिदिनं पौर्णमासेष्टिः। प्रकृतिवदेवास्यानुष्ठानम्। अत्र पिण्डपितृयज्ञानुष्ठानं न भवति। प्रतिपदि राजसूयेष्टयनन्तरं नित्यतर्शपूर्णमासेष्टिः, नित्यश्च पिण्डरितृयज्ञः। ततश्च वैशाखज्येष्ठाषाथमासीयकृष्णपक्षेषु पौर्णमासेष्टिः शुक्लपक्षेषु च दर्शेष्टिः। प्रतिपत्सु नित्येष्टयोऽनुष्ठेयाः ये प्रतिवर्षः चातुर्मास्यानि अनुतिष्ठन्ति ते यथासमयं सर्वाणि नित्यानि पर्वाणि अनुतिष्ठेयुः। ततः एव राजसूयकानि पर्वाणि।

आषाढ्यां पूर्णिमायां वरुणप्रघासः। तत आरभ्य कार्त्तिकीपूर्णिमापर्यन्तं प्रत्यहं पूर्ववदेव दर्शथर्णमासेष्टीनागनुष्ठानम्। ततः कार्त्तिक्यां पौर्णमास्यां साकमेधाः। एते द्र्यहाः अतश्चतुर्दश्यां राजसूयिकदर्शानन्तरमनीकवत्याद्यनुष्ठानम्। पूर्णिमायाञ्च त्रैयम्बकान्तं सर्वं सम्पाद्य दर्शेष्टेरारम्भः। ततो मार्गशीर्षकृष्णप्रतिपदमारम्भ फाल्गुनमासीयामावस्यां यावत्। प्रत्यहं दर्शपूर्णमासेष्टोनामनुष्ठानं पूर्ववदेव कर्त्तव्यम्। ततः फाल्गुनकृष्णामाया युनासीरीयं राजसूयिकं पर्व। तदनन्तर तस्मिन्नेवाहनि पञ्चवातीयसंज्ञको होमः, इन्द्रतुरीख्या इष्टिश्च भवति। तत्र चाग्नेयोऽष्टाकपालः वारुणो यवममश्चरुः, रुद्रदेवताको गवेधुकश्चरुः वहिन्या दधि ऐन्द्रमिति चत्वारि हवींषि। या गौः शकटेवोह्यते सा वहिनीशब्देन व्यवह्रियते। ततस्तस्मिन्नेव दिनेऽमार्गहोम इति। ततः फाल्गुनशुक्लप्रतिपदि त्रिषंयुक्ताख्येषु त्रिषु कर्मसु प्रथमेष्टिस्त्रिषयुक्ता। अत्र च वैष्णवस्त्रिकपालः प्रथमं हविः, ऐन्द्रावैष्णवश्चरुर्द्वितीयं हविः, वैष्णवश्चरुस्तृतीयं हविरिति त्रीणि हवींषि।

ततश्चतुर्थ्यां द्विहविष्केष्टिः। तत्र वैश्वानरः द्वादशकपालः, वारुणो यावश्चरुः। ततस्तमिन्नेव दिवसे द्वादशरत्नहविः सज्ञका इष्टीः प्रारभेत्। चतुर्थीमारभ्य फाल्गुनशुक्लपूर्णिमान्तं यावदेकैकस्मिन् दिने राजसम्बन्धिन एकैकस्यपुरुषस्य गृहे एकैकेष्टिरनुष्ठेया। तत्रापि सेनान्यो गृहे प्रथमा दृष्टिः कर्त्तव्या। तत्राग्नयेऽनीकवतेऽष्टाकपालः पुरोडाशः। पुरोहितगृहे च द्वितीया। तत्र बार्हस्पत्यश्चरुः। यजमानगृहे तृतीयेष्टिः। तत्र च ऐन्द्रश्चरुः। महिष्या गृहे चतुर्थी। वत्रादित्ये चरुः। अश्वसारथेगृहे पञ्चमी। तत्र च वारुणो यावश्चरुः ग्रामनेतुर्गृहे षष्ठी। तत्र मारुतः सप्तकपालः।

मन्त्रिणो दूतस्य वा गृहे सप्तमी। तत्र सावित्रोऽष्टाकपालः। रथयोजयितुर्गृहे नवमी। तत्राश्विनो द्विकपालः पुरोडाशः। परिवेषणकर्त्तृगृहे दशमी। तत्र पौष्णश्चरुः। द्यूतपतेर्हालिकस्य वा गृहादानीतैरारण्यगोधूमैः सैद्रश्चरुर्यजमानगृहे एकादशी इति। पतिपुत्ररहितायाः कस्याश्चित् स्त्रिया गृहे द्वादशी। तत्र निर्ऋतिदेवताको तरवनिर्भिन्नः कृष्णव्रीनिश्चरुः। ततस्तस्मिन्नेव दिने सोमारौद्रश्चरुर्मैत्रावार्हस्पत्यश्चरुश्च। चैत्रकृष्णपक्षे न किमपि कर्म भवति। पुनश्च चैत्रशुक्लप्रतिपदि अभिषेचनीयदशपेयनामकयोः सोमयागयोः युगपदेवारम्भसङ्कल्पः। तत्राष्टौ सोमयागाः—पवित्रः, अभिषेचनीयः, दशपेयः, केशवपनीयः, व्युष्टिद्विरात्रः, क्षत्रस्य धृतिः, त्रिष्टोमः, अग्निष्टोम इति। आरम्भकाले पवित्राख्यः सोमयागः, अत्र द्वौ, शिष्टाश्चाग्ने भविष्यतीति। अत्र सोमक्रयणं तथा तेनैव सह न्यग्रोधस्तिभिनीक्रयणं च भवति। अत्र च देवयजनद्वयं भवति। प्रकृतिवदेव पञ्चदिनसाध्योऽयमभिषेचनीयः। अत्रायं विशेषः—अग्नीषोमीयपशुसन्निधौ देवसूहवींषि। तानि द्वौ पुरोडाशौ, षट् चरव इत्यष्टौ भवन्ति। तत्र विरूढव्रीहिसम्पाद्यः सवितृसत्वप्रसवदेवताकोऽष्टाकपालः पुरोडाशः आशुव्रीहिसम्पाद्योऽग्नये गृहपतयेऽष्टाकपालः पक्षत्रयपक्वव्रीहिः आशुव्रीहिः। श्यामाकश्चरुः सोमाय वनस्पतये। बृहस्पतये वाचे नैवारश्चरुः। इन्द्राय ज्येष्ठाय रक्तशालिचरुः। रुद्राय पशुपतये गावेधुकश्चरुः। मित्राय सत्याय स्वयंगातव्रीहिचरुः। वरुणाय धर्मपतये यावश्चरुरीति। ततो राज्ञोऽभिषेकसम्पादनाय सप्तदशप्रकाराणामुदकानामानयनम्। ततश्च सपरिकरस्य राज्ञोऽभिषेकः। ततः शौनःशेपकथाश्रवणम्। ततो वाजपेयवद्रथावरोहणादिकम्। तदनन्तरमौदुम्बरीनिर्मितासन्द्याभक्षविदेवनार्थमुपवेशिताय यजमानायाक्षदानम्। ततो देवनारम्भः। देवनकर्त्तारश्च पञ्च भवन्ति। यथा—यजमानः, राजभ्रातः, सूतः, ग्रामणीः, तद्भ्राता चेति। ततः संसृपां हवींषि। तानि च षष्ठीमारभ्य षट्सु दिनेषु षट् द्वादश्याश्चावशिष्टानि चत्वारि। ततो द्वादश्यामेव दशपेयस्य द्वितीयदिनादारभ्य चैतया सुत्या।

तत्रायं विशेषः—यजमानचमसे न्यग्रोधस्तिभिरसः इतरत्र च सोमरसः। एकैकं चमसं दश दश ब्राह्मणाः भक्षयेयुः। तत्राप्येकैकः ऋत्विक्, इतरे नवा प्रकृताः। यजमानचमसेऽपि ब्राह्मणा एव भक्षकर्त्तारो भवन्ति। ततो वैशाखे मासे कृष्णपक्षे न किमपि कर्मानुष्ठीयते। पुनश्च वैशाखशुक्लपूर्णिमाया पञ्चबिलसंज्ञकश्चरुः। तत्र पञ्च हवींषि भवन्ति। तदनन्तरं द्वादश प्रयुग्धवींषि इष्टयोऽनुष्ठीयन्ते। तानिमासान्तरालानीत्येक पक्षः।

प्रथमेष्टिमनुष्ठाय ततः शम्यां यावत् स्वबलं प्रास्येत्। यत्र सा पतति तस्मिन्नेव स्थाने तस्मिन्नेव दिने च द्वितीया। एवमेव द्वादशापीति द्वितीयः पक्षः वैशाखपूर्णिमायामेव समानतन्त्रेण प्रातःकाले षट् तथैवरान्हेऽपि षडिष्टय इति तृतीयः पक्षः। पक्षद्वयेप्येकदिनसाध्यानीमानि भवन्ति। तदनन्तरं ज्येष्ठामासियां पशुबन्धद्वयं भवति। ततश्च ज्येष्ठशुक्लैकादशीमारभ्य पञ्चसु दिनेषु अतिरात्रसंस्थस्य केशवपनीयनामकस्य सोमयागस्यानुष्ठानं प्रकृतिवदेव भवति। तत आषाढकृष्णप्रतिपदि व्युष्टिद्विरात्रसङ्कल्पः। अयञ्चाहीनः। अतोऽत्र षोडशदीक्षाः द्वादशोपसदः, द्वे सुत्ये इति मासेन समाप्योऽयं क्रतुः। ततः श्रावणकृष्णप्रतिपदि क्षत्रस्य धृतिराराभ्यते। सोऽपि पूर्णवदेव मासापवर्गः। एवं भाद्रपदि त्रिष्टोमो मासापवर्ग पूर्ववदेव भवति। आश्विनकृष्णप्रतिपदि अग्निष्टोमोऽपि मासापवर्गः पूर्ववदेव। कात्तिक्यां राजसूयस्याङ्गभूता चरकसौत्रामणी त्रिपशुका भवति। एवं राजसूयः परिसमाप्यते। राजसूयेऽत्र यजमानपत्नी चण्डातकं वासः परिधत्ते। अर्द्धोरुकं विलासिन्या वासश्चण्डातकं विदुरिति दर्शनात्। राजसूये मिलित्वा ४४६ इष्टयः द्वौ पशुयागौ, अष्टौ सोमयागाः, सप्तदर्विहोमा इति। एते सर्वे मिलित्वाः राजसूयशब्दव्यपदेश्याः भवन्ति। एते सर्वेऽत्र प्रधानयागाः। एतद्भिन्नाः तत्तत्सोमाङ्गभूता इष्टयः, पशवः, सौत्रामणी चाप्यनुष्ठेयाः भवन्ति। कालश्चास्य एकविंशतिर्मासा इति। प्रयुग्धविषां मासानुष्ठानपक्षे त्रयस्त्रिंशन्मासा भवन्तीति बोध्यम्।

## इति राजसूयसंक्षेपः

**अथाग्निचयनं निरूप्यते—**इदमपि सोमयागाङ्गभूतमेव केवलस्य सोमयागस्य या उत्तरावेदिर्भवति तां वर्धयित्वा तत्रैवेष्टकाभिश्चयनं सम्पाद्य तपदुपरि एवाहवनीयं निक्षिप्य तत्रैव होमः सम्पाद्यते। अग्न्याधारत्वादेवास्य स्थण्डिलस्याग्निचयनमिति संज्ञा भवति। केवलेनाग्निपदेनापि व्यवहारमिच्छन्ति। सोमयागत्वेऽप्यस्य नात्र ज्योतिष्टोमस्य प्रथमः प्रयोगः। द्वितीयादिषु प्रयोगेषु ज्योतिष्टोमस्य प्रयोगो भवति। सर्वत्र वैकल्पिकी व्यवस्थैव दृश्यते, न तु नित्या। अस्यापि कालो वसन्तर्त्तुरेव, सोमयागत्वात्। प्रथमदिने इष्टकानिर्माणङ्गभूतपसोरनुष्ठानं भवति। पश्वनुष्ठानेऽत्र पक्षत्रयमुपतिष्ठते। तत्र पुंस्त्वविशिष्टखगोऽव्यजाः पशवः भवन्तीति प्रथमः। केवलस्य प्राजापत्यपशोरनुष्ठानं भवतीद्वितीयः वायव्यस्य पशोरनुष्ठामिति तृतीयः। यागोपयुक्तपशोः शरीरं स्थावरे जले प्रक्षिपति। तत एव चोखार्थं इष्टकानिर्माणार्थं च मृत्तिकां जलानि च परिगृह्णाति।

**उखासम्भरणम्**—यस्मिन् पर्वणि इष्टकानिमित्तकपशुरनुष्ठीयते तदनन्तराष्टभ्यां उखासम्भरणं करणीयम्। सम्वत्सरादिकालेषु यजमानस्याग्निधारणं कर्त्तव्यं भवति तदग्न्याधारभूतः पात्रविशेषः 'उखा' शब्देनोच्यते। मृदमानीय तन्निर्माणयोग्यं मृत्पिण्डं निर्माय तत्र च वल्मीकमृदम्, अजलोमानि, लोहारमचूर्णानि, शर्कराः, पर्णकषायपक्वजलेन संयुत्य तत्र च सिकतामुपकीर्य ऊर्ध्वस्तिर्यक् च प्रादेशमात्रीमेकपशुपक्षे, ऊर्ध्वतः प्रादेशमात्रीं, तिर्यक्ततः प्रादेशमात्रीं पञ्चपशुपक्षे चरस्तासुखां निर्माति। उखायाः बहिः प्रदेशे उपरितने वितृतीयभागे समन्ततो वार्त्तिकामेकां तिर्यक् कृत्वा प्रतिदिशं चैकैकां द्वे द्वे वर्त्तिके ऊर्ध्वे पूर्वतनवर्त्तिकसंस्पृष्टे कृत्वा एकैकस्या वर्त्तिकाया अग्रे स्तनाकारं चिन्हं च कृत्वा तामग्नौ प्रदीपयेत् तया सहैबाषाढाख्यामिष्टकां द्वादशाङ्गुलसमविस्तारां स्थानत्रयेऽङ्गुल्याकारचिन्हयुक्तामेकाम्, विश्वज्योतिसंज्ञकाश्च तिस्त इष्टकाः पचेत्। इत्येवोखासम्भरणं भवति।

**इष्टानिर्माणम्**—ततश्च चयनार्थानामिष्टकानां निर्माणं भवति। ताश्च चतुर्दशविद्याः भवन्ति। यथा—पद्या, अर्द्धपद्या, पादोनपद्या, जङ्घामात्री, अध्यर्द्धा, अर्द्धोत्सेधापद्या, अर्द्धोत्सेधा अर्द्धपद्या, पादभागा, त्रिग्राहिणी, अर्द्धपाद्भभागा, बृहती, वक्रा, अर्द्धबृहती, चतुर्भागा इति। इत्येतासां नामानि। तत्र द्वादशाङ्गुलसमचतुरस्ताः पद्याः, द्वादशाङ्गुलदीर्घाः षडङ्गुलविस्त्रता अर्द्धपद्याः, द्वादशाङ्गुलसमचतुरस्ता एकेन पादेन अर्थात् कोणेन न्यूनाः त्रुटिताः पादोनपद्याः, अष्टादशाङ्गुलसमचतुरस्ता जङ्घामातयः, अष्टादशाङ्गुलदीर्घा द्वादशाङ्गुलविस्तृता अध्यर्द्धाः द्वादशाङ्गुलसमचतुरस्तास्तास्तयङ्गुलोच्चा द्वयङ्गुलोच्चा वा अर्द्धोत्सेधापद्याः द्वादशाङ्गुलदीर्घाः षडर्थङ्गुलविस्तृतास्त्र्यङ्गुलच्चा द्वयङ्गुलीच्चा वा अर्द्धोत्सेधाअर्द्धपद्याः षडङ्गुलसमचतुरास्ताः पादभागा, चतुर्विंशत्यङ्गुलदीर्घा अष्टादशाङ्गुलविस्ताराास्त्रग्राहिण्यः, षडङ्गुलदीर्घारत्र्ङ्गुलविस्तृता अर्द्धपादभासाः, चतुर्विंशत्यङ्गुलसमचतुरस्ताः बृहत्य, चतुर्विंशत्यङ्गुलदीर्घा द्वादशाङ्गुलविस्तृता अर्द्धबृहत्या, त्र्यङ्गुलसमचतुरस्ताश्चतुर्भागा इति। उच्चता तु षडङ्गुलपरिमिता सर्वासां चतुरङ्गुलमिता वा अर्द्धोत्सेधापद्यार्द्धपद्ययोस्तु द्वयङ्गुलं वोच्चत्वम् वक्राणामपीष्टकानां प्रमाणसाधनं कर्त्तव्यम्। तस्य प्रकारः श्रौत्रन्सूत्रादौ द्रष्टकासु चाङ्गुलिकाष्ठादिना त्रीणि त्रीणि वक्राणि ‿ ‿ ‿ ऋजूनि ।।। तिरश्चालिखतानि — — — चिन्हानि कर्त्तव्यानि।

**अथेष्टकानां संख्या**—इष्टकानां समग्रा संख्या चात्रैकादशसहस्त्रणि: सप्ततत्यधिकमेकशतं बोध्यम्। अर्थात् ११९७० इष्टकेति तत्र लोकम्पृणाः १०८००, यजुष्मत्यः ३७० इष्टकाः भवन्ति। शतपथे च ३९५ संख्या यजुष्मत्यः दृश्यन्ते। पादभागाः ९२६२, वक्रलिखिता पादभागाः १७३२ ऋज्वालिखिताः पादभागाः ७५३०, अर्द्धपादभागाः ६७८ इति। तत्र वक्रलिखिता अर्द्धपादभागाः २६२, ऋज्वालिखिता अर्द्धपादभागाः ४१६, चतुर्भागा १२ इति। तत्र वक्रालिखिताः ४ ऋज्वालिखिता ८ इति। तत्र पद्याः ७७३ इष्टकाः तत्र पूर्णोत्सेधाः पद्याः ७५९, अर्द्धोत्सेधाः पद्याः अष्टादश। अर्द्धपद्या अष्टाशीतिशतम्। तत्रार्द्धोत्सेधा द्वादश। चतस्तस्तिरश्चालिखिताः, अष्टौऋज्वालिखिताः एका तिरश्चालिखिता इति सप्तविंशतिः। तासां मध्ये चतस्तोऽर्द्धोत्सेधाः, त्रयोविंशति पूर्णोत्सेधाः। शेषा ऋज्वालिखिताः। वक्रालिखितेऽर्द्धपद्ये पूर्णोत्सधे द्वे इति जङ्घामातयः ५०, तिग्राहिण्यः ७० वक्राः ८ अध्यर्द्धाः ।।। बृहत्यः ६ अथवा ७ अर्द्धबृहत्यः ४ पादोने २ इति आहत्य ११९७० संख्या भवति इष्टकानिमिमं संख्या उपधानकालीन बोध्या। निर्माणकाले तासां संख्या अधिकैव भवति यतो हि भेदनादिना इष्टकाः स्वल्पाः न भवेयुरिति।

**उपधानप्रकाराः**—अत्र पञ्चसु चितिषु द्वादसविधानामिष्टकानामुपधानं भवति। चतुर्भागा वक्राणान्तु यथासंख्यं होतृधिष्ण्यगार्हपत्ययोरूपधानम्। कासाञ्चिच्च तूष्णीम्। याः मन्त्रैरूपधेया इष्टकास्ता यजुष्मत्य इत्युच्यन्ते। याश्च तूष्णीमुपधेयास्ताः लोकम्पृणा इति कथ्यन्ते। इदमत्रावधेयम्—इष्टकानिर्माणकाले येन प्रमाणेन निर्मीयन्ते, शुष्काः सत्यः द्वात्रिंशद्भागेन ह्रसन्ते। अतः द्वात्रिंशत्तमं भागं वर्द्धयित्वा निर्मातव्या इष्टकाः। तत्र प्रथमायां चितौ यजुष्मत्यः ७७ शेषा लोकम्पृणाः ९२९ संख्यका इष्टकाः भवन्ति। मेलनेन च २००६ संख्या पूरिता भवति। द्वितीयायां चितौ यजुष्मत्यः ४१ लोकम्पृणाः ९५० इति। सङ्कलनेन १९९१ संख्या पूर्यते। तृतीयायां चितौ यजुष्मत्यः ७० शेषः लोकम्पृणाः १९५० इति सङ्कलनया २०२० भवति चितौ यजुष्यत्यः ४७ शेषाश्च लोकम्पृणाः ३५० इति। उभयोर्मेलनेन १९९७ इति। पञ्चम्यां चितौ यजुष्मत्यः १३४ लोकम्पृणाः २९२२ इति। मेलनेन ३०५३ भवति। सर्वासां महायोगेन यजुष्मत्यः ३६० लोकम्पृणाः १०७०९ इति उभय मिलित्वा ११९७० संख्या सम्पूर्णा भवतीति। इत्युपधानप्रकारः।

**स्थण्डिलनिर्माणम्**—चितिनिर्माणानन्तरं यजमानः वर्तुलाकारं

किञ्चित् सौवर्णं रौक्म वा धारयति । तदनन्तरञ्च मुख्यमग्निं कण्ठे धारयति । धारणानन्तरमवतार्याग्निमासन्द्यां निदधाति । एवमेव सम्वत्सरं यावत् उखासम्भरणम्, विष्णुक्रमाः, वनीवाहनम्, वात्सप्रोपस्थानञ्च कर्त्तव्याः । अत्र पक्षद्वयं प्रचलति । षण्मासदीक्षापक्षः प्रथमः । एकदीक्षा-पक्षश्च द्वितीयः तत्रैकदीक्षापक्षे तस्यामेव रात्री विष्णुक्रमादयो वेदिमान-मग्निक्षेत्रमानञ्च कर्त्तव्यं भवति । वेदिश्च चयनयागचित्यनुसारं वर्धितापि भवति । सा च चत्वारिंशत्पदापि भवति । तत्राग्निक्षेत्रं निर्मातव्यम । तच्च सार्द्धसप्तपुरुषात्मकं भवति । तत्र मध्ये द्विपुरुषविस्तारं च स्थपण्डिलं निर्माति । ततस्तत्र संलग्नमेव दक्षिणपश्चिमोत्तरभागेषु त्रीण्यपि एकैकपुरुष-विस्तारं दक्षिणोत्तरयोः पार्श्वयोः सारत्निकैकैकपुरुषायामं पश्चिमे च सवितस्तिकपुरुषायामं स्थण्डिलत्रयं निर्मातव्यम् । स्थण्डिलमिदं प्राङ्मुखं भवति । तस्य दक्षिणोत्तरयोर्द्वे स्थण्डिले भवतः । तयोः क्रमशः दक्षिणोत्तरौ पक्षौ इति संज्ञा भवति । पश्चिमस्य पुच्छशब्देन व्यवहारः मध्यमस्य चात्मेति संज्ञा भवति । तदनन्तरं स्थण्डिलं रज्ज्वावेष्टयति । ततः तस्य समन्तात् खातं करोति तत्र च खाते एकषष्ठयधिकशतद्वयसंख्याकान् । चतुर्णवत्यधिकशतत्रयसंख्याकान् वा पाषाणान् इष्टकाः वा निरन्तरं परस्परसंलग्नात् निखनेत् । ततश्च स्थण्डिलस्य वायव्यकोणे त्रयः पाषाणाः जङ्घानाभि-मुखमात्राः क्रमशोनिखातव्याः । चमवस्यास्य पञ्चनयतिवारं यावत् आवृत्त्याप्यनुष्ठानं कात्यायनेन प्रतिपादितम् । इदञ्च प्रथमावृत्तखग्नि-क्षेत्रप्रमाणम् । द्वितीयवृत्तौ च प्रतिचयनमेकैकपुरुषप्रमाणं वर्द्धयित्वा प्रमापयेत् पञ्चनवतितमचयनं यावत् । इदमत्र व्यातव्यम्—परिमाणवर्द्धने-ऽपि । दृष्टकानां संख्या न वर्द्धनीया, अपि तु दृष्टकापरिमाणवृद्धिर्भवति । अत्रावृत्ती न क्रमः, स्वच्छयैव यां काञ्चिच्चितिं कर्त्तुं शक्नोति ।

तत्र प्रथमान्तावत् गार्हपत्यस्याग्नेः स्थण्डिलं निर्यातयम् तच्चैक-चितिकं त्रिचितिकं वा भवति । विस्तारस्तु चतुररत्निमात्रो मालाकारश्च । एकैकस्यामपि चितौ अर्द्धबृहत्यश्चतस्तः, पद्याः सप्त, द्वेऽर्धपद्ये, अष्टौ वक्रा इति सङ्कलनडा एकविंशतिसंख्या भवति । शिष्टं पद्धत्यादिभ्यो ज्ञेयम् । चितेरखष्टम्भनार्थं स्थण्डिलस्य परितः एयविंशतिसंख्याकाः त्र्यङ्गुणविस्तृताः पाषाणः निखातव्याः । एवं विनिर्मितं गार्हपत्यस्थण्डिलं चात्वालानीतया मृत्तिकया लेपनं कृत्वा उख्यमग्निं स्थापयेत् । तदनन्तरं नैर्ऋत्यां दिशि दूरं गत्वा तुमपक्वाः कृष्णवर्णाः निर्ऋतिसंज्ञकाः तिस्रःइष्टकाः श्वभ्रादौ निधाय तत्रैव च शिक्यं रुक्यं पाशमासन्द्यादिकञ्च निरस्य पुनरागच्छेत् ततश्च

शालामागत्य प्रायणीयेष्टिं हविष्कृदाह्वानान्तां सम्पाद्य षट्गवं द्वादशगवं चतुर्विंशतिगवं व हलं सज्जीकृत्याग्निक्षेत्रभूमिं कर्षेत्। ततश्च प्रायणीयशेषं परिसमाप्यातिन्यष्ठिंठाय पुनः प्रवर्ग्योपसदौ प्रकृतिवदेन कुर्यादिति। ततः पुनरग्निक्षेत्रेऽश्वमारोह्य परिहरेत्। ततश्चाग्निक्षेत्रमध्ये कुशस्तम्बं निदधाति। पुनस्तत्र कमलपत्रस्य निधानं भवति, तदुपरि च उख्यधारणकाले यजमान-धृतं रुक्ममुपधाय तदुपरि सुवर्णनिर्मितां पुरुषाकारां प्रतिमां प्राक्शिरसं निदधाति। तदुपरि च स्वयमातृण्णामिष्टकामुपदध्यात्। इष्टकापाककाले स्वतःसम्पन्नभागे दूर्वामयीमिष्टकामुदध्यात्। विहितक्रमानुसारं यजुष्मतीनामिष्टकानामुपाधनं कृत्वा अवशिष्टे स्थले लोकम्पृणा इष्टकोपदध्यात्। एवमेवात्मसंज्ञकं चितेर्मध्यभागमुपधाय पूर्वं दक्षिणपक्षं तदनन्तरमुत्तरपक्षं ततश्च आपराह्निक्यौ प्रवर्ग्योपसदौ कुर्वीत। तदनन्तरदिने प्रातःकाले प्रवर्ग्योपसदनन्तरं तिस्त्रोऽपि चितय उपधाव्याः। तृतीये च दिवसे पुरीषनिवापादिः। इयञ्च व्यवस्था एकाहपक्षे बोध्या।

षडुपसत्के यागे च प्रत्यहमेकका चितिः, षष्ठे च दिवसे पुरीषनिवाप। एवंविधिनिर्मितस्थण्डिलस्य हिरण्यकलशसहस्तेण प्रोक्षणं कुर्यादिति।

**अथ शतरुद्रियहोमः**—इष्टकोपाधानानन्तरं शतरुद्रियहोमानुष्ठानम। तत्र स्थण्डिलस्य वायव्यकोणे ये परिश्रित्संज्ञकाः पाषाणाः पूर्वं निखाताः, तानेवाहवनीयस्थाने कृत्वा पूर्ववदेवान्वान्याधानादिकं सम्पाद्य जुहूस्थानेऽर्कपत्रेण 'नमस्ते रुद्रमन्यव' इति षड्विंशत्या मन्त्रैरजाक्षीरेण, जर्वतिलसम्मिश्रारण्यकगोधूमनिर्मितैः सक्तुभिर्वा तिष्ठन् सन्नुदङ्मुखो जुहुयात्। अयं होमः सन्ततधारयैव कर्त्तव्यः धाराविच्छेदोऽत्र न कार्यः। आदितस्तृतीयानुवाकपर्यंतं जानुमात्र्यां परिश्रिति जुहुयात्। अन्ते चैकः स्वाहाकारः। तदनन्तरं चतुर्थपञ्चमानुवाकाभ्यां नाभिमात्र्यां परिश्रिति जुहुयात्, अन्ते च स्वाहाकारः। ततश्च मुखमात्र्यां परिश्रिति 'नमोस्तु' इत्यनेन जुहुयात्। पुनश्चान्ते स्वाहाकारः। ततो 'नमोस्तु' इति मन्त्रत्रयेण मुखनाभिजानुमात्रीषु परिश्रित्सु पूर्वकृतविपर्यासेन होमः कर्त्तव्यः। ततश्च पुनः सायं प्रवर्ग्योपसदौ कुर्वीत। तदनन्तरं तृतीयदिने च प्रातः सायं प्रवर्ग्योपसदौ कुर्यात् ततश्च प्रवर्ग्यमुत्साद्याहवहीयतोऽग्निं प्रणीय स्थण्डिलदेशं प्रति गच्छति। ततस्तत्र स्थापितायाः स्वयमातृण्णायाः समीपे प्रतिप्रस्थात्रा अग्नौ धार्यमाणे शुक्लवत्सायाः गोः पयसा स्वयमातृण्णाया उपरि हुत्वा ततश्च सम्भरान् न्युप्य तत्राग्निं स्थापयेत्। ततो वैश्वानरं द्वादशकपालं मारुतं सप्तकपालञ्च हविर्निरूप्यानुतिष्ठेत्। तत औदुम्बर्या स्तुचि आज्यं गृहीत्वा

'वाजश्च मे' इष्टभिरनुवाकैः सन्ततमाज्यधारया जुहुयात्। धाराविच्छेदोऽत्रापि न कार्यः। ततः राजसूयिकान् षट्पार्थहोमान् वाजप्रसवीयांश्च वाजपेयिकान् होमान् आग्निकांश्च वाजप्रसवीयान् जुहुयात्। ततो यजमानभिषेक इति। अभिषेकानन्तरं पुनः पार्थहोमः, राष्ट्रभृद्धोमः, वातहोमः, नवाहुतयश्च। ततो होत्रीयादीनां सप्तानां चयनम्। तत्राग्नीध्रीय होत्रीय नेष्ट्रीयाच्छावाकीयेषु अष्टावष्टाविष्टकाः, होत्रीये एकविंशतिः ब्राह्मणाच्छसीये एकादश, मार्जालीये षट् इतीष्टकानां संख्या। अत्रापि सर्वेषु धिष्ण्येषु गार्हपत्यादिस्थण्डिल इव न परिश्रितां खननम्, अपि तु परितः निधानमेव। तत्तदिष्टकासंख्यानुसारमेव परिश्रित्संख्यापि भवति ततोऽग्नीषोमीयपशोरनुष्ठानम् तत्र च राजसूयान्तर्गताभिषेचनीयाख्यसोमयागस्य धर्मा अतिदिश्यन्ते। पशुपुरोडाशान्तरमष्टानां देवसूहविषां निर्वापो भवति। ततः सुत्या। तस्या अनुष्ठानं प्रकृतिदेव भवति। अवभृथान्ते उदनीयेष्टि। ततो मैत्रावरुणीवशानूबन्ध्या। अयमत्र विशेषः—पशुपुरोडाशनिर्वापानन्तरं पञ्चानां देविकाहविषां निर्वापः प्रचारश्चेति।

## इति चयनयज्ञसंक्षेपः।

**अथाश्वमेधस्वरूपं निरूप्यते**—अश्वमेधोऽपि सोमयाग एव षोडश्यतिरात्रप्रभृतिसोमसंस्थानामत्राप्यनुष्ठानात्, तथापि अश्वस्यात्र सवनीयपशुत्वात् 'अश्वमेध' इति संज्ञा भवति। अत्राभिशिक्तः सार्वभौमो राजा अधिक्रियते। फाल्गुनशुक्लस्याष्टमी नवमी वा अथवा ग्रीष्मोऽस्यानुष्ठानकालः एतेष्वेवारभ्यते। आरम्भे दिने सर्वप्रथमं ब्राह्मणवरणम्, तदनन्तरं ब्रह्मौदनपाकः, निर्मितस्य पाकस्य च चतुर्भ्यो महर्त्विग्भ्यो दानं भवति, ते चर्त्विजः तं पाकं प्राश्नीयुः। तेभ्यश्च प्रत्येकमेकैकं गवां सहस्रं चत्वारि शतमानानि च दद्यात्। ततश्च यजमानस्य चतस्रः पत्न्यः मणिमुक्तादिसर्वालङ्कारालङ्कृता अनुचरीणां शतेनानुनीतमानाः राज्ञः समक्षमागच्छेयुः। तत्र प्रथमा पत्नी राजमहिषी, द्विनीया च परिणीता वल्लभा स्त्री, तृतीया अवल्लभा, चतुर्थी च परिणीता दूतपुत्री। तासु महिष्या अनुचर्यः राजपुत्र्यः भवन्ति। द्वितीयायाः क्षत्रियजातिमात्रपुत्र्यः, तृतीयस्याः अश्वयोषकग्रामनेत्रोर्दुहितरः चतुर्थ्याश्यच क्षत्रीयपुत्र्यः। यजमान आगताभिः ताभि स्त्रीभिः सहैव सायमग्निहोत्रसम्पादनानन्तरं रात्रौ उदक्शिरः कृत्वा शयानायाः वल्लभाया पत्न्याः ऊर्वोर्मध्ये उदक्शिरः शेते इतराश्च पत्न्यः तस्यैव परितः शेरते। तत्रापि ब्रह्मचर्यं प्रयत्नेन संरक्षेत्। उदिते चाग्निहोत्रं सम्पाद्य

पूर्णाहुतिः कर्त्तव्या। ततः पथिकृदिष्टेरनुष्ठानम् तत्राग्नये पथिकृतेऽष्टाकपालः पुरोडाशः ततो दर्भमयीं द्वादशारत्निं त्रयोदशारत्निं वा अश्वरशनां घृतेनाभ्यज्याश्वबन्धनार्थं ब्राह्मणं पृच्छेत्। ब्राह्मणेनानुज्ञातोऽश्वंबध्नाति।

**अश्वलक्षणम्**—नात्राश्वसामान्यः विहितः, अपि तु विशेषलक्षणलक्षित एव तथाहि—अश्वश्च पूर्वभागे कृष्णः, अपरभागे शुक्लः ललाटे शकटाकारपुण्ड्रत्रयसम्वलितोऽनन्यसदृशो गोसहस्रमूल्यलभ्यो नीलवर्णलाञ्छनयुक्तो भवेत्। तमश्वं तडागादिस्थावरजलमध्यं प्रापय्य प्रोक्षेत्। ततः शूद्राद्वैश्यायां जातेन पुरुषेण चतुरक्षंश्वानं सिध्रकमुसलेन मारयित्वा वेतसकटेनाश्वस्याधस्तात् जलमध्ये प्लावयेत्। नेत्रयोरुपरि नेत्रसदृशचिह्नयुक्तः श्वा चतुरक्षशब्देनोच्यते। ततश्च प्रतिनिवृत्य होमानुष्ठानम्। ततस्त्रयो भिन्नतन्त्राः द्वादशकपालाः पुरोडाशाः। एता एव तिस्रः सावित्र्य इष्टयः कथ्यन्ते। तासामिष्टीनां प्रयाजेष्वनुष्ठीयमानेषु ऋत्विग्भिन्नः कश्चिद् ब्राह्मणः यजमानस्य दानयागादिकं स्वयंकृताभिः तिसृभिर्गाथाभिर्वीणायां गायेत्। ततश्चाध्वर्युयजमानौ गतयौवनैरश्वैः शतेन सह यज्ञीयमश्वमीशान्यामुत्सृजेताम्। भ्रमणार्थं प्रस्थितस्याश्वस्य पृष्ठतः धनुर्वाणादियुक्तान् युद्धार्थं सज्जीभूतान् चतुःशतरक्षिणाः प्रेषयेत् तेषु शतं क्षत्रियजातिमात्राः, शतं सूतपुत्रा शतं च क्षत्तारो भवन्ति तैश्च रक्षिभिः वडवात स्नानीयादुदकाच्चाश्वस्य वारणं कर्त्तव्यम्। आश्वमेधिककर्मनदीष्णब्राह्मणादेव वृत्तिरुपादेया। रात्रौ च रथकारगृहे निवासः कर्त्तव्यः। एवं सम्वत्सरपर्यन्तमश्वं भ्रामयित्वा आगच्चेयुः प्रैषाः न ततः पूर्वमिति। तत पारिप्लवं शंसति। ततोऽश्वप्रक्रमान् धृतीश्चोद्दिश्य प्रक्रमहोमो धृतिहोमश्चानुष्ठेयः। धृतिहोमकाले राजन्यो यजमानविजयादीनि स्वकृतगाथागानं कुर्वीत। इत्येतावत्पर्यन्तं प्रथमदिनकृत्यं भवति। एवमेव सम्वत्सरं यावत् वावातया सह शयनम्। सावित्र्यस्तिस्त्र इष्टयः, गानम्, पारिप्लवाख्यानम्, प्रक्रयहोमाः, धृतिहोमाश्च प्रचलन्ति। अत्र अर्द्धमासत्रैमासषण्मासपक्षा अपि विकल्पेन शास्त्रे दृश्यन्ते। ततश्चैतस्यां पौर्णमास्यामुखासम्भरमिष्टकापशुश्चानुष्ठेयः। तस्मिन्नेव दिने दीक्षणीयेष्टिमारभ्य षट्सु दिनेषु प्रत्यहमेकैकया इष्टया वैशाखकृष्णषष्ठ्यां सप्तमीं दीक्षणीयां परिसमापयेत्। तदनन्तरं तस्मिन्नेव दिने दीक्षामारम्य द्वादशसु दिनेषु वैशाखशुक्लतृतीयां यावत् द्वादशसुत्याः परिसमापनीयाः ततस्तृतीयायामेव सोकक्रयणम्। ततः प्रभृति चतुर्दशीपर्यन्तं द्वादशोपसदः। चतुर्दश्यामेवाग्नीषोमीयाः पशवः। अत्र विभिन्नजातीया एकविंशतिर्यूपा एवविंशत्यरत्नयः।

एको राज्जुदालो, द्वौ पैतुदारवौ, षड् बैल्वाः, षट् खादिराः, षट् च पालाशाः। आहवनीयस्य पुरतो राज्जुदालः, तयभितो द्वौ भवतः। एवमवशिष्टानां बैल्वखादिरपालाशानां क्रमशः व्यत्यासेन निखननं कर्त्तव्यम्। पशवोऽपि अग्नीषोमीया एकविंशतिर्भवंति। पशूनां नियोजनं च दक्षिणत आरभ्योदक् संस्थं कर्त्तव्यम्। पशूनामनेकत्वेऽपि पशुपुरोडाश एक एव भवतीति विशेषः चयनसम्वलितत्वेन तदनुसारं प्रक्रमं वर्द्धयित्वा वेदिरपि वर्द्धनीया तदनुसारमेव इष्टकाश्चापि वर्द्धनीयाः। तदनन्तरमस्मिन्नेवाहनि प्रथमा सुत्या भवति। सा च सोमसंस्थाका। तत्र सवनीयाः पशवः, द्वे चैकादशिन्यौ। तत्र मध्ये राज्जुदालौ द्वावग्नेयौ नियुज्य क्रमशो दक्षिणोत्तरतः व्यत्यासेन नियोजनं भवति। दक्षिणोत्तरयोर्द्वावित्यादिप्रारेणान्येषां नियोजनमिति यूपेषु पशुनियोजनप्रकारः।

पूर्वं विजयसमये पूर्वदिक्तः यद्धनं प्राप्तम् तत्त्रेता विभज्य भागमेकं होत्रे दद्यात्। एवं दक्षिणदिग्लब्धस्म तृतीयांश ब्राह्मणे, प्रतीच्यामवाप्तस्य तृतीयांशमध्वर्यवे, उत्तरदिग्लब्धस्य तृतीयांशमुद्गात्रे प्रदद्यादिति। शिष्टमंशद्वयमनन्तरयोः सुत्मादिदिवसयोरेवमेव क्रमेण दद्यादिति दक्षिणायां विशेषः। अन्यत्सर्वं प्रकृतिवदेवेति दक्षिणाप्रकारः। ततोऽस्यमिते सूर्ये तस्यां रात्रौ आज्यसक्तुधानालाजानामेकैकं द्रव्यमादाय यथाक्रमं प्रतिप्रहरं 'प्राणाय स्वाहा' इत्यादिभिर्द्वादशभिर्मन्त्रै द्वादिशस्वनुवाकेषु पठितैर्यावद्रात्रि जुहुयात्। ततश्च द्वितीयं दिनवुक्थ्यसंस्थाकम्। तत्र सौवर्णराजतयोः पात्रयोः महिमग्रह्योः ग्रहणम्। वहिष्पवमानसम्पादनार्थं प्रसर्पणमश्वान्वारभ्य कर्त्तव्यम्। उपाकरणकाले चैकादशिन्योरूपाकरणानन्तरश्वस्योपाकरणम्। तत एकविंशतियूपेषु द्वावेकादशिन्यौ पूर्ववदेव नियुज्य अश्वतूपरगोमृगान् अग्निष्ठे राज्जुदाले नियुज्जीत। शृङ्गहीनः छागः तूपरः, गवयश्च गोमृगः। ततोऽश्वस्य ललाटादितत्तदङ्गेषु द्वादशपशवो नियोजनीयाः ते च पशवः पर्यङ्ग्या इति कथ्यन्ते। पशुनियोजनकर्मसम्पादनार्थमश्वस्य सम्पूर्णमपि शरीरं रज्जुवेष्टितं भवति। ततः तत्तत्स्थानगतायां रज्जौ प्रयत्नेन पशून् वध्नीयात्। तत्र क्रमविशेषोऽस्ति। यथा—आग्नेयं कृष्णग्रीवमजं ललाटे, हन्वोरधस्तात् सारस्वतीं, मषीम् आश्विनी वाह्वोः, सोमापौष्णं श्यामं नाभौ, पार्श्वद्वये सौर्यं ववेत यमदेवत्यं कृष्णञ्च, पश्चाद्पादयोः त्वाष्ट्रवदेत्यौ लोभशावजौ, वायव्यैन्द्रवैष्णवान्, पुच्छे श्वेतवेहद्वामनानिति। अश्वतूपरगोमृगौ साकमिने पशवः पञ्चदश सम्पद्यन्ते। पूर्वाभ्याभाग्नेयाभ्यां सह सप्तदशदशवः मध्यमे यूपे भवन्ति। तदितरेषु विंशतियूपेषु रोहितादयः

पञ्चदशपञ्चदश पशवो नियजनीया' पूर्वमेकादशिन्या एकैकः पशुर्बद्धः मिलित्वा चैकैकस्मिन् यूपे षोडश षोडश पशवः सम्पन्नाः भवन्ति। सर्वेषां कलनया ३७ पशवः भवन्ति। एते च ग्राम्या एवेति यजुर्वेदस्य चतुर्विंशतितमेऽध्याये प्रतिपादितम्। यूपान्तरालेषु आरण्यानां पशूनां नियोजनम्। एतेषां यूपेषु नियोजनासम्भवात् पञ्जरनीडजलादिषु यत्र स्थानं रिक्तं भवेतत्र यथाशक्यं नियोजनं कर्त्तव्यम्। यूपे बद्धानां सर्वेषां पशूनां संज्ञपनं भवति। ततश्च तेषां वपादीन्यङ्गानि हूयन्ते। ततश्चारण्यानां कपिञ्जलादीनामालम्भक्रममाश्रित्य विहितदेवतोद्देशेनोत्सर्गं कृत्वा तेनैव क्रमेण तेषां त्यागोऽपि। ततोऽश्वस्य संज्ञपनं भवति। तेन मृतस्य सवनीयस्याश्वस्य त्रिःपरिक्रमणं करोति। ततश्च राज्ञी महिषी मृतस्याश्वास्य समीपे एव शेते। तत्रैव चाध्वर्युकुमार्योर्वादप्रतिवादः। ततो ब्रह्ममहिष्योः सम्वादः। ततो होतृपरिवृक्तयः। प्रतिहारपालागतयो क्रमशः सम्वादो विहितः ततः महिषी प्रभृतयः पत्न्योऽश्वशरीरे एकाधिकशतः सीसताम्रसुवर्णादिनिर्मिताः सूचीः प्रवेशयन्ति। अश्वेछाग इव वपा न भवति। अतस्तत्स्थाने तस्य भेद एवोद्धृत्व कार्ष्मर्यमाभ्यां शूलाभ्यां श्रपयित्वा होमः कर्त्तव्यः। ततो ब्रह्मोद्यवदनम्। तत्र चाध्वर्युब्रह्मोद्गातृप्रतिप्रस्थातृयजमानाः प्रश्नप्रतिवचनकर्त्तारो भवन्ति। तत एकादशिनीनां वपाप्रचारः। ततो वनस्पतियाजनम्। ततश्चाश्वशूलस्यपशुशेषं सर्वमदाय होमः। ततोऽज्येन शादादिदेवताभ्यो दन्ताद्यश्वाङ्गेभ्यश्च होमः। ततः पत्नीसंयाजन्तमनुष्ठाय तावदेव तदहः संस्थापयेत्।

प्रातर्द्वितीयायामतिरात्रसंस्थाकं तृतीयमहः। सर्वश्चात्र षोडशिग्रहणादिकमपि कार्यमतिरात्रसंस्थानत्वात्। ततोऽभृथः। एकविंशतिरनूबन्ध्याः पशवः। तत्र सप्त वारुणाः सप्त वैश्वदेव्यः, सप्त च बार्हस्पत्याः। एकैकस्मिन् भूपे एकैकस्य पशोर्नियोजनम्। तय एव पशुपुरोडाशाः भवन्ति। उदवसानीयान्ते पालागल्यनुचरीणामध्वर्यवे दानम् महिष्यनुचरीणां ब्रह्मणे, वावातानुचरीणामुद्गात्रे, परिवृक्तानुचरीणाञ्च होत्रे। ततः प्रभृतिद्वादशदिनपर्यन्तं प्रत्यहमेकैक आग्नेयः पुरोडाशो भवति ब्रह्मौदनं वा ततो यावद्वत्सरं प्रत्भृतु षट् षट् पशवस्तन्त्रेणालब्धव्याः तत्र वसन्ते षडाग्नेयाः ग्रीष्मे ऐन्द्राः, वर्षासु पार्जन्याः शरदि मैत्रावरुणाः, हेमन्ते ऐन्द्रावैष्णवाः शिशिरे ऐन्द्राबार्हस्पत्याः। शिष्टमन्यत्सर्वं कर्म निरूथपशूबन्धवदनुष्ठेयमिति संक्षेपः।

## इत्यश्वमेधस्वरूपसंक्षेपः ।

**अथ पुरुषमेधः**—अत्र ब्राह्मणराजन्यावधिक्रियेते । त्रयोविंशतिदीक्षः द्वादशोपसत्कः पञ्चसुत्याकश्चत्वारिंशद्दिनसाध्योऽयम् । सर्वेषामेक एव पशुपुरोडाश इति विशेषः । सोमसंस्थाभिरस्यापि सम्बन्धसत्त्वात् सोमविकृतिः । सुत्यासु प्रथमपञ्चमेऽहनी अग्निष्टोमसंस्थे, द्वितीयचतुर्थे उक्थ्यसंस्थे, तृतीयमतिरात्रसंस्थम् । सुत्यासु प्रत्यहमैकादशिनः पशवः । तृतीयेऽतिरात्रसंस्थेऽहनि प्रतियूममेकैकमैकदिशिनं नियुज्य मध्यमे यूपे ब्राह्मणादीनष्टचत्वारिंशत्संख्याकान् संहितोक्तान् पुरुषान् नियुञ्ज्यात् । तदितरेषु दशसु यूपेषु एकदशैकादशपुरुषान् नियुञ्जीत । अत्र द्वितीय यूपे सप्तत्रिंशत्पुरुषाः नियुज्यन्ते । तेन च कलनया १८४ पुरुषा सम्बद्धाः भवन्ति । एवं बन्धनानन्तरं पुरुषसूक्तेन सर्वामुपतिष्ठेत । ततश्च सर्वान् पुरुषानुत्सृजेत् । ततो यां यां देवतामुद्दिश्य यो यो पुरुषो नियुक्तस्तस्यै तस्यै देवतायै एकैकामाज्याहुतिं जुहुयात् । तत आत्मन्यग्नी समारोप्योत्तरनारायणेन सूर्यमुपस्थाप्य पश्चादनवलोकयन्नरण्यं गत्वा वानप्रस्थो भवेदिति । न कदापि पुनर्ग्रामं यावज्जीवमागच्छेत् । यदि पुनः ग्रामवासेच्छा भवेत्तर्हि अरण्येऽग्निं संस्थाप्य गृहे एव वसेदग्निहोत्रदिकं चानुतिष्ठेत् यावज्जीवनमिति ।

## इति पुरुषमेधसंक्षेपः ।

**अथ सर्वमेधः**—यागेऽस्मिन् द्वादश दीक्षाः द्वादशोपसदो दश सुत्याश्च भवन्ति । चतुस्त्रिंशद्दिनसाध्योऽयं यागः । ब्राह्मणक्षत्रियावत्राधिक्रियेते । ब्राह्मणकर्तृके सर्वमेधे सर्वस्वं दक्षिणा भवति । क्षत्रियकर्तृके चाश्वमेधवद्दक्षिणाबोध्या । अत्र प्रथममहरग्निष्टोमसंस्थम्, ततो दिनत्रयं यावत् इन्द्रस्तुत् सूर्यस्तुदवैश्वदेवस्तुत क्रमेणोक्थ्य संस्थाः । ततो महाव्रतमहः, ततो वाजपेयः, तत आप्तोर्यामः, ततस्त्रिंशत्स्तोमः उक्थ्यः । ततस्त्रयस्त्रिंस्तोम उक्थ्यः, ततो विश्वजित्सर्वपृष्ठोऽतिरात्र इति । चैत्रशुक्लषष्ठयामिष्टकापशुरुखासम्भरणं भवति । एकशतविधोऽग्निरत्र विहितः । सप्तदशारत्निरेको यूपः । यत्र दशस्वप्यहःसु स्तोमायनं सवनीयाः पशव इति ।

## इति सर्वमेधसंक्षेपः ।

**अथ पितृमेधः**—अत्र त्रैवर्णिकोऽधिकारी । एक एवाध्वर्युः ऋत्विक् च

अत्र मृतस्य पित्रादेरस्थीन्यरण्ये हृत्वा तैरस्थिभिर्मस्याङ्गस्य पदस्थ, तेन तत्तदङ्गकल्पनेन पुरुषाकृतिं निर्माय शैवलकुशादिना तान्याच्छाद्य ग्रामं प्रत्यागत्य स्नात्वा च गृहमागच्छेदिति विधिः ।

## इति पितृमेधविधिसंक्षेपः ।

**अथैकाहस्वरूपम्**—एकदिनसाध्याः क्रतव एकाहाः कथ्यन्ते इमेऽपि सोमविकारा एव । एकदिनसाध्यसुत्याक एकानेकदीक्षाकस्त्र्युपसत्को वा द्वादशोपत्को वा सोमभाग एकाह इति स्पष्टोऽर्थः । ते चैकाहाः भूरादि-वज्रान्ताः सप्तसप्ततिसंख्याका इति कात्यायनः । शतपथब्राह्मणेऽश्रुता-नामाप्येकाहानां 'अनुक्तमन्यतो ग्राह्यम्' इति न्यायेन ताण्डयब्राह्मणादिभिः गृहीत्वा वर्णितम् । नात्र सर्वेषां स्वरूपं प्रदर्शयितुं शक्यते, विस्तरभयात् । तेषां सर्वेषां ज्ञानमापस्तम्बकात्यायनादिश्रौतसूत्रैरेव कर्त्तव्यम्, अथ वा तत्तद्ब्राह्मणग्रन्थेभ्यः केषाञ्चिदेकाहानामत्र संक्षिप्तस्वरूपं प्रदर्श्यते । अत्रैक एव यजमानः, ऋत्विजश्च षोडश । अग्निष्टोमाद्यन्यतमसंख्याका इमे । क्रतोरस्याग्निष्टोमसंस्थाकत्वे सवनीयः पशुराग्नेयएकः, उक्थ्यसंस्थाकत्वेऽऽग्ने-यैन्द्राग्नौ द्वौ, षोडशिसंस्थाकत्वेऽऽग्नेयैन्द्राग्नैन्द्रा इति त्रयः, अतिरात्रसंस्थाकत्वे पूर्वोक्तत्रयोग पशुना साकं सारस्वती मेषी चतुर्थी इति ।

तत्र प्रथमं भूर्नामैकाहोऽग्निष्टोमसंस्थः, द्वितीयो ज्योतिरग्निष्टोम-संस्थः, तृतीयो गौरुक्थ्यसंस्थः, चतुर्थः आयुरुक्थ्यसंस्थः पञ्चमोऽभिजित्, षष्ठो विश्वजित् । अन्त्यावेतावग्निष्टोमसंस्थौ । अनयोरनुष्ठाने पक्षद्वयमस्ति । पृथक् पृथगनुष्ठानमिति प्रथमपक्षः । सहैवानुष्ठानमिति द्वितीयः पक्षः अत्र विश्वजिति सर्ववेदसदक्षिणा सहस्रदक्षिणया सह विकल्पिता । ततश्च सर्वजिदग्निष्टोमसंस्थः सम्वत्सरदीप्तः सप्तसुत्याकस्त्र्युपसत्कः सप्तमः, ततो ज्योतिः, विश्वज्योतिः, सर्वज्योतिः । त्रिरात्रसम्मित इति चत्वार एकाहाः । ततस्तृतीय उक्थ्यसंस्थः । इतरे सर्वेऽग्निष्टोमसंस्थाः । ततः षडेकाहा अग्निष्टोमसंस्थाः । एतेषां साद्यक्र इत्यपि नामधेयम् । सद्यो दीक्षादिवसे एव क्रयप्रभृति अभिषवान्तं कर्म भवति येषु ते साद्यस्क्रा इति कथ्यन्ते । तत्रापि प्रथमद्वितीययोर्न काचित् विशेषसंज्ञा दृश्यते । इतरे चत्वारः क्रमशोऽनुकी विश्वजिच्छिल्पश्येनैकत्रिसंज्ञकाः भवन्ति । अत्र सवनीयपश्वा-लम्भनकाले एवाग्नीषोमीयसवनीयानूवन्ध्यानां पशूनामालम्भनम् । सोम-क्रयणीभूतायाः गोः स्थाने त्रिवत्सः साण्डः प्रयुज्यते । अत्र सस्यवती भूमिर्वेदिः । पशुवन्धनार्थं यूपस्थानीया खलेवाली भवति । खले तृणतो

धान्यविष्काशनार्थं मध्ये शङ्कुमेकं निहत्य तत्र दृढां रज्जुमेकां वध्वा तस्याश्च ऋषभादिकं वध्वा भ्रामयन्ति । तद्भ्रामणार्थं विखातः शङ्कुः खलेवालीत्युच्यते । श्येन यागे चायं विशेषः—यूपश्चषालवर्जितः तिल्वलवृक्षनिर्मितः विभीतकवृक्षकाष्ठानीन्धनस्थानीयानि कुशस्थाने शराः शववाहनार्थमुपयुक्ते काष्ठेऽधिषवणफलके, आज्यं भस्त्रानिष्पादितं नवनीतम् । हविर्द्धानशकास्थाने रथ इति । प्रचरणकाले ऋत्विजो लोहितोष्णीषाः निवीतिन आरोपितधन्वानो भस्त्रावन्तो भवेयुः । दानकाले च कण्टकैरेनास्तुदेत् ।

ततश्चत्वारो व्रात्यस्तोमसंज्ञका एकाहाः भवन्ति । इमे च गणयामा इति । येषां पूर्वजा अकृतोपनयनसंस्काराः पतितसावित्रीकास्ये व्रात्याः भवन्ति । उपनयनाभिलाषः भवेच्चेत्तेषां तर्हि व्रात्यस्तोमेनेष्ट्वा उपनयनादिसंस्कारमर्हन्ति । एतस्मात् स्वस्मात्पुरुषत्रयपर्यन्तानामेव शुद्धिरित्यापस्तम्बाः । अधिकानामपिशुद्धिरिति पारस्करा अन्ये च वहव इति । ते च चतुर्विधाः भवन्ति । तत्र प्रथनतृतीयचतुर्था अग्निष्टोमसंस्थाः, द्वितीयश्चोक्थ्यसंस्थः । व्रात्यानां पूर्वमग्न्यभावात् लौकिकेष्वेवाग्निषु तेषामनुष्ठानमिति कातीयाः । एतदर्थमाधानं सम्पादमिति छन्दोगाः । व्रात्या अपि चतुर्विधाः—हीनाः, निन्दिताः, कनिष्ठाः, ज्येष्ठाश्चेति । आचारहीनाः हीनपदवाच्याः भवन्ति अर्थात् विहिताकरणनिषिद्धाचरणादिना ये भ्रष्टास्ते हीना इति । मनुष्यैरभिशसनेन पापारोपेण च ये गर्हियास्ते निन्दिता इति । ज्ञातिभिर्वहिष्कृताः कनिष्ठा इत्युच्यन्ते । निवृत्तपुत्रोत्पादनसामर्थ्याः ज्येष्ठा इति कथ्यन्ते । इतरत्सर्वं प्रकृतिसुत्यावद् भवति ।

ततोऽग्निष्टुदग्निष्टोमसंस्थः । ततस्त्रिवृत्स्तोमकाश्चत्वार एकाहा अग्निष्टोमसंस्थाः । ते च ईप्सुयज्ञः, बृहस्पतिसवः, इषुः सर्वस्वार इतिनामानः । सर्वस्वारेयिशेषः—अयञ्चमरणकामस्यैवानुष्ठानयोग्यः । अत्र तृतीयसवने आर्भवपवमाने स्तूयमाने दक्षिणेनौदुम्बरीं दक्षिणशिरः प्रावृतो यजमानः शयीत मरमुद्दिश्य । ततः प्रभृतिमृतश्च भवेत् । कर्मैतन्महिम्ना तदेव स स्वेप्सितं फलं मरणं प्राप्नोति । यदि मृतिस्तदौर्ध्वदैहिकं कुर्यात् । कदाचिच्च जीवत्यपि, तदा अभोजनेन मुमूर्षेत् । मरणाभावे ब्राह्मणाः समापयत मे यज्ञमिति प्रेष्याहवनीमं प्रविशति इत्याहवनीये प्रवेशोऽप्यन्यत्र प्रतिपादितः ।

तत ऋत्विगपोहनीयसंज्ञकस्त्रय एकाहाः भवन्ति। तत्र प्रथमः सर्व-स्तोमसंज्ञोऽग्निष्टोमसंस्थः । द्वितीयतृतीयानुक्थ्यसंस्थौ क्रमशश्चतुश्चत्वारिंशस्तोमाष्टाचत्वारिंशस्तोमकौ। ततश्चवाचस्तोमसंज्ञकाश्चत्वार एकाहा अग्निष्टोमसंस्थाः। अत्र च। सर्वा ऋचः सर्वाणि यजूंषि सर्वाणि स मानि वाऽत्र स्तोमे पारिप्लवं शंसति इति वचनप्रामण्यात् बहवृचैः सामगैश्च सर्वासामृचां सर्वेषां साम्नां च शसनं तस्तवनं च कर्त्तव्यमिति विशेषः। ततश्च पृष्ठ्यस्तोमसंज्ञका एकाहाः षडग्निष्टोमसंस्थाः। तत्रैककस्मिन्नेकाहे यथासंख्यं त्रिवृदादयस्त्रियस्त्रिशान्ताः स्तोमाः कार्याः। तदनन्तरं सौमिकानि चातुर्मास्थानि भवन्ति। तत्र वैश्वदेवस्थाने प्रथमं पृष्ठ्यमहः। नात्र यूपो भवति। परिधावेव पशुनियोजनं सञ्जायते। अतएव पशुनियोजनसमर्थो मध्यमः परिधिः स्थूलः सम्पादनीयः। द्वितीयो द्विदिवाख्यो द्वयहो वरुण-प्रघासस्थाने। तृतीये साकमेधस्थाने त्र्यहः पाष्ठिकः। तत्रान्तिममहोऽति-रात्रसंस्थाकम् । शुनासीरीयस्थाने च एकाहोज्योतिष्टोमः । तदनन्तरं प्रतिकर्म सोमाः भवन्ति । ते चाग्न्यादोयपुनराधेयाग्निहोत्रदर्शपूर्णमास-दाक्षायणाग्रयणेष्टिस्थानेषु षड् सोमयागाः भवन्ति। वथावदेवानुष्ठानमिति बहवः। उक्थ्यसंस्थएवपशुरिति केचित्। ततश्च सप्तदशसंज्ञकाः पञ्चा-हीनाः सम्पाद्यन्ते। तत्र चत्वारोऽग्निष्टोमसंस्थाः पञ्चमश्चोक्थ्यसंस्थः। ते चोपहव्योनिरुक्तः, ऋतपेयः दूणाशः वैश्यस्तोमः तीव्रसुच्चेति भवन्ति। ततश्च द्वन्द्वस्तोमाः। तत्र च द्वयोर्मध्ये एकमनुष्ठाय द्वितीयोप्यवश्यमनुष्ठेयः। तत्र राट् विराट् इति प्रथमं द्वन्द्वम्। औपसदः पुनस्तोम इति द्वितीयं द्वन्द्वम्। द्वौ चतुष्टोमाविति तृतीय द्वन्द्वम्। उद्भिद्वलभिदाविति चतुर्थं द्वन्द्वम्। द्वापचिती पञ्चमम्।

द्वावग्ने स्तोमौ षष्ठं द्वन्द्वम्। पक्षी ज्योतिश्चेति नामानौ ऋषभ-गोसवौ सप्तमं द्वन्द्वम्। तत्र गोसव उक्थ्यसंस्थः वोध्यः। ततश्च मरुत्स्तोमो गणयज्ञोऽग्निष्टोमसंस्थः। तत्र ऐन्द्राग्रकुलाओऽग्निष्टोमसंस्थः। तत इन्द्रस्तोमो राजसूय उक्थ्यसंस्थः। तत इन्द्राग्न्यो स्तोमोऽग्निष्टोमसंस्थः। ततो विघनौ द्वावग्निष्टोमसंस्थौ। ततश्च सन्दंशवज्रावग्निष्टोमसंस्थौ अत्र ये गणयज्ञास्तान् वर्जयित्वा अन्यत्र सर्वत्र एक एव यजमानः। गणयज्ञे तु गणस्यैवाधिकारः। अतोऽत्रानेके यजमानाः भवन्तीति। अत्र तु संक्षेपेण तेषां स्वरूपं प्रदर्शितम्, तथा न साकल्येन सर्वेषां व प्रतिपादनं कृतम्। अतो विशेषः श्रौत सूत्रेभ्यो ब्राह्मणग्रन्थेभ्यो वावगन्तव्य इति।

## इत्येकाहयागसंक्षेपः।

**अथ द्वादशाहयागनिरूपणम्**—दिनद्वयानुष्ठेयसुत्याको यागो द्विरात्रपदवाच्यः। प्रथमे दिनेऽभिषवादिहोमान्ता ये यागाः अनुष्ठितास्तेषामेव द्वितीयस्मिन्नपि दिने यत्र विधिविशेषसहितमनुष्ठानं स द्विरात्र इति। उपसद्दीक्षाद्यङ्गानुष्ठानं तत्र तत्र यथाविधि द्वित्रिचतुःपञ्चादिदिवसेषु भवति। एवमेव त्रिप्रभृतिक्रतुष्वपि बोध्यम्। एवमेव च द्विरात्रप्रभृत्येकादशरात्रपर्यन्ताः क्रतवोऽहीनाः भवन्ति। त्रयोदशरात्रप्रभृतिसहस्रसम्वत्सरपर्यन्तानि सत्राणि भवन्ति। तत्रापि च त्रयोदशरात्रप्रभृतिशतरात्रपर्यन्तं रात्रिसत्राणि, ततः पश्चात्च्च केवलसत्राणि बोध्यानि। तत्र द्वादशाहस्तूभयात्मको भवति। सत्रात्मक अहीनात्मश्च। अयमेव च सत्राणामहीनानां यागानां प्रकृतिभूतः तत्रापि सत्रात्मकः सत्राणाम्। अहीनात्मकश्चाहीनानामिति विज्ञेयम्। इदमत्रावधेयम्—सत्रेऽहीने वा योऽहःशब्दो रात्रिशब्दो ना श्रूयते, स सर्वोऽप्यहोत्रसमुदायात्मकः तस्मात् द्वादशरात्रो द्वादशाह इति पर्यायशब्दः। सत्रात्मकः द्वादशाहः ब्राह्मणकर्त्तृक एव भवति। ब्राह्मणकर्त्तृकोऽदक्षिणः। उभयतोऽतिरात्रसंस्थाकः सोमयागविशेषः सत्रम्। त्रैवर्णिकाधिकारिकः सदक्षिणोऽन्तेऽतिरात्रसंस्थाक एकद्वित्रिचतुराद्यनेकयजमानकर्त्तृकः सोमयागोऽहीन इत्यपि लक्षयन्ति। सत्रे च समानकल्पा आहिताग्नयोऽनुष्ठिताग्निष्टोमसंस्थाः सप्तदशप्रभृति चतुर्विंशतिपर्यन्ता अधिकारिणो भवन्ति। सत्रानुष्ठानजन्यं फलं सर्वेषामेवानुष्ठातॄणां भवति अतोऽत्र सर्वे यजमाना एवेति विशेषः। अतएवात्र दक्षिणाभावोऽपि। सर्वेषां यजमानत्वेऽपि सप्तदशपक्षे एको गृहपति शब्दवाच्यः। अन्ये च ब्राह्मादिकं कार्यं सम्पादयन्ति। गृहपतिसंज्ञकश्च यजमानं कर्म करोति। चतुर्विंशतिपक्षे षोडशभि ऋत्विक्कार्यं कर्त्तव्यम्। शेषः गृहपतिकार्यं क्रियते, न सप्तदशन्यूना न चतुर्विंशतितोऽधिका ऋत्विजोऽत्र विहिताः। सर्वे च सत्रोपयोगि स्वं द्रव्यं समभागमेकीकृत्य तेन यजेरन्।

**अत्र—समांशं द्रव्यमेकत्र कृत्वाऽऽत्मीयांशदानतः।**
**पात्राण्यन्यानि पूर्वेभ्यः साधारणतया भजेत्॥** इति

वचनेनात्र पात्राणि साधारणान्यान्येवोत्पादनीयानि। दीक्षादिकञ्च यजमानकार्यं सर्वेषामेव समानम्। अहीनात्मको द्वादशाह एकद्विबहुयजमानकः। अत्राप्यग्निष्टोमवदहवर्ध्वादयः ऋत्विज एव कार्यसम्पादकाः।

अतएवैषां दक्षिणाप्यस्ति, सा च गवां सहस्रं किञ्चिदधिकम् । फलं तु यजमानामेव भवति । सत्रात्मकाद् द्वादशाहाद् गवामयनादिषु सत्रेषुधर्मा अतिदिश्यन्ते । तस्य प्रकृतिभूतत्वादस्य । अहीनात्मकादहीनेषु द्विरात्रादिषु एकादशरात्रपर्यन्तेषु अहीनेषु इष्टप्रथमयज्ञानामेवाधिकार इति नास्ति नियमः । उभयत्रापि द्वादशदीक्षा द्वादशोपसदः द्वादशसुत्या इति षट्त्रिंशत् दिवसाध्योऽयं यज्ञ इति जैमिनीयाः । अयञ्च यागः साग्निचित्यो निरग्निचित्याश्च भवति । अत्र सर्वेषामग्नीन् एकीकृत्यैव कर्मानुष्ठेयानि भवन्ति । दीक्षादिवसे च सर्वे गृहपत्यादयः स्वान् स्वानग्नीनरण्योः समारोप्य देवयजनमागच्छन्ति । ततश्च मन्थनं कुर्वन्ति । तत पृथक् पृथक् च गार्हपत्यखरे स्थापयन्ति । ततो ब्रह्मादयः स्वगार्हपत्यादेकैकमुल्कमादाय गृहपतेर्गार्हपत्ये क्षिपन्ति । एवं साधारणीकृताद् गार्हपत्यादाहवनीयं दक्षिणाग्निं च विहरेत् । अतो गार्हपत्यो पृथक् आहवनीयो दक्षिणाग्निश्चैक इति । शिष्टमन्यतो ज्ञेयम् ।

साग्निचित्यानुष्ठानपक्षे प्रथममिष्टकापशुप्राजापत्योऽनुष्ठेयस्तस्य च पशोरनुष्ठानं दीक्षा दिने स्वकाले वा । स्यस्यैव प्रवृत्तिसत्वान्नात्र ऋत्विग् वरणम् । दीक्षायामत्रास्ति किञ्चिद्वैशिष्टयम्, सर्वेषां यजमानत्वात् सर्वैरपि दीक्षितव्यम् । तत्र ज्योतिष्टोमेऽध्वर्योरिव दीक्षाकर्त्तृत्वात् । अत्र स तत्पुरुषाश्च दीक्षाकर्त्तारो भवेयुः । तत्रायं क्रमः—अध्वर्युः प्रथमतो गृहपतिं दीक्षयित्वा ब्रह्मोद्गातृहोतॄन् दीक्षयेत् । ततः पश्चात् प्रतिप्रस्थाता अध्वर्युः ब्राह्मणाच्छंसि प्रस्तोतृमैत्रावरुणान्, ततो नेष्टा प्रतिप्रस्थात्रग्नीत्प्रतिहर्त्रच्छावाकान्, तत उनेता नेष्टृपोतृसुब्रह्मण्यग्रावस्तुतः क्रमेण दीक्षयेयुः । उन्नेतारमन्यः कश्चिद् दीक्षयति । यो यो यं यं दीक्षयति स स तं तमनु तापत्नीरपि दीक्षयेत् । शेषं सर्वं ज्योतिष्टोमवद् बोध्यम् । क्वचिद् क्वचिदल्पो वा विशेषो वा भवत्येव । साग्निचित्ये च उखासम्भरणमिष्टकोपधानादिकं सर्वं चयनवदेव भवति । सवनीय पुरुष सममस्ति कश्चिद्विशेषः—प्रतिदिनमैन्द्राग्नः पशुः स्तोमायनं वा, एकादशिना प्रत्यहम् अथवा एकस्याः एकादशिन्याः प्रत्यहमेकैकपशवनुष्ठानेन एकादशसु दिवसेष्वनुष्ठानम् द्वादशे पुनराग्नेयस्य पशोः द्वादशदीक्षानन्तरमुपसद्दिवसेषु यस्मिन् कस्मिंश्चिद्दिवसे सोमकमः । सुत्याञ्च विशेषः—तत्र प्रायणीयं प्रथममहः । प्रकृष्टमयनमारम्भो यत्रेति व्युत्पत्त्या प्रायणीयशब्दो द्वादशाहप्रथमदिनवचनः । ततः पृष्ठ्यः षडहः, ततस्त्रयश्छन्दोमाः, ततोऽविवाक्यम् । तत उदवानीयोऽतिरात्रश्चेति । तत्र प्रथमं दिनगतिरात्रसंस्थम् । ततश्च

द्वितीयदिनप्रभृतिसप्तमदिनपर्यन्ताः षडहाः पार्ष्ठिकाः रथन्तरबृहद्वैराज-शाक्वररैवतनामानि सामानि षटस्वप्यहःसु क्रमशः पृष्ठाख्यस्तोत्रसाधनीभूतानीति पृष्ठ्यः षडह इति व्यवहारः कान्त्यं दिनं परित्यज्य एकैकमायहः पत्नीसंयाजान्तमवतिष्ठते । सर्वान्ते चावभृथः । षडहेषु द्वितीयतृतीयेऽहनी उक्थ्यसंस्थाके, चतुर्थमहः षोडशिसंस्थम्, पञ्चमषष्ठे उक्थ्यसंस्थे, ततस्त्रिषु दिनेषु च्छन्दोमा उक्थ्यसंस्था एव । प्रथमदिने चतुर्विंशस्तोमः, द्वितीये चतुश्चत्वारिंशस्तोमः, तृतीये चाष्टाचत्वारिंशस्तोम इति, चतुर्विंशतिसंख्या गामतयक्षराणाम्, चतुश्चत्वारिंशत्संख्या त्रिष्टुबक्षराणाम्, अष्टाचत्वारिंशत्संख्या जगत्यणराणामिति । त्रिभिरेतैः छन्दोभिः विगीयन्ते इमानि त्रीण्हानीति छन्दोमाः । तत एकादशमहोऽत्यग्निष्टोमसंस्थम् । द्वादशमह उदयमनीयमतिरात्रसंस्थमिति ।

द्वादशाहेऽत्रातिग्राह्याणां त्रयाणां, षोडशिनः, अंश्वदाभ्ययोश्च ग्रहणमधिकम् । अयञ्च द्वादशाहो व्यूढसमूढभेदेन द्विविधः । दशमस्य पञ्चमे जैमिनिरप्येवमेव । उदाहरणं यथा--ऐन्द्रवायवाग्रौ प्रायागीयोदयनीयौ, दशमं चाहः अथ नवानामन्हां मध्ये ऐन्द्रवायावगं प्रथममहः, अंशुक्राग्रमथाग्रयणम्, 'अथैन्द्रवायवाग्रमथशुक्रात्रमथाग्रयणाग्रहम्' इत्यदिघापस्तम्बः । अयमेव ऐन्द्रवायवादीनां यथासंख्यमत्र समूहनात्सेषा त्र्यनीका साम्येनोढा यत्र स समूढ इत्युच्यते । वैषम्येनोढा यत्र स व्यूढः । व्यूढप्रकारश्चेत्थम्—'ऐन्द्रवायवाग्रौ, प्रायणीयोदयनीयौ, अथेतरेषां दशानमन्हामैन्द्रवायवाग्रं प्रथममहः, अथशुक्राग्रम्, अथ द्वेऽऽग्रयणे, अथैन्द्रवायवाग्रम्, अथ द्वे शुक्राणे, अथाग्रयणम्, अथ द्वे ऐन्द्रवःयवाग्रे' इत्यायस्तम्वः । सहस्तब्राह्मणभोजनमत्र विहितम् ।

## इति द्वादशाहसंक्षेपः ।

**अथाहीनयागाः निरुप्यन्ते**—द्विरात्रमारभ्य द्वादशाहपर्यन्ताः यागा अहीनाः कथ्यन्ते । अनेकदिसाध्यक्रतुवाचकोऽयंशब्दः । अहन्शब्दात् 'अन्हः ख क्रतौ' इति वार्तिकवलात् खप्रत्यये कृते सति निष्पद्यतेऽयं शब्दः । त्रयस्त्रिंशत्संख्याका अहीनाः प्रतिपादिताः कात्यायनेन । तथाहि द्विसुत्याका द्वयहास्त्रयः, त्रिसुत्याकाः, पञ्च, चतुःसुत्याकाश्चत्वारः, पञ्च सुत्याकास्त्रयः, षट् सुत्याकास्त्वया, सप्तसुत्याकाः सप्त, एकोऽष्टसुत्याकः, द्वौ नव सुत्याकौ, चत्वारो दशसुत्याकाः, एकादशसुत्याक एकः पौण्डरीक इति सङ्कलनया-पूर्वोक्ता संख्या पूरिता भवति । द्वादशाहसंज्ञकोऽहीनो द्वादशसुत्याकोऽनेक-

विधः। सर्वेषामेतेषां द्वादशोपसत्कत्वं मासापवर्गता च बोध्या। अत्र षोडश दीक्षाः, द्वादशोपसदः, एका सुत्या चेति हयहस्याहीनस्य मासैकसाध्यता सम्पद्यते। एवमेवेतरत्रापि यथासुत्या वर्द्धते तथैव दीक्षादिनं न्यूनोभवति। यथा त्रिसुत्याके पञ्चदशदीक्षाः भवन्ति, चतुर्दशसुत्याके चतुर्दशसुत्याके चतुर्दश इति। तत्रापि द्वादशाहजामदग्न्यचतूरात्राणां न मासापवर्गता भवति, अपि त्वेतद्भिन्नानामेव। द्वादशाहस्य तु द्वादशदीक्षा द्वादशोयसदो द्वादश सुत्या इति षट्त्रिंशद्दिनसाध्यत्वं निष्पद्यते।

तत्रादौ त्रयोदशातिरात्रसंस्थाका अहीनास्तत्तत्फलमुद्दिश्य प्रतिपादिताः कात्यायेन। तत्रादितश्चत्वारः षोडशिग्रहवर्जिताः, अन्ये च सषोडशिका एव। तत्रापि नव, सप्तदश, विषुवान्, गौः आयुः, ज्योतिष्टोमः विश्वजित्, त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंशः, आप्तोर्याभः, अभिजित्, सर्वस्तोम इति यथासंख्यं तेषां नामधेयम्। ततो द्व्यहास्त्रयः—आङ्गिरसचैत्ररथ-कायिवनसंज्ञकाः षोडशदीक्षा द्वादशोपसत्का द्विसुत्याकाः। आङ्गिरसोऽ-त्राग्निष्टोमसंस्थः। अन्यावषोडशिकावतिरात्रसंस्थाकौ भवतः।

ततस्त्र्यहाः पञ्च भवन्ति। यथा—गर्गवेदच्छन्दोमान्तर्वसुपराक-नामानस्त्रिसुत्याः पञ्चदिशदीक्षा द्वादगोयसत्काः। तत्र प्रथमोऽग्निष्टोम-संस्थः, द्वितीय उक्थ्यसंस्थः, तृतीयोऽतिरात्रसंस्थः। चतुर्थपञ्चमयोः संस्था गर्गत्रिरात्रवत् वोध्या। चत्वारश्चतुरहाश्चतुः सुत्याका अत्रिचतुर्वीरजाम-दग्न्यवसिष्ठसंसर्पविश्वामित्रनामानश्चतुर्दशदीक्षा द्वादशोपसत्काः। अत्रोपसदः प्ररोडाशिन्यो भवन्तीति वैशिष्टचमस्य। ततस्त्रयः पञ्चाहाः पञ्चसुत्याका द्वादशोपत्कास्त्रयोदशदीक्षाका, देवपञ्चशारदीयः, व्रतवानिति नामानः। ततश्च षडहास्त्रयः क्रतवो द्वादशदीक्षाका द्वादशोपसत्काः षट् सुत्याका। तत्र प्रथमद्वितीययो ऋतुप्रथमः, पृष्ठयावलम्व इति क्रमात् संज्ञा। तृतीयस्य च न विशेष काचित् संज्ञा। प्रथमे पार्ष्ठिकानि पञ्चाहानि, षष्टो विश्व-जिदतिरात्रः। प्रतिदिनमैन्द्राग्नः शवनीयः पशुः स्तोमामनं वा। एवमेवा-ग्रेऽपि भवतीति वोध्यम्।

ततश्च पुनः सप्त सप्ताहां अहीना द्वादशोयत्सका एकादशदीक्षाः सप्तसुत्याकाः। तत्र क्रमशः ज्योतिः गौः, आयुः, अभिजित्, विश्वजित्, सर्वजित्, सर्वस्तोम इति सप्ताहानि भवन्ति। एषु च ज्योतिः, अभिजित्, विश्वचिदित्यग्निष्येमसंस्था गौरायु इत्युक्थ्यसंस्थे, सर्वजित् महाव्रतः सर्वस्तोमोऽतिरात्र इति।

अप्यह, एक एकाहो द्वादशोयसत्कोऽष्टसुत्यो दशदीक्षः। अत्र पृष्ठ्यः षडहः, ततो महाव्रतम्, ततोऽतिरात्र इत्यहः क्लृप्तिः।

ततो नवाहौ द्वावेहाकौ द्वादशोपसत्कौ नवसुत्यौ नवदीक्षौ। अत्र पृष्ठ्यः षडहः, ततस्त्रयस्त्रिकद्रुकाः द्वितीये नवरात्रे प्रथमं त्रिकद्रुकास्त्रयः, तत पञ्चाहानिपार्ष्ठिकानि, ततोऽतिरात्र इति।

चत्वारो दशरात्रा द्वादशोपसत्का दशसुत्याकां अष्टदीक्षाः। चतुर्णां क्रमेण त्रिककुप्, कौसुरुविन्दः, पूर्दशरात्रः, छन्दोमदशाह—इति नाम। नत्र प्रथमे प्रथमतृतीयचतुर्थषष्ठसप्तनवमान्यहान्यग्निष्टोमसंस्थानि, दशमोऽतिरात्रः, शेषाणि चोक्थ्यसंस्थानीति।

द्वितीये दशरात्रे—प्रथमतस्त्रयोऽग्निष्टोमसंस्थाः, ततः षडुक्थ्याः, दशमोऽतिरात्र इति।

तृतीये दशरात्रे—प्रथमतृतीयपञ्चमसप्तमनवमेषु अग्निष्टोमसंस्था, दशमेऽतिरात्रसंस्था, शेषेषूक्थ्यसंस्थेति।

चतुर्थे दशरात्रे—प्रथमः पृष्ठ्यावलम्बः, ततः पञ्चाहः पृष्ठ्यः, ततश्चत्वारो दशरात्राः दशमोऽतिरात्र इति। एकादशरात्र एकोऽहीनो द्वादशोपसत्क एकादशसुत्यः सप्तदीक्षोऽयुतदक्षिणाक इति। अयमेवाहीनयागानां परिचयसंक्षेपः। अधिकन्तु मूलग्रन्थेभ्योऽवगन्तव्यम्।

## इत्यहीनाः।

**अथ सत्रनिरूपणम्**—सत्रलक्षणम्, अहीनस्वरूपम्, द्वादशाहस्योभयरूपता, तस्य च स्वरूपं सर्वं पूर्वमेवोपपादितम्, त्रयोदशरात्रप्रभृति रात्रिसत्राण्यत्रोच्यन्ते। तत्र सर्वेषु रात्रिसत्रेषु द्वादशोपसदश्च भवन्ति। सुत्यास्तु त्रयोदशरात्रिसत्रे त्रयोदश, चतुर्दशरात्रिसत्रे चतुर्दश, पञ्चदशरात्रिसत्रे पञ्चदश इत्यादि। एवमेकैक वृद्ध्या चत्वारिंशद्रात्रिपर्यन्तेषु सत्रेषु चत्वारिंशत् सुत्याः भवन्ति। तेन त्रयोदशरात्रः सप्तत्रिंशद्दिनसाध्यः। चतुर्दशरात्रोऽष्टत्रिंशद्दिनसाध्य इत्येवं चत्वारिंश द्रात्रसत्रं यावदेकैकास्य वृद्धिर्बोध्या। ततश्चैकामन्नपञ्चाद्रात्राणि सप्त सत्राणि, ततः शतरात्र-

संज्ञकमेकं सत्रमिति सप्तत्रिंशत्संख्याकानि रात्रिसत्राणि भवन्ति । सर्वेषां विस्तृतविवेचनं नात्र प्रस्तूयते । अतः मूलग्रन्थतोऽवसेयः ।

केषाञ्चित् संक्षिप्तविवरणमत्र प्रस्तौमि । तेषु आदित्यानामयनं नामकं सत्रमेकं वर्त्तते तच्च सम्वत्सत्साध्यम् । तत्र प्रापणीयः, चतुर्विंशमहः, अभिप्लवौ, पृष्ठयः, पुनश्चाभिप्लवौ । एवं प्रथमो मासः, एवमेव द्वितीयतृतीयचतुर्थपञ्चमाः, षष्ठे पुनः त्रयोऽभिप्लवाः, पृष्ठयः, बृहस्पतिसवः, स्वरसामानस्त्रयः इति ।

तत्र तावदन्येषां सत्राणां प्रवृतिभूतत्वात् गवामयनस्य निरूपणं पूर्वमावश्यकमिति प्रतिभाति । अतः गवामयनं निरूप्यते ।

**अथ गवामयनसत्रम्**—अयनं आरम्भः, गवां अयनं गवामयनम्, गोभिरनुष्ठितत्वान्नामैतत् । माघकृष्णाष्टम्यां माघशुक्लैकादश्यां फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा आरम्भोऽस्य, प्रारम्भादिनमारम्यद्वादशदीक्षा द्वादशोपसदः । एवमेव चतुर्विंशतिरहानि भवन्ति । आरम्भदिने एव चेष्टकापशुरूखासम्भरणं च भवति । ततोऽग्रिमे उपसद्दिनेऽग्नीषोमीयं पशुमनुतिष्ठति । ततश्च तद्दिने एव सुत्यारम्भः कार्यः । सुत्याश्चात्रैकषष्ठ्यधिकशतत्रयात्मिकाः भवन्ति । महाव्रतेऽतिरात्राह्वसंज्ञकानां त्रयाणां ग्रहाणां ग्रहणं सञ्जायते, अत्र मार्गालीयस्य दक्षिणतो बहिर्वेदिपरिवृतमध्ये अभिमतजाती स्त्रीपुरुषौ मैथुनं कुर्वीयाताम् । तिस्रोऽनूबन्ध्याः भवन्ति । वचनप्रामाण्यात् सपत्नीकानां यजमानानां सशिखं वपनं भवति । ततश्याग्नीन् विभज्य सर्वे दीक्षिताः पृथक् पृथक् पृष्ठशमनीयसंज्ञकमग्निष्टोमं सम्पादयेयुः । रथन्तरं बृहत्, वैरूपं वैराजं शाक्वरं रैवतमिति षट् पृष्ठानि । तेषां सत्रनियुक्तानामुपजायश्रमाणां शमनं करोतीति पृष्ठशमनीय इति देवयाज्ञिकः । शिष्टं सर्वं द्वादशाहवत् ऐतरेयब्राह्मणप्रामाण्यादत्र अशीत्युत्तरं सुत्याः पर्वपक्षः । एवमेवोत्तरपक्ष इति । द्वयोः पक्षयोर्मध्ये विषुवान् नाम अहः । एवं सम्वत्सरसाध्यत्वात् सम्वत्सररात्रमित्यस्य नामान्तरम् । एवञ्च दीक्षोपसद्दिनानां चतुर्विंशत्या सह पञ्चाशीत्यधिकशतत्रयदिनानुष्ठेयमिदं सत्रमिति, तत्र प्रत्यहं सवनत्रयाधिकं ग्रह्यमसादिकं स्तोत्रशस्त्रादिकं च यथाप्रवृति भवन्त्व । योऽत्रविशेषः सोऽत्र निरूप्यते । तत्रान्हां व्यवस्थेयम् । अग्नीषोभीयपश्वनुष्ठानान्तरं प्रायणीयं प्रथममहोतिरात्रसंस्थम् । ततश्चतुर्विंशमग्निष्टोमसंस्थाकमुक्थ्यसंस्थाकं वा द्वितीयमहः, तस्मिन्नहनि यावन्ति स्तोत्राणि भवन्ति तत्र सर्वत्रापि चतुर्विंशस्तोमकता इति तदहश्चतुर्विंशमि-

त्युच्यते । इमे द्वे अहनी नात्र प्रथममासमध्येपरिगण्येते; अपि तु षष्ठमासमध्ये, अनुष्ठानक्रमश्चायमेवेति, ततश्चत्वारोऽभिप्लवाः षडहाः । "प्रथमोऽग्निष्टोम-, ततश्चत्वार उक्थ्याः, पुनः षष्ठोऽग्निष्टोमः, एवं विधस्यान्हां षट्कस्य अभिप्लव इति संज्ञा" इति सायणः तैत्तिरीयासंहितायाः सप्तमे ततस्त्रिवृदादिस्तोमषट्कसाध्य एकः पृष्ठयः षडहः पञ्चभिः षडहैस्त्रिंशद्दिनात्मकः एको सावनो मासो भवति । एवमेव तेषामेव षडहानामावृत्त्या द्वितीयतृतीयचतुर्थपञ्चममासाः सम्पादनीयाः । षष्ठे च मासे प्रथमतस्त्रयोऽभिप्लवाः षडहाः, एकः पृष्टयः षडहः । सङ्कलप्य च चतुर्विंशतिरहानि भवंति । ततोऽभिजित्संज्ञकोऽग्निष्टोमसंस्थः । ततस्त्रयः स्वरसामसंज्ञकानि त्रीण्यहानि । 'यज्ञा यज्ञा, इत्यस्यां योनावुत्पन्नानि चत्वारि सामानि स्वरसंज्ञकानि येषु ते स्वरसामानः, तानि अग्निष्टोमसंस्थान्युक्थ्यसंस्थानि वा । मिलित्वा अष्टाविंशतिरहानि । आभ्यामहोभ्यां सह विंशद्दिनात्मक एको मासः । एते एव षण्मासाः पूर्वपक्षः ।

ततो विषुवान् नाम अग्निष्टोमसंस्याकमहः । इदं च गवामयनमध्यां भवति । अस्य चान्हो न मासमध्ये सम्वत्सरमध्ये वा गणनां भवतिं । तदनन्तरमेवोत्तरपक्षस्यारम्भः सञ्जायते । तत्र येन क्रमेण पूर्वस्मिन् पक्षे अन्हां क्लृप्तिरासीत् तद्वैपरीत्येनोत्तरस्मिन् पक्षसि अहः क्लृप्तिर्बोध्या । यथा—प्रथमं तावत् प्रतिलोमास्त्रयः स्वरसामानः, ततोविश्वजिन्नामकोऽगिष्टोमः, ततः प्रतिलोमतस्त्रयस्त्रिंशदारम्भणः पृष्ठयः षडहः, ततस्त्रयोऽभिप्लवाः षडहाः, मिलित्वा च अष्टाविंशतिरहानि । सत्रस्यान्तिमयोर्द्वयोदिनयोरनुष्ठेयौ महाव्रतोदयनीयौ मासेऽस्मिन् परिगण्येते । सर्वे च मिलित्वा एको मासः सम्पन्नः । द्वितीयेमासे प्रतिलोमतः प्रथमं त्रयस्त्रिंशदारम्भणः एकः पृष्ठयः षडहः ।

ततश्चत्वारोऽभिप्लवाः षडहाः । मिलित्वा चैको द्वितीयो मासः । एवमेव तृतीयश्चतुर्थः पञ्चमश्च मासो भवति । षष्ठे मासे प्रथमयस्त्रयोऽभिप्लवाः षडहाः । ततो गोष्टोमसंज्ञकमुक्थ्यसंस्थाकमहः । तत आयुष्टोमसंज्ञकमुक्थ्यसंस्थाकमहः । ततो द्वादशाह्निक इति । प्रथमोत्तदिनवर्जितो दशरात्र इति मिलित्वा षष्ठो मासः निष्पन्नः । एतदनन्तरं महाव्रतमहः । महाव्रतं यज्ञस्यान्तिममहः । "महानववर्त्तिष्ट अनेन कर्मणा इति महाव्रतम्" इति तैत्तिरीयब्राह्मणस्य प्रथमे सायणः । उदयनीयसंज्ञकं सत्रस्यान्तिमाहश्च भवत इति एतरेयताण्डयब्राह्मणयोः सायणः । अनयोश्चान्होः प्रथमे मासि गणना न वृतेति शम् ।

## इति गवामयनसंक्षेपः ।

ततोऽङ्गिरसामयननामकं सत्रम् । तच्च सम्वत्सरसाध्यमिति । इदञ्च गवामयनवदेवानुष्ठीयते । एवमेव दृति वातवतोरयननामकं सत्रं भवति । तदपि सम्वत्सरसाध्यमेव । इदमपि गवासयनवदेवेति ।

ततः कुण्डपायिनाणयननामकं सत्रम् । तदपि सम्वत्सरसाध्यम् । अत्र च मासं यावदीक्षाः, ततो मासं यावदग्निहोत्रम्, ततो मासं यावद्दर्शपूर्णमासौ, ततो मासं यावद्वैश्वदेवं पर्वं, ततश्च मासपर्यन्तं वरुणप्रयासा, ततो मासं यावद् साकमेधाः, ततो मासं शुवाशीरीयम् । एवं मासषट्के व्यतीते उत्तरान् षट् मासान् इति वातयतोरयनस्य पूर्वेण पक्षेणानुतिष्ठेत् । अत्र होतृद्गातृमैत्रावरुणप्रस्तोतृप्रतिप्रस्थातारः पञ्चर्त्विजो भवन्ति, नेतरे । तत्र होता आध्वर्यवपोत्रीमहोत्राणि कुर्यात् । एवमेवोद्गाता नेष्टृच्छावाकीये, मैत्रावरुणो ब्रह्मत्वप्रतिहर्त्रे प्रस्तोता ब्राह्मणाच्छंसिग्रावस्तोत्रीये, प्रतिप्रस्थाताऽऽग्नीध्रोन्नेत्रे कुर्वीत । ततः सर्वरात्रम् । एतदपि सम्वत्सरसाध्यमेव, अत्र सर्वं गवामयनवदेवानुष्ठानम् । अथवा पूर्वं प्रायागीयं कृत्वा ततो द्वन्द्वसोमानां द्वितीयो विराडेकाहोऽग्निष्टोमसंस्थः । तथा कौसुरुबिन्दस्य यद् द्वितीयं त्रिवृदग्निष्टोमः । एतदहर्द्वयं व्यत्स्य व्यत्स्य प्रयुञ्जानः सम्पूर्णं सत्रं पूरयेदिति ।

ततस्तापचिताख्यं सत्रम् । एतच्च त्रिसम्वत्सत्साध्यं भवति । अत्र सम्वत्सरं दीक्षाः, सम्वत्सरमुपसदः सम्वत्सरं सुत्याश्च भवन्ति । अन्यत्सर्वं गवामयनवदेवानुष्ठानम् ।

ततो महातापश्चितं नामकं सत्रम् । तच्च पञ्चसम्वत्साध्यम् । अत्र सम्वत्सरत्रयं यावदुपसदः, शिष्टं च तापरिचतेन समानमेव ।

ततः क्षुल्लकतापश्चितं नाम सत्रम् । तत्र चतुर्भिश्चतुर्भिमोसैर्दीक्षाः उपसदः सुत्याश्च भवन्ति । ततोऽग्निसत्रसंज्ञकं सहस्रसुत्याकं सत्रम् । तत्र च प्रायणीयः—त्रिकद्रुकाः २-४ चतुःषष्ठशतमभिप्लवाः ५-९८८ पृष्ठयः ९८९-९९८ छन्दोमाः ९९५-९९८ महाव्रतम्, ९९९ उदयनीय १००० इति क्रमः । ततस्त्रिसम्वत्सरं नाम सत्रम् । अत्र षष्ठिर्दीक्षाः सम्वत्सरमुपसदः त्रिसम्वत्सरं सुत्याश्च भवन्ति ।

ततश्चत्वारि महासत्राणि । तत्र प्रजापतिसत्रं नाम प्रथमम् । द्वादश-सम्वत्सरं सुत्या उपसदो दीक्षाश्च ।

ततः शाक्त्यानामयननामकं सत्रं द्वितीयम् । तत्र षट्त्रिंशत्सम्वसरं सुत्याः । ततः साध्यानामयननामकं सत्रं तृतीयम् । तत्र शतसम्वत्सरं सुत्याः । ततश्च विश्वसृजामयनसंज्ञं सत्रं चतुर्थम् । तत्र च सहस्तं सुत्याः । ततः सारस्वतंसत्राणि यात्सत्राणीति वा प्रसिद्धानि त्रीणि सत्राणि भवन्ति । एषां दीक्षाः सरस्वती समुद्रसङ्गमे प्रभासक्षेत्रे वा भवन्ति । अत्र तुरीयस्य सारस्वतसत्रस्य दार्षद्वतमित्यपि संज्ञा ।

ततस्तुरायणं नाम सत्रं भवति । अत्रापि दीक्षादिकं सर्वं पूर्ववदेव बोध्यम् ।

## इति सत्रनिरूपणसंक्षेपः ।

यद्यपि ग्रन्थकृता जीवदेवेन पाकयज्ञसंस्थाविषयिणी प्रतिज्ञा न कृता । अग्निहोत्रमारभ्य सोमविकृतिपर्यन्ताः वैदिकयागा एव प्रतिज्ञाविषयीभूताः सन्ति । तेषाञ्च यथासम्भवं संक्षिप्तस्वरूपं प्रतिपादितं पूर्वम् । अधुना पाकयज्ञसंस्थानामतीव संक्षिप्तं स्वरूपं प्रदर्श्यते । सर्वप्रथममस्यैव प्रति-पादनमावश्यकमासीत्, तथापि ग्रन्थकृत्प्रतिज्ञानुरोधान्न प्रतिपादितम् । पुनश्चात्र सिंहावलोकनन्यायेन विचारणेनैव दोष इति प्रतीमः । अनेन च पाठकजिज्ञासापि शान्तिं गृमिष्यति । ग्रन्थस्यापि च साङ्गता सेत्स्यति ।

एते यज्ञाः स्मार्त्ताग्नावनुष्ठीयन्ते, तस्मात्तस्य कालविषयिण्यपि जिज्ञासा स्वाभाविकी एव । तत्र 'आवसथ्याधानं दारकाले दायाद्यकाले एकेषाम्' इति पारस्कराः । 'भार्यादिरग्निर्दायादिर्वा' इति गौतमः । आभ्यां वचनाभ्यां विवाहमारभ्य दायाद्यमारभ्य वा स्मार्त्ताग्निः सम्पादनीयो भवति । विवाहसमये चतुर्थीहोमानन्तरं 'आवसथ्याधानं दारकाले' इति पूर्वविहितविधानात्सम्पादितोऽग्निः स्मार्त्ताग्निशब्देनोच्यते । गृह्यः, आवसथ्यः, औपासन इत्यपरपर्यायाः । विवाहकाले येन केनापि कारणेन नाग्निः सम्पा-दितश्चेत्तर्हि दायाद्यकालेऽवश्यमेव ग्राह्यः । इमावेव द्वौ कालौ मुख्याविति । यदि केनाप्ययहार्येण कारणेन मुख्यकाले नाहिताग्निस्तदतीतकालोक्तं प्रायश्चित्तमनुष्ठायाग्निं ग्रहीतुं शक्यते । यदा पिता न गृहीत स्मार्त्ताग्नि-

कस्तदापि पुत्रः ग्रहीतुं शक्यत एव, तस्याधिकारस्य प्रतियादनात्। अग्निपरिग्रहानन्तरमेवौपासनहोमादिकाः षाकयज्ञा अनुष्ठेया इति।

कर्म स्मार्त्तं विवाहग्नौ कुर्वीत प्रत्यहं गृही।

दायकालहृते वापि श्रौतं वैतानिकादिषु ।। इति याज्ञवल्क्य वचनमनुसृत्य शान्तिकयौनिष्टकादिकमपि कर्मं गृह्ये ऽग्नावेवानुतिष्ठेदिति देवयातिकेनोक्तम्। परन्तु आत्मसंस्कारकाः ये पाकयज्ञास्ते सर्वे गृह्ये ऽग्नाबेवानुष्ठेयाः। पुत्रसंस्कारकं शान्तिकपौष्टिकादिसर्वं कर्म लौकिकाग्नाबेवेति शिष्टानां व्यवस्था।

**तत्रादौ औपासनहोम**:—अयञ्च सायंप्रातरनुष्ठीयते। दध्यक्षततण्डुलाः द्रव्याणि भवन्ति। तदुक्तं पारस्करेण—'दध्ना तण्डुलैरक्षतैर्वा 'इति' एतैर्द्रव्यैर्हस्तेन सम्पाद्यमानो होम औपासनर्होमशब्देनोच्यते। अत्र सायंकालेऽग्निः प्रधानदेवता भवति। प्रजापतिश्च स्विष्टकृत्स्थानीया अङ्गदेवता। एवमेव प्रातःकाले सूर्यः प्रधानदेवता, प्रजापतिश्चाङ्गदेवतेति। इदञ्च सायमादिप्रातरन्तमेकं कर्म भवति। अतः सायमेवेदं प्रारभ्यते। अतएव सङ्कल्पवाक्ये 'सायं प्रातर्होमं करिष्ये' इत्युल्लिख्यते। उभयोरेककर्मत्वादेव मिलितयोरेकमेव फलमपि भवति' अस्मादेव कारणात् उभयत्रापि द्रव्यं कर्त्ता चैक एव। यदि कश्चिद् एकस्मिन् काले सायं प्रातर्वा अनुतिष्ठति, नोभयत्र, तत्र फलमपि न भवति, कर्मवैगुण्यात्। सपत्नीकस्यैव पुरुषस्यात्राधिकारः। यावज्जीवनञ्चानुष्ठानम्। अकरणे च प्रत्यवायोऽपि श्रूयते। तस्मादनुष्ठेयमेव सर्वैरिति।

**वैश्वदेवकर्म**—पाकयज्ञमध्ये वैश्वदेवं द्वितीयं स्थानं प्राप्नोति। वैश्वदेवमिति कर्मनामधेयम्। विश्व देवा इज्यन्तेऽत्रेति व्युत्पत्तिः। वैश्वदेवापरपर्याया एव पञ्च महायज्ञा इति। शतपथब्राह्मणस्यैकादशस्य पञ्चमस्य पञ्चमे 'देवयज्ञो भूतयज्ञः पितृयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञ' इति। देवयज्ञः देवानां पूजनम्। भूतयज्ञः काकादिभ्योऽन्नदानम्। पितृयज्ञो तर्पणादिकम्। मनुष्ययज्ञोऽतिथिसेवा। ब्रह्मयज्ञः स्वाध्यायाध्ययनम्। इदमेव कर्म नित्यमेव। माध्यन्दिनशाखीयानां केवलं प्रातः काले एव विधानादेकस्मिन्नेव कालेऽनुष्ठेयम् शाखान्तरे सायंप्रातसमयत्रापि विहितमिदम्। अनुष्ठाने स्वशाखाया एव प्राधान्यं मन्तव्यम्।

**पार्वणम्**—पर्वण्यमावस्यामनुष्ठीयमानत्वात्पार्वणमिति संज्ञा। प्रत्यमायामनुष्ठेयमिदं कर्म। इदञ्च षड् पुरुषोद्देश्यकं भवति। पितृपक्षे पित्रादित्रयम्। मातृपक्षे च मातामहादित्रयम्। एते एवात्र देवाः। इदमपि नित्यमेव कर्म। विशेषस्त्वन्यतो ज्ञेयः।

**अष्टका श्राद्धम्**—पारस्करेण 'ऊर्ध्वआग्रहाण्यास्तिस्त्रोऽष्टकाः' इति सूत्रेणाष्टकाश्राद्धं विहितम्। अत्र हेमन्तशिशिरसम्बन्धिन्यश्चतस्रः कृष्णपक्षीयाष्टम्यः अनुष्ठानकालाः। अपूपगोमांसशाकरूपाणि द्रव्याणि भवन्ति। इन्द्रविश्वदेवप्रजापतिपितरश्च देवताः। एतान् देवानुद्दिश्य क्रियमाणमिदं कर्म। 'अप्यनुडुहो यवसमाहरेत्, अपि वा कक्षमुपोषेत्, न त्वेवानष्टकः स्यात्' इत्याश्वलायनगृह्यसूत्रेण साग्निकस्यावश्यकर्त्तव्यता बोध्यते, तथाप्यत्र गोमांसस्य द्रव्यत्वे विधानं वर्त्तते, गवालम्भस्य च कलौ निषिद्धत्वात् प्रतिनिधिविधानाभावाच्चास्माकं माध्यन्दिनशाखीयानां लोप एव मन्तव्यः। येषां मांसस्य विधानं नास्ति, द्रव्यान्तरं च विहितमस्ति, तेषां नित्यमेवानुष्ठानम्।

**मासि श्राद्धम्**—मासि मासि अनुष्ठीयमानं श्राद्धं मासि श्राद्धम्। पितॄनुद्दिश्य श्रद्धया यत्र दीयते तच्छ्राद्धं भवति। प्रमाणञ्चात्र 'मासि मासि वोऽशनम्' इति शतपथश्रुतिः।

**श्रवणा कर्म**—इदं कर्म 'अथातः श्रवणा कर्म' इत्यनेन पारस्करगृह्यसूत्रेण विहितम्। श्रावणपौर्णमास्या आरभ्य मार्गशीर्ष्याः पौर्णमासीं यावदिदं कर्म प्रतिदिनं भवति। प्रत्यहं सायं सर्पेभ्यो बलिप्रदानम्। कालविशेषस्य विधानाभावात् सकृदेवानुष्ठेयम्।

**शूलगवः**—पारस्करगृह्यसूत्रे 'अथ शूलगवः' इत्यनेन विहितं कर्म। अत्रापि गोमांसमेव द्रव्यम्। कलौ च गवालम्भस्य निषिद्धत्वादननुष्ठेयमेव माध्यन्दिनशाखीयानाम्। आपस्तम्बगृह्ये 'ईशानाय स्थालीपाकं श्रपयित्वा' इत्यनेन गोः स्थाने स्थालीपाकस्य विधानदर्शनात् तेषामनुष्ठानं भवत्येव। इदमपि कर्म सकृदेवानुष्ठेयम्।

**इति पाकयज्ञसंस्थासंक्षेपः।**

इति। श्री रामनन्दनसूनुकमलनयनशर्मकृतिषु
भास्करपरिशिष्ट समाप्तम्।

# द्वितीयं परिशिष्टम्

## ( व्याख्यानात्मकम् )

### मंगलाचरणम्

वासुदेवं नमस्कृत्य यशोदानन्दवर्द्धनम् ।
पूतनापूतकर्त्तारं सर्वाभीष्टप्रदायकम् ।।
रामनन्दनपुत्रेण सैतवगोत्रजेन च ।
भाट्टभास्करनाम्नोऽस्य टीका चेयं वितन्यते ।।
दीक्षागुरुं प्रणम्यादौ शिक्षागुरुं तथैव च ।
यथामति यथाशास्त्रं विवृणोति च भास्करम् ।।

**।। ओम् नमो भगवते वासुदेवाय ।।**

प्रारिप्सितग्रन्थपरिसमाप्तिप्रत्यूहव्यूहविध्वंसनकामः मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते, वीरपुरुषाणि भवन्त्यायुष्मत्पुरुषाणि चाध्येतारश्च मङ्गलयुक्ताः यथा भवेयुरित्यागमप्रतिपादितं 'समाप्तिकामः मङ्गलमाचरेदि'ति चिष्टाचारान्मङ्गलं सफलमविगीतशिष्टाचारविषयत्वादित्यनुमितं वा स्वेष्टदेवतानमस्कारात्मकं मङ्गलमाचरति शिष्यप्रशिष्यप्रशिक्षणाय च ग्रन्थादौ निबध्नाति—**ध्यात्वेति**। **ध्यैचिन्तायाम्**। 'समानकर्त्तृके पूर्वकाले क्त्वा' इति पाणिनि स्मरणम्। चिन्ता चात्र विचारापरपर्याया न लौकिकी । अतो विचार्य इत्यर्थः। जगदिति गच्छतीत्यस्मिन्नर्थे जगच्छब्दो निपात्यते। प्रकृतिदि प्रकरोतीति प्रकृतिः। आदिकारणभूतं तत्त्वमिति यावत्। 'प्रधानं प्रकृतिः स्त्रियाम्, प्रधानं प्रकृतौ बुद्धौ, प्रकृतिर्योनिलिङ्गे च' इत्याद्यमरः। 'योनौ लिङ्गे' इति मेदिनी हलायुधश्च। जगतः प्रकृतिरिति षष्टीसमासः। **तदिति** पूर्वपरामर्शकं सर्वनाम। **सवितुरिति**। 'षू प्रेरणे' इत्यस्माद्धातोः कर्त्तरि तृचि रुपम्। सुवति प्रेणयतोति वा कर्मणीति सविता सूर्यस्तस्येति। तपनः सविता रविः' इत्यमरः। सूयते सूते वेति सवितेति कश्चित्। तन्न शोभनम्। अमरव्याख्याविरोधात्। तथाहि—यत्तु सूयते सूते इति स्वामिमुकुटाभ्यामुक्तम्। तन्न। 'स्वरतिसुवतिसूयति' इतीड्विकल्पात्पक्षे 'सोता' इति रूपप्रसङ्गायुक्तधात्वोरर्थासङ्गतेश्च' इति। पक्षेऽस्मिन् सवितुः सूर्यस्य प्रधानं श्रेष्टं मुख्यं

वा तेज इत्यर्थः। 'मुख्यवर्यवरेण्याश्च' इत्यमरः। एवमेव हलायुद्धेऽपि। वरीतुं योग्यं वरेण्यम्। 'वृञ् संवरणे' इत्यस्माद्धातोः' 'वृञ एण्यः' इत्यौणादिक एण्यप्रत्ययः। अथवा सविता विष्णुः, तस्य वरेण्यं तेजः। तद्ध्यात्वेत्यर्थः। शशिसूर्यौ च नेत्रभूतौ तस्य महापुरुषस्य। यथा—गीतायाम् 'शशिसूर्यनेत्रम्' (११-१६), 'ज्योतिषां रविरंशुमान्' (१०-२१) 'प्रभास्मि शशिसूर्ययः' (७-८) इति। एवमेव —यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।

यच्चन्द्रमसि यच्चाऽग्नौ तत्तेजो विद्धि मामकम्॥ (१५-१२) इति। विष्णुवाचकत्वं तस्याग्निपुराणेऽपि। यथा—

धीशब्दवाच्यं ब्रह्माणं प्रचोदयति सर्वदा।

सृष्टयर्थं भगवान् विष्णुः सविता स तु कीर्त्तितः॥ 'सविता रविलोचनः' इति विष्णुसहस्रनामस्तोत्रेऽपि। सर्वस्य जगतः प्रसविता सविता' इति शाङ्क'भाष्यम्। 'सविता प्रपितामहः' इत्यपि तत्रैव। तत्रापि 'सर्वस्व लोकस्य जनक इति सविता' इति भाष्यम्। विष्णुधर्मोत्तरेऽपि (१-४०-१५) प्रजानान्तु प्रसवनात् सवितेति निगद्यते। इति 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' इति गीता (७-६), 'पितासि लोकस्य चराचरस्य' इत्यपि तत्रैव (११-४३) इति। प्रमाणैरेभिः जगत्प्रसवितृत्वं श्रीमति विष्णौ प्रसिद्धयति 'एवमन्येष्वपि वहुपु सद्ग्रन्थेषु वर्णनं समवलोक्यते' तत एवावसेयः। अस्मिंश्च पक्षे सवितुः भगवतो विष्णोर्यद्वरेण्यं तेजः, तद्ध्यात्वेत्यर्थः। अर्थात् जगत्प्रकृतिभूतभगवत्सवितृनिष्ठवरेण्यतेजोविषयकध्यानानुकूलां भावनां सम्पाद्येत्येत्यर्थः। भगवच्चिन्तनान्तरं तद्विषयकज्ञानप्रदातॄन् गुरुन् प्रणमति—**नत्वेति**। णम् प्रह्वीभावे 'तस्मात् क्त्वा' प्रणम्येत्यर्थः गुरुनिति। 'गृशब्दे' गृणाति उपदिशतीति गुरुः। अथवा गॄ निगरणे। गिरति निगरति शिष्यनिष्ठमज्ञानमिति वा गुरुः। अथवा गीर्यते स्तूयते महत्त्वपिति गुरुः महान् श्रेष्ठ इति। एतादृशगुणगणविशिष्टान् गुरुन् नमस्कृत्येत्यर्थः। स्वगुरोः वैशिष्टयं प्रदर्शयति—**सदसदर्थविवेकविज्ञानिति**। सच्च असच्च तयोरर्थः सदसदर्थः। 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति न्यायेनार्थपदस्योभाभ्यां सम्बन्धः। सच्छब्दस्याचानेकेऽर्थाः भवन्ति। यथा—'सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्' इत्यमरः। 'मान्ये सत्ये विद्यमाने' इति मेदिनी। अत्र च सत्यार्थवाचकः सच्छब्दः। सत्याभिधेयो वा। तथैव च—ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः। (गीता १७-२३)।

सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।

प्रशस्ते कर्मणि तथा सच्छब्दः पार्थयुज्यते ।। गीता (१७-२६) । तद्विपरीते चासच्छब्दः प्रयुज्यते । हेयोपादेयार्थनिर्णयार्थञ्चोभयोर्ज्ञानमावश्यकम् । अर्थोऽत्राभिधेयः, शास्त्रप्रसङ्गात् । 'अर्थोऽभिधेयैरवस्तुप्रयोजननिवृत्तिषु' इत्यमरः ।

अर्थो विषयार्थनयोर्धनकारणवस्तुषु ।

अभिधेये च शब्दानां निवृत्तौ च प्रयोजने ।। इति मेदिनी । एवमेव 'धनमभिधेय' इत्यादिः हलायुधेऽपि । अतः सदसदर्थयोर्विवेकः सदसर्थविवेक इति । विचिर् पृथग्भावे । घञिरूपम् । विवेचनं पार्थक्येन वा ज्ञानं विवेकः । पृथगात्मता' इत्यमरः । 'विवेकः स्याज्जलद्रोण्यां पृथग्भावविचारयो'रिति मेदिनी च । अर्थात् सदर्थस्यासदर्थस्य च विविच्य पार्थक्येन ज्ञानं यस्येति । तत्र विवेचने विज्ञस्तानिति । विशेषेण जानातीति विज्ञः निपुणः प्रवीणो वा । आतश्चोपसर्गे कः । तथा चामरः—'प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः' इत्यादिः । एवं 'कुशलः शिक्षिते त्रिषु' । 'क्षेमे च सुकृते चापि पर्याप्तौ च नपुंसकम्' इति विश्वमेदिन्यौ । अर्थात् सदसदर्थविवेकविज्ञगुरुकर्मिकां करशिरःसंयोगानुकूलां भावनाञ्च सम्पाद्येत्यर्थः । **श्रीरिति** । श्रयति हरीनीति श्रीः । श्रयन्त्येतामिति वा । श्रिञ् सेवायाम् । श्रीणाति दुष्टान् दुर्गुणान् वेति श्रीः । श्रीञ् हिंसायाम् । श्रिया सहितः कृष्णः **श्रीकृष्ण** इति । कृष्णो वर्णोऽस्यास्तीति 'कृषेर्वर्णे' इत्युणादिसूत्रेण नुक् । 'गुणवचनेभ्यो मतुपो लुक्' इत्यनेन लुकि कृष्णः । अथवा 'कृष् विलेखने' । कर्षत्यरीनिति वा बादुलकान्नुक् । अथवा कर्षति आकर्षति मन इति नुकि कृष्णः अथवा कर्षति आकर्षति आत्मसात् करोति आनन्दत्वेन परिणमयति भक्तानां मन इति वा । अथवा कर्षति सर्वान् स्वकुक्षो प्रलयकाले इति कृष्णः । श्रुतिरप्यत्र 'कर्षणात्' कृष्णो रमणाद् रामो व्यापनाद् विष्णुरिति । भारतेऽपि—

कृषिर्भूवाचको शब्दो णश्च निवृत्तिवाचकः ।

कृष्णस्तद्भावयोगाच्च कृष्णो भवति सात्वतः ।। इति अथवा कर्षति पपानि शरणागतानामिति वा कृष्णः । तथा चोक्तम्—

कृष्णेति मङ्गलं नाम यस्य वाचि प्रवर्त्तते ।

भस्मीभवन्ति राजेन्द्र ! महापातककोटयः ।। इति अतएव सर्वे नमन्तीति भावः। कृष्णस्य वात्सल्यादिगुणगणविशिष्टत्वेऽपि श्रिया पुरस्कृतः जीवः शीघ्रतरमेवानुग्रहमवाप्नोति। अतएव श्रिया जुष्टं कृष्णं नौति। कृष्णस्य चारू मनोज्ञौ चरणौ पादाविति चारूचरणौ।

'सुन्दरं रुचिरं चारु सुषमं साधुशोभनम्'।

कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलम् ।। इत्यमरः 'चरति देवेषु गुरुत्वेन चरति चित्ते इति वा चारुः'। मनोज्ञ इति हलायुधः। चरन्त्यनेनेति 'करणाधिकरणयोश्च' ल्युटि चरणः। 'पादः पदंघ्रिश्चरणोऽस्त्रियाम्' इत्यमरहलायुधौ। तत्र चरणयोरर्पिता समर्पिता सर्वतोभावेन चित्तस्यवृत्तिर्येनेति। चितीसंज्ञाने। भावे क्तः। चित्तं मन इत्यर्थः। 'चित्तं तु चेतो हृदयम्' इत्यमरः। हलायुधेऽपि चेतत्यनेनेति चित्तं मन इत्यर्थः। वेदान्ते तु चित्तमनसोर्भेदोऽपि दृश्यते। तथा च—

मनो बुद्धिरहङ्कारश्चित्तं कारणमान्तरम्।

संशयो निश्चयो गर्वः स्मरणं विषया इमे ।। इति। विवृतश्च—संशयाकारवृत्तिमदन्तः करणं मनः। निश्चयाकारवृत्तिमदन्तः करणं बुद्धिः। गर्वाकारवृत्तिमदन्तःकरणमहङ्कारः। स्मरणाकारवृत्तिमदन्तःकरणं चित्तमिति। सर्वञ्चैतद् गुरुपादैर्वेदान्तपरिभाषाटीकायां टीकितम्। अनेन च प्रकारेण चित्तमनसोर्भेदः प्रतीयते। शुद्धाशुद्धभेदेनापि विवृण्वन्ति। चित्तस्य वृत्तिरवस्थाविशेषः। भक्तः ध्यायाति यदा तदा चित्तं द्रवीभूय वृत्तिद्वारा भगवच्चरणकमलं सावद्गच्छति ततच्च चरणकमलाकाराकारितं भवति। स एव प्रत्यक्षशब्देनोच्यते 'तत्रैव च कालवेगमपि विस्मृत्य रमते' स एव समाधिपदवाच्यतां लभते। यथा जलं प्रणाडिकया केदारं प्राप्य तदाकाराकारितं भवति तथैव चित्तमपि वृत्तिद्वारा विषयं समवाप्य तदाकाराकारितं जायते। ततश्च प्रत्यक्षात्मकं ज्ञानमुत्पद्यते। अत्र चानुप्रासालङ्कारः। अनेन श्रीकृष्णविषयको भक्त्यतिशयोऽपि व्यज्यते। एतद्गुणगणविशिष्टः ग्रन्थकार इत्यर्थः। कुर्वे इति। डुकृञ् करणे। आत्मनेपदे लटि उत्तमपुरुषैकवचने रूपम्। ननु ग्रन्थविरचनरूपकार्यजन्यफलस्य ज्ञानस्यान्यगामित्वगामित्वाभावादात्मनेपदं कथं सङ्गच्छत इति चेत 'सत्यम्' ज्ञानस्य परगामित्वेपि यशः प्रभृतीनां फलानामत्मगामित्वादात्मनेपदस्यैवोचित्यात्। प्रबन्धं निबन्धं ग्रन्थविरचनरूपमिति भावः। प्रकृतग्रन्थस्य प्रयोजनमभिधत्ते—**अलसार्भक**

इति। यद्यपि उत्तमाधिकारिणां प्रयोजनकथनमावश्यकं न भवति तथापि मध्यमाधिकारिणां 'प्रयोजनमनुद्दिश्यमन्दोऽपि न प्रवर्त्तते' इति न्यायेन प्रयोजनकथनं नानुचितमिति । न लसति प्रसन्नतामनुभवन् यथासमयं स्वकार्यं न सम्पादयति यः सोऽलसः। आलस्ययुक्त इत्यर्थः 'शीतकोऽलसोऽनुष्ण' इत्यमरः । उत्साहरहित इति भावः । अर्भकः वालः । 'पोतः पाकोऽर्भको डिम्भः' इत्यमरः। अलसश्चासावर्भकश्चेति समासः। स एवात्राधिक्रियते। वालश्चात्र न स्तनन्धयः, तस्य हानोपादानविषयकज्ञाभावेन प्रवृत्तिनिवृत्त्यभावात् । अन्यशास्त्रविषयकज्ञानसत्त्वेऽपि मीमांसाशास्त्रविषयकपदार्थज्ञानाभाववानत्रवालः । तं प्रत्येवोपयोगित्वसम्भवात् । **बुद्धिवृद्धयै** इति। बुद्धेः मनीषायाः वृद्धिः समृद्धिरिति। 'बुद्धिर्मनीषा धिषणा धी' रित्यमरः । तत्सम्प्राप्त्यर्थमिति भावः । निर्गलितार्थश्च—ग्रन्थकृन्निष्ठालसार्भकबुद्धिवैशद्यसम्पादनप्रयोजनिकाग्रन्थविरचनानुकूला भावनेति ॥१॥

**मीमांसार्थमिति।** मीमांसाशास्त्रस्य अर्थः प्रतिपाद्यो मुख्यः प्रमेयः पदार्थः धर्मस्तस्य तदुपोद्वलकतया प्रमाणादींश्च यागादिरूपधर्मप्रतिपादनमेव मीमांसाशास्त्रस्य मुख्यं प्रयोजनम्। तदुक्तं वार्त्तिककारेण—'धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम्' इति। धर्मश्च यागादिरूपः। तदुक्तं भाष्यकारेण 'यागादिरेव धर्म' इति। द्रव्यादीनामपि धर्मत्वेन प्रतिपादनं तदुपोद्वलकतया । तदुक्तभृ—'द्रव्यगुणक्रियादीनां धर्मत्वं स्थापयिष्यते' इति। माधवाचार्येणाप्युक्तम्—धर्मो द्वादशलक्षण्यां व्युत्पाद्यस्तत्र लक्षणै । अनेनापि द्वादशलक्षण्याः मीमांसायाः प्रतिपाद्यो धर्म एवास्तीति निश्चीयते तथापि 'मानाधीनामेयसिद्धि'रीति न्यायेन प्रमाणादीनामपि प्रतिपादनमावश्यकम्। अतः प्रमाणभेदशेषत्वप्रयुक्तिक्रमसंज्ञकाः।

अधिकारोऽतिदेशश्च सामान्येन विशेषतः।

ऊहो वाधश्च तन्त्रश्च प्रसङ्गश्चोदिताः क्रमात् इति माधवीया न्यायमाला। तस्मात् प्रमाणादीना प्रतिपादनमत्र नासङ्गतमिति। मीमांसाशब्दश्च 'मान पूजायाम्' इत्यस्माद्धातोः 'मानेर्जिज्ञासायाम्' इति वार्त्तिकेन सनि कृते निष्पद्यते। अतएव पूजिता जिज्ञासा इत्यर्थः सम्पाद्यते। जिज्ञासापदञ्च विचारेऽर्थे लाक्षणिकम्। तस्मात् पूजितो विचारः मीमांसेति कथ्यते। अतएव भामत्यामपि 'पूजितविचारवचनः मीमांसाशब्द' इत्यभिहितम्। साक्षाद्वेदवाक्यविचारपरत्वात्पूजितत्वमुपपद्यते। तत्तूचितमेव, वेदानां परम-

पूज्यत्वात् । **प्रयद्यन्त** इति । गत्यर्थकानां बुद्ध्यर्थकत्वात् प्रोपसर्गात् 'पद गतौ' इत्यस्माद्धातोः निष्पन्नः । प्रयद्यन्ते जानीयुरिति । के इति जिज्ञासाया-माह—**व्यूढान्धतमसा** इति । ऊह वितर्के । न क्रियते विशिष्ट ऊहो येन स स व्यूढः । अज्ञानसम्वलितः । अतएवान्धतमसः घनान्धकारस्तत्र निमग्नः । 'ध्वान्ते गाढेऽन्धतमसम्' इत्यमरः । अज्ञानविजृम्भितत्वात् घनान्धकारे ये निमग्नास्त इत्यर्थः । **कथमिति** । कथमित्याक्षेपे । येऽज्ञाननिमग्नास्ते कथं मीमांसाशास्त्रीयान् पदार्थान् ज्ञातुं समर्था भविष्यन्तीत्याक्षेपः । अर्थात् ते यज्ज्ञानविरहिता एव स्थास्यन्तीति तदर्थं मया प्रयत्यते 'इतीति । इति हेतौ' इत्यस्मात्कारणादित्यर्थः । **एष** इति । पुरोवर्त्तीत्यर्थः । एतच्छब्दस्य सन्नि-कृष्टवाचकत्वात् । एतच्छब्दस्य त्यदाद्यत्वे पररुपत्वे 'तदोः सः सावनन्त्ययोः' इति षत्वे रूपम् । ननु ग्रन्थरचनन्तु पश्चाद्भविष्यति, अधुना तु मङ्गला-चरणमात्रं क्रियते तर्हि परोक्षेऽर्थे कथमेतच्छब्दप्रयोगः सङ्गच्छत इति चेत् । न । भाविनोऽपि ग्रन्थनिर्माणस्य बुद्ध्या विषयीकरणात् सन्निकृष्टवन्निर्देशात् । **जीवदेवेनेति** । अयञ्च ग्रन्थकर्त्ता कर्मणि लकारत्वादनुक्तेकर्त्तरि तृतीया । ननु' ।

आत्मनाम गुरोर्नाग नामातिकृपणस्य च ।

श्रेयस्कामो न गृहणीयाज्ज्येष्ठापत्यकलत्रयोः ।। इति स्मृत्या स्वनाम-ग्रहणास्य निषिद्धत्वात् कथं स्वनामग्रहणमिति चेत् । न । 'न गृह्णीयात्' इत्यस्य 'नोच्चारयेत्' इत्यर्थस्वीकारात् । अत उच्चारणे एव दोषः, न लेखने इति । अथवा महाभाष्यपस्पशान्हिके समुद्धृतकूपखानकन्यायेनाप्यस्य दोषस्य निराकरणसम्भवान्नाग्रहणं नानुचितं ग्रन्थकारस्येति वेदितव्यम् । **क्रियत** इति । डुकृञ् करणे । कर्मणि लकारः । करणञ्चात्रोत्पत्त्यनुकूला भावना । सा चात्र भाट्टभास्करकर्मिका । तथा च जीवदेवाभिन्नकर्त्तृ वृत्ति-भाट्टभास्करकर्मिकोत्पत्त्यनुकूला भावनेत्यर्थः । अन्यत्सर्वं पूर्ववत् । **भाट्टभास्कर** इति । महतां नामग्रहणं नोचितमिति शिष्टपरम्परा । अतएवोपाधिना निर्देशः । भट्टः कुमारिलभट्ट इत्यर्थः । भट्टस्येदं मतमित्यर्थे 'तस्येदम्' इत्यनेनाणि भाट्टमिति । भाट्टस्य भास्करः प्रकाशकत्वादियर्थः । भास्करः सूर्यः । 'भास्कराहस्करब्रध्नः' इत्यमरः । साक्षाद्भास्कराभावेऽपि ताद्-रुप्यात्तद्व्यपदेशः । तद्रूपत्वं कथमिति चेत्, उच्यते—यथान्धतमसि निमग्नाः पदार्थाः न चक्षुर्विषयीभुताः भवन्ति परन्तु प्रकाशिते सूर्येऽन्धकारनिवृत्तिद्वारा त्वरितमेव पदार्थाः दृग्गोचरीभवन्ति, प्रकाशकत्वात्सूर्यस्य । तथैव भट्ट-पादसिद्धान्तविषयकाज्ञानान्धकारनिमग्नाः जनास्तद्विषयकज्ञानविरहिता एव

जायन्ते। तेषां कृते भट्टसिद्धान्तप्रकाशकत्वात् बोधकत्वात् ग्रन्थोऽप्ययं भास्कर इति। अतएव भास्कर इव भास्कर इति व्युत्पत्तिः। तस्मान्न काचिदनुपपत्तिः। **यथामति** इति। मतिर्ज्ञानमनतिक्रम्येत्यर्थः। मतिः प्रज्ञा ज्ञानं वा। 'प्रज्ञा शेमुषी मतिः' इत्यमरः। अर्थात्स्वज्ञानानुसारमित्यर्थं। **यथाशास्त्रमिति**। शास्त्रमनतिक्रम्येत्यर्थः। शास्त्रानुसारमिति यावत्। षट्सु शास्त्रेष्वत्र मीमांसाशास्त्रस्यैव ग्रहणम्। प्रकृत्वात्अर्थान्मीमांसाशास्त्रमनुसृत्यैव पदार्थाः विविच्यन्तेऽत्र। **यन्मयोक्तामिति**। यद् मया ग्रन्थकर्त्रा जीवदेवेनोक्तं प्रतिपादितमित्यर्थः। भाट्टसिद्धान्तप्रकाशकस्य शास्त्रदीपिकाद्यनेकग्रन्थस्य विद्यमानत्वादस्य का उपयोगितेत्यत आह—**समासत** इति। संक्षेपेणेत्यर्थः। तसिल्प्रत्ययः। यद्यपि 'पञ्चम्यास्तसिल्' इत्यनेन पञ्चमीप्रकृतिकादेव तसिल् प्रत्ययो विहितस्तथापि 'इतराभ्योऽपि दृश्यन्ते' इत्यनेन तसिल्प्रत्ययविधानान्नकिमपि दूषणम्। अन्येषां ग्रन्थानां विपुलकायकत्वात्तत्रत्याः पदार्था अलसार्भकबोधगम्याः न भवन्ति। अतस्तेषामुपकारामात्र संक्षेपेण प्रतिपाद्यन्ते पदार्थाः। **विवेचन्त्विति**। विचिर् पृथग्भावे। लोटि प्रथमपुरुषबहुवचने रूपमिदम्। सदसदर्थपार्थक्येन सूक्ष्मेक्षिकया विचारयन्त्वित्यर्थः। सुधिय इति शेषः। दोषदृष्ट्या विचार्यमाणे दोषेऽविद्यमानेऽपि तच्चित्तानां प्रकाशते। अतः शास्त्रविचारसमये ताटस्थ्येन भाव्यमिति भावः। अतएवोक्तं भट्टपादेन—

न चात्रातीव कर्त्तव्यं दोषदृष्टिपरं मनः।

दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते ॥ इति। **तदिति**। तच्छब्दस्य पूर्वपरामर्शित्वात् यन्मयोक्तमत्र ग्रन्थे तदित्यर्थः। अर्थात् ये पदार्था अत्र प्रतिपादिताः मया तं विचारयन्त्वित्यर्थः। **प्राज्ञा** इति। ज्ञा अवबोधने। जानातीति ज्ञः। 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययः। 'ज्ञो ब्रह्मबुधविद्वत्सु' इति मेदिनी' प्रकृष्टं प्रकृष्टेन वा जानातीति प्रज्ञः। प्रादिसमासः। प्रज्ञ एव प्राज्ञः। स्वार्थेऽण्। अथवा प्रज्ञास्यास्तीति प्राज्ञः। 'प्रज्ञाश्रद्धाचाभ्यो णः' इति णप्रत्ययः। वस्तुतस्तु अयमेव पक्षः साधीयानिति वदन्ति। स्वार्थिकाण् पक्षे स्त्रीत्वविवक्षायां 'टिड्ढाणञ्' इत्यनेन ङीपि सति प्राज्ञी इत्येव स्यात्। तन्न समीचीनम्। स्त्रीत्वविवक्षायां प्राज्ञा इति टाबन्तप्रयोगस्यैव दर्शनात्। अतएव दीक्षितेन कौमुद्यामेवमेवोदाहृतम्। **सम्प्रदायविदामिति**। विद् ज्ञाने। वेत्तीति विद्। क्विप्प्रत्ययान्तं रूपम्। सम्प्रदायस्य विद इति सम्प्रदायविद्। सम्प्रदायं वेत्तीति तु विगृहमात्रम्। तेषां सम्प्रदायविदामिति। सम्प्रदायश्च सम्प्रदीयतेऽनेन पारम्पर्योपदेश

इति। गुरुक्रम इति हलायुधः। अविच्छिन्नगुरुपरम्परया यत्र ज्ञानं प्रदीयते स सम्प्रदाय इति। अत्र च प्रकृतत्वान्मीमांसासम्प्रदाय एव विवक्षितः ग्रन्थकृताम्। मीमांसाया अप्यस्ति सम्प्रदायः। तथाहि—ब्रह्मा प्रजापतये मीमांसा प्रोवाच, सोऽपीन्द्राय, सोऽप्यग्नये, सचवसिष्ठाय, सोऽपिपराशराय, पराशरः कृष्णद्वैपायनाय, सोऽपिजैमिनये। स च स्वोपदेशादनन्तरमिमं न्यायं ग्रन्थं निवद्धवानिति। तेषु सम्प्रदायवित्सु वरः श्रेष्ठः प्रधानः इति यावत्। 'प्रधानः श्रेष्ठः वरः' इति इलायुधः। प्राज्ञाभिन्नसम्प्रदायविदभिन्न-कर्तृवृत्तिसदसदर्थविवेचनानुकूला भावनेति समुदायार्थः। **श्रीकृष्णमिति।** श्रिया सहितः कृष्णस्तमित्यर्थः। तत्सहिते एवं भगवति पूर्णवात्सल्यं प्रकटीभवतीति **सम्प्रदायविदः।** अन्यत्सर्वं पूर्वमुक्तम्। **प्रणतार्त्तिघ्नमिति।** णम् प्रह्वीभावे। प्रोपसर्गः प्रकृष्टार्थकः। क्तप्रत्यये रूपम् प्रणतानां प्रह्वी-भूतानां विनम्रीभूतानां शरणागतानामित्यर्थः। तेषां या आर्त्तिः। आपूर्वकाद् गत्यर्थकाद् ऋधातोः क्तिनि रूपम्। 'दुःखं वेदना पीडा वा' इति हलायुधः। तं हन्ति विनाशयति दूरीकरोतीति यावत्। तमित्यर्थः। अनेन प्रणतपीडा-निवारकत्वं प्रतिपाद्यते। एतद्गुणगणविशिष्टं श्रीकृष्णं प्रणम्येत्यग्रेण सम्वन्धः। तदनन्तरं स्वपितरं प्रणमति **आपदेवाभिधमिति।** आपदेवोऽभिधा नाम यस्यासौ आपदेवभिधस्तमित्यर्थः। अभिपूर्वकधाधातोरङि टापि चाभिधेति। 'नामाख्याह्वाभिधानं नामधेयम्' इति हलायुधः। **गुरुमिति।** गुरुः पिता। तमित्यर्थः। उक्तञ्च—

निषेकादीनि कर्माणि यः करोति यथाविधिः।

सम्भावयति चान्नेन स विप्रो गुरुरुच्यते ॥ इति। **अन्यत्सर्वं** पूर्वमुक्तम्। **प्रणम्येति।** प्रोपसर्गाद्णम्धातोः क्त्वा ल्यपि च कृते रूपम्। नमस्कृत्येत्यर्थः। **जीवदेवेनेति।** एतन्नामकेन ग्रन्थकर्त्रेति। जीव प्राणधारणे। हलन्ताद् घञि रूपम्। जीवः प्राणी। 'जीवः प्राणिनि वृत्तौ च' इत्यमरः। दिवु क्रीडाविजिगीषेत्यादि। अचि रुपम्। दीव्यतीति देवः। जीवेन सह दीव्यति आनन्दानुभूतिं सम्पादयतीति जीवदेवः। अथवा अन्यान् जीवान् विजित्य प्रकर्षेण वर्त्तते इति जीवदेव इत्यादिः। तेनेत्यर्थः। अनेन ग्रन्थकर्त्तुः महत्त्वं द्योत्यते। 'क्रियते भाट्टभास्कर' इत्यंशः पूर्वमेव व्याख्यातः। **अस्त्विति।** अस् भुवि। लोटि प्रथमपुरुषैकवचने रूपम्। भवतु तिष्ठत्विति यावत्। नास्ति काचिदपेक्षेति भावः। अनेनोपेक्षाबुद्धिर्व्यज्यते। **मत्सरिणा-मिति।** मदी हर्षे। माद्यति परकृच्छ्रे इति मत्सरः। 'मत्सरोऽन्यशुभद्वेषे' इत्यमरः। मत्सरोऽस्यास्तीति मत्सरी। ते च मत्सरिणस्तेषामित्यर्थः।

द्वेषवशात् ये ग्रन्थार्थं विचारयन्ति, ते द्वेषिणउपेक्ष्या इत्यर्थः। न तेषां वार्त्ताः श्रोतव्या इति। वार्त्ता इति। जनश्रुतम इत्यर्थः। 'वार्त्ता वृत्तौ जनश्रुति' रित्यमरः। वृतु वर्त्तने इति धातुरत्र। सन्त इति। विद्वांस इत्यर्थः। पूर्वमुक्तम्। **तत्त्वार्थदर्शिन** इति। तत्त्वभूतमर्थं पदार्थं ये पश्यन्ति, ते तत्त्वार्थदर्शिनः। मीमांसाशास्त्रमर्मवेत्तार इत्यर्थः। **विवेचन्त्विति**। विचारयन्तु समीक्षणं वा कुर्वन्त्वित्यर्थः। तेषामत्रापेक्षा वर्त्तते। मीमांसाशास्त्रतत्त्ववेत्तृत्वात्। ते न द्वेक्ष्यन्ति। **ग्रन्थार्थमिति**। ग्रन्थस्यार्थोऽभिधेयस्तमित्यर्थः। 'अर्थोऽभिधेय' इत्यमरः। ग्रन्थशब्दश्च 'ग्रन्थ सन्दर्भे' इत्यस्माद्धातोः ग्रथ्यते विरच्यते इत्यस्मिन्नर्थे कर्मणि कप्रत्यये निष्पद्यते। 'ग्रन्थः शास्त्रम् इति हलायुधः। शास्त्रमत्रापि मीमांसैव, प्रकृतत्वात्। **एष** इति। एतच्छब्दस्य प्रथमैकवचने रूपम्। तदोः सः सावनन्त्यमयोः। सन्निकृष्टोऽर्थोऽस्य। एष ग्रन्थकर्त्तेत्यर्थः। **तेष्विति**। तच्छब्दस्य पूर्वपरामर्शित्वात्तत्त्ववेतृषु विद्वत्सु इति। कृत इति। डुकृञ् करणे। क्तप्रत्ययः। **अञ्जलिरिति**। 'अञ्जू व्यक्त्यादौ। औणादिकोऽलिप्रत्ययः। अञ्जलिः करसम्पुट इत्यर्थः। संयुक्तयोरुभयोः हस्तयोः सम्पुट इत्यर्थः 'तौ मुतावञ्जलिः पुमान्' इत्यमरः। अञ्जलिस्तु प्रमान् हस्तसम्पुटे' इति मेदिनी च। अर्थात् ग्रन्थकर्त्रा जीवदेवेन विद्वत्सु अञ्जलिः कृतः। अनेन च विनम्रता द्योत्यतेऽस्य ग्रन्थकारस्य। ग्रन्थकर्त्तरि विधायाः फलद्वयमप्युपपद्यते। प्रबोधेन ग्रन्थनिर्माणम्, हस्तसम्पुटेन विनम्रता च। विधायाः फलद्वयमुक्तं रघुवंशे 'प्रबोधविनयाविव। इति। फलद्वयं संघटतेऽस्मिन्निति वैशिष्टचमस्य ग्रन्थकारस्येति।

'प्रयोजनमनुदिश्य मकोऽपि न प्रवर्त्तते' इति न्यायेन जिज्ञासूनां प्रवृत्तिसिद्धयर्थं ग्रन्थप्रयोजनं प्रतिजानीते—**इहेति**। अस्मिन् संसारे इत्यर्थः। खल्वितिवाक्यालङ्कारे। सुखञ्च दुःखञ्चेति। सुखदुःखे। प्राप्तिश्च निवृत्तिश्चेति प्राप्तिनिवृत्ती। तदिच्छतामित्यर्थः। अर्थात् सर्वे जनाः सुखमिच्छन्ति, दुःखञ्च नेच्छन्ति। अतएव सुखप्राप्त्यर्थं दुःखनिवृत्त्यर्थञ्च यतन्ते। **प्रेक्षावतामिति**। प्रेक्षा बुद्धिस्तद्वतामित्यर्थः। 'प्रेक्षोपलब्धिश्चित्त०' इत्यमरः। विदुषामिति यावत्। **धर्माधर्म विषये** इति। धर्मविषये प्रवृत्तिः, अधर्मान्निवृत्तिश्चेति। ग्रन्थेऽस्मिन् किं निर्णेष्यतीत्याह—**तत्रेति**। **कार्त्स्न्येन** साकतथेनेति। धर्मश्चाधर्मश्च तयोर्निर्णयः प्रयोजनं यस्य तद्। अथं ग्रन्थारञ्च इत्यर्थः। अर्थात् धर्माधर्मनिर्णय एवास्य ग्रन्थस्य परमं प्रयोजनम्। तदङ्गत्वेन चान्त्रेषां विषयाणामपि। निरुपणमत्रेति वेदितव्यम्। धर्मं लक्षयितुमुपक्रमते—**धर्मो नाम** इति। वेदबोधितः श्रेयःसाधनता यत्रासौ श्रेयःसाधन-

ताक इति वेदबोधितत्वे: सति श्रेयः साधनताकत्वं धर्मस्य लक्षणमिति फलति। सत्यन्तानुपादाने भोजनादेः श्रेयः साधनत्वात्तत्रातिव्याप्तिः स्यात् तामति व्याप्तिं वारयितुं सत्यन्तं विशेषणदलम्। तन्मात्रोक्तौ च श्येनादावतिव्याप्तिस्स्यात्। तन्निवारणार्थं विशेष्यदलमावश्यकम्। श्येनादीनां नरकसाधनत्वेन न तत्र श्रेयः साधनता। अत्र भाष्यम्—'यो हिंसितुमिच्छेत्तस्ययमभ्प्रदाय' इति हि तेषामुपदेशः। श्येनेनाभिचरन् यजेत' इति हि समामनन्ति, नाभिचरितव्यम्, इति। अत एव श्येनादीनां स्वरूपतश्च धर्मत्वम्। फलतश्चाधर्मत्वमिति। व्यवस्थापितं वार्त्तिककारेण। तथाहि—

अतः स्वतो न धर्मत्वं श्येनादेनाप्यधर्मता।
फलानर्थानुबन्धित्वात् तद्द्वारेणोपचर्यते॥
निराकांक्षस्य चैकेन श्येनस्य न फलद्वयम्।
तस्यात् क्रियान्तरादेव हिंसातोऽनर्थ उच्यते॥
फलतोऽपि च यत्कर्म नानर्थेनानुबध्यते।
केवलहेतुप्रीतिहेतुत्वात्तद्धर्मत्वेन हीष्यते॥
ननु चेष्टाभ्प्रपायत्वात् श्येनादेर्धर्मता भवेत्।
फलं तावदधर्मोऽस्य श्येनादेः सम्प्रधार्यते॥

इत्यादिवहुभिश्श्लोकैः सुविचारितम्। स्वर्गादेरपि श्रेयोरूपत्वात् तत्साथनत्वाभावेन नातिव्याप्तिः। अतः प्रयोजनपदनिवेशनं धर्मलक्षणे नावश्यकमिति भावः। उदाहरति **यागादिरिति**। यागे वेदबोधितत्वे सति श्रेयोरूपस्वर्गादिसाधनतायाः सत्त्वाल्लक्षण सुसङ्गतम्। प्रसङ्गप्राप्तत्वादधर्मं लक्षयति—**अधर्मोऽपीति** वेदबोधितं यद श्रेयः साधनं। तत्कत्वमिति। उदाहरति—**ब्रह्महत्यादिरिति**। आदिपदेन श्येनादीनामपि ग्रहणम्। तत्तत्कर्मजन्यानि यान्यपूर्वाणि तान्येव पुण्यपापशब्देन धर्माधर्मशब्देन च कथ्यते। परन्तु मीमांसकानां मते यागादिक्रियादीनामेव धर्मत्वात् तज्जन्ये भाक्तप्रयोग इति बोध्यम्। उक्तमपि क्रियादीनां धर्मत्वम्। यथा—'द्रव्यकुणक्रियादीनां धर्मत्वं स्थापयिष्यते' इति। एतेषां न तादृूप्येण धर्मत्वमपि तु तत्साधनत्वेनेति ज्ञेयम्। तथापि तेषामेव धर्मत्वम्, न तज्जन्यानामिति। उभयत्र धर्मशब्दस्य प्रयोग इति प्रमाणयति —**'धर्मं चर'** इत्यादिना। 'धर्मं चर' इत्यादिना यागादिक्रियासु धर्मत्वं ज्ञाप्यते। तज्जन्यापूर्वाणामाचरणाभावात्। 'धर्मः सरति कीर्त्तनात्' इति वाक्यं चापूर्वे एव संघटते। अन्यथा

यागादेस्तु क्रियारूपत्वादनुष्ठानाव्यवहितोत्तरक्षणे एव विनष्टत्वात् पुनः क्षरणाभावात् ।

कर्मनाशाजलस्पर्शात् करतोयाविलङ्घनात् ।
गण्डकीबाहुरणात् धर्मः क्षरति कीर्त्तनात् ।। इति

सम्पूर्णोऽयं श्लोकः। अत्र कीदृशस्य धर्मस्य विचार इत्यत आह —**अत्रेति**। अत्रोभयस्यापि धर्मस्य विचारः क्रियते। तदनन्तरञ्च निष्कर्ष इति विचारप्रकारं दर्शयति —**तत्रादाविति**। लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति न्यायेन धर्माधर्मयोः कानि प्रमाणानि किञ्च तयोः लक्षणमिति विचारयिष्यते। स्वेन रूप्यते बोध्यते इति स्वरूपम्, लक्षणमिति यावत्। तयोः धर्माधर्मयोरिति । तत्र कानि प्रमाणानीत्यत आह —**वेदेति** । वेदाश्च मन्वादिस्मृतयश्च शिष्टाचाराश्चेति द्वन्द्वः। एतेषां धर्माधर्मयोः प्रामाण्यं व्यवस्थितम्। तत्र वेदानां धर्माधर्मप्रभितौ स्वतः प्रामाण्यम्, अपौरुषेयत्वात्। स्मृतीनाञ्च वेदमूलकत्वेन तत्र प्रामाण्यमिति स्मृत्यधिकरणं निरुपितम्। तत्र हि अष्टकादिस्मृतयः विषयाः। एतासां प्रामाण्यमस्ति न वेति संशयः। निर्मूलत्वात्पौरुषेयत्वाच्च धर्माधर्मयोः प्राणाण्यं नैव भवितुमर्हतरति पूर्वपक्षयित्वा वेदमूलत्वेन च तासां प्रामाण्यं व्यवस्थापितम् । यथा न्यायमाला—

अष्टकादिस्मृतिर्धर्मे न मात्वं मानताथवा ।
निर्मूलत्वान्न मानं सा वेदार्थोक्तौ निरर्थता ।।
वैदिकैः स्मर्यमाणत्वात्सम्भाव्या वेदमूलता ।
विप्रकर्णार्थसंक्षेपात्सार्थत्वादस्ति मानता ।। इति

एवमेव शिष्टाचारापरपर्यायसदाचाराणामपि । धर्माधर्मयोः प्रामाण्यं प्रसाधितम् । सदाचाराणाञ्च स्मृतिमूलकत्वेन । स्मृतीनाञ्च वेदमूलकत्वेनेति द्वयन्तरितं प्रामाण्यं भवति। अत्र पूर्वपूर्बस्य प्राबल्यम् परस्य परस्य च दौर्बल्यमिति व्यवस्था। यथोक्तं न्यायमालायाम्—

सदाचारोऽप्रभा मा वा निर्मूलत्वादमानता ।
अष्टकादेरिवैतस्य समूलत्वात्प्रमाणता ।।इति।।

ननु प्रत्यक्षादिभिः प्रमाणैरेव धर्माधर्मयोरपि सिद्धिर्भवेत्। किमर्थं

वेदादीनां प्राणाण्यविषये विचार इत्यत आह —**प्रत्यक्षादीति**। प्रत्यक्षादि-प्रमाणानां धर्माधर्मयोः प्रामाण्यं सुनिराकृतम्। भगवता सूत्रकारेण 'तस्य निमित्तपरीष्टिः इति सूत्रयित्वा तदनन्तरञ्च 'सत्सप्रयोगे। पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम् विद्यमानोपलम्भनत्वात्' इति सूत्रेण विद्यमानानां पदार्थानामेव ग्राहकाणि प्रत्यक्षादीनि प्रमाणानीति प्रसाधितम् भाष्य-कारोऽपि 'प्रत्यक्षं तावदनिमित्तम्' इत्यारभ्य प्रत्यक्षलक्षणनिरुपण पुरस्सर मुपसंहरिति 'अतः प्रत्यक्षमनिमित्रमिति' एवमेवान्येषामपि प्रमाणानां प्रामाण्यं धर्माधर्मविषये निराककरोति **'प्रत्यक्षपूर्वकत्वाच्चानुमानोपमानार्था-पत्तनामप्यकारणत्वमिति'** इत्यादिना ग्रन्थेन। कथं प्रत्यक्षमूलकत्वमनुमा-नादीनामिति। चेत्, उच्यते—अनुमाने तावद् व्याप्तिज्ञानमावश्यकम्। व्याप्तिज्ञानञ्च महानसादौ प्रत्क्षेणैव भवति 'तदनन्तरमेवानुमीयते' अतः प्रत्यक्षमूलकत्वन्तस्य। उपमानेऽपि साहृश्यज्ञानमावश्यकं भवति। तच्च कुत्रचित् प्रत्यक्षमेव। तदनन्तरमेव तेन सादृश्येनोपभीयते। अर्थापत्तावपि पीनत्वादिकं प्रत्यक्षमेव दृश्यते। तेन च हेतुना रात्रिभोजनमाक्षिप्यते। अतः सर्वत्र प्रत्यक्षमूलकत्वं ज्ञातव्यम्। प्रत्यक्षसूत्रवार्त्तिकेऽपि—

यतोऽस्ति तत्र धर्मोऽयं विद्यमानोपलभ्मनम्।

तस्मात्तेन प्रसिद्धेन गम्यतामनिमित्तता ॥ इत्यादिभिः बहुभिः श्लोकैरनिमित्तत्वं प्रतिपादितम्। विस्तरभयान्नेह साकल्येनोपस्थापयितुं क्षमः। तत एवावगन्तव्यः। न्यायमालायामपि माधवः तथाहि—

प्रत्यक्षादिभिरप्येष गभ्यते विधिनैव वा।
अक्षादीनां प्रमाणत्वान्मेयधर्माविभासिता ॥
वर्त्तमानैकविषयमक्षं धर्मस्तु भाव्यसौ।

अक्षमूलोऽनुमानादिस्तेन विध्येकमेयता ॥ इति। प्रमाणैरेभिः धर्माधर्मयोः प्रत्यक्षादीनामनिमित्तत्वं विधीनाञ्च निमित्तत्वं प्रसाधितं भवति। **यागस्वर्गादीति**। यागनिष्ठसाधनतानिरूपितसाध्यताश्रमत्वबोध-कत्वमित्यर्थः। एतादृशार्थबोधकता विधावेव तिष्ठतीति। चोदनामतिरिच्य नान्येन प्रमाणेनास्य बोधसम्भवः चोदनावैशिष्ट्यम् प्रतिपादयन् भाष्यकारो ब्रवीति—'चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्ये-वंजातीयकमर्थं शक्नोत्यवगमयितुम्, नान्यत्किञ्चनेन्द्रियम्' इति।

अतश्चोदनागम्यत्वं धर्मस्य। ननु सिद्धार्थप्रतिपादकार्थवादवाक्यैः प्रवृत्ति-निवृत्त्यभावादनर्थकत्वेन कथं धर्माधर्मयोः प्रामाण्यमिति चेत् न। विधि-वाक्येन सहैकवाक्यतया तेषामप्यर्थवत्त्वस्वीकारात्। तथा च सूत्रकारो 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते। इत्यनेन पूर्वपक्षयित्वा 'विधाना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः' इत्यनेनार्थ-वत्त्वं सिद्धान्तयामास। अतो नानर्थक्य तेषामिति भ्रमितव्यम् यथा 'इति श्रीवाल्मीकीयेरामायणे' 'इति श्री वैयासिके महाभारते' इत्यादिना ग्रन्थ-कर्त्तुः स्मरणं भवति, न तथा वेदे। अतोऽपौरुषेयत्वमित्यत आह—**कर्त्रेति।** ग्रन्थस्यादवन्ते वा न ग्रन्थनिर्मावकर्त्तृत्वेन कस्यापि नामोल्लेख इति। अतोऽपि कर्त्तुरभावं निश्नोति जनं इति। ननु वेदेऽपि' त्रयो वेदा अजायन्त' इत्यादिभिर्वाक्यैरुत्पत्तिश्रवणात् कथमपौरुषेयत्वमिति चेत्। न। 'तदुच्चं-र्गाथा क्रियते'।

इत्यादिविधिवाक्यशेषत्वेनाग्नेर्ऋग्वेद इत्यादिवाक्यानां स्मरणत्। अतएवोत्पत्तिप्रतिपादकानां वाक्यानां स्मरणात्। अतएवोत्पत्तिप्रतिपादकानां वाक्यानां स्वार्थे प्रमाण्याभावस्यापि बोधः। कथञ्च प्रामाण्यमिति वक्ष्यतेऽग्रे। **वक्ष्यते** इति। अर्थवादनिरूपणावसरे इति शेषः। **यदीति।** अयं भावः—उच्चैष्ट्वादिप्रतिपादकविधयः कर्त्तृसापेक्षाः भवेयुश्चेत्तर्हि 'स्वर्गकामो यजेत' इति विधिसापेक्षस्वर्गरूपं यत्फलं तद्बोधकार्थवाद-वाक्यमिव विधिवाक्यसापेक्षं यत्कर्त्तृत्वं तत्प्रतिपादकत्वेन स्वर्थबोधकत्वे सति प्रामाण्यं भवेत्। न चैतदस्ति अतो न कर्त्तृप्रतिपादकता बोध्या। मास्तु अग्नयादिनिष्ठं कर्त्तृत्वम्, तस्यार्थवादत्वेन चारितार्थ्यात् तथापि काठकादिसमाख्यावलेन कठादीनामेव कर्त्तृत्वं भवेदित्य आह—**नचैवमिति।** अयं भावः—अग्नयादीनां कर्त्तृत्वाभावेऽपि 'तेनकृतम्' इति सूत्रबलात् काठकमित्यादिसमाख्याप्युपपद्यते। अतः कठादीनां वेदकर्त्तृत्वंस्वीकर्त्तव्यम्। तत्रोपोद्वलकमपि दर्शयति—**वसिष्ठस्यार्षमिति।** वसिष्ठस्यार्षं विश्वामित्र-स्यार्षमिति च व्यवहारदर्शनात् वसिष्ठादीनां वेदकर्त्तृत्वमुपपद्यते। तस्मात्तेषामेव कर्त्तृत्वं भवेदिति। न चेष्टापत्तिरिति। एतेषां कर्त्तृत्वं स्वीकर्त्तुं न शक्यत इति भावः। कुतः? कठादीनां शाखाकर्त्तृत्वेन वसिष्ठा-दीनाञ्च वाक्यकर्त्तृत्वेन स्मरणाभावात्। न 'तेन कृतम्' इति पाणिनीयं सूत्रं प्रवर्त्ततेऽपि तु 'तेन प्रोक्तम्' इत्यनेनैवोपपन्नत्वात्समाख्यायाः। उभयो-रेकस्यापि शाखादिकर्त्तृत्वं न सेत्स्यति, प्रमाणाभावात्। आर्षस्मरणमपि न प्रमाणभूतम्। कुतः। तस्य स्मरणस्यापि सृष्ट्यादौ तत्तद्वाक्यदर्शने-नैवोपपन्नत्वात्। 'ऋषिर्दर्शनात्' इत्यप्युपपद्यते। अतो सर्वेषामुपपन्नतरत्वेन

वसिष्ठादीनां कर्त्तृत्वसाधकता न स्वीकर्त्तव्येति पूर्वपक्षः। सिद्धान्तयति—काठकादीति। काठकादिसमाख्यायाः 'तेनप्रोक्तम्' इत्यनेन प्रवचननिमित्ते-नोपपन्नत्वात्कर्त्तृत्वकल्पना नावश्यकी।

**प्रवचनादिति**। अनेन 'आख्या प्रवचनात् इति पारमर्षं सूत्रं स्मारयति। भाष्यकारोऽपि ब्रवीति—'प्रकर्षेण प्रवचनमनन्यसाधारणं कठादिभिरनुष्ठितं स्यात्तथापि हि समाख्यातारो भवन्ति' इति वार्त्तिक-कारेणापि व्याख्यातम्—

अन्यथाप्युपपन्नत्वादिम प्रवचनादिना।

न शक्ता कर्त्तृमूलाय प्रोक्ते च स्मरणं स्थितम्। इत्यादिभिः बहुभिः श्लोकैः। मानवादिसमाख्यापि प्रवचननिमित्तत्वेनोपपत्स्यते, तर्हि स्मृत्या-दीनामपि नित्यत्वापत्तिः स्यादित्याशङ्कते—न चेति। तन्न समीचीनमिति। मानवादिधर्मशास्त्रेऽऽदावन्ते च कर्त्तृनाम समुपलभ्यते। अतः पुनः पुनः कर्त्तृस्मरणं भवति, न तथा वेदे। अतो नानेन दृष्टान्तेन स्मृत्यादिषु नित्यत्वं प्रसाधयितुं कश्चिद् क्षमः। उपसंहरति—**वेदे त्विति**। वेदे कर्त्तृस्मरणाभावात् प्रवचननिमित्तेनैव सर्वासां समाख्यानामुपपत्तिर्बोध्येति सर्वमनवद्यम्। 'यस्य निःश्वसितं वेदाः' इत्यादिप्रमाणेन तदेश्वरस्य सर्वज्ञत्वात् धर्माधर्मविषयकज्ञानविशिष्टत्वात् वेदकर्त्तृत्वं सम्भवमित्या-शङ्कते—**नन्विति**। तत्खण्डनाय विकल्पयति—स किमिति। तत्र प्रथमः पक्षो नोपक्रमत इत्यत आह—नाद्य इति। न प्रथमः पक्षः साधीयानिति। कुतः यस्मिन् कस्मिन्नेव कल्पे सृजति, न सर्वस्मिन् कल्पे इति स्वीकारे सृजनाभाववतिकल्पे धर्माधर्मयोः ज्ञानमेव न भवेत्, तयोर्वेदैकगम्यत्वात्। ननु ज्ञानं मा भवेत्तेन का क्षतिरिति चेद्दाह—**तदनुष्ठानाभावादिति**। ज्ञानपूर्वकमेव भवत्यनुष्ठानम्। यदि तद्विषयकज्ञानमेव नास्ति तर्हि कथमनुष्ठानं सम्भवमिति। मा भवेदनुष्ठानं का हानिरित्याह—**कल्पान्तरेति**। धर्माधर्मयोरेव सुखदुःखहेतुत्वात् तदभावे तदनन्तरभाविकल्पे।"

समुत्पन्नानां जीवानां कथं तत्प्राप्तिर्भवेत्, तन्न भवेदित्यर्थः। ततः किं स्यात्? सुखदुखयोरभावेन तद्भोगार्थं शरीरोऽपि नावश्यकः। तदभावे च जीवानां जन्मापि नावश्यकम्। तर्हि सर्वेषां मोक्षापत्तिः स्यात्। अतएव प्रथमः पक्षः न स्वीकारमर्हः। द्वितीयमपि पक्षं खण्डयितुमुपक्रमते—न द्वितीय इति। नायमपि पक्षः क्षोदक्षमः इत्यर्थः। ईश्वरस्तावत्सर्वज्ञ इत्यत्र

नास्ति कश्चिद् विवादः। तर्हि पूर्वकल्पस्थितानेव वेदान् अपरस्मिन् कल्पे उपदिशतीत्यस्मिन्नेव पक्षे लाघवः। प्रत्येकस्मिन् कल्पे च विरचयतीत्यस्मिन् पक्षे च गौरवं विद्यते। लाघवे सम्भवति गौरवपक्षोऽन्याय्यः। तस्मादश्चन-कल्पना नोचितेति भावः। यद्येवं कल्प्यते, एकस्मिन् कल्पे रचयति अपरस्मिंश्च पक्षे कल्पे उपदिशतीत्यपि न। कस्मिन् कल्पे लिखति कस्मिंश्च कल्पे उपदिशतीत्यत्र निर्णायकप्रमाणभावात्। 'अर्थं बुद्ध्वा वाक्यरचना' इति न्यायेनेश्वरकर्तृकत्वे तत्रापि जन्यज्ञानकल्पनया तन्निष्ठं ज्ञानमाप्यनित्यं भवेत्। अनित्यत्वाच्च न सर्वथा प्रामाण्यमिति ईश्वरीयज्ञानस्य नित्यत्वपक्षेऽन्योन्याश्रयं दर्शयति—**नित्यज्ञानस्येत्यादिना**। स्वग्रहसापेक्षसापेक्षग्रहकत्व-मन्योन्याश्रमत्वम्। कुत इति चेत्। तर्हीत्थम्। वेदप्रामाण्ये सिद्धे तज्ज्ञान-द्वाराईश्वरनिष्ठकर्तृत्वं सेत्स्यति। ईश्वरकर्तृकत्वेन च वेदानां प्रामाण्यं स्यात्। तर्ह्युभयोः परस्परसापेक्षत्वादन्योन्याश्रयत्वमिति। अतोऽपि नेश्वरस्य वेदकर्तृत्वमायाति। अपि च 'यस्य निःश्वसितं वेदाः' इत्यनेन श्वासप्रश्वासरूपत्वमेवेश्वरस्य वेदानामिति। श्वासप्रश्वासश्च न प्रयत्न-साध्यः। शरीरं यावन्नित्यत्वात्। ईश्वरस्य च शरीरं नित्यम्, तर्हि वेदानामपि नित्यत्वमेव। अन्यथा स्वासप्रश्वासरूपवेदाभावेनेश्वरशरीरमपि पूतिगन्धि स्यात्।

तस्माद्वेदानां नित्यत्वात् कर्तृत्वकल्पना न प्रामाणिकी। अपि च श्वासप्रश्वासरूपत्वात् प्रयत्नसाध्यत्वाभावेन कर्तृत्वमपि न संघटते। कर्तृत्वन्तु यत्नसाध्यमेव भवति अतोऽपि प्रवक्तृत्वमेवोचितम्, न कर्तृत्वम्। उपसंहरति—तस्मादिति। प्रमाणैरेतैः सिद्धत्वात् नेश्वरे वेदकर्तृत्वं व्यवतिष्ठते। **अन्यत्रेति**। भाष्यवार्त्तिकादावेत्यर्थः। एतावता ईश्वरोच्च-रितत्वाद् वेदानां प्रामाण्यमिति न्यायमतमपास्तम्।

वेदेषु तावदनित्यानां जन्ममरणवतां मनुष्याणां नामान्युपलभ्यन्ते, यथा ववरः प्रावाहणिरित्यादि। प्रवहणस्यापत्यं पुमान् प्रावाहणिरिति। अत इम् स्मर्यतेऽत्र। अनेन चेदमायाति यद प्रवहणापुत्रववरस्योत्पत्तितः पूर्वं 'ववरः प्रावहणिरकामयत' इति मन्त्रः नासीत्। तदनन्तरञ्च केवचिद् रचित इति' एवमेवानित्यानां नदीपर्वतादीनामपि नामानि सन्ति तत्र। अतएव वेदानामप्यनित्यत्वमित्याशङ्कते—**नचेति**। अनेन ववरं दृष्ट्वा वेदरचनकल्पनानुमीयते। तत्खण्डयति—**नित्येति**। नित्यसिद्धवाऽवादि-वाचकत्वेन ववरादिशब्दानामुपपन्नत्वे सति अनित्यत्वं वेदानामिति कल्पनं

न युक्तिसहम् । अतएव सूत्रकारेण 'अनित्यसंयोगाच्च' इत्यनेन पूर्वपक्षं कृत्वा 'परं तु श्रुतिसामान्यमात्रम्' इत्यनेन समाहितम् । अनित्येन पदार्थेन सह श्रुतिसामान्यमात्रमेव वर्त्तते न त्वनित्याः पदार्था एव सन्तीति । भाष्यकारोऽपि वदति—प्रवहणस्य पुरुषस्यासिद्धत्वान्न प्रवहणस्यापत्यं पुमान् प्रावाहणिरिति । प्रशब्दः प्रकर्षे सिद्धो वहतिश्च प्रापणे इत्यादि ।

श्रुतिसामान्यमात्रं हि नात्र दण्डेन वार्यते इत्यादिभिः श्लोकैः वार्त्तिकेप्येवमेव प्रसाधितं दृश्यते । तस्मान्नानित्यत्वं वेदानामिति । 'दध्ना-जुहोति, व्रीहिभिर्यजेत' इत्यादिषु वाक्येषु दध्यादयः पदार्थाः श्रूयन्ते । ते चानित्याः । तेनैव हेतुना कथन्न वेदानामनित्यत्वमित्यत आह—**दधीति** । दध्यादीनां सर्वथा नित्यत्वाभावेऽपि कार्यानादित्वेन नित्यत्वं स्वीकुर्वन्ति तथैव बबरादीनामपि कार्यानादित्वमिति । वेदानाञ्च कीदृशं नित्यत्वमित्यत आह—**वेदस्यापीति** । वेदानामपि कार्यानादित्वेनैवाकाशादिवन्नित्यत्वम्, न स्वरूपतो नित्यत्वमिति भावः । वेदश्चानुपूर्वीविशेषविशिष्टवर्ण-समुदायात्मक इत्यत आह—**स हीति** । न चैवं वर्णानामपि कार्यानादित्वमेव भवेदिति निराकरणायाह तत्र **वर्णानामिति** । वर्णानां स्वरूपनित्यता औत्पत्तिक सूत्रे संसाधिता । अतो न वर्णानामनित्यत्वमिति । अनित्यत्व-प्रतीतिः कथमित्यत आह—**उच्चारणसामग्रीजन्यत्वादिति** । वर्णानां नित्यत्वेऽपि तद्व्यञ्जकोच्चारणसामग्रीजन्यत्वेन वर्णेष्वनित्यत्वप्रतीति-रिति । अयञ्चानुपूर्वी विशेषः सर्वस्मिन् काले तिष्ठतीति कृत्वा कार्यानादित्वं वर्णानां स्वीकुर्वन्ति । स्मृत्यादिष्वपि ब्रह्मयज्ञादीनां प्रतिपादनं दृश्यते । तेन च पूर्वोक्तदध्यादिन्यायेन स्मृत्यादीनामपि कार्यानादित्वापत्त्या वेदतुल्य-त्वमेवेत्याशङ्कते—**न चैवमिति** । परिहरति—**तेषामिति** । अयं भावः—प्रमाणान्तरेण तावज्ज्ञानं लब्ध्वा तदनुसारमेव वाक्यानां रचना सञ्जायते स्मृत्यादिषु । अतो वाक्यविरचनसामग्रीजन्यत्वं तिष्ठति एतेषु । वेदेषु चैतादृशसामग्रीजन्यता न सम्भवति । इत्येवोभयोर्विशेषः । तस्माद्वेदा अपौरुषेयाः न स्मृत्यादय इति । एकोऽपि वेदो वाक्यदृष्ट्या विभागमर्हति । अतो विभजनायाह—**स चेति** । वेद इत्यर्थः । विभागानन्तरं विधिं लक्षयति—**तत्रेति** । विधिवाक्यानां विधायकत्वेन धर्माधर्मयोः प्रामाण्य-मित्यर्थः । धर्मं प्रति विधायकत्वम्, अधर्मं प्रति च निवर्त्तकत्वम् । अतएव नञ्विशिष्टविधौ तद्विपरीतार्थबोधकत्वं भवति । एतच्च निषेधनिरूपणावसरे प्रतिपादयिष्यते ।

किं नाम विधायकत्वमित्यत आह—**विधायकत्वमिति** विधावज्ञातानां

पदार्थानां बोधकता तथानुष्ठानबोधकतापि भवति । अतोऽज्ञातार्थबोधत्वे सति अनुष्ठानबोधकत्वं विधित्वमिति विधेर्लक्षणं फलति । अनुष्ठापकत्वमात्रोपादानेऽनुवादावव्यतिव्याप्तिः सम्भाव्येत । तेनाप्यनुष्ठानविषयकज्ञानसम्भवात् । अज्ञातज्ञापकत्वेन विशेषिते सति नातिव्याप्तिः' अनुवादानां ज्ञातार्थज्ञापकत्वात् । अज्ञातज्ञापकत्वमात्रोपादानेऽज्ञातानां पदार्थानां ज्ञानसत्त्वेऽपि अनुष्ठानज्ञानाभावात् वैयर्थ्यमापद्येत । तस्मादुभयोः दलयोः सार्थक्यं बोध्यम् । उदाहरति—**विधयो हीति** । एष्वज्ञातज्ञापकत्वमनुष्ठापकत्वञ्च तिष्ठतीति भावः । एभिः पदार्थानां ज्ञानमपि भवति अनुष्ठाने च प्रवृत्तिरपि सञ्जायते । भावनाशब्दं व्युत्पादयति—**भावना चेति** । भाव्यते यया इति व्युत्पत्तिः अनया इत्यपि पाठान्तरम् । **अन्यानुकूल इति** । अन्यपदमत्रयागादेः सग्राहकम् । अनुकूलत्वञ्च जनकत्वम् । अतो यागादिज्ञानजनकव्यापारो भावनेति । **यजेतेति** । यजेतेत्यादि लिङ्लोडादियुक्तपदानां श्रवणे हि यागानुकूलं व्यापारं कुर्यादिति नियमेन प्रतीयते । अतएव भावनाया उक्तलक्षणमिदं सुसंघटते । पुरुषप्रवर्त्तनापरपर्यायमिति । उभयोरैकार्थ्यं प्रतिपादयति । साक्षाद्भावनाविधायकत्वादेव लिङ्गादयः मुख्यो विधय इति समामनन्ति । तद्युक्तेषु वाक्येषु तदपेक्षया गौणं विधित्वमिति प्रतिपादयितु—माह—**तद्युक्तानीति** । **भावनापेक्षितांशत्रय इति** । साध्यसाधनेतिकर्त्तव्यतारूपमंशत्रयमित्यर्थः । भावयेदिति पदे श्रुते जिज्ञासते त्वरितमेव किं भावयेत्, केन भावयेत्, कथं भावयेदिति । एतदाकांक्षात्रयोपशमनन्तरमेव प्रवर्त्तते जन इति । **तेषामिति** । 'स्वर्गकामो यजेत' इत्यादीनां लिङ्गादिघटितवाक्यानामित्यर्थः । 'यजेत' अर्थात् 'यागेन भावयेत्' इत्यर्थेन भावनाविधायकत्वं तेषाम् । मीमांसकमते क्रियाया अपि धर्मत्वाद्भावनारूपे धर्मे इत्युक्तम् । भावनां विभजते—**द्विविधेति** । भावना द्विविधा भवति शाब्दी आर्थी भेदेनेत्यर्थः । शाब्दीभावनां लक्षयति—**शब्दगत इति** । शब्दगतत्वाच्छब्दनिष्ठत्वाच्छाब्दी । अयमभिप्रायः—वेदस्यापौरुषेयत्वात्तत्र वक्तुः पुरुषस्याभावाल्लिङ्गादिपदघटिते पदे पुरुषाभिप्रायविशेषकल्पनाभावाच्छब्दनिष्ठएवाभिप्रायः कल्प्यते । **शब्दाभिहितो वेति** । लौकिके वाक्ये प्रयोक्तुः पुरुषस्याभिप्रायविशेषः कल्प्यते । तत एवाज्ञादीनां बोधः । तदभिप्रायेणशब्दाभिहितो वेत्युक्तम् । स्पष्टप्रतिपत्त्यर्थं लौकिकवाक्यमुदाहरति—**लोक इति** । अयं भावः—कश्चित्पुरुषः कञ्चित्पुरुषं प्रति 'गामानय' इति वाक्यं प्रयुङ्क्ते । तदनन्तरञ्च श्रोतुरिदं ज्ञानं जायते यदयं वक्ता मयि यथा प्रवृत्तिरुत्पद्येत तथा यतते । एतदेव स्पष्टयति—**वक्ता मदिति** । अनुकूलत्वं जनकत्वम् । अतो मयि उत्पद्यमाना या प्रवृत्तिः

तज्जनको यो व्यापारस्तद्वानयं वक्ता इति प्रतीयते। तदनन्तरं पुनर्लिङ्गादि-युक्तपदानामवापोद्वापद्वारा वाक्यं प्रयुङ्क्ते। तच्छ्रवणानन्तरं प्रवृत्त्यनुकूलो यो व्यापारस्तद्बोधकत्वं वक्तरि कल्प्यते। ततश्च प्रवर्त्तते। इति क्रमः। केषाञ्चित्पदानां संयोजनमवापः। केषाञ्चिच्च पदानां वियोजनमुद्वाप इति। आज्ञादिरूपाश्च प्रयोज्यकर्त्तृनिष्ठप्रवृत्तिजनकव्यापारत्वेन रूपेण वक्तृनिष्ठाभिप्रायविशेषाः। ते च लिङर्थभूताः। लिङादियुक्तपदप्रतिपाद्य-त्वादेव शाब्दी प्रवृत्तिजनकत्वेन च प्रवर्त्तनाशब्देन व्यवहरन्ति। ननु लौकिके वाक्ये तु वक्तुरभिप्राय इति वक्तुं शक्यते परं वेदे पुरुषाभावात्तत्र तन्निष्ठोऽभिप्राय इति कल्पयितुं न शक्यते। एतदेवोपपादयति—**एवमिति**। यथा लौकिके वाक्ये पुरुषस्य वक्तुरभिप्रायस्तथैव वेदे लिङादियुक्ते वाक्ये शब्द-स्यैवाभिप्रायविशेष इति कल्प्यते। तद्घटितेनैव पदेनैव मन्निष्ठप्रवृत्ति-जनकव्यापारविशिष्टोऽयं विधिरिति ज्ञानं सञ्जायते। तत एव प्रवर्त्तते जन इति। नञ्विशिष्टेन च पदेन निवर्त्तते। नञः तद्विरुद्धार्थप्रतिपादन-स्वभावत्वात्। अतो वक्तुः कल्पना समुचिता। पुरुषाभावात्तत्र। ननु लौकिके वाक्ये पुरुषस्य चेतनत्वेन तन्निष्ठोऽभिप्रायविशेषकल्पनं युक्तम्। वैदिके वाक्ये तु पुरुषाभावादेव तन्निष्ठाभिप्रायविशेषकल्पनाभावात् कथं प्रेरणादि-ज्ञान सम्भवमित्यत आह—**तत्र चतुर्णामिति**। प्रेरणाज्ञाध्येषणाप्रैषरूपाणा-मित्यर्थः। एतेषामचेतनत्वेऽपि तन्निष्ठप्रेरणाशब्दवाच्यशक्तिविशेषः कल्प्यते। सैव च प्रवृत्तिजनिका भवति। तादृशप्रवृत्तिजनकव्यापारएव। शब्दनिष्ठ-त्वाच्छाब्दी प्रवृत्तिजनकत्वात्प्रवर्त्तनेति। **राणक इति**। न्यायसुधातन्त्र-टीकाकर्त्ता सोमेश्वरभट्ट इति। न्यायसुधायां विस्तरेण विचारिताः सन्त्येते विषयाः। विस्तरभयान्नेह साकल्येनोपस्थाप्यते न्यायसुधाग्रन्थः।

**मिश्रास्त्विति**। पार्थसारथिमिश्रा इत्यर्थः। मतमेतन्न सहन्ते इत्यर्थः। एतेषां मते दृष्टसाधनत्वमेव विध्यर्थः। इदं मदिष्टसाधनमितीष्ट-साधनताविषयकज्ञानमेव प्रवर्त्तकं भवति। तदेवोपपादयति—**यागादि-गतस्येत्यादिना**। 'यागः मदिष्टसाधनम्' इत्याकारकज्ञानमुत्पद्यतेऽनुष्ठातुः हृदि। इष्टे इष्टसाधने वा प्रवर्त्तते जनः। अनिष्टादनिष्टसाधनाद्वा निवर्त्तते। अत इष्टसाधनताज्ञानस्यैव प्रवृत्तिजनकत्वात्तदेव विध्यर्थ इति भावः। केन रूपेणेत्यत आह—**प्रवृत्त्यनुकूल इति**। अर्थात् प्रवृत्तिजनक-व्यापारत्वेन रूपेणेति। अथं तर्हि शाब्दत्वमित्यत आह—**तच्छब्द इति**। तच्छब्दाभिहितत्वाद्विधिशब्दप्रतिपाद्यत्वाच्छाब्दी। राणकमतं खण्डयितु-मुपक्रमते—**न हीति**। न तन्मतं समीचीनमिति। शब्दनिष्ठशक्तिविशेष-

कल्पनायां प्रमाणाभावादित्यर्थः। प्रकारान्तरं दर्शयति—**अथवेति**। यजेत इत्यादौ प्रत्ययांशे तावद्धर्मितावच्छेदकद्वयं तिष्ठति। लिङ्त्वमाख्यातत्वञ्च। तत्राख्यातत्वांशस्य वाच्या आर्थीभावना। प्रेरणादौ प्रवृत्तिजनकत्वमेव व्यापारः। आर्थीभावनाभावे का हानिरित्यत आह—**आर्थीभावनानभिधान इति**। आर्थीभावनाया अभावे खलु स्वर्गरूपस्य फलस्यान्वयाभावेन पुरुषस्य प्रवृत्तिरेव न स्यात्, फलमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते इति न्यायात्। पुरुषप्रवृत्त्यभावेनानुष्ठानाभावः। तदभावे च विधिवैयर्थ्यापत्तिः। तस्मात्पुरुषप्रवृत्तिजनकव्यापारत्वेन रूपेण भावनैव विध्यर्थ इति। प्रतीतिमुपपादयति—**प्रवृत्तीति**। पूर्वोक्तेनैव प्रकारेण 'प्रवृत्त्यनुकूलव्यापारवान् विधिः' इति प्रतीतिरप्युपद्यत इति भावः। कुत इत्यत आह—**भावनाभिधानस्येति**। स्वमतेऽपि शाब्दीभावनात्वमुदपादयति—**तदेवेति**। आर्थीभावनाया आख्यातवाच्चत्वमुदपादयितुमुपक्रमते—**आर्थीभावना त्विति**। पुरुषनिष्ठस्वर्गादिफलजनको व्यापारोऽऽर्थीभावनेत्यर्थः। व्युत्पत्ति प्रदर्शयति—**अर्थ्यत इति**। अर्थ उपमाच्यायाम्। अर्थ्यते प्राथ्र्यते स्वर्गादिफलं येनेत्यर्थः पुरुष इति। फलेच्छाजन्यव्यापारस्य पुरुषनिष्ठत्वादार्थी इत्युच्यते। निष्कर्षरूपेण स्वाभीष्यमपरां व्युत्पत्तिं प्रदर्शनायाह—**वस्तुतस्त्विति**। अर्थ्यत इत्यर्थः स्वर्गादिफलम्। तस्येयमित्यर्थे 'तस्येदम्' इत्यनेनाण् प्रत्ययः। अणन्तत्वाच्च 'टिड्ढाणञ्' इत्यनेन ङीपि आर्थी इति। अस्याश्चार्थीभावनायाश्चेति। यद्यपि दशाख्यातवाच्यत्वमस्यास्तथापि लिङादिविधित्रयमाख्यात्वांशेन आमार्थीभावनामभिधत्ते विधत्ते इत्यर्थ। अर्थात् विधित्रये एवार्थीभावनावाचकताख्यातत्वेन रूपेणेत्यर्थः। उपपादयति—**लोके चेति**। पचेदित्यादौ पाको धात्वर्थः आर्थीभावनारूपो व्यापारोऽऽख्यातार्थः। अनुकूलत्वञ्च तयोः सम्बन्धः। अतः पाकादेरनुकूलत्वसम्बन्धेन व्यापारेऽन्वय इति। एतादृशश्चव्यापारः पुरुषनिष्ठः। प्रतीतेर्नियमेनप्रतीतेरित्यर्थः। लौकिकं वाक्यमुदाहृत्य वेदेऽपि तत्संघटनायाह—**एवमिति**। वैदिकेऽपि वाक्ये 'स्वर्गकामो यजेत' इत्यादावित्यर्थः।

तच्छ्रवणानन्तरं पुरुषनिष्ठस्य स्वर्गादिफलानुकूलव्यापारस्य भावनारूपस्य प्रतीतिर्जायते। विधिपदघटिते वाक्येऽऽख्यातत्वांशेनार्थीभावनाभिधीयते इत्यर्थः। ननु तव्यादीनाख्यातत्वाभावेनार्थीभावनायश्चाख्यातवाच्यत्वात् कथं तत्रार्थीभावनेति चेदत आह—**तव्यस्तेति**। 'कृत्याः' इति सूत्राधिकारे 'तव्यत्तव्यानीयरः' इति तव्यदादिविधायक सूत्रम्। अतोऽऽख्यातत्वाभावेन भावनावाचकत्वभाव इत्यर्थः। तत्रापि भावनावोधप्रकारमुपयादयति—**तदयुक्त इति**। तव्यदादिप्रत्ययान्तपदघटिते वाक्ये इत्यर्थः।

तैरपि वाक्यैः ऐहलौकिकानि वा पारलौकिकानि वा फलानि श्रूयन्ते। फलानि च भावनां विनानुपपन्नानि। तस्मादार्थीभावना फलवलादाक्षिप्यत इति भावः। **साक्षिप्यते।** अर्थापत्त्येति शेषः। **लक्ष्यते वेति।** अन्वयानुपपत्त्येति भावः। आर्थीभावनायाः प्रयत्नरूपत्वं दर्शयति—**सेति।** आख्यातवाच्यार्थीभावनेत्यर्थः। आर्थीभावना प्रयत्नरूपा भवति। कुतः। सर्वेषामाख्यातानां कृधातुना विवरणात्। 'डुकृञ् करणे' इति धातोश्च यत्नवाचित्वात्। उदाहरति—**पचतीति।** पाकं करोतीत्यर्थः। अत्र च पच्धात्वर्थः पाकः, करोतीति यत्नरूपोऽर्थोऽऽख्यातस्येत्यर्थः। एवमेवान्यत्रापि बोध्यम्। आख्यातस्य यत्नवाचिना करोतिना विवरणात् कथन्नाख्यातार्थो यत्न इत्यत आह—**अत इति।** यत्नवाचिना करोतिना विवरणादपि नाख्यातानां यत्नत्वेन यत्नवाचकत्वमपि तु फलानुकूलव्यापारत्वेनेत्यर्थः। अनुकूलत्वं जनकत्वम्। एवमवधार्यताम्—

आख्यातानाञ्च सर्वेषां यत्नवाचित्वं नेष्यते।
विवृतिश्च तथाप्येषां फलं दृष्ट्वा करोति हि॥
फलानुकूलव्यापारत्वेन हि यत्नं स्वीकुरु।

यत्नत्वेन हि यत्नस्य नैवाख्यातार्थता क्वचित्॥ ननु यत्नस्य चेतनवृत्तित्वेनाचेतने रथे यत्नत्वाभावात् 'रथो गच्छति' इति कथं प्रयोग इति चेदत आह—रथो गच्छतीति। यद्यप्यचेतनकर्तृकस्थलेऽऽख्यातार्थः यत्नो न संघटते तथापि गमनानुकूलव्यापारस्योपलक्षणमिति। पूर्वदेशविभागपूर्वकमुत्तरदेशेन सह संयोग एव गम्धात्वर्थ इति स्पष्टयति—**पूर्वदेश इति।** प्रकारान्तरं दर्शयति—**वोढ्रश्वादिगत इति।** अयं भावः—यद्यपि रथोऽचेतनस्तत्र यत्नाभावोऽप्यत एव तथापि तत्सम्बद्धस्याश्वस्य चेतनत्वात्तत्र च यत्नस्य सत्त्वात् तद्गतयत्न एवोपचर्यते रथादाविति 'रथो गच्छति' इत्यादिप्रयोगाणां नासङ्गतिः। लक्षणायाः जघन्यवृत्तित्वात्तत्कल्पनमेव दोष इत्यत आह—**न चेति।** न दोषावह इत्यर्थः। बहुचेतनकर्तृकाख्यातप्रयोगे लाघवम्, अल्पाचेतनकर्तृकाख्यातप्रयोगे च गौरवमिति दर्शयति—**बहुचेतनेत्यादिना।** अल्पाचेतनकर्तृकाख्यातप्रयोग पक्षे तत्तद्व्यापारस्य कल्पनेऽनेकव्यापारकल्पनं स्यादतः गौरवमापद्येत। यत्नस्याख्यातवाच्यत्वे चैकस्यैव यत्नस्य सर्वत्र स्वीकारे लाघवं स्यादितिभावः। लाघवे सम्भवति गौरवस्यान्याय्यत्वात्। राणकमतमुपसंहरति—**तस्मादिति।** लाघवात् यत्न एवार्थीभावना। स एव चाख्यातार्थ इति।

चेतनकर्तृकाख्यातप्रयोगे मुख्यत्वम्, अचेतनकर्तृकाख्यातप्रयोगे च गौणत्वमिति द्विधा बोधो न समुचितः, गौरवात्। अत उभयसाधारणबोधोपपत्तये फलानुकूलव्यापारमात्रमेव भावना स्वीकार्या, न केवलं यत्नमात्रमाख्यातार्थ इति मिश्रमतमुपस्थापयितुमाह—**मिश्रास्त्विति ।** उभयसाधारणबोधमुपपादयितुमाह—**पचतीति** । अर्थात् चेतनकर्तृकेऽऽख्यातप्रयोगे 'पचति' इत्यस्य 'पाके व्याप्रियते' इति बोधः सञ्जायते तथैव 'रथो गच्छती'त्यचेतनकर्तृकेऽऽख्यातप्रयोगेऽपि 'गमने व्याप्रियते' इत्येव बोधो जायते। अतः कुत्रचित् शक्त्या यत्नवाचिता कुत्रचिच्च लक्षणयेति राणकमते वैविध्यं न समीचीनम्। कृधातोः व्यापारसामान्यवाचित्वमुपपादयितुमाह—**करोतिरपीति ।** कृधातोः व्यापारसामान्यं प्रतीयते, न तु यत्नरूपव्यापारमात्रमिति तात्पर्यम्। उदाहरति—**बीजमिति** । बीजस्याचेतनत्वादपि कृधातोः प्रयोगो दृश्यते। यदि यत्नमात्रवाचिता स्वीक्रियेत चेत्तर्हि बीजस्याचेतनत्वात् यत्नवाचकस्य कृधातोः प्रयोगो न स्यादिति। न च लाक्षणिकोऽयं प्रयोग इत्यत आह—**न चेति** । मुख्ये सम्भवति गौणस्यान्याय्यत्वात्। उपसंहरति—**अत इति ।** करोतिना विवरणदर्शनाद् व्यापारसामान्यवाचित्वमेव युक्तम्, न यत्नमात्रवाचित्वमिति भावः। लाघवहेतुनापि यत्नमात्रवाचित्वं संसाधयितुं न क्षमत इत्यत आह—**यत्त्विति** । तदपि नेति। कुतः। यथा व्यापारपक्षेऽनेकव्यापारनिष्ठवाच्यतावच्छेदकताश्रयता तथैव यत्नपक्षेऽप्यनेकयत्नव्यक्तिनिष्ठवाच्यता स्वीकर्तव्या स्यात्। तथा व्यापारवाच्यतापक्षे फलानुकूलव्यापारत्वं वाच्यतावच्छेदकं भवति तथैव यत्नपक्षेऽपि तस्यैव वाच्यतावच्छेदकत्वाङ्गीकारऽऽवश्यकः। यद्युच्येत यत्नत्वमेव वाच्यतावच्छेदकोऽस्तु, का हानिरित्यत आह—**यत्नत्वस्येति । तार्किकमतप्रवेशादिति ।** नैयायिकानां मते यत्नत्वमेवाख्यातवाच्यतावच्छेदकम्। अतः परमतप्रवेशापत्तिरूपो दोषः। कृतित्वं यत्नत्वञ्चानर्थान्तरम्। अपि च यतिधातुसमानार्थत्वेऽन्येषामपि अकर्मकतापत्तिः प्रसज्येत। न चैवं किं स्वीकार्यमित्यत आह—अत इति। उभयोस्तुल्यत्वे समानत्वे सति चेतनाचेतनोभयसाधारणानां सर्वेषां प्रयोगाणां मुख्यत्वेनैकरूप्यसम्पादनाय फलानुकूलव्यापारसामान्यं भावना, सैव चाख्यातार्थ इति। **संक्षेप इति ।** संक्षेपेणैवात्र प्रतिपादितम्, विस्तरस्तु न्यायसुधाप्रभृतिभिर्ज्ञातव्य इति।

वैयाकरणानां मते कर्तृकर्मसंख्याकाला आख्यातार्थः। व्यापारस्तु धात्वर्थः। धात्वर्थमुख्यविशेष्यक एव शाब्दबोधस्वीकाराद् व्यापारस्यैव

मुख्यविशेष्यता। अतएव यापारमुख्यविशेष्यकशाब्दबोधः वैयाकरणनिकाये सुप्रसिद्धः। यद्यपि 'भावो भावना सैवोत्पादना सेव च क्रिया' इति कारिकया सर्वेषामैकार्थ्यं प्रसाधितं कौण्डभट्टेन तथापि वाच-वाचकयोर्भेदात्परस्परं कलहः। मीमांसकानाम्मतेऽऽख्यातार्थभावनामुख्यविशेष्यकः शाब्दबोधः कर्त्ता चाक्षेपलभ्यः। आख्यातार्थः कर्त्तेति वैयाकरणमतखण्डनायोपक्रमते—**इयञ्चेति**। अयं भावः—मीमांसकमतेऽऽख्यातार्थः भावनेति सुप्रथितम्। भावनाक्रियाद्यनर्थान्तरम् प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यमिति न्यायेनाख्यातरूपप्रत्यार्थभावनामुख्यविशेष्यकः शाब्दबोध एतेषाम्। तत एव ज्ञेयः। जातेश्च व्यक्तिं विना न व्यवहारसम्भव इति कृत्वा लक्षणया व्यक्तेर्बोधः स्वीक्रियते। तथैवाख्यातस्थले कृत्यपरपर्यायां भावनाया-माख्यातस्य शक्तिः, तदाश्रयस्य कर्त्तुश्च बोध लक्षणयेति भावः। **राणक इति**। मतमिदं रणकस्येति। मिश्रमतमुपस्थापयति--**धातूनामेवेति**। क्रियायामेव धातूनां शक्तिरिति। अतः क्रियावाचकत्वमेव धातूनामिति। क्रियावाचिनो भ्वादयो धातुसंज्ञा स्युरिति वृत्तिकं 'भूवादयो धातवः' सूत्रमपीममर्थं प्रतिपादयति। क्रिया च कर्त्तारं विनानुपपन्ना। अतः क्रियया कर्त्ता आक्षिप्यते। **तल्लक्षकमिति**। धातूनामेव कर्त्तृलक्षकत्वमिति मिश्रमतम्। भावना च प्रधानभुता भवति वाक्ये। धात्वर्थयागादीन् प्रति कर्त्तुरप्राधान्यम्, आक्षेपलभ्यत्वात्। तद्गता या आख्यातप्रतिपाद्यभा-नैकत्वादिसंख्या तत्रैवान्वेति। कर्त्ता प्रकारत्वेन भासते, संख्या च विशेष्यत्वेन। अतः कर्त्तृप्रकारकः संख्याविशेष्यकः बोध इति मिश्रमतं पुनरुपस्थापयति—**पक्षद्वयेऽपीति**। उभयस्मिन् पक्षे इत्यर्थः। अत्र शाब्द-बोधविषये राणकमतं दर्शयितुमाह--**राणके त्विति**। यथा धात्वर्थस्य भावनाया वा शक्त्या वृत्त्या उपस्थितिस्तथैव संख्याया अपि शक्त्यैव वृत्त्यो-पस्थितिरिति। अत एककालावच्छेदेनैषां शक्त्यैव वृत्त्योपस्थित्या कर्त्तुः लाक्षणिक एव बोध इति। अत्राप्येकत्वादिसंख्याविशिष्टकर्त्तृविषयक एव बोध इति। **एवञ्चेति**। 'स्वर्गकामो यजेत। इत्यत्रैकत्वसंख्या श्रूयते। अत एकत्वादिसंख्याविशिष्ट एव कर्त्तात्राधिक्रियते। न द्वित्वादिसंख्यायुक्त इति। तेषामनधिकारित्वात्। यदि कर्तृबोधः पूर्वम्, ततः पश्चाच्च संख्याया अन्वयस्तर्हि शुद्धस्यैव कर्त्तुरधिकारित्वम्। संख्या चात्राङ्गभूता। तस्या परित्यागे संख्यानियामकाभावात् कस्यचित् बहूनामपि कर्त्तॄणामधिकारः क्रियाद्यपरपर्यायां भावाना कर्त्तारं विनानुपपन्ना। 'येन विना यदनुपपन्नं तत्तेनाक्षिप्यते' इति न्यायेन कर्त्तारं विना भावनाया अनुत्पन्नत्वाद्भावनया कर्त्तुराक्षेपः। आख्यतानां कर्त्तरि शक्तिरिति मतं हेयम्। **कृतिमान् हीति**।

कृत्याश्रयो कर्त्ता भवति। करोतीति विग्रहे कृधातोः कर्त्तरि तृचि कृते कर्त्तेति रूपम्। यो यत्किञ्चिद्व्यापारं करोति स एव कर्त्तृपदवाच्यो भवतीति। भावनाया आख्यातवाच्यत्वे लाघवं दर्शयति—**एवञ्चेति।** कर्त्तृणामनेकत्वात्तस्य वाच्यत्वे गौरवं प्रसज्येत। भावनायाश्चैकत्वात्तस्य चाख्यातवाच्यत्वे लाघवम्। अतो लाघवाद् भावनाया एवाख्यातवाच्यतेति। कर्त्ता चाक्षेपलभ्य इति पूर्वमुक्तम्। स एव शब्दस्यार्थो भवति यः प्रकारान्तरेण न लभ्यते। कर्त्ता च प्रकारान्तरेणाक्षेपेण लभ्यते। अतः कर्त्ता शब्दार्थः भवितुं नार्हति। अतएवावतारितम्—'अनन्यलभ्यः शब्दार्थ' इति। भावना च नान्येनोपायेन लभ्या भवति। अतस्तस्या एव प्रत्ययार्थत्वमिति। कर्त्ता चैकवचनत्वादिना कथं भिद्यत इत्यत आह—**आक्षिप्तस्य चेति।** कर्त्ता चैकवचनादिना भिद्यते। यदा स्वपरिच्छेदकाकांक्षा जायते तदा आख्यातवाच्या संख्या एकवचनत्वादिद्वारा कर्त्तृपरिच्छेदिका भवतीति। 'शाब्दः शाब्देनान्वेति' इति न्यायेनाक्षेपलभ्यत्वात्कर्त्तुरशाब्दत्वेन तेन सहाख्यातवाच्यसंख्यायाः कथमन्वय इति स्पष्टयितुं प्रश्नः—**न चेति।** समादधाति—**तस्येति।** कर्त्तुरित्यर्थः। वृत्त्योपस्थितस्यैव पदार्थस्य शाब्दबोधे भानमिति सिद्धान्ताल्लक्षणयोपस्थितस्य पदार्थस्य कर्त्तुः भाने न काचिदनुपपत्तिः। लक्षणाया अपि वृत्तित्वाङ्गीकारात्। तत्रैव दृष्टान्तमुपस्थापयति—**यथैवेति।** आकृत्यधिकरणे गवादिशब्दानां व्यक्तौ शक्तिः जातौ वेति संशयं कृत्वा व्यक्तावेव शक्तिरिति पूर्वपक्षयित्वा च व्यक्तावानन्त्याद्यनेकदोषसद्भावाज्जातावेव शक्तिरिति सिद्धान्तितम्। विशेषस्तु सम्पद्येत। तच्च न समीचीनमित्यत आह—**अनिष्टमिति।** कर्त्तृव्यवस्था भङ्गापत्तेः **दाक्षयते इति।** अधिकारिनिरूपणावसरे इति शेषः। उपसंहरति—**तस्मादिति। वार्त्तिके इति।** वार्त्तिकन्तावद्‌भयमतसमर्थकं दृश्यते। **तस्मादिति।** कर्त्तृनिष्ठैकत्वादिसंख्या एकवचनप्रयुक्ताख्यातैरुच्यते इति। अतएवैकत्वादिसंख्याविशिष्टः समाद्यभिन्नकर्त्तृवृत्तीत्यादिबोधः।

संख्याया अन्वयप्रकारं दर्शयति—**इत्थमिति।** संख्यायाः कर्त्तरि कर्त्तुश्च भावनायामन्वयः। ततश्च भावना स्वर्गादिफलविशेषमपेक्षते इति भावः। कुतः। स्वर्गादिफलानुकूलव्यापाररूपत्वात् भावनाया इति। फलञ्च किमित्यत आह—**तच्चेति।** फलद्वयं दर्शयति—इष्टं स्वर्गादिकं प्रथमम्। इष्टसाधनं यागादिकं द्वितीयम् तच्च फलं ज्ञातं सत् भावनया सह सम्बद्ध्यते। भावना हि द्विविधा—शाब्दीभावना आर्थीभावना चेति। शाब्दीभावता विध्यंशवाच्या। आर्थीभावना चाख्यातांशवाच्या। शाब्दी-

भावनापरपर्याया प्रवर्त्तना। भावनयोरुभयोरेकमेव पदं 'यजेत' इत्यादिकं वाचकं भवति शाब्दीभावनायाश्चान्वय आर्थीभावनायां भवतीति भवतीति मनसि निधायाह—**भावना इति**। प्रवर्त्तनाया अन्वयप्रकारं दर्शयति—**प्रवर्त्तनान्वयश्चेति**। **तज्जन्येति**। प्रवर्त्तनाजन्येत्यर्थः। अर्थात् प्रवर्त्तना-जन्या या पुरुषप्रवृत्तिस्तद्विषयत्वेनान्वय इत्यर्थः **वक्ष्यत इति**। **अग्ने शेषः**। ऐहलौकिकं पारलौकिकं वा फलं दृष्ट्वा प्रवर्त्तते पुरुषः। अतएव यदा पुरुषस्येष्टफलिका भवति तदैव पुरुषप्रवृत्तिविषयापि भविष्यति, नान्यथा, इत्यर्थं ज्ञापयितुमाह—**इयञ्चेति**। पुरुषस्य चेष्टाद्वयं दृश्यते—फलं फलसाधनं वेत्यत आह—**पुरुषस्य चेति**। **ज्ञातमिति**। ज्ञातमेव फलं तत्साधनं वा प्रवर्त्तकं भवति, नाज्ञातमिति। **तदेवेति** स्वर्गादिकं फलं तत्साधनं यागा-दिकं वेति। भावनायाः भाव्यं साध्यत्त्वेनेत्यर्थः। **अध्येतुः** स्पष्टप्रतिपत्त्यर्थं पूर्वं लौकिकं वाक्यमुदाहरति—**तत्र लोकेइति**। 'पचेत्' इत्यादौ धात्वर्थः पाक एव यदीष्टसाधनत्वेन ज्ञातस्तदा स पाक एव 'पचेत्' इत्येकपदोपात्त-त्वात् भावनायाः साध्यो भवति। बोधश्चपाकं कुर्यादिति **यदि त्विति**। अयं भावः—यदि पाको न भाव्यत्वेन ज्ञातः, न वा स इष्टस्तदा तत्रान्यदेवौदनादिकं साध्यत्वेनात्वेति। पाकेनौदनं कुर्यादिति च बोधः। पूर्वन्तावल्लौकिवाक्यद्वारान्वयज्ञानं कारयित्वा सम्प्रति वैदिकवाक्यमुदा-हृत्यान्वयप्रकारं दर्शयितुमाह—**एवञ्चेति**। 'स्वर्गकामो वजेति' इत्यादि वाक्यघटक 'यजेत' इत्येकेनैव पदेत यागभावनयोर्ज्ञानं जायते। तत्र भावनायाः किं भावयेदिति साध्याकांक्षायां समानपदोयात्तत्वेन याग एव भावनाभाव्य इति ज्ञायते, यथा—यागं कुर्यादिति। यागश्च द्रव्यव्ययसाध्यः श्रमसाध्यश्च। **स्वयमनिष्टत्वादिति**। न कश्चिद् पुरुषः स्वार्जितं द्रव्यं व्येतुमिच्छति, न वा श्रमं चिकीर्षति। अतएवानिष्टत्वं तत्र। कुतः। यागसम्पादने उभयोः सम्भवात्। धात्वर्थः भावनायां करणत्वेनान्वेतीति सिद्धान्तः। तेन च याज्ञस्येष्टसाधनत्वमेव सिद्ध्यति, **नेष्टत्वमिति**। तस्मान्न भाव्यत्वं याज्ञस्य सेत्स्यतीत्यति आह—**तथापीति**। अन्यत्किमपि फलं भवितुमर्हतीति भावः। अन्यत्किं तदित्यत आह—**तच्चेति**। फलञ्चे-त्यर्थः। स्वर्गकामपदप्रतिपादितः स्वर्ग एवेति। तस्यैव च भाव्यत्वेनान्वयत्। स्वर्गं कुर्यादिति बोधः। स्वर्गस्यैव भाव्यत्वमिति साधयितुमाह—**यद्यपीति**। अर्थात् यत्नात्मिकायाः भावनायाः भाव्यः याग एव प्रतीयते, तस्यैव यत्नसाध्यत्वात्, न तु स्वर्गनिष्ठभाव्यता प्रतीयते। साधितेऽनुष्ठिते च यागे स्वर्गो भवतीति। समाधत्ते—**तथापीति**। प्रतीयमानोऽपि यागः न यत्नं प्रत्युद्देश्यतावच्छेदकताश्रयः। कुतः। **अपुरुषार्थत्वादिति**। पुरुषाभिलाष-

विषयो याग इति। कष्टं कर्मेति न्यायात्। न कस्यचित् कष्टेऽभिलाषो दृश्यते। सिद्धान्तमिति—**तेनेति**। यद्यपि यागजनकयत्नात्मिकायाः भावनाया अप्युद्देश्यता वर्त्तते तथाप्युद्देश्यतायाः या विषयता सा स्वर्गनिष्ठैव। अतो भाव्यत्वं स्वर्गस्यैव। लौकिकं दृष्टान्तमुपस्थापयति—**यथेति**। 'वेतनकामः पचेत्' इत्यादौ यद्यपि पाकानुकूला यत्नात्मिका भावना वर्त्तते तथाप्युद्देश्यता वेतननिष्ठैव तिष्ठति तथैव 'स्वर्गकामो यजेत' इत्यादौ यागानुकूला यत्नात्मिका भावना विद्यते तथाप्युद्देश्यता स्वर्गनिष्ठैवेति। अत आह—**तद्वदिति**। स्वर्गः काम्यते येनेति व्युत्पत्त्या स्वर्गकामपदस्य पुरुषवाचत्वात् तेन कर्तुरेव बोध', न भाव्यस्य स्वर्गस्येति हृदिनिधायाह—**न चेति**। उत्तरयति—**भावनाक्षेपादेवेति**। कर्त्तुश्चाक्षेपलभ्त्वात् पुनस्तत्र-वाचकताकल्पनमनुचित्तम्। 'अन्यलभ्यो हि शब्दार्थ' इति न्यायात्। पुनः शङ्कते—**न चेति**। 'स्वर्गकामनावान् कर्त्ता' इति वाक्यव्यवारे कर्त्तुर्वि-शेषणम्, 'स्वर्गकामनावान्' इति प्रतीयते। तमेव स्पष्टयति—**यागकर्त्तेति**। उदाहरति—**यथेति** सामगानप्रसङ्गे बृहति साम्नि प्रस्तुयमाने। 'समुद्रं मनसा ध्यायेत्' इत्युक्तम्। अर्थात् सामारभ्य कर्त्ता समुद्रस्य मनसाध्यानं कर्त्तव्यम्' इति। **तद्वदिति**। अनयैव रीत्या पूर्वत्रापि बोधः कर्त्तव्य इति। मतमिदं खण्डयति—**तथा सतीत्यदिना**। कामनाविशेषणविशेषितकर्त्तुर्बोधे भावनाद्वयं स्वीकर्त्तव्यं स्यात्। कामनातः प्रथममदृष्टम्। भावनातश्च द्वितीयमदृष्टमिति। तस्माद् गौरवं प्रसज्येत। तस्मात् काम्पमानत्वेनोप-स्थितस्य स्वर्गस्यैव भाव्यमुचितम्। पक्षेऽभिन्ननेकस्यैव धर्मस्य कल्पनेति लाघवम्। तदेव स्फोरयति—**धर्मिद्वयकल्पनातो** हीति। धर्मिद्वयकल्पना-पेक्षया एकधर्मकल्पनायां लांघवमित्यर्थः। योग्यत्वात्सन्निहित्वाच्च स्वर्ग एव भावनयापेक्ष्यत इति दृढयति—**किञ्चेति**। यथा कर्त्तुराक्षेपलभ्यत्वात् तद्वाच्यत्वं न भवति तथैव स्वरसादेव स्वर्गस्य पुरुषकाम्यता सिद्ध्यति। तां कामनामनूद्य स्वर्गनिष्ठभाव्यता स्वीक्रियत इति भावः।

'परस्त्रीकामः प्रायश्चित्तं कुर्यात्' इति हि वाक्यम् अनेन च परस्त्री-कामनावन्तं पुरुषमुद्दिश्य प्रायश्चित्तं विधीयते। तथैव 'स्वर्गकामो यजेत' इत्यनेनापि स्वर्गकामनावन्तं पुरुषमुद्दिश्य स्वर्गसाधनीभूतो यागो विधीयते। अर्थात् यः स्वर्गकामः पुरुषः च यजेत, यागं कुर्यादित्यर्थ इति केचित्। तन्न। पूर्वोक्तेन सिद्धान्तेन खण्डितत्वादिति दर्शयति- **एतेनेत्यादिना**। हेतुमुपन्यस्यति—**यदीत्यादिना**। न यदिशब्दाविदनिष्ठोपबन्धः कश्चित्प्रतीयते। न कामनानिष्ठनिमित्तत्वं प्रतीयते। अतः यथा

परस्त्रीकामनावन्निमित्तत्वकल्पना न युक्तेति भावः। 'स्वर्गकामो यजेत' इत्लेनेन विहितस्य यागादेः प्रायश्चित्तसंज्ञापि नास्ति। अतो निमित्तभूतायाः स्वर्गकामनायाः निषेधोऽपि कल्पयितुं न शक्यते अतएव च कामनायाः निमित्तत्वाभाव इति दर्शयितुमाह—**नापीति**। शङ्कते—**न चेति**। स्वर्गस्य कामनोपसर्गनत्वेनोपस्थितत्वाद् भावनाभाव्यत्वेनान्वयाभावः। साध्यस्य प्रधानत्वादिति। समाधत्ते—**यत इति**। वद्विषयककामनाभावस्तद्विषयकं भाव्यत्वमपि न स्यात्। इच्छाविषयीभूतमेव साध्यं भाव्यत्वेनान्वयस्य न प्रतिवन्धका, अपि तु साधिकैवेति। न च 'अन्योपसर्जनमन्येन नान्वेती' ति न्यायसद्भावात्कथमन्वय इति वाच्यम्। 'कामनोपसर्जनफलातिरिक्तत्वे सति' इति तत्र विशेषणात्। अस्य च काममोपसर्जनत्वेनोपस्थितत्वान्नास्ति कश्चिद् दोषः। तदतिरिक्तविषये एव न्यायस्य प्रवृत्तिरिति। अथवा सम्पूर्णस्य वाक्यस्य निष्कर्षभूतः फलरूपः स्वर्गः। तस्यैव च साध्यत्वेनान्वयः समुचित इति भावः।

स्वर्गशब्दस्य द्रव्यवाचित्वमुपपाद्य खण्डयितुमुप क्रमते—**नन्विति**। 'चन्दनं स्वर्गः' इति लौकिकानुभवमुदाहरति। तेन प्रतिसाधनद्रव्यवाचित्वं प्रतीयते। यागानुष्ठानसम्पादनाय द्रव्यमपेक्षते। तत्साधनत्वेन अर्थात् याग-साधनत्वेन स्वर्गनामकं द्रव्यं विधीयते। साधनार्जनायापि कामना आवश्यकी। अतः कामनाया अनुवादोप्युपपद्यते। अतएवाह—**साधनमयीति**। यः पुरुषः स्वर्गं साधनत्वेन कामयते, स एव यजेत। वोधश्यैवम्—'स्वर्गेण यागं कुर्यादिति **एवञ्चेति**। अनेन प्रकारेण 'यजेत' इत्येकपदोपात्तत्वात् यागस्यैव भावनाभाव्यत्वं प्रतीयते। न चैवं 'यजेत पशुकामः' इत्वादावपि याग एव पशुभावनाभाव्यम, स्त्विति चेत्। उच्यते। पशूनां द्रव्यवाचित्वे नास्ति कश्चित्सन्देहः अतो फलपरत्वं फलवाचकत्वं भवतीति भावः। खण्डमति—**स्वर्गशब्दस्येति**। स्वर्गशब्दस्य द्रव्यवाचित्वेन न कुत्रापि प्रसिद्धिः, अपितु अतिशयप्रीतियुक्ते द्रव्ये स्वर्गशब्दस्य प्रयोगो दृश्यते। तथा प्रतिविरहविशिष्टे द्रव्ये स्वर्गशब्दस्य प्रयोगाभावाद्व्यभिचाराभावाच्च प्रीतिरेव स्वर्गशब्दवाच्यतावच्छेककताश्रय इति। **न द्रव्यमिति**। द्रव्य-वाचकत्वं स्वर्गशब्दस्य प्रमाणविरहान्न युक्तम् 'नगृहीतविशेषण' इति न्यायोऽप्यनुगृहीतो भवति पक्षेऽस्मिन्। तत्स्वरूपं दर्शयति—**यन्नदुःखनेति**। 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति विधेशेषोऽयम्। दुःखसम्मिश्रण-रहितत्वे सति सर्वेषामभीप्सिता या विनाशसून्यपारलोकिकी प्रीतिः सैव

स्वर्गपदवाच्या भवति । स्वर्गस्य पूर्वोक्तं साधनत्वं खण्डयितुमाह—**सा चेति** स्वर्गस्य साधनत्वं न युक्तमपि तु भाव्यत्वापरपर्यायं साध्यत्वयेवास्याः **प्रीतेरिति** । सैव च स्वर्ग इति कामनायाः फलं प्रति मुख्यत्वेऽपि साधनत्वं प्रत्यपि गौणत्वं युक्तमित्यत आह—**कामना चेति** पश्वादीनां भाव्यत्वं ससाधनायोपक्रयते—**पश्वादिशब्दानामिति** । पश्वादीनामपि फलानां प्रीत्यतिशययुक्तद्रव्यवाचकत्वाद् भावनाभाव्यत्वेनापेक्षितत्वात् द्रव्यस्य शास्त्रान्तरप्राप्तत्वच्च भाव्यत्वमेव तेषामिति भावः। उपसंहरति—**तस्मादिति** यत्र कुत्रापि विधिवाक्ये स्वर्गकामादिपदं श्रूयते तत्र सर्वत्र स्वर्गस्यैव भावनाभाव्यत्वं मन्तव्यमिति ।

ननु 'विश्वजिता यजेत' इत्यादौ यत्र फलपदं श्रूयते तत्र कथं फलस्य भाव्यत्वमित्यत आह—**यत्रेति** यत्र फलपदं न श्रूयते तत्र 'स स्वर्गः स्यात्सर्वान् प्रत्यविशिष्टत्वात् इति सूत्रप्रतिपादितविश्वजिन्न्यायेन स्वर्गरूपं फलमध्याह्रियते । तस्यैव च फलस्य भाव्यत्वं स्वीक्रियते' फलाश्रवणात् यागस्यैव भाव्यत्वमिति मतं न युक्तम् । फलायैव प्रवर्त्तते पुरुषः, न यागाय, कष्टं कर्मेति न्यायात् । इदमेव मतं 'तत्र किं पदमाध्याहर्त्तव्यम्' इत्यादिना उपपादितम् । पापक्षयस्यापि सर्वाभिलषितत्वेन तस्यैव भाव्यत्वं किं स्यादित्यत आह—**पापक्षयस्त्विति** तस्य सर्वाभिलषितत्वेऽपि क्षयस्यभावरूपत्वात् अभावस्य च प्रतियोगिज्ञानपापेक्षत्वात् विलम्बेनोपस्थितिः । स्वर्गस्य चान्यानपेक्षत्वाच्छीघ्रोपस्थितः । अतः शीघ्रोपस्थितिकत्वात् स्वर्गस्यैव भाव्यत्वमिति सिद्धम् । अध्याहारस्तु तदर्थकस्वर्गकामपदस्यैव । स्वर्गकामपदेन स्वर्गस्य ज्ञानं सम्पाद्यते । ततश्चान्वेतीति । **न चैवमिति** । उपस्थितस्य स्वर्गस्यैवान्वयोऽस्तु, तत्स्वर्गवाचकस्वर्गकामपदाध्याहारोऽनावश्यक इति भावः । समादधाति—**शाब्दी हीति** । शब्दजन्यकांक्षा शब्दजन्येनैवार्थेन शाम्पतीति कृत्वा तदर्थकशब्दाध्याहारोऽऽवश्यक इति । दाढर्याय पुनः शङ्कते—**नान्विति** । स्वर्गपदस्य कल्पनमुचितम् स्वर्गकामपदकल्पनं नोचितमिति भावः । कामपदयुक्तेनैव पदेन भावनाभाव्यं प्रतिपाद्यमिति न नियमः इत्यत आव—**न चेति** । चतुर्थ्यापि तत्प्रतिपादनं भवतीति लौकिकं वैदिकञ्चोदाहरणमुपस्थाययति—'वेतनाय तचतीति । समाधत्ते—'चतुर्थी सम्प्रदाने' इत्यनेन विहिता चतुर्थी मुख्या भवति । 'तादर्थ्य चतुर्थी वाच्या' इति वार्त्तिकेन विहिता चतुर्थी न मुख्या, अपि तु लाक्षणिकी गौणी इत्यर्थः । कारकविभक्तेर्बलवत्त्वप्रतिपादनाय तदर्थां परिभाषामुपस्थापयति—**अतएवोपदविभक्तोरिति** उपपदविभक्तेरपेक्षया

कारकविभक्तेर्बलवत्त्वमिति भावः। नम इत्यादिपदमाश्रित्योपपन्ना विभक्तिरूपपदविभक्तिः। क्रियामाश्रित्योत्पन्ना विभक्तिः कारकविभक्तिः। करोतीति कारक इति व्युत्पत्तिः। **प्रकृते चेति**। अत्र प्रकृतस्थले सम्प्रदानत्वाभावात् तादर्थ्यचतुर्थ्येव कल्पनीया। एतदर्थसमर्थनाय न्यायमप्यवतारयति—**स्वायत्ते इति**। अनेन न्यायेनापि लाक्षणिक्युपपदविभक्तिर्न कल्प्या। लक्षणयापेक्षयानुवादस्य श्रेष्ठत्वं प्रतिपादनायाह- **स्वर्गकामपदे इति**। **अतएवेति**। अनुवादस्य ज्यायस्त्वादेव। स्वर्गकामपदेऽनुवाद एव स्वीक्रियते, न सम्पूर्णे पदे स्वर्गलक्षणेति उपसंहरति—**तस्मादिति**। स्वर्गकामपदस्यैव कल्पना कर्त्तव्येत्यर्थः वेदेऽपि स्वर्गपदं फलवाचकत्वेन न दृश्यतेऽपि तु स्वर्गकामपदमेवेत्य आह—**किञ्चेति**। अतोऽपि स्वर्गकामपदकल्पनमेवोचितमिति भावः। **एवञ्चेति** अयं भावः—पुरुषकल्पितानां वाक्यानामप्रामाण्यं भवति। तस्य च खण्डनमपि जातम्। तदनन्तरं वैदिकवाक्यान्यथानुपपत्त्या वाक्यकल्पनरूपो मुख्यो हेतुः कामनानुवादस्वर्गयोः समानमेव। अत उभयोः समवलत्वं वोध्यम्। **तथापीति**। अर्थात् उभयो समानेऽपि वेददृष्टत्वरूपो हेतुः। स्वर्गकामपदे एव तिष्ठति। भाष्यकारवचनमुदाहृत्य परिपुष्णाति मतमिदम्। **उक्तश्चायमिति**। प्रदेशान्तरे भिन्नप्रदेशेऽपि स्थितमानीयते इति। परन्तु भाष्येणानेनानुषङ्गप्रतिपादनं न कृतम्। कुतः। **असम्बद्ध इति**। परस्परमसम्वद्धैः पदैर्व्यवधाने सति नानुषङ्गप्राप्तिरिति। अर्थात् सम्वद्धेनैव पदेनासुषङ्गो भवतीति। उपसंहरति—**तस्मादिति**। 'विश्वजिता यजेत इत्यादावश्रुतमपि स्वर्गकामपदमध्याहृत्य स्वर्गादिरूपफलप्रतिपादिकायाः भावनाया भाव्यत्वेनान्वय इति। **सिद्धिमिति**। मतमिदं सुस्थमित्यर्थः। **क्वाचित्स्वार्थवादिकमिति**। अयमभिप्रायः न्यत्रात्यत्र फलाभावस्तत्र स्वर्गरूपस्य फलस्य कल्पना प्रतिपादिता। परन्तु यत्रार्थवादिकं फलं श्रूयते, तत्र विधेरपि तदेव फलं बोध्यम्। भावनाभाव्यमपि तदेवार्थवादिकं फलमिति। उदहरति—**यथेति** रात्रिशत्रे विधिवाक्ये न किमपि फलं श्रुतम्। परन्त्वर्थवादवाक्ये 'प्रतितिष्ठन्ति ह वा य एता रात्रिरूपयन्ति' इत्यत्र प्रतिष्ठारूपं फलं श्रूयते। तदेव च फलं रात्रिसत्रयागस्येति। प्रतिष्ठारूपं फलमेव भावनाभाव्यत्वेतीति **यद्यपीति** प्रतितिष्ठन्ति ह वा' इत्यर्थवादवाक्यस्य विधिवाक्यस्तावकत्वात् स्वार्थप्रतिपादने प्रामाण्यं न भवेत्। तथापि अर्थान् स्तुतिप्रतिदपादनायोपस्थितमपीदं वाक्यं योग्यत्वात् सन्निहितत्वाच्च प्रतिष्ठारूपं फलं भावनयापेक्षितं स्यात्। प्रतिष्ठावाचकश्च प्रतिष्ठाकामपदमध्याहृत्य भावनाभाव्यत्वेनान्वयं प्राप्नुपादिति। तत्रैव हेतुं दर्शयति—**अनुपस्थित इति**। स्वर्गश्चानुपस्थितः, प्रतिष्ठारूपं फलमर्थवाद-

वाक्येनोपस्थितम्। अनुपस्थितफलकल्पनापेक्षयोपस्थितफलकल्पने लाघवादेवेदं फलकल्पनं श्रेयस्करमिति।

प्रकारान्तरं दर्शयति—**यद्वेति**। वाक्यं विपरिणमय्येदमेव वाक्यं फलसम्बद्धबोधकमपि भवेदित्यर्थः। परिणामश्च कीदृश इत्यत आह—प्रतितिष्ठन्तीति। पदस्यास्य सन्तन्तत्वेन विपरिणामः। तर्हि 'प्रतिष्ठासन्ति' इति रूपम्। 'उपयन्तीत्यस्य विधित्वेन विपरिणामः। उभयोश्च पदयोर्व्यत्यासोऽपि। वाक्यं तर्हि कीदृशमित्यत आह—**ये इति**। अर्थात् ये प्रतिष्ठासन्ति त एता रात्रिरूपयेयुरिति। इति **मिश्रा इति**। मतमिदं मिश्रस्येति।

न्यायसुधाकारमतमुपस्थापयसि—**शणक इति**। एतन्मते लृडन्तत्वेन विपरिणमय्य प्रतिष्ठास्यन्तीति रूपम्। तदेव प्रमाणयति—**एवं सुवर्णमित्यादिना**। अत्र हिरण्यधारणानुकूलायाः भावनायाः भ्रातृव्ये दुर्वर्णतारूपं फलं भविष्यतीति लृडन्तत्वेनैव विपरिणामः क्रियते। तथैव पूर्वत्रापीति भावः। **क्वचिदिति** 'स्वाहाकारं यजतीति वाक्यं प्रयाजं विधत्ते। तदन्तरं 'स्वाहाग्निं स्वाहा सोमम्' इति मन्त्रेणाग्निसोमौ देवते प्रतिपादिते भवतः। यतयोश्च यागाङ्गत्वानुपपत्त्या देवतात्वं स्वीक्रियते। एतद्देवतोद्देशेन चानुष्ठीयमानो यागस्ताः देवताः बोधयति। देवताबोधनमप्यावश्यकं मन्त्राणाम्। कुतः यथा यागाङ्गपदार्थविस्मृतिर्न भवेदित्यर्थः। सैव च देवता यागभावदाभाव्या भवति। वाक्यार्थबोधश्च दर्शयति—**स्वाहाकार इत्यादिना**। अत्रायं विशेषः—देवतोद्देश्यकद्रव्यत्यागो हि यागः। तत्र च देवतोद्देशेन दृष्टं भाव्यं कल्प्यते, द्रव्यत्यागांशेन चादृष्टं फलमिति। **तदेतदग्रे इति**। यागस्वरूपनिर्वचनावसरे इत्यर्थः। **एवमिति**। यथाप्रयागप्रसङ्गे देवतायाः भाव्यत्वं समर्थितम्, तथैवान्यात्रापि दृश्यते इति। उदाहरति—**सूक्तवाकेनेति**। प्रस्तरो नाम दर्भमुष्टिविशेषः। प्रस्तरप्रहरणकत्वेन द्यावापृथिवीत्यादिस्तथा 'नमो देवेभ्यः' इत्यन्तः मन्त्रो विहितः। प्रहरणरूपक्रियाबोधनेन अथवा तत्क्रियासम्बन्धिकिञ्चिद्बोधनेन क्रियाङ्गत्वं मन्त्रस्य भवति सूक्तवाकेनेत्ययं मन्त्रः यद्यपि न प्रहरणरूपां क्रियां बोधयति तथापि यागाङ्गभूता मग्न्यादिदेवतां प्रस्तररूपं द्रव्यमायुरादीनि च तत्फलानि बोधयति। नैतानि क्रियारूपाणि सन्ति तथापि क्रियासम्बन्धीनि तु सन्त्येव। अतएवैतेषां पदार्थानां बोधकत्वान्मन्त्राङ्गत्वमप्युपपद्यते। तेन च प्रहरणक्रियाया च सम्बन्धोऽपि कल्प्यते। **एषामिति**। त्यज्यमानद्रव्योद्देश्यकत्वाद्देवतात्वस्य प्रसिद्धत्वात्

यागसम्बन्धं विना देवतात्वमग्यग्न्यादीनां न भवेतिति । वाक्यार्थबोधं दर्शयति—**अत इति ।** याग एव विधीयतेऽनेन मन्त्रेणेति । सैव क्रिया प्रक्षेपाधिक्यवशात् होमशब्देन व्यपदिश्यते । होमभावनायाः भाव्याकांक्षाया कस्यान्वय इति दर्शयति—**तस्या भाव्याकांक्षायामिति ।** भाव्यत्रयेषु प्रथमं भाव्यद्वयं मन्त्रबलात् तृतीयञ्च भाव्यं सामर्थ्याद् भवतीति बोध्यम् । **एवमिति ।** एतेनैव प्रकारेण सर्वासामङ्गभावनानां दृष्टफलकत्वाददृष्टफलकत्वाद्वा क्रतूपकाररूपं भाव्यत्वं भवत्येवेति । प्रपञ्चयिष्यत इति । विस्तारेणोपपादयिष्यत इत्तर्थः । अत्र यागस्य भाव्यत्वं निवारयति—**न त्वस्यदिना ।** यागस्य भाव्यत्वमत्र न भवति, अपि तु दृष्टादृष्टोपकारकस्यैवेति । **एवमिति ।** नित्यनैमित्तिकस्थले च पापक्षयरूपमेव भाव्यं कल्प्यते तस्य वाक्यस्य । अन्यथा निमित्तश्रुतिर्नोपपद्येत । उदहरति—**यथेति ।** 'यावज्जीवमग्निहोत्रं जुहोति' इति वाक्यम् । अत्र यावज्जीवमिति णमुल्प्रत्ययान्त पदम् । णमुल्प्रत्ययश्च 'धातुसम्बन्धे प्रत्ययाः' इत्यधिकारसूत्राधिकारे विहितः । णमुलः यावज्जीवपदेन सम्बन्धात् सम्पूर्णस्य जीवनस्य धात्वर्थेन होमेन सह सम्बन्धः प्रतीयते । अतएव जीवनं यावत् होमकर्त्तव्यता विहिता भवति । **सचेति ।** होमजीवनयोर्नाङ्गाङ्गीभावः कुतः । सकलं जीवनमेकस्यैवहोमस्याङ्गभूतम् अत एकस्मिन्नेवाङ्गाङ्गीभावो न युक्तः । यद्युच्येत होमस्याभ्यास इति तदापि न । नाभिधयाभ्यासो प्रतिपाद्यतेऽपि तु लक्ष्यते तेन । भवतु नाम, लक्षणंव स्वीक्रियतामिति । तन्न । मुख्ये सम्भवति सति लक्षण न स्वीकर्त्तव्या, जघन्यवृत्तित्वात्तस्याः । इदमेव प्रतिपादितं न **चेत्यादिना ।** तर्हि कीदृश सम्बन्ध इत्यत आह—**तेनेति ।** निमित्तनैमित्तिकभावः सम्बन्धः । जीवनमत्रनिमित्तम्, होमश्च नैमित्तिक इति । पक्षेऽस्मिन् कथन्नाभ्यास इत्यत आह—**तथा सतीति ।** निमित्तनैमित्तिकभावे सतीत्यर्थः । निमित्तं यावन्नैमित्तिकानुष्ठानस्य न्यायतः सिद्धत्वात् धातावभ्यासरूपा लक्षणा न स्वीकर्त्तव्या भवति । तत्र यावज्जीवमिति । अनेन प्रकारेण सकले जीवनेऽनुष्ठानस्य सातत्ये प्राप्ते । सायं जुहोति 'प्रातर्जुहोति' इति होमकालप्रतिपादकशास्त्रेण सहैकवाक्यता सम्पन्नत्वेन सायंकालावच्छिन्ने प्रातःकालावच्छिन्ने सम्पूर्णेऽपि जीवने निमित्ते प्राप्ते होमः कार्यः सम्पाद्य इत्यर्थः सम्पद्यते । **अयञ्चेति ।** नियते निमित्ते विहितत्वादयं होमः नित्य इति । अर्थादनुष्ठाने सति न फलविशेषः श्रूयतेऽकरणे च प्रत्यवायस्य सत्त्वात् कर्मणोऽस्य नित्यत्वमायति । नन्वस्या होमभावनायाः भाव्यं निमित्यत आह—**तद्भावनाया इति** इति अस्था होमभावनायाः भाव्याकांक्षायां फलविशेषस्याश्रुतत्वेऽपि विश्वजिन्नयायेन स्वर्गरूप फलं भाव्यत्वेन

केतप्यते। न्यायस्वरूपञ्चोक्तं पूर्वमेव। कुत इति चेत्—**नित्यानित्येति।** नित्यत्वानित्यत्वयोरेकत्र संयोगे परस्परं विरोधप्रसङ्गात्। उभयो स्वाभाव-भिन्नत्वात्। **स्वर्गो हीति।** सर्वेषां जनानां सर्वस्मिन काले स्वर्ग इष्ट एवेति वक्तुं न शक्यते मोक्षेच्छायां सञ्जातायां तत्र स्वर्गे द्वेषस्यापि सम्भवात्। न मोक्षार्थिनः स्वर्गप्राप्तौ यतन्ते। द्वेषविषयतावच्छेदकता-श्रयत्वात्तस्य। **न चानिष्टमिति।** अनिष्ट फलं भावनाभाव्यं न भवतीत्यर्थः। अतो द्वेषविषयताश्रयत्वान्मोक्षार्थिनां स्वर्गोऽप्यनिष्ट एवेति। कथमनिष्टः स्वर्गोऽपीति चेत्—**बन्धकत्वात्।** अत. स्वर्गोऽपि भावनाभाव्यत्वेन स्वीकर्त्तुं न शक्यत इति भावः। होमभावना नित्या। तया सहानियतेष्टसंयोगो परस्परं विरुद्ध इत्यत आह—**तत्रेति।** आर्थवादिकं फलं स्वीक्रियतामिति चेत्। न। अर्थवादे मन्त्रे वा फलश्रवणाभावात्। द्वेषविषयत्वेनापि भाव्य-कल्पनं नानुचितनित्य आह—**न च तदिति।** तर्हि भाव्यं किं स्यादित्यत आह—**अत इति।** यः सदा सर्वेषामिष्टः, स एव भावनाभाव्यत्वेन कल्प्य-ताम्। स च पापक्षय एव। पापक्षयः सर्वेषां सर्वदा इष्ट एव, न कदाचिद-निष्ट इति। मोक्षार्थिनामपि पापक्षयोऽभीष्ट एव, अन्यथा तत्फलभोगस्या-वश्यकत्वान्मोक्षाभाव एव स्यात्। अत स एव भाव्य इति तदेव स्पष्टयति—**कामिनामिति।** कामिनो वा भवन्तु, मुमुक्षवो वा। दुःखं नेच्छन्ति केचित् दुःखाभावेच्छायां तज्जनकस्य दुःखजनकस्य पापस्यापि द्वेषविषयताश्रयत्वात् पापक्षयः सर्वेषामिष्टः, न केषाञ्चिदप्यनिष्ट इति। तस्मात्तस्यैव भाव्यत्वं युक्तम्। **एवमिति।** अनेन प्रकारेण नैमित्तिकर्मप्रतिपादिकया श्रुत्या ज्ञातं नित्यत्वमुपपन्नं भवतीत्यर्थः। क्वचिन्नित्यकर्मार्थवादे मन्त्रे पापक्षयः श्रूयते, तदेवोदाहरति—**यथा प्रजापति व्रत इति।** तत्रार्थवादवाक्ये। एतावता हैनसा न युक्तो भवतीति। एनसा पापेनेत्यर्थः। **निषेधाधिकार इति।** निषेधनिरूपणावसरे इत्यर्थः। **सन्ध्यावन्दने चेति।** सन्ध्याबन्दने सङ्कल्प-वाक्ये 'यदह्लापापकार्षम्' इति सङ्कल्प यति। तत्क्षय एवेष्टः। स एव च भाव्यस्तस्य कर्मण इति नैमित्तिकेष्वपि कर्मसु पापक्षय एव भाव्य इति प्रतिपादयितुमुपक्रमते—**एवमिति।** पुत्रे जाते तन्निमित्तकजातेष्टेर्विधानं दृश्यते—'**वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रेजाते' इत्यादिना।** तस्य किं फलमित्यत आह—**यस्मिज्जाते इति।** यस्मिन् बाले जाते एतामिष्टिं निर्वपति पूत एवे, त्यादिनार्थवादवाक्येन पूतत्वं विहितम्। पूतत्वञ्च पापराहित्यमेव। अतोऽत्रापि पापक्षय एव भाव्य मन्तव्य, कथं नैमित्तिक-त्वमित्यत आह—**इयं इति।** इष्टिरिमं पुत्रोत्पत्तिनिमित्ते प्राप्ते कदाचिदेव भवति। अतो नैमित्तकत्वमस्या इति। इष्टेरस्याः भाव्याकांक्षायां

कस्यन्वय इत्यत आह—**अस्या भाव्याकांक्षामिति** । नैमित्तिकश्रुतिप्रतिपादितः पापक्षयः तथार्थवादवाक्यप्रतिपादितपुत्रगतपूतत्वञ्चेति फलद्वयं दृश्यते । उभयोश्च भाव्यत्वात् भाव्यद्वयमस्याः कल्प्यत इति । **मिश्रा इति** । मिश्रमतमेतदिति भावः ।

न्यायसुधाकृन्मतमत्रोपयादयितुमाह—**राणके त्विति** । एतेषां मते पुत्रगतं पूतत्वमस्या इष्टेः फलम् । तस्य च फलं पापक्षयः । तेन च 'पुत्रान् सुरक्षितान् कुर्यात्' इति विधिधकल्पना कर्त्तव्या । **तेनैवेति** । अनेनैव प्रकारेणेष्टेरस्या आवश्यताप्युपपद्यते । न तस्या वैयर्थ्यमिति भावः । मिश्रमतं न शोभनमित्यत आह—**नत्विति** । जातेष्टेरस्या भाव्यद्वयकल्पनं न युक्तमिति भावः पापक्षयस्यैव भाव्यत्वमित्यत आह—**सर्वथापीति** । सर्वप्रकारेण पापक्षयस्यैव भाव्यत्वमिति बोध्यम् । अत एवाह—**एवञ्चिति** । उपसंहरति—**तस्यादिति** । नित्यनैमित्तिककर्मसु पापक्षय एव भाव्य इति । **अकरणे चेति** । अत्र मिश्रमते 'अकुर्वन् विहित कर्म' इति मनुवचनादननुष्ठाने प्रत्यवायजनकत्वमेत नित्यत्वमिति । सम्पूर्णोऽयंश्लोकश्चेत्थम् ।

अकुर्वन्विहितं मर्म निन्दितं च समाचरन् ।
प्रसक्तश्यचेक्रियार्थेषु प्रायश्चित्तीयते नरः ।। (११.४४)

मिश्रमतमिदं न समीचीनमिति तत्खण्डनायाह—**राणके त्विति** । राणकमतेऽननुष्ठानजनितप्रत्यवायपरिहार एव फलमिति । कुतः विकल्पासहत्वात् । विकल्प्य खण्डयति—सर्वपाप क्षय एव फलं स्याद तर्हि एकानैवानुष्ठानेन तत्सिद्धे सति इतरेषामनुष्ठानं व्यर्थं स्यादिति । सर्वपापक्षयस्य फलत्वं मास्तु यत्किञ्चितत्पापक्षयस्यैव धलत्वस्त्विति चेत्, उच्यते—नैष पक्षः समीचीनः कुतः । कियतां पापानां क्षयः, कियतां वा न क्षय इत्यत्र नियामकाभावात् अतो यागस्य भाव्यत्वं स्यात्काचिदयीत्याह—**सर्वथा नेति** । उपसंहरति—**तस्मादिति** । सर्वासां भावनानां भाव्याकांक्षायां धात्वर्थं परित्मज्येष्टं भाव्यमेव भाव्यत्वेनान्वेतीति । यत्र धात्वर्थ एवेष्टसाधनत्वेन ज्ञातो भवेत्तत्र किं कर्त्तव्यमित्यत आह— **यत्र त्विति** । यत्र खलु धात्वर्थ एवेष्टसाधनम्, तत्रागत्या तस्यैव भाव्यत्वेनान्वय इति । उदहरति—**यथेति** । । 'व्रीहिभिर्यजेत' इति गुणविधौ 'व्रीहिभिर्यागं भावयेत्' 'दध्ना जुहोति' इति गुणविधिवाध्यस्य च 'दध्नाहोमं भावयेत्' इति धात्वर्थस्य भाव्यत्वेनान्वय इति । आकांक्षात्रये भाव्याकांक्षा निरुपिता । सम्प्रति

करणाकांक्षा निरूपयितुमुपक्रमते—**इत्थमिति**। भाव्यान्वयेन भाव्याकांक्षाया शान्तायामपि। केन भावयेदिति करणकांक्षायां जातायामेकपदोपात्तत्वात् धात्वर्थो यागादिः करणत्वेनान्वेति। **यद्यपीति**। यागस्य करणत्व कथं भवतीति न जन्यते, अपि तु भावनया एव यागो जन्यते। यथाप्यनुष्ठिते यागे यागजन्यफलयुक्ता भावना भवति। तस्यामेव फलयुक्त यां भावनायां यागः करणत्वेनान्वेति। फलितार्थमाह—**तदीयकरणमिति**। फलभावनां प्रति करणत्वं यागस्येति। **अतएवेति**। यागस्य फलभावनाकरणत्वा-देवेत्यर्थः। भावनाया आर्थीभावनायाः भाव्यं साध्यं यत्फभं स्वर्गादिकं तन्निवर्त्तकत्वं सम्पादकत्वं भावनाकरणत्वमार्थीभावनाकरणत्वमिति। **साम्प्रदायिका इति**। मीमांसासम्प्रदायविदां वरा इत्यर्थः शङ्कते—**नन्विति**। अयं भावः—'स्वर्गकामो यजेत' इत्यादौ यागश्य करणत्वं भवेन्नाम, करणत्ववाचकस्य तृतीयान्तद्रव्यवाचकपदायावात् परन्तु यस्मिन् वाक्ये 'सोमेन यजेत' इत्यादौ तृतीयान्तं द्रव्यवाचकं पदं श्रूयते, तत द्रव्यमेव करणत्वेनान्वेतु। तृतीयाविभक्तेः करणवाचकत्वात् यागस्तु न करणमपि तु द्रव्याङ्गम् **यथेति**। अतः संस्कृतेन सोमेनेष्टं भावयेदिति वाक्यार्थः। तन्मतं खण्यति—**नैवमिति**। तन्नेत्यर्थः। सोमेन 'यजेत' इत्यादावपि करणाकांक्षायां 'यजेत' इत्येकपदोयात्तत्वात् यागः करणत्वेनान्वेति। तस्याशीघ्रोपस्थिति-कत्वात्। भिन्नपक्षेपात्तत्वात् सोमनिष्ठस्य करणत्वस्य विलम्वोपस्थितिक-त्वात् पुर्वन्तावत् भावनायां यागस्यकरणत्वेनान्यस्य सिद्धत्वात् पुनः सोम-निष्ठकरणत्वस्यान्वयायोगात्। अपि च तृतीयाविभक्त्यापि यागगतमेव करणत्वं प्रतिपाद्यते। अन्वयप्रकारं दर्शयति—**तथाचेति**। सोमद्रव्यप्रति-पादकं सोमपद सोमवति लाक्षणिकम्। अतो लक्षणया सोमविशिष्टो यागो लक्ष्यते सोमपदेन तद्विशिष्टस्यैव यागस्य भावनायां करणत्वेनान्वय इति। अतः सोमवता यागेनेष्टं भावयेदिति वाक्यार्थः **अन्यथेति**। लक्षणया तद्विशिष्टयागस्य करणत्वं न स्वीक्रियेत चेत्तर्हि यागस्य सोमाङ्गत्वं स्यात्। सोमाङ्गत्वे च सोमसंस्काररूपमपरमदृष्टं कल्पनीयं स्यात्। ततश्चादृष्ट-द्वयापत्तिः प्रसज्येत। लक्षणादृष्टकल्पनयोः कः पक्षःश्रेयानित्यत आह—**वरञ्चेति**। अदृष्टद्वयकल्पनापेक्षया दृष्टरूपालक्षणा श्रेयस्करीं। शक्य-सम्बन्धो हि लक्षणा। तस्मात्सोमपदस्य सोमवति लक्षणोचितैव। **सोमस्य त्विति**। सोमस्य द्रव्यस्य दृष्टद्वारेणैव यागार्थत्वम्। स्वाहेत्युच्चार्याग्नौ प्रक्षेपात् भस्मीभूतभवनस्य प्रत्यक्षत्वात्। अतः मत्वर्थलक्षणया सोमविशिष्टो याग एव करणम्। ततश्च। सोमवता यागेनेष्टं फलं भावये दिति वाक्यार्थं सम्पद्यते **ये त्विति**। आहुरित्तनेन सम्बन्धः। 'सोमेन' इत्यत्र या

तृतीय विभक्तिस्तयैव तृतीयार्थकरणत्वविशिष्टो यागे लक्ष्यते। अतश्च सोनेनेत्यस्य सोकमरणकेनेत्मर्थः। एवमन्यात्रापि भवतीत्युदाहरति—**तद्धितचतुर्थ्यन्ताद्युपपदेष्विति।** तद्धितान्तस्योदाहरणमाग्नेयोऽष्टाकपाल इति। चतुर्थ्यास्तूदाहरणं वसन्तायेति। अत्र प्रकृत्या मत्वर्थलक्षणायाँ प्रत्यार्थस्य देवतात्वादेः मत्वर्थभूते यागेऽन्वयः प्राप्नोति। स च नोपपद्यते। तस्मात्तत्रापि प्रत्यये एव मत्वर्थलक्षणा स्वीकर्त्तव्या। तदर्थश्चाग्नि-दैवत्येनेति। तथैव सोमेनेत्यत्रापि प्रत्यये एव मत्वर्थलक्षणा क्रियताम् ततश्च सोमद्रव्यकेनेत्यर्थः सम्पाद्यते। तन्न शोभनम्। लक्षणाद्वयापत्तेः। तथाहि—तृतीयार्थकरणाद्विकं क्रिययैवान्वेति, अन्येन सहान्वये योग्यताभावात् कृदन्त-स्थले च कृदर्थकरणादिकमन्येनैवान्वेति, न क्रियया इत्युभयोर्वैलक्षण्यम्। दण्डः करणं घटे इत्येनार्थः सम्पद्यते न तु दण्डेन घट इति लक्षणाद्वयोप-पादनयाह—**एवञ्चेति।** सोमेनेत्यत्र या तृतीया तदर्थश्च करणत्वम्, तस्य च क्रियायामन्वययोग्यता वर्त्तते। तस्य करणत्वस्य यदि यागेऽन्वयः चिकर्षाविषयीभूतस्तर्हि लक्षणा कर्त्तव्या। ततश्च पुनः यागलक्षणेति। एवं लक्षणाद्वयापत्तिरिति भावः। **तच्चैतदिति।** तद्धितान्तस्थलेऽगत्या लक्षणाद्वयाश्रयितुं शक्यते तथापि सोमेनेत्यादौ तृतीयान्तपदसमभिव्यहारे न सा स्वीकर्त्तव्या, गत्यन्तरस्य सद्भावात्। किं गत्यन्तरमिति चेदाह—**प्रकृत्यैवेति।** प्रकृतेरेव तद्वति लक्षणासम्भवः। तथा च सोमपदस्य सोमवति लक्षणया 'सोमवता यागेनेष्टं भाववेदि'त्यर्थः। तस्मात्सोमेनेत्यत्र प्रकृतिभूतस्य सोमपदस्यैव सोमवति लक्षणा स्वीकार्येति सिद्धान्तः। कस्यामवस्थायां कस्य वाकरणत्वं कस्य वा साध्यत्वं भवतीत्युपपादयितु मुपक्रमते—**तस्मादिति।** अयं भावः—यत्र द्रव्याद्युपपदमपि श्रूयते, धात्वर्थ-श्चाप्राप्तस्तत्र धात्वर्थस्यैव भावनायां करणत्वेनान्वयः। द्रव्यादीनाञ्च प्रकृतौ प्रत्यये वा धात्वर्थलक्षणया धात्वर्थविशेषणतयान्वेति। यथा 'सोमेन यजेत' इति। अस्यैव वाक्यस्य चोत्पत्तिविधित्वाद् यागो न वाक्यान्तरेण ज्ञातः। अतः भावनायां यागस्य करणत्वेनान्वयः। सोमरूपस्य द्रव्यस्य च प्रकृतौ मत्वर्थलक्षणया यागविशेषणतयान्वयः। अतः 'सोमवता यागेनेत्यर्थः। सोमवत्पदं यागे विशेषणमिति। अपरं पक्षमुपस्थापयितुमाह—**यत्र त्विति।** यत्र च धात्वर्थः प्रकारान्तरेण ज्ञातस्तत्र धात्वर्थस्यैव भाव्यत्वं द्रव्यादीनाञ्च करणत्वमिति। उदाहरति—**'दध्ना जुहोति'** इति। अत्र च धात्वर्थः होमः 'अग्निहोत्रं जुहोति' इति वाक्यान्तरेण ज्ञातः। अतस्तस्य भाव्यत्वेनान्वयः दध्ना होमं भावयेदिति। **क्वचित्विति।** क्वच्चिच्च यथाश्रुतस्य धात्वर्थस्य

न करणत्वं भवति, अपि तु द्रव्यदेवतासम्बन्धलक्षितो याग एव करणत्वेनान्वेति। उदाहरति—**यथेति**। सौर्यं चरूं निर्वपेद् ब्रह्मवर्चसकाम' इति। उपपादयति—**अत्र हीति**। भाव्याकांक्षायां न धात्वर्थस्य निर्वापस्य भावनायां करणत्वेनान्वयः। तस्य निर्वापस्येत्यर्थः। किं ताम देवतात्वमित्यत आह—**त्यज्यमान इति**। यमुद्दिश्य द्रव्यस्य त्याग इति। **अत इति** द्रव्यस्य देवतायाश्चान्वये मध्ये त्यागरूपायाः यागक्रियायाः प्रतीतिर्जायते, न निर्वापीदिक्रियाया इति। 'सास्य देवता' ४.२,२४ पाणीनोयं सूत्रम्। अस्यैवाधिकारे 'सूत्रहविषोश्च' इति कात्यायनीयं वार्त्तिकम्। अनेन च सूक्ते देवतायाश्चार्थे तद्धितप्रत्ययाः भवन्ति। अतः सूक्तदेवताबोधकतास्य प्रत्ययस्येति। **द्रव्यदेवतयोश्चेति**। अत्र हविःपदप्रतिपादितप्रक्षेपाधिकहोमक्रियागर्भसम्बन्ध अर्थात् मध्ये होमक्रियापि भासते इत्यर्थः। **अत इति**। क्रियागर्भसम्बन्धस्य प्रतिपादनादेव सौर्यपदं न द्रव्यदेवतान्वयबोधकम्। अपि तु यागलक्षकमिति। **स इति**। स याग एव भावनायां करणत्वेनान्वेष्यति। धातोस्तावत् कोऽर्थ इत्यत आह—**धातु त्विति**। धातुस्त्वतिदेशवाक्यज्ञातनिर्वाणक्रियानुवादक इति धात्वर्थस्य करणत्वेनैवान्वयः भावनायामिति सिद्धान्तभङ्गापत्तेरित्यत आह—**स एवेति**। धातुस्तु यागं लक्षयतीति भावः। **एवञ्चेति**। अनेन प्रकारेण धातुनोपपदेन व लक्षितयाग एव भावनायां करणम्। अतो न सिद्धान्तभङ्गापत्तिर्दोषः। निर्वापस्य करणत्व निवारयति—**न त्वाति**। न निर्वापस्व करणत्वमित्यर्थः। क्वचिद्धावर्थस्याश्रयत्वेनान्वयो भवतीति दर्शयति—**क्वचित्त्विति** क्वचिदार्थीभावनायां गुणस्य करणत्वेन धात्वर्थस्य चाश्रयत्वेनान्वयः। उदाहरति—**यथेति दध्नेन्द्रियकामस्येति**। दध्नेन्द्रियं भावयेदित्यर्थः। **अत्र हीति**। अत्र दध्नः करणत्वेनान्वयः, न तु धात्वर्थस्य होमस्येति। **तस्येति**। होमस्येत्यर्थः होमस्तु अग्निहोत्रं जुहोति' इत्यनेन विहितः। तस्य च 'अग्निहोत्रं जुहुयात्' इतिवाक्यविहितफलसम्बन्धः। 'दध्ना जुहोति' इति वाक्यविहितदधिरूपगुणसम्बन्धश्च सञ्जातः पूर्वमेव फलगुणसम्बन्धेन शान्ताकांक्षस्य पुनरन्वयाकाक्षांभावात् **फलान्तरसम्बन्धेवेति**। फलान्तरेण सह सम्बधे सति पक्षेऽप्राप्तत्वाद्दध्नः नियमविध्याश्रयणं भवेत् नियमविध्याश्रयणं न क्रियेत चेत्तर्हि 'पयसा जुहोति' दध्ना जुहोति इत्यादौ पक्षेऽप्राप्तस्य दध्नः पाक्षिकानुवादो ध्यर्थः स्यात्। **एवञ्चेति**। अनेन प्राकरेण होमद्वयं प्राप्तं भवेत्। होमेनेन्द्रियं कुर्यात्। इत्येकः 'दध्ना होमं कुर्यात्' इति द्वितीयः। ततश्च विध्यावृत्तिलक्षववाक्यभेदापत्तिरिति। **यदि ह्यत्रेति**। यदि होमस्य विधानं स्वीक्रियेत तर्हि दधिविशिष्टहोमस्यैव भावनाकरणत्वं स्यात् स्यात्।

ततश्च मत्वर्थलक्षणया 'दधिमता होमेनेन्द्रियं भावयेदिति । परन्तु विधानमेव तस्य स्वीकर्त्तुं न शक्यते । अप्राप्तस्यैव विधानं भवति । होमस्तु अग्निहोत्र जुहोति' इत्यनेन प्राप्तः अतः विधानं न युक्तम् । **कर्मान्तरं त्विति** । होमस्य विद्यमानत्वात् सन्निहितत्वाच्च कर्मान्तविधाने कल्पनागौरवापत्त्या न युक्तमिति भावः । **तत्कल्पकमिति** । कर्मान्तरकल्पकमित्यर्थः । **शब्दान्तरादि इति** । शब्दान्तराभ्याससंख्यासंज्ञागुणप्रकरणान्तरादीनीत्यर्थ प्रमाणेष्वेकस्याप्यभावान्न कर्मान्तरकल्पनं युक्तमिति भावः । उपसंहृति—**तस्मादिति** । दध्न एव करणत्वं सिद्धम् । वाक्यार्थयोजना चैवम्—'द्रध्नेद्रिन्यं भावयेदिति । **तस्य च** । दध्न इत्यर्थः । दध्नः सिद्धरूपत्वाद् व्यापारानाविष्टत्वाच्च करणत्वानुपपत्तिः । व्यापाशविष्टमेव हि करणम् । **प्रकरणादिति** । प्रकरणप्रमाणवलादित्यर्थः । होमस्य व्यापाराविष्टत्वम् । ततश्च करणत्वमिति । **इदञ्चेति** । होमनिष्ठमाश्रयत्वञ्चेत्यर्थः । **फलकरणमिति** । फलभाव्यमभावनाकरणमित्मर्थः । आश्रयत्वञ्च किनित्यत आह—**यदिति** । व्यापाराविष्ट एव दध्यादिगुणः फलाय विधीयते, स एव व्यापारोऽऽश्रयत्वेन वोध्यते । **एवञ्चेति** । प्रकरणवलादाश्रयत्वेन ज्ञातमेव होममनुवदिति जुहोतिः, न तु स्वयमेवाश्रयत्वेन होमं वोधयतीति भावः । **दध्नः फलसम्बन्ध इति** फलाश्रयत्योभयवोधकत्वे दध्नः विधेरावृत्तिरावश्यकी । तदेव वक्ति—दध्नेन्द्रियं कुर्यात् होमञ्च कुर्यादिति । ततश्च विध्यावृत्तिलक्षणवाक्यभेदोपत्तिरिति । तस्मान्नायं पक्षः समीचीनः अतश्च किं कार्यमित्यत आह—**तेनेति** । प्रकरणप्रमाणवलात् होमविधिनाश्रयत्वे सम्प्राप्ते फलभाव्यकभावनायां दध्नः करणत्वं विधीयत इति भावः । **राणक इति** न्यायसुधाकृन्मतमिदिमिति ।

मिश्रमतमुपस्थापयितुमत्रोपक्रयते—**मिश्रात्विति** । अयमाशयः—दध्नेत्यत्र या तृतीया विभक्तिः श्रूयते, तया प्रतिपादितं यद्दधिनिष्ठं करणत्वम् तदेव फलभाव्यकभावनायां करणमिति । वाक्ययोजना चेत्थम्—**दधिगतेनेति** । कुतः । **प्रकृतिप्रत्ययाविति** । अनेन न्यायेन प्रत्ययार्थस्य प्राधान्यं प्रतिपाद्यते । प्रत्ययार्थश्च करणम् । तृतीया श्रुतेः । 'न कारकं कारकान्तरमपेक्षते' इति न्यायेन कारकान्तरान्वयायोग्यत्वेऽपि लक्षणावृत्त्या तदन्वयायोग्यस्य पदार्थस्योपस्थितिरावश्यकी । कारकान्वययोग्यः क इति स्पष्टयितुमाह—**कारकञ्चेति** । सर्वक्रियानिष्ठजन्यतानिरूपितजनकतावत्त्वमित्यर्थः । करोतीति कारणमिति व्युत्पत्तेः । कारकविशेष एव करणं भवति **करणत्वञ्चेति** । किं क्रियानिष्ठजन्यतानिरूपितजनकतावत्त्वमिति जायते

जिज्ञासा तत्र प्रकरणबलाद्धोमक्रियैवागच्छति। अतो होमक्रियानिरूपितं करणत्वं दध्नीति। इत्येव शोभनः पन्थाश्च विधिकल्पनं निवारयति—**न त्विति**। प्रकरणबलाद्विधिकल्पनं नोचितमिति भावः। **जुहोतिश्चेति**। प्रत्ययस्य साधुत्वप्रपादनार्थमनुवाद इति। वाक्यं योजयति—**एवञ्चेत्यादिना**। **भाष्यवार्त्तिकयोरिति**। उभयत्र भाष्यवार्त्तिकयोः प्रामाण्यमिति। उपसंहरति—**तस्मादिति**। सर्वस्यां भावनायां धात्वर्थस्य करणत्वमिति बोध्यम्। अत्र प्राय इति पदमपि देयम्। **क्वचिदिति**। गुणस्यापिकरणत्वं दर्शितं पूर्वम्। धात्वर्थः क्वचिद्भाव्योऽपि भवति, क्वाचिदाश्रयोऽपीति। सर्वं पूर्वमेव प्रतिपादितम्, तथापि मुख्यन्तु करणत्वमेव धात्वर्थस्य। अगत्या कदाचिद् भाव्यत्वादिकमिति भावः। **इत्थमिति**। पूर्वोक्तेन प्रकारेणेत्यर्थः। प्रथमन्तावत् किं भावयेदित्यादिनोपक्रम्य फलं साध्यत्वेनान्वेतीति सिद्धान्तितम्। ततः पश्चात् करणाकांक्षायां जातायां धात्वर्थः करणत्वेनान्वेतीति युक्तिप्रामाणाभ्यां प्रसाधितम्। कथं भावयेदिति कथंभावाकांक्षायां कस्यान्वय इति प्रतिपादयितुमुपक्रमते—**यागेनेत्यादिः**। इतिकर्त्तव्यतां व्युत्पादयन्ति—**कर्त्तव्याया इति**। तद्विशेष एवेतिकर्त्तव्यतेति। इति प्रकारे। कर्त्तव्यस्यानुष्ठेयस्य कार्यस्य सम्पादनप्रकार इति यावत्।

अत्र मिश्रमतमुपस्थापयति—**मिश्रमते** इत्यादिना। फलानुकूलायाँ 'इदं मम कर्त्तव्यम्' इति रीत्या सामान्यरूपेण कर्त्तव्यज्ञानं सञ्जायते। तत्कथं कर्त्तव्यमित्यादिना तद्विशेषाकांक्षा जायते। **कथमिति**। कथं कर्त्तव्यमित्यर्थः तदर्थं एवाह—**कोऽसाविति**। **किमिति**। किमिति प्रश्नार्थकः थमुः प्रकारार्थकः प्रत्ययः। 'इदमस्थमुः' 'किमश्च' इति सूत्रेण थमुप्रत्यये 'किमः कः' इत्यनेन कादेशे कथमिति। अर्थात् प्रकारविषय कः प्रश्न इत्यर्थः। अतएव 'केन प्रकारेण' इति विगृह्यतेऽपि **सामार्थस्य चेति**। क्रियासामान्यस्य भेदकः क्रियाविशेषो भवति। स एव प्रकारशब्देनोच्यते। एतदेव स्पष्टयति—**भावनारूपस्येति**। आख्यातवाच्यस्य भावनापरपर्यायस्य परिच्छेदको भेदको भावनाविशेषः प्रकार इति भावः। उदाहरति—**यथेति**। कश्चिद् पाकं कुर्यादिति कथयति। ततश्च श्रोता वक्ति कथं अर्थात् पाकसम्पादनप्रकारः क इति। **तत्रेति**। एतादृश्यां जिज्ञासायां पाकादिव्यापारसामान्यस्य भेदकस्य फूत्करणादिव्यापारविशेषस्यैवान्वयः। **तथेति**। तेनैव प्रकारेण यागविषयेऽपि 'यागेन स्वर्गं भावयेदि'ति श्रवणानन्तरं कथं अर्थात् प्रकारः कः यागसम्पादनस्येति व्यापारविशेषात्मकस्य प्रकारस्याकांक्षा जायते **सेयमिति**। इयमेव प्रकाराकांक्षेतिकर्त्तव्यतापादवाच्या।

**तस्याञ्चेति** । दर्शपूर्णमासयोः सन्निहितत्वादन्वाधानादिब्राह्मणातर्पणान्तो व्यापारविशेष इतिकर्त्तव्वतयान्वेति । **अयमसाविति** । अयं व्यापारस्तेन प्रकारेणानुष्ठेयः, येनानुष्ठितेन स्वर्गो भवेदिति । मिश्रमतमिदमिति ।

न्यायसुधाकृन्मतमुपस्थापयति—**राणक मते इति** । एतेषां मते भावनाकर्त्तव्यता रूपा सा भावना स्वकरणानुग्राहकं व्यापारविशेषमपेक्षते । कथमित्यस्य किंव्यापारानुगृहीतेनेत्यर्थः । तेतुं दर्शयति—नह्यनुग्राहक-व्यापारमिति । उदाहरति—**यथेति** । उद्यमननिपातनव्यापारानुगृहीत एव कुठारः छिदाभावनाया करणं भवति । **यदपीति** । यत्रोत्पत्तिमात्रेण करणत्वं तत्रोत्पत्तेरेवानुग्राहकव्यापारत्वम् । करणत्वाभावं दर्शयितुमाह—**अनुत्पन्नस्येति । उक्तञ्चेति** । श्लोकवार्त्तिके प्रत्यक्षसूत्रे इत्यर्थः ।

तेन जन्मैव विषये बुद्धेर्व्यापार इष्वते । इति व्याख्यातञ्च न्याय-जन्मैवास्य क्रियेति नाक्रियत्वमित्यादिना । **तथात्रापीति** । अनुग्राहक-व्यापारकाक्षांयां जायमानायां सन्निधिश्रुतत्वादाराद्‌पकारकपदार्थो ऽवेति । अस्यामाकांक्षायां सन्निपत्योपकारकारणामन्वयो न भवतीत्यग्रे तन्निरूपणावसरे वक्ष्यत इति । उपसंहति—**तस्मादिति** । अनुग्राहक-व्यापारसम्बन्धश्च श्विद्धा भवति क्वचिदुपदेशेन, क्वचिदतिदेशेन, क्वचिच्चोपदेशातिनेति अत आह—**एवं सतीति** । तदेव स्पष्टयति—**तथा हीति** । तस्याञ्चेतिकर्त्तव्यताकांक्षायाम् । सर्वानामिष्टीनां प्रकृतेभूते दर्शपूर्णमासादौ सन्निहितोपदिष्टं पदार्थजातमितिकर्त्तव्यतात्वेनाग्वेति । 'सौर्यचरूं निर्वरूपेत्' इत्यनेन निहिते कर्मणि 'प्रकृतिवद्‌विकृतिः कर्त्तव्या' इत्यतिदेशवाक्येन । प्राप्तमङ्गजातमितिकर्त्तव्यतात्वेनान्वेति । तद्‌वदित्यति-देशबोधनायोक्तम् । किञ्चित्कर्म प्रकृतिविकृतिस्वरूपम् । यथा—'अग्नी-षोमीयं पशुमालभेत इत्यनेन विहितपशुयागादिः । तत्रोपदेशेनातिदेशेन च प्राप्तं पदार्थजातमितिकर्त्तव्यतात्वेनान्वेति । प्रकृतिस्वरूपमाह—**यत्रोपदेशेनै-वेति** । यत्रोपदेशवाक्येनैव दृष्टफलकानामदृष्टफलकानाञ्च सर्वेषामपेक्षिता-नामङ्गानामन्वयः प्रतिपाद्यते, सा प्रकृतिपदवाच्येति । उदाहरति · **यथेति** । एते **प्रकृतियागा इति** । विकृतिस्वरूपमाह—**यत्रेति** । यत्र कर्मणि अतिदेशवाक्येनैव दृष्टफलजनकानामदृष्टफलजनकानामङ्गानामन्वयः प्रति-पाद्यते, सा विकृतिरिति । उदाहरति—**यथेति । सौर्यादिः** । सूर्यदेवताक-यागादिरित्यर्थः । **यद्यपीति** । कुत्रचित् नक्षत्रेष्टिषु विकृतिषु उपदेशप्राप्ता-नामेवाङ्गानामन्वयो दृश्यते तथापि दृष्टादृष्टानामङ्गानामतिदेशेनैव

प्राप्तिरिति विकृतित्वमेव। **अग्नीषोमीयपशुयागे इति।** अत्र यागे उपाकरणादीनां पशुधर्माणामुपदेशेन दार्शपौर्णमासिकपयोयागधर्माणामतिदेशेन दृष्टादृष्टार्थाना प्रयाचादीनाञ्चान्वय इति। **तस्येति।** अतएवास्य पशुयागस्य प्रकृतिविकृत्युभयरूपत्वमिति वोध्यम्। किञ्चित्कर्म न प्रकृतिरूपं भवति न विकृतिरूपम्। उभयोर्लक्षणयोस्तत्राभावात्। उदाहरण यथा—**गृहमेधीयादिः। मरुद्भ्य इति।** अनेन वाक्येन द्रव्यदेवतासम्बन्धकल्पितसायंकालविशिष्टो यागो विधीयत इति। **सोऽयमिति।** गृहमेधीयसंज्ञक इत्यर्थः। **तत्करणिकामा इति।** स्वर्ग एव भाव्यत्वेनान्वेति। **एवञ्चेति।** सन्निधिपठितत्वादाज्यभागादिरितिकर्त्तव्यतात्वेन सम्वद्धचत इति भावः। **तच्चेति।** आज्यभागादिकञ्चेत्यर्थः। सन्निहितत्वेन शीघ्रतरोपस्थितत्वादितिकर्त्तव्यताकांक्षा निवर्त्तयतीति भावः। निवृतायाञ्च तस्यामिति। दार्शपौर्णमासिकधर्माणामतिदेशाभाव इति। **सर्वत्र हीति।** भावनोपकारकस्य व्यापारस्यपेक्षा भवति। व्यापारमात्रं नापेक्षते। **स चत्रेति।** व्यापार इत्यर्थः। **लब्धः प्राप्त इति। किमतिदेशकल्पनयेति।** न किमपि प्रयोजनमित्यर्थः। **अतएवेति।** सन्निहितत्वेन लब्धत्वेन लब्धत्वादतिदेशकल्पनायावादेव। नक्षत्रेष्टयादिषु उपहोमादीनामपूर्वाङ्गपाठेऽपि इष्टित्वेन सामान्यातिदेशवशात् दार्शपौर्णमासिकधर्मा एवान्वीयन्ते। **पश्चात्त्विति।** येषामुपकारो न क्लृप्तस्तेषां पश्चाद्ग्रहणं भवतीति। **प्रकृतिष्विति।** प्रकृतिषूपायान्तराभावत्पूर्वं व्यापारग्रहणम्। पश्चाच्च तज्जन्योपकारकल्पनमिति। हेतुं दर्शयति—**अन्यदीय इति।** गृहमेधीयस्यापूर्वत्वं साधयति—**तेनेति।** अपूर्णशब्दं व्युत्पादयति—**नास्तीत्यादिना। एवञ्चेति।** पूर्वोक्तेन प्रकारेणत्यर्थः। गृहमेधीये कस्यापि धर्मस्यातिदेशाभावान्नास्य विकृतित्वमिति भावः। **उपदेशेनापीति।** उपदेशेनापि सर्वेषामपेक्षितानामङ्गानां प्राप्तिर्नैव भवति। कुतः। **आज्यभागादि० इति।** अयं भावः—ये संस्कारा अङ्गप्रधानोभयसाधारणास्तेषामाज्यभागादिवशादत्रानुष्ठानसत्त्वात् ते च संस्कारा अत्र प्रायशः पनिगणिताः। पुनर्नगण्यन्ते। **प्रधानं नीयमानं हीति।** प्रधानमनुसरन्त्यङ्गानीति भावः। **प्रधानेति।** वाच्यत्वाभावादिति भावः। **अतो नेति** पादिताम्। अतएवानुभयरूपतेति भावः। **यदि त्विति।** आज्यभागाद्युपदेशेनैवाक्षिप्तत्वातुपदिष्टत्वं स्वीक्रियते। तर्हि प्रकृत्विन व्यवहार इति। **सर्वथा त्विति।** युक्तिप्रमाणसिद्धत्वादितिकर्त्तव्यताकांक्षायाआज्यभागादीनामेवान्य इति मन्तव्यम्।

**अङ्गभावनानामिति।** अङ्गानां या भावना सा अङ्गभावनेति तस्या

इतिकर्त्तव्याकांक्षायां वयनरूपेण पठितानां सन्देशपठितानाञ्च धर्मान्तराणामन्वये बोध्यः। उपसंहरति—**यथेति**। **पञ्चभिरिति**। समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हि यजति, स्वाहाकारं यजतीति। एतानि च दर्शपूर्णमासाङ्गभूतानि। अङ्गानि च प्रधानोपकारकाणि भवन्ति। इतिकर्त्तव्यताकाङ्क्षायां 'अतिहायेडो' इति वाक्यविहितेडाख्यतृतीयप्रयाजः। तदनन्तरं बर्हिराख्यचतुर्थप्रयाजं प्रति च चतुर्गृहीतानयनरूपो धर्मो विहितः। ततश्चाभिक्रामं जुहोतीति वाक्येनाभिक्रमणरूपो धर्मो विहितः। ततश्च पुनः 'यो वै' इत्यादिना स्तुतिः सम्पादिता। **तत्रेति**। एतेषु पूर्वोत्तरयोः 'जुह्वामौपभृतम्' 'यो वै प्रयाजानाम् इत्यनयाः वाचनिकं प्रयाजार्थमिति। **मध्यमठितस्य त्विति**। **सन्दंशपाठेनेति**। उभयोर्मध्ये पठितत्वात्सन्देशत्वमिति भावः। प्रयाजप्रतिपादितान्। होमाननूद्याभिक्रमणं विधीयते। तच्चैकैकप्रयाजानन्तरं पदप्रक्षेपरूपम्। अभिक्राममिति शब्दं व्युत्पादयति—**अभिक्रम्येति**। **आभीक्ष्ण्ये इति**। पौनःपुन्ये इत्यर्थः। 'आभीक्ष्ण्ये णमुल्च' इति पाणिनिसूत्रादिति। **यास्विति**। वाचनिकानां सन्देशपाठितानां वा धर्माणामभावः। **तास्विति**। **अङ्गभावनास्विति**। स्मार्त्तधर्माणामन्वयः। सर्वकर्मसाधारणत्वादितिभावः। यद्याचमनादीनामपीतिकर्त्तव्यताकांक्षा भवेच्चेत्तर्हि स्मार्त्तधर्माणामेवान्वयः। **तेषामपीति**। तेषामितिकर्त्तव्यताकांक्षायां तत्स्वरूपसम्पादनमेवान्वेतीति भावः। **क्रियाया इवेति**। यथा विभागक्रियायां क्रियाया एवेतिकर्त्तव्यताकांक्षायामन्वय इति। तथैवेति शेषः **एवं ये इति**। दर्विहोमादावपि इतिकर्त्तव्यताकांक्षाया अनुक्तत्वात्स्वरूपस्यैवान्वय इति बोध्यम्। तत्रातिदेशं कथन्न भवतीत्याह—**न चेति**। समाधत्ते—**यागधर्माणामिति**। यजतिचोदनाचोदितः यागः। जुहोतिचोदनाचोदितः होमः। उभयोः परस्परमत्यन्तभिन्नत्वेन सादृश्याभावात् यागधर्माणामतिदेशाभावादिति। **होमेष्वपीति**। क्वचित् क्वचित् होमेष्वपि केषाञ्चिद्धर्माणामुपदेशो दृश्यते। तस्मादेव प्रकृतिविकृतिनिर्द्धारणभावा इति। **अत इति**। यत्र येषामङ्गानामुपदेशस्तेषां तथैवानुष्ठानं कर्त्तव्यमिति। अत्राङ्गानामुपदेशो नास्ति तत्र पूर्वोक्तरीत्येतिकर्त्तव्यतेति। उपसंहरति—**तस्मादिति**। सर्वस्यां भावानायां तावदितिकर्त्तव्यताकांक्षायां जातायां क्वचिदुपदिष्टातिदिष्टानां क्वाचिदुभयेषां क्वच्चि स्मार्त्तधर्माणां स्वरूपसम्पादनस्य वान्वय इति बोध्यम्। 'तत्र विधीनां विधायकत्वेन धर्मे प्रामाण्यम्। इति यत्प्रतिज्ञातं पूर्वम्, तदेव निगमयति—**एवमिति**। विधायकत्वमेव विधित्वमिति। 'विधिर्विधायकः' इति सूत्रयन् गौतमोऽप्यस्मदनुकूलः। **यद्यपीति**। अयं भावः—यथांशत्रयमपेक्षितं भवति

भावनास्तथैव कर्त्तंशस्याप्यावश्यकता प्रतीयते । तद्बोधकमपि ब्राह्मणादिपदं श्रूयते तथाति कर्त्रंशस्य चतुर्थांशत्वेन व्यवहारो न दृश्यते कुतः । यत्र भावना प्रतीयते तत्रैवांशत्रयस्य प्रतीतिः । कर्त्तुश्च भावनाभावेऽप्रतीतिः । यथा घटो भवती'त्यादौ केवलं भवनमुत्पत्तिरेव प्रतीयते, न तु भावनापि अतएवांशत्रयं न प्रतीयते तथापि कर्त्तुः प्रतीतिर्जायते क्वचिद्विशिष्टाचार्यमतेऽऽकांक्षाचतुष्टयी भवति भावना इत्यपि अनवसरत्वान्नात्र प्रतिपाद्यते । **अंशत्रयमिति** । भावनानिष्ठाकांक्षाविषयीभूतमंशत्रयमिति । **तथेति** । व्यवहारोऽपि तथैव भवतीति भावः । **वस्तुतस्त्विति** । सिद्धान्तपक्षमुपस्थापयति—अंशत्रयमध्ये या इतिकर्त्तव्यतां तदन्तः—पातित्वान्न पार्थक्येन कर्त्रंशस्य भानमिति न कश्चिद्दोषः भावनाया अंशत्रयोपेतत्वं क्वचमिति दर्शयति—**अंशत्रयोपेतत्वन्त्विति** । अन्यत् यत् फलं तदुत्पत्त्यनुकूलव्यापारत्वामिति । तदेवोपपादयति—**तदित्थमिति** ।

विधिं विभजते—स चेति । त्रिविधः प्रकारत्रयं विधेरितिभावः । अपूर्वविधिं लक्षयति—**तत्रेति** । अत्यन्ताप्राप्तत्वञ्च—तद्वाक्यान्यवाक्याज्ञातत्वं प्रमाणान्तराज्ञातत्वमिति वा तस्य बोधको यो विधिरिति । इदमेवापूर्वत्वमस्य विधेरिति । यद्विषयकं ज्ञानं न प्रमाणान्तरेण जायतेऽपि तेनैव वाक्येन प्रप्रथमतया ज्ञानं जातमिति यावत् । उदाहरति—**यथेति** । 'अग्निहोत्रं जुहाति' इति वाक्यमिदमपूर्वार्थविधायकमिति । वाक्यादस्यात्पूर्वं न केनापि वाक्येन प्रमाणान्तरेण वा अग्निहोत्रहोमस्य ज्ञानं सम्ववति, अपि त्वनेनैव वाक्येन प्रप्रथमतया अग्निहोत्रहोमः जायते । अतोऽपूर्वार्थविधायकत्वादपूर्वविधित्वमस्य विधेः संघटते उत्पत्तिविधिं विभजते—**स चेति** । चातुर्विध्यमस्य विधेरिति भावः । मीमांसान्यायप्रकाशतोऽयमेव । विशेषोऽत्र । तत्र हि विधिं लक्षयित्वा विधेश्चातुर्विध्यं प्रत्यपादि । तदन्तरमुत्तरभागे ऽपूर्वविधिः लक्षितः । परिवणयति—**उत्पत्तीत्यादिना** । उत्पत्ति **लक्षयति—यथेति** । विधिचतुष्टय इत्यर्थः । कर्मणः यस्य कस्यापीति । उत्पत्तिशब्दस्यैवार्थः प्रथमज्ञप्तिमिति । स प्रथम उत्पत्तिविधिरित्यर्थः यस्य कस्यापि यागहोमादिकर्मणः स्वरूपं येन वाक्येन सर्वतः प्रथमं ज्ञायते स उत्पत्तिविधिरिति । **यथेति** । पूर्वोक्त एव 'अग्निहोत्रं जुहोति' इति वाक्यमुदाहरणमस्य विधेरिति । नात्र फलविशेषः श्रूयतेऽपि त फलसामान्यमुद्दिश्यैवास्य प्रयोगः । धात्वर्थस्य होमस्य च करणत्वेन भावनायामन्वयः एतदेव बोधयति—**स हीत्यादिना** । **एतस्येति** । उत्पत्तिविधेरित्यर्थः सहायभूतानि षट् प्रमाणानीति । तान्येव दर्शयति—**शब्दान्तर इति** । एतत्प्रमाणषट्कसहकृतोत्पत्ति-

विधिः । कर्मस्वरूपोत्पादनसमर्थ इति । शब्दान्तरादिप्रमाणनिरूपणावसरे इत्यर्थः । विनियोगविधिं लक्षयति—**विनियोगमिति ।** तदर्थं बोधयति—**अङ्गाङ्गिसम्बन्धमिति ।** अङ्गं शेषः, अङ्गी च शेषी इति । शेषशेषिणोश्च यः परस्परं सम्बन्धस्तस्य बोधको विधिरिति स एव विनियोगविधिशब्देनोच्यते । उदाहरति—**यथेति ।** स एव उत्पत्तिविधिरेव । धात्वर्थस्य होमस्य फलेन सह भावनाद्वारा शेषशेषीभावं बोधयति, तदा विनियोगविधिशब्देन कथ्यते । **भावनाहीति ।** भावनायां येन फलप्रतिपादकत्वमायाति, तस्यैव करणत्वमिति । कथमस्य विनियोगविधित्वमित्युपपादयति—**यदिचेति ।** यदा विधौ फलबोधकत्वं भवति तदा तत्फलद्वारा भावनापि फलोपहिता भवति । ततश्च करणनिष्ठफलोत्पादकत्वं जायते । तद्बोधनद्वारा विनियोगविधित्वं सिद्ध्यति । एकस्यैव विधेः कथं संज्ञाद्वयं संगच्छत इत्यत आह—**व्यापारभेदादिति ।** उत्पत्तिविधौ कर्मबोधकत्वम्, विनियोगविधौ चाङ्गाङ्गिभावबोधकत्वमिति । केवलमङ्गाङ्गिभावबोधकत्वमपि भवति कुत्रचिदिति दर्शयति—**शुद्धोऽपीति ।** 'दध्ना जुहोति' इत्यादिवाक्येषु कर्मबोधकत्वाभावेऽपि । अङ्गाङ्गिबोधकत्वं दृश्यत इति भावः । **दधिहोमयोरिति ।** लोकवाक्यान्तरप्राप्तत्वादिति । लोकप्राप्तत्वात् वाक्यान्तरप्राप्तत्वादिति । होमप्रापकं वाक्यान्तरञ्चाग्निहोत्रं जुहोतीत्यादिः । **अस्यापीति । विनियोगविधेरिति ।** सहकारीणि सहायभूतानीति षट् प्रमाणानीति न्यूनाधिकसंख्यानिवारणाय षडिति पदम् परिगणयति—**श्रुतीति । एतत्सहकृतेनेति ।** प्रमाणषट्कसचिवेनेत्यर्थः । **अङ्गत्वमिति ।** प्रधानं प्रतीति शेषः । **एकस्येति ।** द्वयोर्मध्ये इति शेषः । अर्थात्सिद्ध्यतीति । अङ्गत्वस्याङ्गिसापेक्षत्वात् । **नन्विति ।** विधिगम्यत्वं निवारयति अङ्गाङ्गिभावस्य । किन्नामाङ्गत्वमित्यत आह—**अङ्गत्वमिति ।** पर इति । भावनापेक्षमिति । शेष **फलमित्यर्थः ।** तदुद्दिश्य प्रवृत्तोयो पुरुषस्तत्कृतिसाम्बधत्वमिति । सङ्गमयति—**भवति हीत्यादिना ।** होमस्य फलाङ्गत्वमिति । फलमुद्दिश्यैव पुरुषाः प्रवर्त्तन्ते । तत्कृतिविषयत्वात् फलस्य पुरुषार्थत्वं दर्शयति—**फलस्येति ।** आत्मानमुद्दिश्य प्रवृत्तो यो पुरुषस्तन्निष्ठकृत्युद्देश्यत्वात् । पुरुषार्थत्व फलस्येति । पुरुषश्च कर्मार्थ इति दर्शययि—**पुरुषस्य चेति ।** यागहोमादिकर्म, तदुद्दिश्य प्रवृत्तो यो पुरुषस्तन्निष्ठा या कृतिस्तदाश्रयत्वं पुरुषे इति । अतएव पुरुषस्य कर्मार्थत्वमिति । परमार्षं सूत्रमत्र स्मर्त्तव्यम्—कर्माण्यपि जैमिनिः फलार्थत्वात्, फलञ्च पुरुषार्थत्वात्, पुरुषश्च कर्मार्थत्वात्' इति । पक्षेऽस्मिन् दोषं दर्शयति—**तथा चेति । चक्रकापत्तिरिति ।** स्वग्रहसापेक्षग्रह-

सापेक्षग्रहसापेक्षग्रहकत्वत्वात् । तथा च द्रव्यगुणादीनां कर्मार्थत्वमेवस्यान्नोपकारकत्वमित्यत आह—**द्रव्यगुणसंस्काराणामयीति** । एतेषामपि यागादिकर्मोद्दिशप्रवृत्तपुरुषकृतिसम्बन्धित्वात् कर्मार्थत्वमेव स्यादिति भावः। उक्तमपि—द्रव्यगुणसंस्कारेषु बादरिः। कर्माण्यपि जैमिनि फलार्थत्वात्' इति। उपकारकत्वमेवाङ्गत्वमिति न, अपि त्वपकारकत्वमप्यङ्गत्वमित्यत आह—**न त्विति**। उदाहरति—**मक्षिकार्थ इति** । अत्र धूमस्य न मक्षिकोपकारकत्वम्, अपि त्वपकारकत्वमेव। मक्षिका निवारणार्थं हि धूमः क्रियते। न तु तत्सुखोपलब्धये इति । तथापि तथैव व्यवहारात्। क्वचिदुपकारकारकत्वेऽप्यङ्गत्वं न भवतीति दर्शयति—**जामात्रर्थमिति**। कस्यचिज्जामाता आगतः। तदर्थश्च प्रदीपः प्रज्वालितः। तज्जन्यश्च प्रकाशः यथा जामातारमुपकरोति तथैव तत्स्थं शिष्यमप्युपकरोति तथापि दीपस्य जामातारं प्रत्यङ्गं न तु शिष्यं प्रत्यपि तमुद्दिश्यैव दीपस्य प्रज्वालनत्वात्। मक्षिकां प्रति धूमस्यापकारकत्वेऽप्यङ्गत्वम्, दीपस्य च शिष्योपकारकत्वेऽप्यङ्गत्वाभाव इति तात्पर्यम्। **ज्ञाताङ्गत्वस्य चेति**। अङ्गत्वेन ज्ञातस्य प्रयाजादेरूपकारसम्पादकत्वकल्पनादिति प्रागिति। अङ्गत्वज्ञानात्पूर्वमेव स्वर्गादिफलस्यैव कल्पना स्यात्। तस्माभोक्तमङ्गत्वं युक्तियुक्तमिति भावः। **तस्मादिति**। अनेकविधिदोषस्य सत्त्वात्। **पारार्थ्यमिति**। परार्थत्वमेवाङ्गत्वमिति। परोपकारकत्वमिति यावत् उक्तश्चशेषलक्षणाधिकरणे—'शेषः परार्थत्वात्' इति। **तच्चेति**। अङ्गत्वञ्चेत्यर्थः श्रुत्यादिष्ट्प्रमाणसहकृतो यो विधिस्तद्गम्यमिति।

तत्र श्रुतिं लक्षयति—**तत्रेति**। षट् प्रमाणेष्वित्यर्थः स्वाव्यवहितोत्तरलिङ्गादिपञ्चप्रमाणकल्पनां विनैव स्वतन्त्ररूपेणाङ्गत्वबोधको यः शब्दः, स श्रुतिरिति। अयमेवार्थः निरपेक्षशब्देनाभिहितः न्यायप्रकाशे। निरपेक्षो रवः श्रुतिरिति तत्रापि लिङ्गादिप्रमाणानपेक्षत्वमेव निरपेक्षत्वमिति। उदाहरति—**यथेति**। 'दध्ना जुहोति' इत्यत्र तृतीयाविभक्तिश्रुत्या दध्नः करणत्वं प्रतिपाद्यते। धात्वर्थस्य होमस्यात्र कर्मत्वेनान्वयः। ततश्च दधिकरणिका होमकर्मिका च भावनेति ज्ञायते। ततश्च होमार्थं दधीति प्रतीतिः। **सोऽयमिति**। तृतीयाविभक्तिश्रुत्या दध्नोऽङ्गत्वबोध इति। पुनश्चोदाहरति—**एवमिति**। क्रीणातीत्यत्र क्रीधात्वर्थ क्रमः। धात्वर्थस्य च करणत्वेनान्वय क्रयेण भाव्येदिति। सोममित्यत्र द्वितीया। सा च कर्मत्वबोधिका। अतः सोमकर्मिका क्रयकरणिका भावनेति बोधोऽनेन वाक्येन। क्रमेणेति वाक्यार्थप्रदर्शनम् **अरुणाशब्दश्चेति**। अत्र प्रयुक्तारुणा-

शब्दः आकृत्यधिकरणन्यायेनारुण्यगुणमात्रस्य वाचक इति। उच्यतेऽनेनेति वचन इति व्युत्पत्तिः। तदितराबोधकत्वे सति तद्बोधकत्वं मात्रशब्दार्थः। प्रकृते गुण एव एच्चछब्दार्थः। अतः गुणेतराबोधकत्वे सति गुणबोधकत्वमिति फलति। **एकहायनीति**। एकहायनमात्रपरिमिता आयुर्यस्या सा। हायनः-शब्दो वर्षवचनः। 'संवत्सरो वत्सरोऽब्दो हायनः' इत्यमरः। तत्कालविशिष्टगोद्रव्यवाचक इत्यर्थः। पिङ्गाक्षीशब्दोऽपि तद्गुणविशिष्टगोद्रव्यवाचक एवेति। शङ्कते—**न चेति**। पूर्वोक्तरीत्या आकृत्यधिकरणन्यायेन सम्बन्धमात्रवाचकावेतौ शब्दाविति। तत्सम्बन्धेन द्रव्ये लक्षणैव स्यादिति। समाधत्ते—**सम्बन्धाप्रतीतेरिति**। तामेवोपपादयति—**सम्बन्धिद्वयेति**। सम्बन्धप्रतीतौ सम्बन्धिद्वयस्य प्रतीतिरावश्यकी। अन्यथा सम्बन्धस्यैवाभिधानं भवेत्। अतएव तत्पूर्वकमेव द्रव्याभिधानमिति। अतएवोक्तं नागेशेनसम्बन्धो हि सम्बन्धिद्वयभिन्नत्वे सति द्विष्ठत्वे च सति विशिष्टबुद्धिनियामक इति। सम्बन्धस्य भानं तथैव भवेत् यथा सम्बन्धिनोरपि भानं स्यादिति। **प्रकृत्यैकहायन इति**। अत्र हायनशब्दात् 'दामहायनान्ताच्च' इत्यनेन ङीप्प्रत्येन द्रव्याभिधानम् अथवा बहुव्रीहिसमासेन द्रव्याभिधानम् तयोश्च यः परस्परं सम्बन्धः ससर्गमर्यादयैव भासते, न तु शक्त्या कृत्येति। अतोऽभिधानशक्तिप्रयोजकत्वं तत्र न मन्तव्यम्। **जातिगुणयोस्त्विति**। एतयोर्द्रव्यलक्षकत्वमेव न सम्बन्धलक्षकत्वमिति भावः। **एवमिति**। पूर्वोक्तप्रकारेणेति। यौगिकशब्दानां द्रव्यवाचकत्वमेव उक्तञ्चेति तन्त्रवार्त्तिकेऽरुणाधिकरणे इति शेषः। **सर्वत्रेति**। सम्बन्धवाचकत्वे गौरवात् द्रव्यवाचकत्वमेव सर्वेषां यौगिकानां शब्दानामिति भावः **तथा चेति**। **अरुणगुण इति**। **आरुण्यमिति**। **पदद्वयाभिहितमिति**। पिङ्गाक्ष्यैकहायनीति,पदद्वयवाच्यमिति। तृतीयाविभक्तिश्रुत्या करणत्वं प्रतीयते। **भावनायाञ्चेति**। न साक्षादन्वयः, अपि तु मत्वर्थलक्षणया क्रयभावनायामन्वयो भवतीति वाक्यार्थयोजनां दर्शयति—**अरुणेति**। गुणस्यामूर्त्तत्वात् क्रयभावनायोग्यता नास्तीति शङ्कते—**न चेति**। समाधत्ते—**द्रव्येति**। गोद्रव्यपरिच्छेदद्वारा भावनान्वयोपपत्तेः। परिच्छेद्यपरिच्छेदकभावसम्बन्धोऽत्रेति बोध्यम्। द्रव्यं परिच्छेद्यं गुणश्च परिच्छेदक इति। **अतएवेति**। परिच्छेद्यद्रव्याकाङ्क्षायां गोद्रव्यस्य तथा परिच्छेदकगुणाकाङ्क्षायामारुण्यस्य चान्वय इति। **पाष्ठिकान्वय इति**। पश्चाद्भावेनान्वय इत्यर्थः। **तेनेति**। पाष्ठिकान्तयेनेत्यर्थः। **तृतीयाश्रुत्येति**। तृतीयाविभक्तिश्रुत्येत्यर्थ। **श्रौतोऽङ्गत्वबोध इति**। श्रुतिप्रमाणेनाङ्गत्वमित्यर्थः **यद्यपीति**। प्रकृतया मत्वर्थो लक्ष्यते तृतीया विभक्त्या च मत्वर्थस्य क्रयकरणत्वं प्रतिपाद्यते। तथा च वाक्ययोजना—**अरुणेति**।

**तदापीति**। मत्वर्थलक्षणायाः पूर्वमेव अरुणया क्रीणाति इत्यनेनैव वाक्येन क्रयभावनां प्रति करणं गुणं इत्यापाततः बोधो भवति। **स इति**। तृतीया-विभक्तिप्रतिपादितस्तादृशो बोधः न पश्चादपि बाध्यते। अतएवाविहित-श्रोताङ्गत्वव्यवहार इति। अर्थाद्विहितत्वाभावेऽपि श्रौतत्वमिति यावत्। क्रीणातीत्यनेन क्रयकरणिका भावना बोध्यते विधिपदेनैकेन बोधद्वयस्वीकारे विधेरावृत्तिरावश्यकी विधेश्चावृत्त्या वाक्यभेदः प्रसज्येत। अतएव शङ्कते—**न चेति**। समाधत्ते—**द्रव्यगुणयोरिति**। न विधिरावर्त्तते अपि तु क्रयाङ्गत्व-बोधकं विध्यन्तरं कल्प्यते। अतो वाक्यभेदाभावात् प्रमाणयति—**सर्वे-ष्विति**। 'सोमेन यजेत' इतिविशिष्टविधिषु सर्वत्रैवमेव गुणस्य धात्वर्थाङ्गता सम्पादनार्थं विधिरावर्त्तत इति न विध्यावृत्तिलक्षणवाक्यभेद इति। प्रकारान्तरं दर्शयति—**अथवेति**। श्रुतस्यैक विधेरनेकत्र तात्पर्यकल्पने एकस्यैव वाक्यार्थस्य सम्पन्नत्वान्न विध्यावृत्तिप्राप्तिरिति। उपसंहरति—**तस्मादिति**। सर्वत्र विशिष्टविधिष्वनेनैव प्रकारेण द्रव्यगुणादीनां श्रौतो धात्वर्थाङ्गत्वबोधो भवतीति। 'ग्रहं सम्मार्ष्टि' इत्यत्रापि ग्रहगतद्वितीया-श्रुत्या सम्मार्गस्य ग्रहाङ्गत्वं भवतीत्यत आह—**एवमिति**। द्वितीयायाः कर्मत्ववाचित्वम्। **ग्रहैर्जुहोतीति**। अत्र ग्रहगततृतीयया हेतुत्वं प्रतीयते। 'सम्मार्ष्टि' इति विधिप्रतिपादितभावनाया ईप्सितकर्मत्वेन ग्रहस्य बोधः ततश्च वाक्यार्थ—ग्रहं भावयेदिति। **यस्त्विष्टहेतुत्वेनेति**। यत्र च द्रव्यस्य ज्ञानमिष्टहेतुत्वेन न जातम्, तत्र द्वितीयाविभक्त्या कर्मत्वेन प्रतिपादित-त्वेऽपि विधिपदेनाभीप्सितत्वादपि 'तथायुक्तं चानीप्सितम् इत्यनेनानीप्सित-कर्मत्वमेव बोध्यते। उदाहरति—**यथेति**।' सक्तून् जुहोतीति। वाक्यमिदं ज्योतिष्टोमप्रकरणे पठितम्। अत्र सक्तूनां फलवत्ता वाक्यान्तरेण ज्ञायते। अतएवानीप्सितत्वादेव तेन सूत्रेण कर्मत्वं भवति। वाक्यार्थयोजनां दर्शयति—**सक्तुकर्मकेनेति**। निर्गलतार्थं वक्तुमाह—**तेनेति**। ईप्सितानी-प्सितोभयोर्बोधात् कर्मत्वमात्रं द्वियीयार्थः। न तद्विशेष इति मिश्रमतम्।

न्यायसुधाकृन्मतमुपस्थापयति—**राणके त्विति**। अत्र तुपदेनानीप्सित-कर्मत्वं वारयति। ईप्सितकर्मत्वमेव द्वितीयाविभक्तेर्वाच्चार्थः। अनीप्सित-कर्मत्वस्य न तृतीयावाच्यता, अपि तु तत्र लक्षणयाबोध इति। **तन्मते इति**। न्यायसुधाकृन्मते सक्तूनामपीप्सितकर्मत्वं करणत्व वा लक्षणयैव बोध्यते, नाभिधयेति। ग्रहगता द्वितीया ईप्सितकर्मत्वमेव बोधयति तत्त्वेनान्वयोऽपि जायते सम्मार्गस्य च करणत्वेनान्वयः। अतः। सम्मार्गेण ग्रहं भावयेदि'ति वाक्यार्थः सम्पद्यते। उत्पाद्यत्वप्राप्यत्वविकार्यत्वसंस्कार्यत्वरूपेषु कर्मत्वेषु

कीदृशं कर्मत्वं ग्रहे वर्त्तते इति प्रतिपादयति—**ग्रहस्येत्यादिना**। न ग्रह उत्पाद्यते, उत्पन्नत्वात्तस्य। न वा प्राप्यते, अप्राप्तत्वाभावात्। न वा कस्यापि विकारभूतः। अतः परिशेषात् संस्कार्यत्वमेव कर्मत्वमत्र बोध्यम्। तस्यैव विहितत्वात्। अतएव सम्मार्गक्रियां प्रति संस्कार्यत्वरूपं कर्मत्वं ग्रहस्येति। ग्रहशब्दार्थेऽपि मतभेदोऽनयोरिति। तद्दर्शयितुमाह—**ग्रहशब्द इति**। तत्र मिश्रमते सोमरससंरक्षणायोलखलाशरपात्रविशेषवचनः ग्रहशब्दः। तदर्थञ्च 'गृह्यते सोमरसोऽस्मिन्निति' व्युत्पत्तिरपि दर्शयति। एतेषां मते सम्मार्गोऽपि दशापवित्रकरणकः पात्रसंस्काररूप इति। दशापवित्रशब्दस्य वास्तवखण्डवाचकः। न्यायसुधाकृन्मतमुपस्थापयति—**राणके त्विति**। तुपदं मिश्रमतं वारयति। एतन्मते ग्रहशब्दः सोमरसवचनः। गृह्यत इति ग्रह इति कर्मव्युत्पत्तिः। सोमरसग्रहणकाले ग्रहस्यवहिर्लग्नविप्रुषां बिन्दूनां प्रोञ्छनरूपः संस्कार एव सम्मार्गपदेनोच्यते। सम्मार्गस्य ग्रहाङ्गत्वं श्रौत एवेति प्रतिपादनायाह—**एवञ्चेति**। तदङ्गत्वं ग्रहाङ्गत्वमिति। विधिबोध्यत्वाद् विनियोगस्य श्रौतत्वम् सम्मार्गश्च संस्काररूपः। अनेनैव प्रकारेण 'स्रुचः सम्मर्ष्टि' 'व्रीहीन् प्रोक्षति' इत्यादावपि द्वितीयाश्रुत्या तदङ्गत्वमिति प्रतिपादयितुमाह—**एवमिति**। 'मैत्रावरुणाय दण्डं प्रयच्छती'त्यत्र च चतुर्थीविभक्तिश्रुत्या दण्डकर्मकं दानं मैत्रावरुणाङ्गमिति प्रतिपादयति - **एवमित्यादिना**। चतुर्थ्या मैत्रावरुणगतं सम्प्रदानत्वं प्रतिपाद्यते। 'चतुर्थी सम्प्रदाने' इत्यनेन सम्प्रदानेऽर्थे चतुर्थीस्मरणात्। पुरुषः स्वदानकर्मणा यमभिप्रैति स सम्प्रदानम्' इत्यनेन सम्प्रदानसंज्ञाविधानात्। तेन सम्प्रदाने चतुर्थी विधाने न तस्य मैत्रावरुणस्य प्राधान्यं बोध्यते। अनेन मैत्रावरुणः प्रयोजनवानिति गम्यते' दण्डदानञ्च मैत्रावरुणार्थमिति विधिना ज्ञायते। यत्र तावत् सम्प्रदानस्य निष्प्रयोजनवत्ता प्रतीयते तत्र क्रियायास्तादर्थ्यमपि न बोध्यते इत्यत आह—**यत्रेति**। उदाहरति—**वेदविदे इत्यादिः**। अत्र सम्प्रदानस्य प्रयोजनवत्त्वाभावात् क्रियायाः तादर्थ्याबोऽपि। तादार्थ्यान्मैत्रावरुणे दानविधेः युक्तत्वमुपपादयति—**अत्रत्वित्यादिना**। 'मैत्रावरुणः प्रेष्यति इत्यादिना प्रैषानुवचनरूपस्व प्रयोजनस्य ज्ञानं जायते तथा 'दण्डो प्रैषानन्वाह' इत्यनेन च दण्डापेक्षत्वं ज्ञायते। **तस्माद युक्त इति**। दण्डदानं प्रति अनीप्सितकर्मत्वं दानस्येति **एवमिति**। अत्र तृणोपचयस्याग्न्यर्थमिति। अत्राग्नेरबहिःपातरूपसंस्कारो मन्यते तृणोपचयेन। स एव चाग्न्यापादकः। अतएव च विधिवाक्यं तृणोपचयस्य तादर्थ्यमग्न्यर्थमिति बोधयति। एवमेव 'आहवनीयं जुहोति। इत्यत्राहवनीये इति सप्तमीश्रुत्याहवनीयस्य होमाङ्गत्वं प्रतिपादयति—**एवमिति**। पूर्वप्रतिपादितविधिनेत्यर्थः।

कारकविभक्तेः कार्यद्वयं दृश्यते । तत्र स्वार्थप्रतिपादनं प्रथमं कार्यम् । तादर्थ्यबोधे विधेः सहायसम्पादनं द्वितीयं कार्यम् । कार्यद्वयसम्पादनादेव श्रुतिशब्देनोच्यते । ननु षष्ठ्याः कारकत्वाभावात् कथं श्रुतित्वेन व्यवहार इत्यत आह—**षष्ठी त्विति** । सम्बन्धसामान्यवाचकत्वं तस्याः । क्वचित्प्राधान्यमपि भजते क्वचिच्च गुणत्वमप्नोति श्रुतित्वेन व्यवहारस्तस्या अपि । षष्ठीश्रुत्या यत्राङ्गत्वं भवति तदुदाहरति—**दध्नेन्द्रियकामस्येति** । अत्र षष्ठीश्रुत्या इन्द्रियकामस्य प्राधान्यं तथा 'शुल्लानां व्रीहीणा' मित्यत्र षष्ठीश्रुत्यैव व्रीहिगतासाधनत्वं बोध्यत इति भावः । ननु प्रथमायाः कथन्न श्रुतित्वमित्यत्र आह—**प्रथमा त्विति** । 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' इत्यनेन प्रातिपदिकार्थमात्रेऽत्र प्रथमायाः सत्त्वान्न स्वतन्त्रश्रुतित्वम् । लक्षणनिरूपणपुरस्सरं श्रुतिं विभजते—**प्रकृत्यर्थगतेत्यादिना** । अभिधात्रीं लक्षयति—प्रकृत्यर्थगतं यल्लिङ्गसंख्या तस्याभिधायका या श्रुतिः साभिधात्री शब्देनोच्यते । यथा 'व्रीहिभिर्यजेत' इति । अत्र व्रीहिगतं यल्लिङ्ग संख्या वा तस्याभिधायिका तृतीयाश्रुतिर्वर्त्तते । अभिधात्रीत्वमुपपादयति—**अभिधायको हीति** । सर्वेषां शब्दानां गुणत्वेन प्राधानान्येन वात्र स्वार्थबोधकता दृश्यते । बोधकत्वमभिधायकत्वं वानर्थान्तरम् । विधात्रीं लक्षयति—**एवमिति** । लिङादिनां विधायकत्वं सिद्धम् । कर्माणि काले पुरुषे च कस्य गुणत्वं कस्य वा प्रधानत्वमिति या बोधयति, सा विधात्री श्रुतिरिति । यथा 'यजेत' इत्यादिः । एकपदश्रुतिं लक्षयति—**एवमिति** । एकस्मिनेव पदे प्रकृत्यर्थप्रत्ययार्थयोः गुणत्वप्रधानत्वबोधिका या श्रुतिः सा एकपदश्रुतिरिति । यथा—'**पशुना यजेत**' इत्यादि । एकपदश्रुत्या पशोः यागाङ्गत्वम् । एकाभिधानश्रुतिं लक्षयति—**एवमेकप्रत्यये इति** । एकप्रत्यार्थभूतयोः शाब्दभावनार्थभावनयोः गुणप्रधानबोधिका श्रुतिरेकाभिधान श्रुतिरिति । यथा—'पशुना यजेत' इत्यत्रैवैकत्वपुंस्त्वयोः कारकाङ्गत्वं भवति, समानाभिधानश्रुतेः । ननु देवस्यत्वेत्यादौ कथं श्रुतित्वमित्यत आह—**देवस्य त्वेति** । देवस्य त्वेत्यादौ इतिकरणेन श्रुतित्वं तथा अभिक्राययित्यादौ णमुल्प्रत्ययेन श्रुतित्वमवगम्यते । मतमिदं न्यायसुधाकृतः । मिश्रमतेऽत्र वाक्यीपेन अर्थात् वाक्येन विनियोजकेन प्रयाणेन विनियोगः, न श्रुत्याभिहितो विनियोग इति ।

श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणि विनियोजकानि षट् प्रमाणानि भवन्ति । तत्र श्रुतिनिरूपणानन्तरं प्रसङ्गप्राप्तत्वाल्लिङ्गप्रमाणं निरूपयितुमुपक्रयते—**लिङ्गमिति** । लिङ्गं सामर्थ्यमिति । सामर्थ्यञ्च

शक्तिरिति। अतएवोक्तम्—'सामर्थ्यं सर्वभावनां लिङ्गमित्यभिधीयते इति। तच्च द्विविधम्—अर्थगतं शब्दगतञ्चेति। **तच्चेति**। लिङ्गञ्चेत्यर्थः। यथा श्रुतेरन्यानपेक्षविनियोजकत्वं न तथा लिङ्गस्य। लिङ्गप्रमाणं पूर्वं श्रुतिः कल्पयति। तदनन्तरं श्रुत्या विनियुज्यन्ते पदार्थाः। अतः यावल्लिङ्गं श्रुति कल्पयति तावच्छ्रुतिः शीघ्रमेव विनियोजयति अतएव च लिङ्गप्रमाणापेक्षया श्रुतेः प्राबल्यम्। लिङ्गस्य च श्रुत्यपेक्षया दौर्बल्यं भवति। उदाहरति—**यथेति**। स्त्रुवेणावद्यति' 'स्वधिनावद्यति' 'हस्तेनावद्यति' इत्यवदानबोधक त्रीणि वाक्यानि सन्ति। एतेषां त्रयाणामप्यवदानबोधकत्वेऽपि न सर्वेषां सर्वत्र प्रवृत्तिः अपि तु सामर्थ्यमालोच्यैव स्वशक्त्यनुसारमेव प्रवर्त्तते। अतएवोक्तं **द्रवं मांसं कठिनमिति**। द्रवपदार्थावदाने यथा स्त्रुतस्य सामर्थ्य न तथा मांसावदाने। एवमेव स्वधितेर्यथा मांसावदाने सामर्थ्यं न तथा द्रवाद्यवदाने। एवमन्यत्रापि बोध्यन् अभिधात्रीं श्रुतिमिति। एवं सामर्थ्यं दृष्ट्वा अभिधात्रीं श्रुतिं कल्पयति। ततश्च स्त्रुवादीनां द्रवाद्यवदानेऽङ्गत्वं बोधयति विधिरिति। शब्दगतं सामर्थ्यं प्रतिपाद्यर्थिगतं सामर्थ्यमुदाहरति—**एवमित्यादिना**। वेदाध्ययनसिद्धमेव ज्ञानमनुष्ठाने प्रयुज्यते। **ज्ञानमन्तरेणेति**। वैदिकवाक्यार्थज्ञानं विनेत्यर्थः। **अनुष्ठानशक्तेः** वैदिकयागादिकर्मानुष्ठानेऽसामर्थ्यमिति सामर्थ्यमलोच्य शक्तेरालोचनं कृत्वेत्यर्थः। ज्ञात्वा अर्थमनुतिष्ठेदिति विधात्रीं श्रुतिं कल्पयति। अनेन प्रकारेण ज्ञानस्य यागादिकर्मानुष्ठानाङ्गत्व बोध्यते। तेनेति। 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधिसिद्धमेव वैदिकवाक्यार्थज्ञानं यागादिकर्मानुष्ठानाङ्गमिति सिद्ध्यति, नान्यथेति। अध्ययनविधिं परित्यज्य येन केन प्रकारेण कृतं वेदार्थज्ञानं नानुष्ठानसाधकमिति। तेन कृतमप्यकृतमेव स्यादिति सर्वमधिकारविधिनिरूपणेन्यायप्रकाशेऽभिहितमापदेवेनेत्यर्थः। अध्ययनस्य फलं दर्शयति—**अध्ययनस्येति**। वाक्यार्थ ज्ञानमेव फलम्। वाक्यार्थज्ञानञ्च मीमांसाशास्त्रेणैव भवितुमर्हति। अतः मीमांसाशास्त्रज्ञानपूर्वकं वेदाध्ययनमेवानुष्ठानोपयोगि इति मन्तव्यम्। **वक्ष्यत इति**। अग्रे रति शेषः। न चोपनिषदा आत्मज्ञानमेव जायते, न कर्मानुष्ठानज्ञानम्, तत्र श्रुत्यादिकल्पनमित्यत आह—**एवमित्यादि**। अयं भावः—'अविनाशी वा अरेऽयमात्मा' इति वाक्यमिदं बृहदारण्यकोपनिषदि आत्मनः नित्यत्वप्रतिपादनप्रसङ्गे दृश्यते। अनेनात्मनः कर्त्तृत्वभोक्तृत्वादिकञ्च प्रतिपाद्यते। सामर्थ्यादेव अर्थात् लिङ्गज्ञानादेव तादृशात्मज्ञानमैहलौकिकपारलौकिकफलजनकयागादिकर्मानुष्ठानाङ्गमिति ज्ञायते। तत्कममित्यत आह—**तादृशात्मज्ञानमिति**। लिङ्गप्रमाणबलेन कर्त्तृत्वभोक्तृत्वादिसम्पन्नमात्मज्ञानं कृत्वा

कर्माणि कुर्वीत इति श्रुतिः कल्प्यते तदनन्तरञ्च विनियुज्यत इति। कर्मानुष्ठायात्मज्ञानं कथमावश्यकमित्यत आह—**तादृशात्मज्ञानं विनेति।** कर्त्तृत्यभोक्तृत्वनित्यत्वादिकमात्मनः पूर्वमेव ज्ञायते। ततश्च तद्भोगसम्पादनाय तत्तत्फलसम्पादककर्मानुष्ठानं भवति अयं भावः—अनुष्ठितो यागः त्वरितमेव विनश्यति, यजमानस्तु तिष्ठति। नानेन शरीरेण स्वर्गफलभोगसम्भवः। शरीरान्तर यावत् नैव यागः स्थास्यति। ततश्च यदा फलभोगसम्भवस्तदा तत्करणीभूतयागाभावः यदा च यागस्तदाफलभोगासम्भवः। तदर्थं यजमानशरीरे शरीराद्भिन्नः नित्य आत्मा वर्त्तत इति ज्ञानभावश्यकम्। यागे विनष्टेऽपि तज्जन्यः कश्चदतिशयो भवति। स च यजमानात्मनि आफलं तिष्ठति समये च प्राप्ते फलं ददाति। तस्मात्कार्यकारणयोर्व्यतिरेकोऽपि न भवति। अतआत्मज्ञानभावश्यक कर्मानुष्ठानाय। **अनुष्ठानासम्भवादिति**। आत्मनः नित्यत्वज्ञानं विनानुष्ठानाभावात् निष्फलत्वादिति। एतावत्पर्यन्तं मिश्रगतमिति।

न्यायसुधाकृन्मतमुपस्थापयति—**राणके त्विति।** न्यायसुधायामित्यर्थः। अयमाशयः—'यदेवश्रद्धया' इत्यादिवाक्यं छान्दोग्योपनिषदि वर्त्तते। अत्र प्रयुक्तस्य विद्याशब्दस्यार्थज्ञानमर्थः। उपनिषच्छब्दस्य च लक्षणया तज्जन्यनित्यात्मज्ञान तत्प्रतिपाद्या च श्रद्धा यागादिकर्मानुष्ठानाङ्गमिति बोध्यतेऽनेन वाक्येन। **तत्तूपनिषदिति।** अङ्गत्वं त्वित्यर्थः **तद्विधेयोपासनादीति।** उपनिषद्गतेन वाक्येनोपासनादिकर्माङ्गत्वप्रतिपादनस्यौचित्यात् पुनः पूर्वकाण्डगतकर्माङ्गविधानाप्रतीतेः। **प्रतीतौ वेति।** पूर्वकाण्डगतकर्माङ्गप्रतीतावित्यर्थः। 'अतिशायने तमविष्ठवौ' इत्यनेन विहिततरप्प्रत्ययेन कर्मजन्यफलनिष्ठाअतिशयार्थ बोधो जायते। **तदकामैरिति।** कामनारहितैः पुरुषैः कर्मानुष्ठानाभावापत्तेरिति तथा चार्थज्ञानवतामेव कर्मस्वधिकार इति शास्त्रासिद्धान्तः। **तेन विरोध इति।** अदृष्टफलजनककर्मस्वेव श्रद्धाया अङ्गत्वम्। दृष्टफलजनककर्मसु नाङ्गत्वं श्रद्धाया इति। **तत्तुल्यानिर्देशादिति।** उभयोस्तुल्यत्वानित्यर्थः एवमर्थज्ञानस्यापि सर्वेषां कर्मणां प्रत्यनङ्गत्वापत्त्या उत्तरमीमांसायां वेदान्ते 'असार्वत्रिकी' इत्यत्रोद्गीथविद्याविषयत्वेनेयं श्रुतिः पठिता, न सर्वविधाविषयेति प्रतिपादितम्। अतः सर्वविद्यां प्रत्यनङ्गत्वं श्रद्धाया इति न युक्तमिति भावः। तस्मात्सामर्थ्यबलादेवार्थज्ञानात्मज्ञानयो कर्माङ्गत्वमिति मिश्रमतम्। **श्रद्धायास्त्विति।** 'अश्रद्धया हुतं दत्तमित्यातिस्मृत्याः सकलकार्याङ्गत्व प्रतीयते। सम्पूर्णोऽयं श्लोकश्चेत्थम्—

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थं न च तत्प्रेत्य नो इह ।। (गीता ७.२८)

दृष्टार्थेषु कर्मसु कथं तदुपयोग इत्यत आह—**नियमादृष्टसिद्धाविति** । शब्दगतं सामर्थ्यमुदाहरति—**यथेति** । 'बर्हिर्देवसदनं दामि' इति मन्त्रः दर्शपूर्णमासिप्रकरणे पठितः । प्रकरणपठितत्वात् दर्शपूर्णमासकर्मणा सहास्य सम्बन्ध इति प्रतीयते। ततश्चसम्बन्धज्ञाने जाते 'कथमनेनोपकर्त्तव्यम्' इति भवत्याकांक्षा । ततश्च बर्हिर्लवनबोधनसामर्थ्यमालोच्य 'अनेन मन्त्रेण लवनं प्रकाशयेत्' इति श्रुतिं कल्पयति । एतेन च प्रकारेण लवनाङ्गत्वमस्य मन्त्रस्येति ज्ञायते । एतज्ज्ञानं कथं भवतीत्याह—**लवनस्वरूपे चेति** । लवनस्वरूपप्रतिपादने मन्त्रस्य वैयर्थ्यापत्त्या दर्शपूर्णमासप्रकरणपठितत्वात् प्रकरणावगतयागसम्बन्धादेवं ज्ञायते । यदि क्रतुसम्बन्धिलवनं मन्त्रेण सम्पाद्यते तदैव क्रत्वमुत्पद्यते, नान्यथा । यागे च लवनं विहितं वर्त्तते । अतएव लवनाङ्गत्वं मन्त्रस्येति । **अतएवेति** । लवनाङ्गत्वादेव मन्त्रगतं लिङ्गं यागसामान्यसम्बन्धबोधयत्स्वयमेव सम्बन्धविशेषमपिबोधयति । **तत्रेति** । प्रकरणेऽस्मिन् बोधकं प्रकरणप्रमाणमेवेति । परन्तु नायं नियमः सार्वत्रिकः । क्वचित्समाख्ययापि बोध्यत इति भावः । उदाहरति **यथेति** । दार्शपौर्णमासिके यागानुमन्त्रणत्वेन समाख्याते काण्डे । 'पूष्णोऽहम्' पूषानुमन्त्रणमन्त्रः पठितः । तस्य च काण्डेति समाख्याबलेन यागेन सह सम्बन्धः ज्ञायते । ततश्च लिङ्गप्रमाणेन पूषदेवताकभागाङ्गत्वं तस्य मन्त्रस्येति सम्पद्यते । **तेनेति** । यत्र पूषदेवताको यागोऽनुष्ठीयते, तत्रैवास्य मन्त्रस्योपयोग इति । **क्वचित्त्विति** । क्रमं समाख्यां चापेय लिङ्गस्य विनियोजकत्वमपि दृश्यते । उदाहरति—**यथेति** । 'ऐन्द्राग्न' इत्यादिभिः मन्त्रैः कामेष्टयो विहिताः सन्ति । तत्सन्निधावेव काम्याज्यानुवाक्याकाण्डे इन्द्राग्न्यादिदेवताकानि याज्यानुवाक्यानि श्रुतानि एतानि च समाख्याबलेन काम्केष्टीनामङ्गानि । क्रमबलेन च प्रथमायाः प्रथममित्यादि ज्ञायते ततश्च लिङ्गबलाद् देवताप्रकाशनार्थत्वयस्य ज्ञायत इति । **समख्याभावे इति** । सन्देहः स्यादित्यग्रेणान्वयः । अग्निदेवताकमन्त्रद्वयमाग्नेयेष्टौ क्रमपाठेन पठितम् । तेन च इष्टयङ्गत्वं मन्त्रस्य ज्ञायते ततश्च लिङ्गप्रमाणेनाग्निदेवताप्रकाशको मन्त्रः पठितः । यावत्यः सामिधेन्यो विहिताः सन्ति, ततोऽधिका सख्या पूरणार्थं मन्त्रद्वयमिदं यागाङ्गभूतदेवताबोधकत्वेन याज्यानुवाक्यारूपं वेति सन्देहः स्यादिति । **ख च सन्देहः समाख्याबलेन**

निवार्यते । एवमेव क्रयाभावेऽपि ऐन्द्राग्नमाग्नेयश्च कर्मद्वयं क्रमेण पठितम् तत्रापि समाख्याप्रमाणबलेन ऐन्द्राग्नयाज्यानुवाक्यायप्रगलद्वयस्व याज्यानुवाक्यात्वं ज्ञातम् । लिङ्गप्रमाणेन च देवताबोधकत्वं ज्ञातम् । ततश्च प्रथमस्य द्वितीयं द्वितीयस्य च प्रथममिति व्यत्ययापत्तिः प्रसज्येय । सा च क्रमप्रमाणेन निराक्रियते । **तेनेति** । एतेन प्रकारेण क्रमस्य समाख्यायाश्चास्त्यपेक्षेत्युपपन्नः **एवं सर्वत्रेति** । एवमेवान्यत्रापि । सामान्यविशेषसम्पादनद्वारा अङ्गत्वबोधकत्वं भवतीति । **तच्चेति** । लिङ्गञ्चेत्यर्थः मुख्योर्थे । एव विनियोजकत्वं भवति न गौणेऽर्थे । गौणस्वरूपमाह—**मुख्यसादृश्यादिति** । **तेनेति** । मुख्मार्थप्रतिपादके एव मन्त्रविनियोग इति उदाहरति—**यथेति** । दर्शपूर्णमासयोः । कुशलवनभुलपलवनश्चोभे विहिते । तत्र 'वर्हिर्देवसदनम्' इत्यादिमन्त्रः मुख्यत्वात् कुशलवनाङ्गम्, नोलपलवनाङ्गमिति । कुत- । **कुशानामिति** । अतएव नोलपलवदाङ्गत्वमिति सिद्ध्यतीति ।

विनियोजकं लिङ्गप्रमाणनिरूपणानन्तरं प्रसङ्गप्राप्तवाद् वाक्यप्रमाणं निरूपयितुमुपक्रमते—**वाक्यं नामेति** । पदानां वाक्वानाञ्चैकवाक्यत्वमिति । न्यायप्रकाशे 'समभिव्यहारो वाक्यमिति' वाक्यं लक्षितम् । शेषशेषिणोस्सहोच्चारणमिति यावत् । **तच्चेति** । वाक्यञ्चेत्यर्थः । वाक्यं प्रमाणं लिङ्गं कल्पयति, लिङ्गञ्च श्रुतिं कल्पयति । ततश्श्रुत्या विनियुज्यते । अतो वाक्यं लिङ्गापेक्षया दुर्बलं लिङ्गञ्च वाक्यापेक्षयाप्रबलमिति बोध्यम् । तत्रादौ पदैकवाक्यतां दर्शयति—**तत्रेति** । जैमिनिसूत्रमत्रप्रमाणत्वेनोपस्थापयति—**सूत्रञ्चेति** । सूत्रेऽत्रार्थशब्दः प्रयोजनार्थक इति मिश्रमतम् । वाक्यार्थवाचकोऽर्थशब्द इति न्यायसुधाकारमतम् । पदैकवाक्यतयाङ्गत्रमुदाहरणेन स्पष्टमिति **त्रयो वेदा इति** । अत्र वेदस्तावकमर्थवादवाक्यमुपक्रम्य 'उच्चैरृचा क्रियते' 'इत्यादिना विहिता उच्चैस्त्वादये ऋगादिमन्त्रधर्माः पठिताः सन्ति । तत्र ऋगादिशब्दाः वेदावयस्य वाचकाः, न तु देवस्य वाचका इति । गौतमवचनमन्त्र स्मारयति—**मन्त्रब्राह्मणयोरित्यादिना** । गौतमधर्मसूत्रे सम्प्रति न दृश्यते सूत्रमिदम् । बौधायनवचनमन्त्रमन्त्रब्राह्मणमित्यादुः (बौ० गृ० २-६२, आम्नायः पुनर्मन्त्राश्च ब्राह्मानि [कौ० सू० १-३', मन्त्रब्राह्मयोर्वेदनामधेयम् (आपव्यपरिभाषा २४ १-३१) (कात्यायन प्रतिज्ञापरि० १.१) इति **समूहो वेद इति** । मन्त्रब्राह्मयोरिति शेषः वेदश्यैकदेशाध्ययनसम्पादने 'वेदमधीत्य स्नानादिति शास्त्रस्य चारितार्थ्यं न भवतीत्यत आह—**वेदमधीत्येति** । ननु वेदैकदेशेऽपि वेदशब्दप्रयोगो ।

दृश्यत इति शङ्कते—**यस्त्विति** । समाधत्ते—**स इति** । तादृशप्रयोगस्य वचाचित्कत्वाल्लक्षणया बोधः कर्त्तव्य इति । उपसंहरति ।—**तस्मादिति** । **ऋगादीति** । एतेशब्दा अवयववचनाः ऋचं लक्षयति—**यत्रेति** । यजुर्लक्षयति—**प्रश्लिष्टपठितमिति** । तत्र जैमिनिसूत्रं स्मारयति—**तत्रापीति** । अर्थस्तूक्तः पूर्वमेव । साम लक्षयति—**गानमिति** । तद्युक्तमित्यर्थः । **एवञ्चेति** । अर्थवादेन सह उच्चैस्त्वादिधर्मप्रतिपादकानां विधीनां नैकवाक्यता, भिन्नविषयत्वात् । विषयैक्येएकवाक्यतासम्भव इति । एकवाक्यताया आवश्यकतां दर्शयति—**भवितव्यतञ्चेति** । **वक्ष्याम इति** । अग्ने इति शेषः एकवाक्यासिद्ध्यर्थं यतते—**तदिति** । उभयोरेकतत्रलक्षणास्वीकार्येति । उपपादयति—**तत्रोपक्रमस्येति** । असञ्जातविरोधित्वन्यायेनेत्यर्थः । 'न वेदं ऋणुयाच्छूद्र.' इति । अनुपपत्त्यभावादिति । **तत्रैवेति** । ऋगादिशब्देके लक्षणया वेदरूपस्वार्थस्य ग्रहणम् । वाक्यार्थं योजयति—**ऋग्वेदेनेति** । क्रियत इतीति । तदर्थः प्रयुज्यतेऽनुष्ठाव्यत इति वा । एवमेव वेदान्तरोत्पन्नाङ्गानां वेदान्तरप्रयोगविधिनैव प्रयोग इत्यत आह—**तेनेति** । उदाहरति—**यथेति** । यद्यपि वारवन्तीयं साम सामवेदोत्पन्नं वर्त्तते तथापि यजुर्वेदप्रतिपादिताधानविधिनैवानुष्ठाप्यते । तस्मात् उपांशुखे कार्यम्, नोच्चैरिति । हेतुं दर्शयति—**प्रयोगे ह्रीति** । **एवञ्चेति** । विध्यर्थवादयोः यत्र पदैकलक्षणा भवति । तया च लक्षणया ऋग्वेदादिविहितेऽपि कर्माणि उच्चैस्त्वादिना कर्म कर्त्तुं शक्यमित्यादिना सामर्थ्यालोचनपूर्वकमुच्चैः कार्यमिति श्रुति कल्पयति । तया च श्रुतिकल्पनया उच्चैस्त्वादीनां कर्माङ्गत्वं प्रतिपाद्यते । **एवमित** । पूर्वोक्तप्रकारेणेत्यर्थः । **प्रजापतिरित्यादौ** । अत्रार्थवादस्थं दोषमुपक्रम्य 'यावतोऽश्वान्' । इत्यादिना प्रतिग्रहीतुः वरुणदेवताका इष्टिः श्रूयते । अत्रापि असञ्जातविरोधित्वन्यायेनोपसंहारस्थे 'प्रतिगृह्णाति' इति पदे णिजर्थलक्षणया 'प्रतिग्राहयेत्' इति पदकल्पनम् । ततश्च दानस्येष्टेर्निमित्तत्वं प्रसाध्यते । **अतश्चेति** । दातुरेवेयतिष्टिः, न प्रतिग्रहीतुरिति । उपपादयति—**तस्येति** । प्रतिग्रहीतुरित्यर्थः । णिजर्थप्रयोककर्तृकत्वादिति । णिजर्थकल्पनामुपपादयति—**तत्प्रयोजको हेतुश्चेति** । सूत्रम् । तदर्थश्च कर्त्तुः प्रयोजको हेमुसंज्ञः कर्तृसंज्ञश्च स्यादिति दीक्षितः । **तच्चेति** । दानमित्यर्थः । ज्योतिष्टोमादौ विहितमेव निमित्तं भवति । **ना लौकिकमिति** । अनेन लौकिकस्य निमित्तत्वं वारयति कुतः । **तन्निमित्तेऽप्रेदिति** । फलकल्पनाप्रसज्येतेति भाव **वैदिकत्वसामान्येनेति** । वैदिकत्वस्योभयसाधारणत्वाद् वैदिकेष्टिं प्रत्येवनिमित्तत्वेन वैदिकाश्वदानस्यैव शीघ्रोपस्थिकत्वात्, न लौकिकस्येति भावः । मिश्रमतमिदमिति ज्ञेयम् ।

न्यायसुधाकारमतमुपस्थापयति—**राणके त्विति**। 'प्रतिगृह्णीयात्' विधिः। तेन च विहितत्वान्निमित्तभूतं दानं विशेष्यत इति। **एवञ्चात्रेति**। विध्यर्थवादयोः यदैवाक्यता पूर्णमपि प्रतिपादिता। उभयोरेकवाक्यतया सम्पन्नवाक्येन वारुणेष्टेरश्वदानं प्रति निमित्तत्वं श्रूयते। तेन च लिङ्गश्रुतिकल्पनेन क्रत्वङ्गत्वं बोध्यते। वाक्यैकवाक्यतां लक्षयति—**वाक्यैकवाक्यता नाम इति**। **स्वार्थबोध इति**। स्वार्थप्रतिपादनद्वारा चरितार्थानां वाक्यानां पुनः परस्पराकांक्षावशेनान्वयः। स एवैकवाक्यता वाक्यैकवाक्यतेति। **उक्तञ्चेति**। तन्त्रवार्त्तिकेऽक्ताधिकरणे इति शेषः द्वितीये पादे पाठान्तरमपि दृश्यते—'अङ्गाङ्गित्वाद्यपेक्षया' इति। वाक्यैकवाक्यतयाङ्गत्वमुदाहरति—**यथेति**। आहवनीये जुहोतीत्यादीमनारभ्याधीतानां वाक्यानां 'स्वर्गकामो यजेत' इत्यादिना क्रतुविधिना सहैकवाक्यता भवति। तेन च लिङ्गश्रुतिकल्पनेन आहिताग्नेरेव कर्त्तुः क्रत्वङ्गत्वं ज्ञायते। **चातुर्मास्यप्रकरणपठितस्येति**। एवमेवात्रापि 'द्वयोः प्रणयन्ति' इति वाक्यस्य शाखान्तरपठितादाहवनीयात्' 'अध्वर्युप्रतिप्रस्थातारौ सहग्नी प्रणयतः' इत्यनेन वाक्यैकवाक्यता जायते। ततश्च वरुणप्रघाससाकमेधयोरपीदृशं प्रणयनमङ्गत्वेन बोध्यत इति। द्वयोरिति पदं व्याचष्टे—**द्वयोरित्यस्येति**। **तस्मादिति**। अत्रापि पर्वद्वयस्तावकार्थवादेन सहैकवाक्यता प्रतीयते। **तेनेति**। चातुर्मास्यति वैश्वदेवशुनासीयपर्वणोः गार्हपत्यादाहवनीये दार्शपौर्णमासिकमतिदिष्टं प्रणयनं कार्यमित्यर्थः। **मध्यमयोरिति**। वरुणप्रघाससाकमेधयोरित्यर्थः। अतिदिदिष्टं कार्यं सम्पाद्योत्तरवेद्यां दक्षिणविहारे च प्रणयनान्तरमनुष्ठेयमिति वाक्यैकवाक्यत्वेनैव ज्ञायत इति। तस्मादिषु वाक्यैकवाक्यतमाङ्गत्वबोध इति।

विनियोजकवाक्यप्रमाणनिरुपणानन्तरं प्रसङ्गप्राप्तत्वात्प्रकरप्रमाणं निरुपयितुमुपक्रमते—**साकांक्षेति**। परस्परसाक्षांक्षेत्यर्थः। भावनाया इत्यस्य प्रधानभावनाया इत्यर्थः। कथमित्याकांक्षेतिकर्त्तव्यताकांक्षेत्यर्थः। अर्थात् प्रयाजनिष्ठसाकाङ्क्षधर्मसन्निधौ दर्शपूर्णमासीयप्रधानभावनायाः या इतिकर्त्तव्यताकाङ्क्षा तत्प्रकरणमिति भावः। तथाहि—'समिधो यजति' इत्यादिप्रयाजेषु न किमपि फलं श्रूयते 'अतः किं भावयेदित्युपकार्याकांक्षा भवति' 'दर्शपूर्णमासाभ्याँ स्वर्गकामो यजेत' इति दर्शपूर्णमासवाक्येऽपि कथमित्युपकारकाकांक्षा भवति। इयमेवाकाङ्क्षा प्रधानभावनाङ्क्षाक्षेति। इदमेव च प्रकरणप्रमाणमित्यर्थः। न्यायप्रकाशे चोभयाङ्क्षाक्षा प्रकरणमित्युक्तम्। अङ्गप्रधानोभयनिष्ठपरस्पराङ्क्षाक्षाप्रकरणमित्यर्थः। तच्च

प्रकरणं द्विविधम्—महाप्रकरणमवान्तरप्रकरणञ्च । तत्र महाप्रकरणं लक्षयति——**सा चेति** । आङ्क्षा चेत्यर्थः प्रधानभावनाया इत्यस्य दर्शपूर्णमासादिप्रधानयागभावनाया इत्यर्थः । तन्महाप्रकरणमिति । अवान्तर-प्रकरणं लक्षयति—**अङ्गभावनाया** इति । अङ्गानां प्रयाजादीनां या भावना तस्या आङ्क्षा अवान्तरप्रकरणमिति । **तच्चेति** । प्रकरणञ्चेत्यर्थः । **वाक्यलिङ्गेति**—प्रकरणप्रमाणं वाक्यं कल्पयति, वाक्यञ्च लिङ्गं कल्पयति, लिङ्गञ्च श्रुतिं कल्पयतीति रीत्या प्रकरणं विनियोजकं भवति । अतएव वाक्यापेक्षयापि प्रकरणस्य दौर्बल्यमन्येषाञ्च प्राबल्यमिति । **तत्राद्यमिति** । महाप्रकरणमित्यर्थः उदाहरति—**यथेति** । **दर्शपूर्णमासाभ्यामिति** । स्वर्ग-कर्मिकाया इत्यनेन वाक्यार्थयोजनां दर्शयति—**तस्याः भावनाया इति**—कर्त्तव्यताविषयिणी कथंभावाकाङ्क्षा भवति, कथं भावयेदिति । **सन्निहिते-ष्विति** । सत्सन्निहितमेव 'समिधो यजति' इत्यादीनि वाक्यानि पठितानि सन्ति । तेषु च वाक्येषु न फलविशेषः श्रूयते । तस्य फलविशेषाकाङ्क्षा जायते । वाक्यार्थश्च 'समिद् यागेनेष्टं भावयेत्' इति । **एवमिति** । समिदादिप्रयाजवाक्यानां साकाङ्क्षाणां 'दर्शपूर्णमासाभ्याम् इति वाक्येनैक-वाक्यता भवति । ततश्चाङ्गभूतानां समिदादिप्रयाजानां प्रधानभूतेन दर्शपूर्णमासद्वयेन सहैकवाक्यताद्वारोपकारकत्वं सामर्थ्यञ्च—कल्प्यते । ततश्च 'एतैः प्रधानोपकारं कुर्यात्' इति श्रुतिं कल्पयति । ततश्च समिदादीनां दर्शपूर्णमासाङ्गत्वमिति ज्ञायते । **क्रियाया एवेति** । महाप्रकरणमिदं क्रियाया एव विनियोजकं भवति, न सिद्धस्य वस्तुनी विनियोजकमिति विशेषः । **मिश्रमते इति** । विधिप्रत्ययेन व्यापारात्मकभावनासामान्यं प्रतिपाद्यते । तत्रैव कथमित्यनेन भावनाविशेषविषयिणी जिज्ञासा जायते । अतः सामान्यस्य भेदको विशेषोऽपि स एव अर्थात् समान जातीय एव भविष्यति । तस्मात् भावनाविशेषोऽपि व्यापारात्मकभावनैव भवितुमर्हतीति । अतएव क्रियाया एव विनियोजकमिदमिति भावः ।

**राणकमत इति** । अत्र न्यायसुधाकारमतमुपस्थापयति—एतेषां मते कथमित्यनेन यत्नरूपायाः भावनायाः अनुग्राहको व्यापार एवाकाङ्क्ष्यते । सिद्धं वस्तु नाकाङ्क्ष्यते । लौकिकोदाहरणेन प्रमाणयति—**लोके इति** । लौकिके वाक्ये व्यापारएवानुग्राहकत्वेनान्वेति । यथा 'कुठारेण छिन्द्यादि'ति वाक्यम्' छिदिक्रियात्र । वाक्यश्रवणानन्तरं 'कथं छिन्द्यात्' इति भवत्याकाङ्क्षा । तत्र 'हस्तेनोद्यम्य निपात्य' इतिक्रियाविशेषोऽन्वेति, न तु सिद्धं वस्तु इत्यादिः । हस्तस्यान्वयः कथमित्यत आह—क्रिया द्वारेणेति ।

सिद्धस्य वस्तुनः क्रियाद्वारान्वयो भवतीति। **यथेति।** उद्यमननियातनरूप-क्रिया द्वारा हस्तांऽन्वेति **तेनेति।** क्रियाद्वारेण सिद्धस्य वस्तुनोऽन्वयेनेत्यर्थः। एवमेव द्रव्यदेवतादीनामपि क्रियाद्वारैव प्रकरणग्राह्यता भवति। क्रियाविशेषे एवेतिकर्त्तव्यतात्वहार इति। सिद्धस्य वस्तुन इतिकर्त्तव्यतात्वं निवारयति—**न त्वित्यादिना। कर्त्तव्यताया इति।** कर्त्तव्यतायाः विशेष इति व्युत्पत्तिः अनया च व्युत्पत्या कथंभावाकाङ्क्षायां व्यापरिविशेषस्यैव ग्रहणं भवति। तस्यैवेतिकर्त्तव्यतात्वात्। क्रियाया एव प्रकरणग्राह्यतां प्रतिपादयति—**तेनेति।** तत्रापि न सर्वासां क्रियाणां ग्रहणमित्यत आह—**तत्रापीति।** आरादुपकारिकाया एव, न सन्निपत्योपकारिकाया इति। आरादुपकारिका च प्रयाजादिरूपा। **यस्या इति।** आरादुपकारिकायाः क्रियाया इति। सन्निपत्योपकारिकायास्त्विति। अवघातादिरुपायाः क्रियाया इत्यर्थः। **श्रुतिलिङ्गेति।** एभिरेव विनियोगसम्भवान्न प्रकरणप्रमाणेन ग्रहणमिति भावः। **द्रव्यादिस्वरूपे त्विति।** द्रव्यादिस्वरूपसम्पादने क्रियाया आनर्थक्यं स्यात्। अतः द्रव्यादिपदेनापूर्वसाधनता लक्ष्यते ततश्च तादर्थ्यात् क्रिया विधीयते। ततश्च वाक्यार्थयोजना—**अपूर्वसाधनमिति। राणके त्विति।** न्यायसुधायामित्यर्थः।

मिश्रमतमत्रोपपादयति—**मिश्रास्त्विति।** मिश्रमते सर्वासां क्रियाणां प्रकरणप्रमाणेनैव ग्रहणं भवति। श्रुत्यादिभिः षड्भिः प्रमाणैः सन्निपत्योप-कारिकायाः क्रियायाः द्रव्याद्यर्थत्वं प्रतीयते तथापि द्रव्यादिस्वरूपसम्पादने क्रियायाः वैयर्थ्यमेव, तत्स्वरूपस्य सिद्धत्वात्। अतः प्रकरणप्रमाणेन द्रव्यादीनां क्रत्वङ्गत्वं प्रतीयते। दर्शपूर्णमासाभ्यामिति विधिवाक्यस्येति-कर्त्तव्यताकाङ्क्षायां प्रयाजादिभिरदृष्टोपकारं कृत्वेत्यादिरूपेणान्वय दर्शितः। **इत्थमिति।** यद्यप्यवघातादीनां क्रत्वङ्गत्वं प्रतीयते तथापि व्रीहिस्वरूपसम्पादकत्वेन क्रत्वङ्गता नास्ति अपि त्वपूर्वसाधनत्वेनेति, तदर्थश्च लक्षणा स्वीकर्त्तव्या भवति **'इदञ्चेति'** प्रकरणप्रमाणञ्चेत्यर्थः। प्रकृतिष्वेव प्रकरणस्य विनियोजकत्वं भवति, न विकृतिषु। विकृतिषु सादृश्यादिना प्रकृतिवाक्यमुपमीयत इत्यत आह—**सौर्यादिवाक्येष्विति। उदाहरति—यथेति। उपमितेन चेति।** उपमितेन प्रकृतिवाक्येनेत्यर्थः। **त्र्यंशा भावनेति।** साध्यसाधनेतिकर्त्तव्यतारूपः त्र्यंशः। त्र्यंशेषु इति-कर्त्तव्यतांशो गृह्यते सौर्यवाक्य इत्यत आह—**तत्रेति।** इतिकर्त्तव्यता-काङ्क्षायामपि न सर्वेषां पदार्थानामाकाङ्क्षा अपि तूपकारकपदार्थाना-मेवेत्यत आह—**साचेति। प्रकृतौ त्विति।** प्रकृतियागे इत्यर्थः। **पूर्व पदार्थ-**

ग्रहणं पश्चादुपकारकल्पनमिति भावः। **सौर्यवाक्ये त्विति**। कथमित्याकाङ्क्षायामितिकर्त्तव्यताकाङ्क्षायामिति। सादृश्यज्ञानात् यथाग्नेय यागे उपकृतं तथैव विकृतिभूते सौर्यभागेऽप्युपकारान्वयः। ततश्च तत्साधवेन अर्थात् यागसाधनत्वेनान्वय इति। सौर्यवाक्यार्थं योजयति—**तेनेत्यादिना**। **एवमिति**। 'आग्नावैष्णवमेकादशकपालं निर्वपेत' इति वाक्यम्। अत्राग्निः विष्णुश्चेतिदेवताद्वयम्। एकादशकपालरूपं द्रव्यम्। यागेऽत्र दार्शपौर्णमासिकाग्नीषोमीयपुरोडाशयागस्य धर्मा अतिदिश्यन्ते। कुतः सादृश्यात् कथं सादृश्यमित्युच्यते—अत्राप्यग्निः सोमश्चेति देवताद्वयम्। अतो द्विदेवत्यत्वेन सादृश्यम्। पुरोडाशरूपञ्च द्रव्यमिति द्रव्यसाम्यमपि। एवमेव 'ऐन्द्राग्नमि' त्यादिष्वपि बोध्यम्। एवं सर्वेषु विकृतियागेषु प्रकृतियागगतधर्मा अतिदिश्यन्त इत्यत आह—**एवमिति**। अपूर्वपदार्थानां सन्निधौ पाठसम्भवेऽपि प्राकृतपदार्थग्रह्णानन्तरमेव तस्य ग्रहणं भवतीत्यत आह—**यत्रापीत्यादिः**। प्रकृतियागे प्राकृताः पदार्था उपकारं सम्पाद्य निराकाङ्क्षाः भवन्ति, विकृतौ च साकाङ्क्षाः। अतएवैतेषां विनियोजकं प्रकरणप्रमाणं न भवतीत्यत आह—**तत्र प्राकृता इति**। साकाङ्क्षत्वेऽप्यपूर्वधर्माणां प्रकरणस्य विनियोजकत्वं न भवतीत्यत आह—**अपूर्वधर्माणां त्विति**। क्वचित् प्रकृतियागाङ्गस्थाने विधीयमानं विकृतियागाङ्गमपि प्रकरणप्रमाणेन गृह्यत इत्यत आन—**यत्विति**। उदाहरति—**यथेति**। अयं भावः—सोमापौष्णमित्यत्राग्नीषोमीयपशुयागात् यूपसाधनीभूतखादिरत्वं प्राप्तम्, परन्तु तत्स्थाने 'औदुम्बरो यूपो भवति' इत्यनेनौदुम्बरत्वं विहितम् तथापि विहितमायौदुम्बरत्वं यूपस्वरूपे व्यर्थमिति कृत्वा साकाङ्क्षता तस्य विकृतियागस्य खादिरत्वं प्रति साकाङ्क्षत्वात् प्रकरणप्रमाणेन विनियुज्यते। 'पृषदाज्येनानूयाजान् यजति' इति पशुयागे प्रयाजमनूद्य प्राकृताङ्गानुवादेन वृषदाज्यं विधीयते तदपि प्रकरणप्रमाणेनैवेत्यत आह—**यदपीति**। तत्रैव हेतुमुपन्यस्यति **अनूयाजानामिति**। एषां केनेति साधनाकाङ्क्षायाः विकृतिविहितपृषदाज्यस्य च तदुपकाराकाङ्क्षायाः सत्त्वादिति। राणकमतमिदमिति दर्शयितुमाह—**राणके इति**। अत्रैव मिश्रमतं दर्शयितुमाह—**मिश्रास्त्विति**। अयं भावः—अनुयाजसाधनीभूतस्याज्यस्य प्राप्तत्वात् विकृतेर्निराकाङ्क्षत्वेन पुनश्च पश्चाज्ज्ञातस्य दधिमिश्रत्वरूपस्य पृषत्तागुणस्य विधीयमानत्वेऽपि न प्रकरणप्रमाणेन ग्रहणं भवतीति। प्राकृताङ्गमनूद्य विहितयोरङ्गयोर्मध्ये विहितमप्यपूर्वं प्रकरणप्रमाणेनैव गृह्यत इत्यत आह—**यदपीति**। उदाहरति—**यथेति**। 'वैश्वदेवी साङ्ग्रह्णीम्' इत्यनेन विश्वेदेवदेवताकग्रामफलकसाङ्ग्रह्णीसंज्ञकयागो विधीयते। अत्रेष्टिकधर्माणामतिदेशो भवति। **तथा च**

प्रयाजानुयाजानुवादेन विहितयोर्धर्मध्येऽऽमनहोमाः विहिताः। ते चामनहोमाः साकाङ्क्षाः भवन्ति । ततश्च प्रयाजानानुयानरूपपूर्वोत्तरधर्मग्रह्णाया-नुवर्त्तमानया आकाङ्क्षया विकृत्या गृह्यन्त इति । अतो विशेषप्रतिबन्काभावे क्रियैकविनियोजकत्वमस्य प्रकरणप्रमाणस्येति बोध्यम् । तथैव च प्रकृतावेष विनियोजकमिदमिति ।

महाप्रकरणनिरूपणानन्तरं प्रसङ्गप्राप्तत्वादवान्तरप्रकरणं निरूप्यते—**अङ्गभावनाया इति ।** प्रयाजाद्यङ्गभावनायाः कथंभावाकाङ्क्षावन्तरप्रकर-मिति । न्यायप्रकाशे 'फलभावनाया अन्तराले' इत्यप्यादावधिकं वर्त्तते । अतः फलभावनाया अन्तराले यदङ्गभावनायाः प्रकरणमित्यर्थः सम्पद्यते । ननु प्रयाजाद्यङ्गेषु कथंभावाकाङ्क्षाभावात् कचमङ्गभावनायाः कथं-भावाकाङ्क्षा प्रकरणमिति सङ्गच्छत इति चेत् । न भावनात्वसामान्येन सर्वत कथंभावाकाङ्क्षायाः विद्यमानत्वात् । अवान्तरप्रकरणं केषां ग्राहकमित्यत आह—**तदवाचनिकानामिति ।** वाचनिकानां अर्थात् वचनरूपेण पठितानां वचनेन पठितानां वा । उभयोर्मध्ये पठितत्वात् सन्देशपठितशब्देन व्यप-दिश्यते । यथा अभिक्रमणम् । 'समानयत उपभृत' इत्यनेन प्रयाजमनूद्य किञ्चिदङ्गं विधाय विधीयते ततः पश्चादपि प्रयाजमनूद्य 'यो वै प्रयाजानां मिथुनं वेद' इत्यादिना किञ्चिदङ्गं विधीयते । अतश्चोभयोः प्रयाजाङ्गमध्ये पतिमभिक्रमणं प्रयाजाङ्गं भवतीति । सन्देशलक्षणञ्चोक्तं न्यायप्रकाशे—एकाङ्गानुवादेन विधीयमानयोरङ्गयोरन्तराले विहितत्वं सन्देशत्वमिति । अभिक्रमणमेव चोदाहृतम् । उभयोः प्रयाजाङ्गयोर्मध्येऽभिक्रमणस्य विहितत्वात् । **तदभावे** तद्वाचनिकाद्यभावे । **स्मार्त्तचयनादमिति ।** ग्राहकमिति शेषः । विजातीयव्यधानादवान्तरप्रकरणग्राह्यतापि भवतीति दर्शयति—**क्वचित्त्विति ।** उदाहरणेन स्पष्टयति—यथेति । दर्शपूर्णमासप्रकरणे पञ्च सामिधेन्यो विहिताः । ततश्च त्रिः प्रथमामन्वाह इत्यनेन तद्गतो गुणो विहितः । ततः 'देवेद्धोम' इत्यादयो निविन्मन्त्राः पठिताः सन्ति । ततश्चपुनः 'एकविंशतिम्' इत्यादिना सामिधेनीकल्पाः विहिताः । ततः 'उपव्ययते' इत्यनेन यज्ञोपवीतं विहितम् 'ततः' अन्तरानूच्य इत्यनेन तद्गुणो विहित इति वस्तुस्थितिः । अत्र सामिधेनीगुणयोर्मध्ये उपनीतस्य विहितत्वेन सन्दंशन्यायेनावान्तरप्रकरणग्राह्यता प्राप्तापि न भवतीति भावः । हेतु-मुपन्यस्यति—**निविदिति ।** मध्ये विजातीयनिविन्मन्त्रेण व्यवधानादिति । नावान्तरप्रकरणग्राह्यतेति भावः । **ते हीति ।** निविन्मन्त्रा हि । एते मन्त्राः **सामिधेनीवद्** दर्शपूर्णमासस्यैवाङ्गम्, न तु सामिधेनीं प्रत्यङ्गता अस्येति

कथयति—**सोमिधेनीवदिति** । उक्तञ्चेति--जैमिनिनेति शेष: । **गुणानाञ्चेति** । परार्थत्वात् । प्रधानोपकारसम्पादकत्वात् प्रधानार्थत्वादिति । असम्बन्धः परस्परमसम्बन्ध अर्थात् गुणानां परस्परं सम्बन्धो न भवतीति । कुत: । समत्वात् । गुणानां समानार्थत्वात् । समप्रयोजनत्वादिति यावत् । अयं भावः—यथा लोके सर्वे सेवका: राजानमेव सेवन्ते, सर्वेषां तदर्थत्वात् । न सेवकेषु परस्परं सेव्यसेवकभावस्तथैवेति । **तेनेति** । एतादृशन्यायस्य सत्त्वेनेत्यर्थ: । महाप्रकरणबलेनोपवीतं दर्शपूर्णमासाङ्गमिति । शङ्कते—**न चेति** । सामिधेनीकल्पानां तत्सदृशानाम् । फलार्थानां फलमेवार्थः प्रयोजनं येषां तेषां तेषामित्यर्थः । कथंभावाकाङ्क्षेतिकर्त्तव्यताकाङ्क्षा । तयैवोपवीतस्य ग्रहणम् । समाधत्ते—**तेषामिति** । सामिधेनीकल्पानामित्यर्थ: । क्लृप्तः सम्पन्न उपकारो येषाम्, तेषां प्राकृताङ्गानां निराकाङ्क्षत्वात् । सामिधेनामाश्रित्य सख्या न विधीयत इत्यत आह—**अत्र हीति** । हेतुं दर्शयति—**निविदिति** । विजातीयेन तेन व्यवधानादिति । निमित्ताभावेन प्रकरणप्रमाणप्रवृत्त्यभावात् । वाक्येन विनिपुज्यतामिति चेदाह—**वाक्येनेति** । वाक्यभेदसम्भवात् । तर्हि कथं संख्या विधोयत इत्यत आह—**किन्त्विति** । अनुवचनान्तराणि एतद्भिन्नान्यनुवचनानीत्यर्थ: । **तानि चेति** । अनुवचनान्तणमोति । संख्यायुक्तानुवचनत्वरूपो धर्मः सामान्यरूपेणोभयत्र तिष्ठतीति । निराकाङ्क्षाणि आकाङ्क्षारहितानि । नैवोपवीतग्राहकाणि भवन्तीति । येषां प्राकृतेन सह नास्ति सम्बन्धस्तेषामनुवचनानां बहिः प्रयोगं शङ्कते—**न चैवमिति** । समाधत्ते—**अनुशब्दार्थस्येत्यादिना** । 'नमः प्रवक्त्रे' इति निगदमन्त्रानन्तर्यमनुशब्दार्थ इति मिश्रमतम् । 'अग्नये समिध्यमानयो इति प्रैषानन्तर्यमिति न्यायसुधाकारमतम् । उभयमितेऽतिदेशप्राप्तस्य बहिःप्रयोगस्यासम्भवात् । **निगदपैषयोरिति** । उभयोः दर्शपूर्णमासाङ्गत्वं प्रसिद्धम् । अतएव सामिधेन्यनुवचनद्वारा न तयोः प्रयुक्तिरिति। अतएवान्तःप्रयोगमेवैषामिति । प्रतिपादयति—**तेनेत्यादिना** । अन्तःप्रयोगमेव, न बहिःप्रयोगमिति । प्रयोगमिति । प्रयोगोऽनुष्ठानम् । महाप्रकरणबलेनोपवीतस्य दर्शपूर्णमासाङ्गत्वमेवेति सम्पादयति—**तेनेत्यादिना** । निविन्मन्त्रैः सामिधेनीकल्पैश्च सामिधेनीनां प्रकरणस्य विच्छिन्नत्वात् । उपवीतशब्दार्थविषयकमतभेदप्रदर्शनायाह—**इदञ्चेति** । उपवीतञ्चेत्यर्थः । वासोविन्यासेत्यादिराणकमतम् । त्रिवृन्नवतन्तुकं यज्ञोपवीतमेवोपवीतशब्दार्थ इति मिश्रमतम् । उपसंहरति—**एवञ्चेत्यादिनां** । विजातीयव्यवधानशहित्येऽवान्तरप्रकरणस्य विनियोजकत्वमिति । **संक्षेप इति** । विस्तरस्त्वन्यत्र द्रष्टव्य इति ।

—४०—

प्रकरणप्रमाणनिरूपणानन्तरं प्रसङ्गप्राप्तत्वात्स्थानप्रमाणं निरूपयितुमाह—**देशसामान्यमिति ।** देशोऽनुष्ठानदेशः । सामान्यं समानदेशवत्तेति । इदमेव लक्षणं न्यायप्रकाशेऽपि दृश्यते' । स्थानं क्रमश्चेत्यनर्थान्तरम् । स्थानं विभजते—**द्वेधेति ।** तत्स्थानमित्यर्थ । पाठदेशसामान्यमनुष्ठानदेशसामान्यमिति च प्रथमे पाठेन सहसदेशता द्वितीये चानुष्ठानेन सह सदेशता । आद्यं प्रथममित्यर्थः । विभजते—**द्वेधेति ।** यथासंख्यपाठरूपं सन्निधिपाठरूपञ्चेति । यथासंख्यपाठरूपं स्थानमुदाहरणेन स्पष्टयति—**तत्रेति ।** यथासंख्यसन्निधिपाठयोरिति । अयं भावः—समिधो यजति' इत्यादयः पञ्च प्रयाजाः भवन्ति । 'समिधः समिधोऽग्न' इत्यादयः मन्त्रा अपि पञ्चैव । तत्र यथासंख्यपाठात् प्रथमस्य प्रथमः द्वितीयस्य च द्वितीय इति क्रमेणात्वं सञ्जायते । संख्यामनतिक्रम्य यथासंख्यमिति । सन्निधिपाठं द्वितीयमुदाहरति—**'अग्नये' इत्यादिः ।** 'अग्नये कृत्तिकाभ्य' इत्यादिना नक्षत्रेष्टिविहिता । तत्सन्निधावेव 'अग्नये स्वाहा' इत्यानोपहोमाः विहिताः सन्ति । नक्षत्रेष्टिसन्निधौ पठितत्वादेवोपहोमानां ।

नक्षत्रेष्टयङ्गत्वं सिद्धयति अनुष्ठानसादेश्य स्पष्टयति—**ज्योतिष्टोम इति ।** ज्योतिष्टोमनाम्नः यागस्य चतुर्थं दिनमौपवसथ्यनामकम् । तत्रानुष्ठेयत्वेनोपाकरणादयः पशुधर्माः पठिताः सन्ति । तत्रैव यागे दीक्षाकालेऽग्नीषोमीयपशोरालम्भनं विहितम् 'औपवसथ्येऽहन्यालब्धव्य' इति वचनात् । तस्य पशोरग्निः सोमश्च द्वे देवते भवतः । अतएव स पशुर्द्विदेवताक इत्यर्थः । आलम्भनोपाकरणदीनामेकस्मिन्नेव चतुर्थेऽन्हि अनुष्ठीयमानत्वेन विहितत्वादनुष्ठानदेशसामान्यादुपाकरणादयो पशुधर्मा अनुष्ठेयपशोरङ्गमिति । स्थानप्रमाणं प्रकरणं कल्पयति । प्रकरणञ्च वाक्यम्, वाक्यञ्च लिङ्गाम् लिङ्गञ्च श्रुति कल्पयतीति रीत्या स्थानप्रमाणस्य विनियोजकत्वं सिद्धयतीति स्पष्टीकरणयाह—**अत्रोपहोमादीनामिति ।** तथाहि—यद्यप्युपहोमदीनां फलाकाङ्क्षा भवति । सा चाकाङ्क्षा प्रकृताङ्गफलेनैवोपशाम्यति तथापि विकृतीनां कथं भावाकाङ्क्षायां जायमानायां तदाकाङ्क्षारूपं प्रकरणप्रमाणं कल्प्यते । ततश्चोपहोमादिविधीनां विकृतिविधिना सहैकवाक्यतारूपं वाक्यप्रमाणं कल्प्यते । ततश्च फलवयुपकारकत्वरूपं सामर्थ्यापरचर्यायं लिङ्गप्रमाणं कल्प्यते ततश्चोपहोमादीनां निष्फलत्वं दृष्ट्वा 'एभिरूपमर्यात्' रति श्रुतिकल्पनम् । ततश्चाङ्गत्वबोध इति क्रमः । एवं प्रकारेण प्रकरणादिचतुष्टयकल्पनेन स्थाचप्रमाणस्य विनियोककत्वमिति भावः । श्रुतिप्रमाण्यस्य प्राथम्यात् श्रुत्यादीति कथनमुचितम् । कथं प्रकरणादीति कथमं सङ्गच्छत

इति चेदुच्चये—परिगणनप्रसङ्गे श्रुतिप्रमाणस्य प्राथम्येऽपि प्रमाणकल्पन-प्रसङ्गे विपरीतिक्रमाश्रयणमेवोचितमिति। दुर्बलप्रमाणं स्वपेक्षया प्रवल-प्रमाणपरिकल्पनद्वारैव प्रमाण्यं लभते। अतः स्थानं सर्वप्रथमं स्वापेक्षया प्रवबप्रमाणं प्रकरणमेव कल्पयति। अतएव प्रकरणादिचतुष्टयकल्पनेनेति कथनं सङ्गच्छत इति दिक्।

विनियोजकस्थानप्रमाणनिरूपणानन्तरं प्रसङ्गप्राप्तत्वात्समाख्या-प्रमाणं निरूपयितुमुपक्रमते—**समाख्येति**। यौगिकः शब्द इति यौगिकः शब्द इति। यौगिकशब्द एव समाख्यापदवाच्य इति। तां विभजते—**सेति**। द्विधा द्विप्रकारेत्यर्थः। लौकिकी वैदिकीभेदात्। आध्वर्यवादि समाख्या **लौकिकी**। समाख्यायः विनियोकत्वं कथमित्यत आह—**स्ववाच्येत्यदि**। समाख्या वाच्य इति। पदार्थानामध्वर्योश्च समानदेशवत्त्वरूपं स्थान प्रमाणं प्रकल्प्योपस्थितिं सन्निधिश्च कल्पयति। ततश्च सन्निहितयोरेकदेशस्थितयोः परस्पराकाङ्क्षारूपं प्रकरणप्रमाणकल्पना। ततश्चोभयोरेकवाक्यताकल्पन-रूपवाक्यप्रमाणकल्पनम्। ततो विनियोगसामर्थ्यकल्पना। सामर्थ्यमेव हि लिङ्गप्रमाणम्। ततश्च लिङ्गप्रमाणेन 'अध्वर्युरिमान् कुर्याद्' इति श्रुति-कल्पनम् तेन चाध्वर्योः तत्पदार्थाङ्गत्ववोध इति। एवं समाख्यायः विनि-योजकत्वमुपपद्यते। अतएव सर्वापेक्षया दौर्बल्पमस्या इति अनेनैव प्रकारेण हौत्रादिसमाख्या अपि विनियोकत्वं सिद्धयतीत्यत आह—**एवमिति**। **वैदिकीत्विति**। होतृचमस इति वैदिकी समाख्या। समाख्ययैव च चमसयद-वाच्यपात्रस्य सोमरसभक्षणं प्रति हौत्रादीनामङ्गत्वं सिद्धयति तत्कथमिति चेत्—उच्यते—**स्थानादिकल्पनद्वारेति**। स्थानप्रकरणवाक्यक्षिङ्गश्रुतकल्पन-द्वारेति भावः **इयञ्चेति**। समाख्या चेत्यर्थः न सम्वन्धसामान्यवाचिनी अपि तु सम्बन्धविशेषवाचिनीति **एषाञ्चेति**। श्रुत्यादिविनियोजकप्रमाणाना-मिति। परापेक्षया पूर्वेषां प्रावल्यं परेषाञ्च दौर्बल्यमिति। जैमिनिसूत्रञ्चात्र प्रमाणभूतम्—श्रुतिलिङ्गवाक्यप्रबकरणस्थानसमाख्यानां समवाये पार-दौर्बल्यमर्थविप्रकर्षात्' इति। परेषां दौर्बल्ये अर्थविप्रकृष्टत्वमेव हेतुः। श्रुत्यादीनां प्रावल्यमुदाहरति—**यथेत्यादिना**। 'ऐन्द्रया गार्हपत्यमुपतिष्ठते' इति मन्त्रः। भाष्यवार्त्तिकयोर्मतं दर्शयति—'निवेशनः सङ्गमनो, कदाचन स्तरीरसि' इत्यादिः। उभयोर्मते इत्यर्थः। इन्द्रोपस्थापकेनर्चा दर्शपूर्णमास-प्रकरणपठित्वाल्लिङ्गप्रमाणवलेनेन्द्राभिधायकत्वं प्राप्तम्। तथापि ऐन्द्रयेति तृतीयाश्रुतिवलेन गार्हपत्योपस्थापकत्वेनाङ्गत्वमिति। लिङ्गस्येति। अन्यान-पेक्षत्वात् श्रुतेः प्रावल्यम्, तथा श्रुतिकल्पनद्वारेण लिङ्गस्य प्रमाण्ये

दौर्बल्यमिति भावः। 'ऐन्द्री' इत्यत्र श्रुतिलिङ्गेनेन्द्रोपस्थापकत्वमस्य **मन्त्र-प्राप्तम्**, तथापि गार्हपत्यमितिद्वितीयश्रुत्या गार्हपत्योपस्थापकत्वेनाङ्गत्व-मिति। युक्तं प्रतीमः। 'स्योनं ते सदनं कृणोमि' इति मन्त्रोऽयं दर्शपूर्णमास-प्रकरणपठितः। अत्र पदैकवाक्यतारूप वाक्यप्रमाणेनपुरोडाशसदनविशिष्ट-सादनाङ्गत्वं प्रतीयते, परन्तु लिङ्गप्रमाणेन पूर्वभागस्य सदनप्रकाशकत्वे-नाङ्गत्वम्, उत्तरभागस्य च सादनाङ्गत्वप्रकाशकत्वेनाङ्गत्वमिति विभज्य-विनियोगः सम्पाद्यते, न सदनविशिष्टसादनाङ्गत्वमिति। कथं दौर्बल्यं वाक्यप्रमाणस्येति कथयति—**वाक्यस्येति**। लिङ्गश्रुतिकल्पनद्वाराविनि-योजकत्वात्। **एवमिति। हविष्कृदेहीति**। दर्शपूर्णमासप्रकरणपठितोऽयं मन्त्रः। अत्र वाक्यप्रमाणेनावघाताङ्गत्वं लिङ्गप्रमाणेन चाह्वानाङ्गत्वमिति। प्राप्तम् तत्र लैङ्गिह्वानेन वाक्यीयावघातो वोध्यते। आह्वयतीति लिङ्ग-प्राप्तमेवानूद्यते। त्रिरभ्यासमात्रविधायकत्वाद्वावयस्य **येषाँ त्विति**। इति-करणे श्रूयमाणेऽपि क्वचित् श्रौतावघाताङ्गत्वं न भवति। वाक्यस्य च त्रिरभ्यासविधायकत्वे वाक्यभेदप्रसाङ्गात्। तर्हि श्रुतिः किं करोतीत्यत आह—**लैङ्गिकाह्वनेति**। अनुवादिनी श्रुतिरिति भावः। **दर्शपूर्णमासयोरिति**। तत्र 'इन्द्राग्नी इदनि'त्यादिमस्त्रः। तत्रेन्द्राग्नीपदं वर्त्तते। तेन लिङ्गात् दर्शपूर्णमासाङ्गत्वमस्य प्रतोयते। इन्द्राग्नी' 'पदस्य' 'इदं हविः' इत्यनेनैक-वाक्यतारूपवाक्यप्रमाणेनापि दर्शाङ्गत्वप्रतीतिः। प्रकरणप्रमाणेन दर्शपूर्णमासाङ्गत्वमस्य स्यादित्यत आह—**न त्विति**। प्रकरणस्य दौर्बल्यं प्रतिपादयति—**प्रकरणस्येति**। वाक्यादित्रयेति। वाक्यलिङ्गश्रुतिरित्यर्थः। **अस्तीति। पशुसोमेति**। पशुयागसोमयागयोश्च तत्र सम्वन्ध इति। तमेवोप-पादयति—**अनुमत्याद्या इत्यादिना**। स चेति राजसूयश्चेति। फलायेति स्वाराज्यरूपफलायेत्यर्थः। तत्प्रकरणे राजसूयप्रकरणे। तत्रैव सोमयाग-सन्निधौ विदेवनादयो धर्माः पठिताः सन्ति। तद्विधायकानि वाक्यानि दर्शयति—**अक्षैरित्यादि। तेनेति**। सन्निधिपाठेनेत्यर्थः। सन्धिपाठस्थान-ञ्चापरयर्यायम्। अत्र स्थानप्रमाणेनाभिषेचनीयाङ्गत्वं प्रतीयते। प्रकरणेन च राजसूयाङ्गमिति। तत्र किं स्यादित्यत आह—**स्थानस्येति**। प्रकरणादि-चतुष्टयेति। प्रकरणवाक्यलिङ्गश्रुतिरित्यर्थः। राजसूयस्य प्रकरणमेव नास्तीति सङ्कते—**न चेति**। उपपादयितुमाह—**इष्टीनामिति**। कलृप्तः सम्पादित उपकारो येषां प्राकृताङ्गानाम्, तैरेव निराकाङ्क्षत्वात् समा-धत्ते—**राजसूयत्वेनेति**। वाचनिकानि वचनरूपेण पठितानि। कानीत्या-काङ्क्षायामाह—**राजसूयायेति**। तद्ग्रहाणयोत्पन्नया आकाङ्क्षयेति। 'तन्मध्ये पतितस्तद्ग्रहणेन गृह्यत इति न्यायादित भावः। **दर्शपूर्णमासयो-**

**रिति।** सान्नाय्यपात्रशुन्धनक्रमे 'शुन्धध्वमि' त्यादिः मन्त्रः श्रुतः। सान्नाय्य दधिपयसी। तत्र क्रमवलेन सान्नाय्यपात्रप्रोक्षणाङ्गत्वमस्य मन्त्रस्येति प्रतीयते। सयाख्यावलेन पुरोडाशपात्रप्रोक्षणाङ्गत्वमस्य निषेधति—**न त्विति। दौर्बल्यमुपपादयति—तस्या इति।** स्थानादिपञ्चकेति स्थान-प्रकरणवाक्यलिङ्गश्रुतिकल्पनेनेत्यर्थः। **एवमिति।** पूर्वोक्तप्रकारणेत्यर्थः। **बाध्यत इति।** कुतः। अर्थविप्रकर्षादिति। उपपादयति—**तद् यथेति। अरुणादिवाक्य इति।** 'अरुणया पिङ्गाक्ष्या एकहायन्या गवा सोमं क्रीणाति' इति वाक्यम् अत्र विहितस्यारुण्यत्रस्य लिङ्गवाक्याभ्यां श्रुतमप्येकहाय-न्यङ्गत्वं श्रुतिप्रमाणविहितेन क्रयाङ्गत्वेन वाध्यत इति तदपेक्षया श्रुतेः प्रावल्यादिति भावः। **ज्योतिष्टोम इति।** तन्नामके यागे इत्यर्थः। **तिस्त इति।** त्रिसंख्याका इत्यर्थः। सान्हशब्दं, व्युत्पादयति—**तत्राह्नेति।** अहीन-शब्दं व्युत्पादयितुमाह—**अहीनस्त्विति।** पाणिनीयं सत्रं स्मारयति—**अन्ह इति।** लिङ्गप्रकरणप्रमाणाभ्यां द्वादशोपसत्त्वस्य ज्योतिष्टोमाङ्गत्वं प्रतीयते, षश्ठीश्रुत्या च द्वादशाहाङ्गत्वमिति। श्रुत्यपेक्षयां लिङ्गादीनां दौर्बल्यात्तेषां बाध इति अतो द्वादशाहाङ्गत्वमेवोपसत्त्वस्येति। यदि त्र्युपसत्त्वस्य स्तुत्यर्थमिच्छन्ति तर्ठि किं स्यादित्यत शङ्कते—**यदा त्विति।** समादधाति—**तदेति।** उदाहरणान्तरं **दर्शयति—तत्रैवेति।** 'युवं हि स्थ' इति। अत्र यजमानद्वयस्य प्रतिपादकर्त्तव्यता वोध्यते। **ज्यौतिष्टोमिक इति।** अयमपि द्वियजमानकप्रयोगः। अत्रापि प्रकरणप्रमाणेन स्तोत्राद्या' ऋक् अङ्गमिति प्रतीयते। ज्योतिष्टोमे चेति। अत्रै*एव कर्त्ता विहितः। अतो द्वियजमानक-प्रयोग एवेति नात्र सम्भवः। **विकृताविति।** विकृतयाग इत्यर्थः। **राजयुरो-हिताविति।** अनेन विहिते कुलायनामके याग इति। **श्रुत्या इति।** श्रुतिप्रमाणस्य प्रवलत्वात् प्रकरणस्य च दुर्बलत्वात्प्रकरणबाध इति। **तत्रैवेति।** ज्योतिष्टोमप्रकरणे एवेति। पशुयागसन्निधावेव यूपपरिव्याण-फलिका रशना दामियीत्वाच्च तद्धर्माः श्रूयन्ते। तेषाञ्च स्थानप्रमाणेनाग्नी-षोमीयाङ्गत्वप्रतीतिः। 'रशनया यूपं परिव्ययते' इत्यत्र यूपमिति द्वितीया-श्रुत्या रशनया यूपप्रयोजनकत्वात्। **तद्धर्माणामपीति।** यूपधर्माणां दर्भमयीत्वादीनामिति। **यूपार्थत्वादिति।** तदङ्गत्वादित्यर्थः। **यूप चेति।** 'दीक्षासु यूपं छिनत्ति' इत्यनेन दीक्षाकाले एवाग्नीषोमीयस्य प्रयोगः अतो वहिरुत्पन्नत्वेन ज्योतिष्टोमाङ्गभूताग्नीषोमीयसवनीपाश्वन्ध्यासंज्ञकपशु-यागत्रयसाधारणत्वात् रशना व रशनाधर्मा वा पशुयागत्रयसाधारण एवेति। **दर्शपूर्णमासयोरिति।** इषे त्वेति मन्त्रः श्रुतः। समाख्याबलेनास्य पुरोडाश-यागाङ्गत्वं प्रतीयते, तथापि 'इषे त्वेति शाखां छिनत्ति' इत्यत्र शाखामिति

द्वितीयाश्रुत्या सान्ताय्याङ्गशाखार्थत्वप्रतीतेः श्रुत्या समाख्यायाः बाधाच्छाखार्थत्वमेवेति । लिङ्गप्रमाणेन प्रकरणबाधं दर्शयति—**लिङ्गेनेति ।** पूषानुमन्त्रणमन्त्रस्य दर्शपूर्णमासाङ्गत्व प्रकरणप्रामाण्यात् । लिङ्गप्रमाणेन पूषयागाङ्गता प्रतीयते । लिङ्गेनप्रकरणबाधात् पूषयागाङ्गत्वैव स्वीकर्येति । एवमेव ज्योतिष्टोमे एव 'उपहूत उपहूयस्व' इति मन्त्रद्वयं श्रुतम् । तत्र क्रमापरपर्यायस्थानप्रमाणेन 'उपहूत' इत्यास्यानुज्ञापनार्थवं 'उपहूयस्व' इत्यस्यानुज्ञानार्थत्वमिति ज्ञायते । लिङ्गप्रमाणेन च तद्विपरीत इति प्रबलप्रमाणेन लिङ्गेन दुर्बलं प्रमाणं स्थानं बाध्यते । **तत्रैवेति ।** ज्योतिष्टोमप्रकरणे एवेति 'भक्षे हि' इत्यादिमन्त्रः पठितः । **स इति ।** अयं मन्त्र इत्यर्थः । सोमभणणाङ्गं लिङ्गसमाख्याभ्यामिति । **तत्र चेति ।** ज्योतिष्टोमे एव । 'अश्विनोस्त्वा बाहुभ्याम्' इत्यादिः 'वाङ्नाभिमतिगा' इत्यन्तः मन्त्रः पठितः । मन्त्रोऽयं **सम्यग्जरणाभिधापीति । तत्रेति ।** मन्त्रेऽस्मिन्नित्यर्थः । ग्रहणादीनामविहितत्वात्न्मन्त्रप्रकाशकत्वं न सम्भवति । अतः समाख्याप्रमाणबलेन ग्रहणादिबोधनद्वारा भक्षणाङ्गत्वकस्य मन्त्रस्येति । **लिङ्गास्त्विति ।** लिङ्गप्रमाणेन तत्तदर्थबोधकता प्रतीयते । अतश्च प्राबल्याल्लिङ्गप्रमाणेन ग्रहणादिबोधकत्वं मन्त्रत्र्यम् । **सत्यपीति ।** अयं भावः—ग्रहणादीनां विधादाभावेऽपि भक्षणार्थापत्तिस्स्यात् । तया च ग्रहणादिप्रकाशाक्षेणयोः प्राप्तिः । **नहीति ।** भक्षणे ग्रहणावेक्षणावावश्यकौ । **भक्षणस्य चेति ।** सम्यग्जरणमेव भक्षणस्य फलम् । लोकतोऽपि प्रमाणयितुमाह—**लोकसिद्धस्येति ।** अतएव सोमप्रतिपत्त्यर्थत्वेन भक्षणस्य विधानत्सम्पग्जरणस्यापि प्राप्तिरस्त्येवेति भावः । उपसंहृति-**अत इति ।** भक्षणविधिप्रतिपादकत्वमेवैतेषामिति । प्रकारान्तरमाह—**यद्वेति ।** अथवा अर्थापत्तिपरिकल्पितविध्यन्तरस्वीकारैर्णवैतानि ग्रहणादीनि विधीयन्त इति । सम्यग्जरणस्य कष्टसाध्यत्वाद् विधेयत्वभाव इति शङ्कते—**न चेति ।** समाधत्ते—**तस्येति ।** सम्यग्जरणस्येत्यर्थः । आशनादिविशेष इत्यस्य भोजनादिविशेष इत्यर्थः । 'अशू भोजने' इति धातुपाठात् । **अतएवेति ।** सम्यग्जरणस्याशनादिविशेषसाध्यत्वातेव । 'तृप्यन्तु' इति मन्त्रावयवो न तृप्तिरूपार्थबोधकः कुत इति चेत्—उच्यते—**तस्या इति ।** तृप्तेरित्यर्थः । कृतिसाध्यविषयत्वाभावेन विधेयत्वाभावान्मन्त्रप्रकाशनयोग्यत्वाभावादिति । तर्हि मन्त्रस्य किं प्रयोजनमित्यत आह—**किन्त्विति ।** तत्वदस्य पूर्वपरामर्शित्वात्सम्यग्जरणफलकभक्षणबोधनप्रयोजनक इति । **ग्रहणादीनां त्विति ।** मन्त्रबोध्यत्वात्प्रबलेन लिङ्गप्रमाणेन दुर्बलायाः समाख्यायाः बाध इत्यर्थः । वाक्येन स्थानप्रमाणबाधं दर्शयति—**वाक्येन स्थानबाधस्त्विति ।** 'अरुणया पिङ्गास्या' इत्यत्र

सन्निधिना अर्थात् स्थानप्रमाणेनारुण्यस्य क्रयभावनां प्रति साधनत्वेन ज्ञातस्य क्रयसाधनीभूतेष्वनेकेषु द्रव्येषु प्रप्तेष्वपि वाक्यप्रमाणेनैकहायन्यामेव निवेशइति। वाक्येन समाख्यावाधमुदाहरति—**वाक्येनेति**। 'यजमास्य याज्या इति वाक्येन यजमानकर्तृयाज्यावाचनं प्राप्तम्। तेन हौत्रसमाख्या बाध इति। प्रकरणेन समाख्यावाधमुदाहरति—**प्रकरणेन समाख्याबाधस्त्विति**। समाख्याप्रमाणेन पुरोडाशयागमात्राङ्गत्वं प्राप्तम् तं प्रवाध्य प्रवलेन प्रकरणप्रमाणेन षड्यागानां प्रत्यङ्गत्वं बोध्यम् **क्वाचिदिति**। आनर्थक्येन प्रतिहतानां व्यर्थीभूतानाम् विधानवैयर्थ्यभयादिति। वलावलं प्रावल्यदौर्बल्ये। **तत्त्विति**। **बलाबलमित्यर्थः**। तच्च तत्तत्प्रसङ्गे वक्ष्याम इति।

**विनियोगविधाविति**। तत्र यदुद्देश्यतावच्छेदकाश्रयः तन्निष्ठं यद्विशेषणं तदविवक्षितमित्यर्थः। उदाहरति—**यथेति**। 'ग्रहं सम्मार्ष्टि' इत्यत्रोद्देश्यीभूतग्रहनिष्ठमेकत्वमविवक्षितमित्यर्थः। तद्विवक्षायां ग्रह्यतसंख्याविवक्षायामिति। विध्यावृत्तिलक्षणवाक्यभेदादिति। तथाहि—ग्रहं सम्मृज्यात् तच्चैकमिति वाक्यार्थः। तथा सति सम्मार्गसम्वन्धे ग्रहैकत्वस म्वन्धे च विध्यावृत्तिरिति। **प्रकरणेन चेति**। प्रकरणप्रमाणेनेत्यर्थः। येषां संख्या ज्ञाता तेषामित्यर्थः। अनपेक्षिता संख्या येन तेन सह तद्विध्ययोगात्सम्वन्धाभावात्। **सर्वत्रैवोद्देश्यस्येति**। विशेषणमनपेक्षमेवेत्यर्थः। **अतएवेति**। विशेषणस्यानपेक्षत्वादेव। ग्रहैकत्वमिवेति सामान्याभिप्रायेण प्रयोग इति। **यत्त्विति**। विधेयोद्देश्यगस्य विशेषणस्य विवक्षितत्वं प्रतिपादयति। उदाहरति—**यथेति**। 'अष्टवर्षं ब्राह्मणमुपनयीत' इति वाक्यम्। अनेन वाक्येन ब्राह्मणमुद्दिश्योपनपनं विधीयते। ब्राह्मणमित्यत्र द्वितीयाश्रुत्या ब्राह्मणस्य संस्कार्यत्वमपि प्रतीयते। ब्राह्मणस्य विशेषणताष्टवर्षत्वं प्रस्त्वञ्च विवक्षितम् 'कुतः' अन्यवाक्याप्राप्तत्वादिति राणकमतम्।

मिश्रमतमुपस्थापयति—**मिश्रास्त्विति**। **तदपीति**। **विशेषणमपि**। उद्देश्यतादशायामविवक्षितमिति। विशेषणस्य विवक्षितत्वं प्रतिपादयितुमाह—**यदा त्विति**। 'उपनयीत' इत्यनन्तरं 'तमध्यापयीत' इति वाक्यम्। अध्यापनञ्च वृत्तिः ब्राह्मणानाम्। तदुक्तम्—

अध्यापनमध्ययनं यजनं याजनं तथा।
दानं प्रतिग्रहश्चैव षट् कर्माण्यग्रजन्मनः॥

षण्णांतु कर्मणामस्य त्रीणि कर्माणि जीविका ।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥

वृत्त्यर्थत्वेन ज्ञातत्वान्न तस्य विधेयत्वम् । अतः 'सोऽधीयीत' इति ब्राह्मणकर्त्तृकाध्ययनविधिवाचकत्वे ब्राह्मणस्योपादेयता भवति तदा विशेषणस्य विवक्षितत्वमिति । अध्ययनकर्त्तुः ब्राह्मणस्य विशेषणत्रयं दृश्यते—अष्टवर्षत्वं पुंस्त्वम् उपनीतत्वञ्चेति । तानि च विलेषणानि 'तम्' इति तच्छब्दप्रयोगेण ज्ञायन्ते । अध्ययनकर्त्तुर्विशेषणत्वेनाध्ययनं प्रत्यङ्गत्वमुपनयनस्येति । **तत्रपीति** । उपनयनेऽपि तद्विशेषणविशिष्ट एव कर्त्तेति । **एवमिति** । पूर्वोक्तप्रकारणेत्यर्थः । दर्शे दर्शप्रकरणे । यस्योभयमित्यादिवाक्येनानेन सान्नाय्यसंज्ञकदर्विद्वये विनष्टे सति तन्निमित्तकं प्रायश्चित्तं विधीयते । **तत्रेति** । तस्मिन् प्रायश्चित्तप्रतिपादके वाक्ये हविरार्त्तिमुद्दिश्योदननिर्वायो विधीयते, हविर्द्वयस्य चोभयत्वं विशेषणम् । तदविवक्षितमिति । **तेनेति** । विशेषणस्याविवक्षितत्वेनेत्यर्थः । यत्रैकदृविशर्त्तिस्तत्रादि प्रायश्चित्तं भवत्येव । दृविषो विशेषागत्वेनैवाविपक्षितत्वादार्त्तिमात्रस्य निमित्तत्वं न स्यादित्यत शङ्कते—न **चेति** । समाधत्ते—**आर्त्तिमात्रस्येति** । न तन्नित्यं विलेषाणम् । अतो दृविषो विलेषणत्वं न स्वीकर्त्तुं शक्यते । **तावता त्विति** । निमित्तबुद्ध्यापि उभयत्वस्य विवक्षितत्वं न स्यादिति भावः । वस्तुस्तूभयत्वं विवक्षितमेवेत्यत आह—**वस्तुतस्त्विति** । सायंप्रातर्दोहार्त्तौ पृथक् पृथक् प्रायश्चित्तं विहितम् । ततश्च पुनर्वाक्येस्मिन् उभयमित्युद्दिश्य प्रायश्चित्तं विधीयते । अधिकारप्राप्तदृविरार्त्तिस्त्वनूद्यते । **तेनेति** 'हेतुनेत्यर्थः' उभयत्वं विवक्षितमेवेति । पार्थक्येन प्रायश्चित्तविधिमप्रकल्प्योभयत्वस्याविवक्षोच्यते । **तन्त्ररत्ने इति** । टुप्टीकाव्याख्यानात्मके ग्रन्थे इत्यर्थः । नैमित्तिकस्वरूपं पर्यालोच्योद्देश्यगतं विशेषणमपि विवक्षितं भवतीति प्रतिपादयति—**किञ्चित्त्वित्यादिना** । उदाहरति—**यथेति** । 'यस्योभावग्नी' इति प्रायश्चित्तवाक्ये गार्हपत्यादृवनीयरूपाग्निद्वयेन सूर्यास्तोदयौ उपलक्ष्येते । तन्निमित्तकपुनराधेयविधायकं वाक्यं कतप्यते । तत्र निमित्तविशेषणोभयत्वाविवक्षायां नैमित्तिकाधानस्यानेकाग्न्युत्पादकत्वरूपं सामर्थ्यमालोच्यते । ततश्च सामर्थ्यान्नैमित्तकविशेषणमप्युभयत्वं विवक्षितं भवति । **तेनेति** । एतावता विवेचनेनेत्यर्थः । विनियोगविधाबुद्देश्यगतं विशेषणमेकपदोपात्तं वा भवेत् भिन्नपदोपात्तं वा विवक्षितमेव भवति । उपादेयगतं विशेषणं विवक्षितमेवेति निर्गलितार्थः । उदाहरति—**यथेति** । **अग्नीषोमीयमिति** । **अत्र** पशुगतमेकत्वं प्रतीयते तथा द्रव्यदेवतारूपास्यगवरूपसम्बन्धपरिकल्पितयागो

विधीयते । **अग्नीषोमीये इति । पशुना यजेतेति** । आलम्भस्यार्थप्राप्तानुवादमात्रमत्र । **यागसाधनत्वेन चेति** । तत्त्वेन पशुरुपादेयः । अतएव तद्गता संख्या विवक्षि ति । अनुवादं विहाय विधिस्वीकारे संख्यायाः प्रातिपदिकार्थत्वम्, ततश्चवाक्यभेदाभावः । अन्यथा वाक्यभेदप्रसङ्गात् । पदश्रुत्या च तृतीयैकवचनार्थः पशुरिति । एकाभिधानश्रुत्या च संख्याकरणकारकेणान्वेति । एकत्वसंख्याविशिष्टकरणकारकं यागाङ्गत्वेनानेन वाक्येन विधीयते । **कारकद्वारा चेति** । पश्वेकत्वयोरुभयोर्यागाङ्गत्वम् । अनयोश्च परिच्छेद्यपरिच्छेदकभावः सम्वन्धः । पशुः परिच्छेद्यः संख्या च परिच्छेदिका । तक्षकाङ्क्षायाश्च क्रियाक्षेपः । तत्रान्योन्यान्वयनियम इति न वाक्यभेद इति । **उद्देश्यतद्विशेषणयोस्त्विति** । **तदाक्षेपादिति** । क्रियाक्षेपादित्यर्थः । नान्योन्यनियमः । सम्भवः । प्रत्युत अपि त्वित्यर्थः । प्रत्येकस्य गुणभूतस्य पदार्थस्यैकस्यां क्रियायामन्वयात् क्रियावृत्तिलक्षणवाक्यभेदः प्रसज्येत इति विशेषः । हेतुं दर्शयति—**उपादेयस्येति** । विशेषणत्वेनाप्राप्तत्वादित्रि । **तदाकाङ्क्षत्वादिति** । क्रियाकाङ्क्षत्वादित्यर्थः । **एवमिति** । अनेनैव प्रकारेणेत्यर्थः । अनदुहावित्यत्र द्वित्वं विवक्षितम् । उपादेयत्वात् । तथा च 'वसन्ताय कपिञ्जलानालभेत' इत्यत्र वहुत्वमपि विवक्षितमेव । चतुष्ठादिसंख्यासाधकप्रमाणान्तरासद्भावाद् वहुवचनं त्रित्वसंख्या प्रतिपादने एवर्यवस्यतीति । **उपादानलाघवादिति** । अनुपादानगतसंख्याग्रह्णापेयोपादानगतसंख्याग्रह्णे लाघवमित्यर्थः । वहुवचने प्रयोगे सति त्रित्वसंख्यां विहाय चतुरादीनां ग्रह्णासम्भवाल्लाघवाच्च विधिः त्रित्वमेव प्रतिपादयति । संख्यावदेवोपादेनगतं लिङ्गमपि विवक्षितं भवतीत्याह—**संख्यावदिति** । उदाहरति—**यथेति** । 'अग्नीषोमीय' इत्यादौ पुंस्त्वम् तथा 'सास्वती मेषी' इत्यादौ स्त्रीत्वञ्च विवक्षितं भवति । अन्यथा पुंस्त्वविशिष्टस्यापि कदाचिद् ग्रह्णसम्भवात् । **एवमिति** । अनया दिशेत्यर्थः । उपादेयगतं विशेषणं सर्वत्र विवक्षितमिति । यत्रोपादेयगतं विलेषणमन्यतः प्राप्तम्, तत्रोपादेयगतेऽप्यविवक्षिमित्यत आह—**किञ्चित्त्विति** । उदाहरति—**यथेति** । **'सत्रादुदवसाय'** इलादौ पृष्ठशमनीये कर्तृवहुत्वं न विवक्षितम् । सत्रोदवसानसमानकर्तृकत्वादेव वहुत्वस्य प्राप्तिसम्भवात् । एवमेव 'यावतोऽश्वान्' इत्यादौ वारुणानित्यत्र प्रयुक्तं वहुवचनत्वामविवक्षितम् । निमित्तनैमित्तिकयोः समसंख्याकत्वात्न्नैमित्तिकविधिनैव निमित्तगतवहुत्वस्य प्राप्तवात् । **अप्राप्तं त्विति** । यदि केनापि प्रमाणन्तरेणोपादेयगतं विशेषणं न प्राप्तं भवति तर्हि तत्रोपादेयगतं विशेषणं विवक्षितमेव भवतोति । सर्वमनवद्यम् । **संक्षेप इति** । विस्तरस्त्वन्यत्र द्रष्टव्य इति ।

विनियोगविधिनिरूपणानन्तरं क्रमप्राप्तमधिकारविधिं निरूपयितुमुपक्रमते —**उत्पन्नस्येति**। पदमिदं स्वमेव व्याख्याति—**इष्टसामान्ये विनियुक्तस्येति**। अर्थात् इष्टसामान्यमुद्दिश्य विहितस्येत्यर्थः। कर्मणः यागादेः फलविशेष इति। तत्तत्पशुपुत्रादिफलविशेषबोधनेनानुष्ठातुः पुरुषस्य फलभोक्तृत्वरूपोऽधिकार इति। अर्थात् फलभोक्तृत्वरूपोऽधिकारत्वमिति। तं यो बोधयति सोऽधिकारविधिरिति। व्युत्पादयति—**'अधि' इत्यादिना**। यागादिकर्मजन्यफलभोक्तृत्वबोधकत्वमिति यावत्। उदाहरति—**यथेति**। अयं भावः—'सोमेन यजेत' इत्यनेन यागस्तु विधीयते, परन्तु तत्र फलविशेषः न श्रूयते। अतः फलसामान्यमुद्दिश्यैव यागस्य विधानमिति। तस्य विहितस्य यागस्य 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यनेन वाक्येन स्वर्गरूपफलविशेषेण सह सम्बन्धसम्पादनं क्रियते तथा स्वर्गकामस्य पुरुषस्यैवात्राधिकार इत्यपि प्रतिपाद्यते। स्वर्गेच्छारहितं प्रभासं प्रति विधानवैयर्थ्यात्। **'सर्वेभ्यः कामेभ्य' इति**। वाक्येनानेनास्य यागस्य सर्वफलसम्बन्धः प्रतीयते। **एतेनैवेति**। अयमभिप्रायः—अनेनैव सर्वफलप्राप्तिसम्भवादन्येषां वैयर्थ्यापत्तिरिति चेदुच्यते **गोबलीवर्दन्यायेनेति**। स्वर्गफलसम्बन्धप्रतिपादनसम्भवेऽपि तदन्यफलसम्बन्धोऽपि प्रतिपाद्यते। कथमिति चेदाह—**'गामानय, बलीवर्दञ्चानय' इति**। अत्र गोशब्दवाच्यत्वादेवोभयोर्ग्रहणम्, तथापि बलीवर्दस्य प्राधान्यं द्योतयितुं पार्थक्येनापि प्रतिपादनम्। तथैवात्रापि सर्वफलमध्ये स्वर्गस्यापि संग्रहसम्भवात् सर्वजनाभिलाषसामान्यात्स्वर्गस्य वैशिष्टयप्रतिपादनम् तत्तत्पुरुषं प्रत्येव तत्तत्फलविषयकाभिलाषविषयत्वात्। उभयोः स्वर्गप्रतिपादकतदन्ययोरिति। **अर्थवत्ता**-प्रयोजनवत्तेत्यर्थः। **स्वर्गविधिनैवेति**। स्वर्गविधायकविधिनैवेत्यर्थः। **नियमकल्पनादिति**। स्वर्गसाधनत्वेन ज्ञातमेव कर्म स्वर्गं जनयति। **एवमिति**। अनेनैव यथा इत्यर्थः। **षण्णमिति**। यागानामित्यर्थः। आग्नेयोपांशुयाजोऽग्नीषोमीय इति यागत्रयं दर्शे आग्नेयऐन्द्रपय इति पूर्णमासे। **वाक्याभ्यामिति**। दर्शपूर्णमासाभ्याम्, एकैकस्मै 'इति वाक्याभ्यामित्यर्थः। **फलसम्बन्ध इति** स्वर्गतदन्यफलसम्बन्ध इति। नन्वेकस्मिन्नेव प्रयोगे सर्वफलप्राप्त्याऽन्यप्रयोगवैयर्थ्यमिति। चेदाह—**सर्वफलार्थयोश्चेति**। एकप्रयोगे सत्येकमेव फलमुत्पद्यत इति। हेतुं दर्शयति—**उद्देश्यानामिति**। उद्देश्यगतानां सर्वेषां फलानां न साहित्यं विवक्षितमिति भावः। अतएवैकमेव फलमेकैकप्रयोगे सञ्जायत इति। **लोक इति**। लोकेऽप्येवमेव दृश्यते। परस्परनिरपेक्षफलप्रतिपादकवस्तुनिष्ठैकप्रयागस्यैकफलजनकत्वमिति। लौकिकमुदाहरणमुपदर्शयन्नाह—**न हीति**। एकमृत्पिण्डस्यैकप्रयोगे एक एव घट उत्पद्यते न द्वौ

त्रयो वेति। तदर्थमन्य एव यत्नः करणीयो भवति। **वैदिकमपीति**। लौकिककर्मवदेव वैदिकमपि कर्मैकप्रयोगे सत्येकमेव फलं जनयतीत्यर्थः। **अन्यथैकप्रयोग इति**। अयं भावः—यद्येकेनैव प्रयोगेण सर्वफलप्राप्ति-सम्भवस्तर्हि 'कामनावशात् काम्यं कर्म पुनरावर्त्तेत' इति नियमोन स्यादिति। फलानि विभाजते—**त्रिविधानीति**। **तत्रेति**। त्रिविधेषु फलेष्वित्यर्थः कारीरीयागजन्यं सस्यरक्षारूपं वैश्वानरादिजातेष्टिजन्य पुत्रगतपूतत्वादिकञ्च तथा श्येनयागजन्यं शत्रुमरणरूपञ्च फलमैहिकमेव, न परलोके उपयोगयोग्यम्। **तत्रैवेति**। ऐहलौकिकसुखमुद्दिश्यैव विधीयमान-त्वात् स्वर्गादिकं फलन्तु परलोकयोगयोग्यमेव, नैवास्मिल्लोके स्वर्गप्राप्ति-सम्भवः। **अतोऽमुष्मिक एव स्वर्गः**। लौकिकेऽपि सुखे तत्सात्म्यात्तत्पद-प्रयोग इति। **पुत्रपश्वादनीति**। फलान्युभयत्र भोग्यानि। एतदेव स्पष्टयति—**न हीत्यादिना इहापीति**। अस्मिन्नपि लोके स्त्रीसङ्गजन्यत्वात्। पुत्रकेष्टयादीनामनुष्ठाने पुत्रादिफलप्राप्तिरूपं फलमैहिकमेव। यदि कश्चि-त्प्रतिबन्धकः स्यात्तर्हि जन्मान्तरे तत्फलप्राप्तिरिति। सर्वेजनाः सर्वदा फलमेकमेव वाञ्छन्तीति न वक्तुं शक्यते, अत आह—**पुम्मतिवैचित्र्यादिति**। कामनाविषयीभूतमेवमेव कर्मफलेन सह सम्बद्ध्यते, न कामनाविषयीभूता-भावं कर्म इत्यत आह—**काम्यतानञ्चेति**। **न सर्वेषामिति**। न सर्वेषां फलानामेककालावच्छेदेन काम्यता। प्रगयदपि कामनादृश्यते, तर्हि का व्यवस्थेत्यत आह - **येषां त्विति**। हेतुमुपन्यस्यति—**पूर्वोक्तकर्मइत्यादिना**। **मिश्रा इति**। मिश्रमतमिदमित्यर्थः।

न्यायसुधाकृन्मतं दर्शयति—**राणके त्विति**। **येषां न परस्परं** कश्चिद्विरोधस्तेषां युगपदुत्पत्तिरिति भवितुमर्हतीति न दोषः अतएव तत्तत्फलकामस्य तत्तत्कर्मण्यधिकार इत्यत आह—अत इति। **गङ्गास्ना-**नादिष्वपि सर्वफलार्थत्वं प्रसाधयितुमाह—**एवमिति**। जातेष्टौ कस्याधिकार इत्यन आह—**जातेष्टौ त्विति**। अर्थवादवाक्यजन्यफलकल्पनं कथन्नेत्य आह—**अर्थवादोपस्थितानामिति**। एकफलकल्पने लाघवमित्यर्थ। **एवमिति**। एतेनैव प्रकारेणेत्यर्थः। 'अग्निहोत्रं जुहुयात्' इत्यनेन वाक्येनाग्निहोत्रहोमस्य फलेन सह सम्बन्धो बोध्यते स्वर्गकामस्य पुरुषष्य चाधिकारोऽपि प्रतिपाद्यत इति। सर्वेषां स्वर्गादिफलेच्छाया समानत्वात् तत्फलजनककर्मस्वपि सर्वेषा-मधिकारः स्यादित्यत आह—**एष्विति**। कर्मसु मनुष्याणामेवाधिकारः, न सर्वेषाम्। कुतः। सामर्थ्याभावादिति। तिरश्चामिति न तेषामधिकार इत्यर्थः। कुल इति चेदुच्यते—तेषां वेदार्थविषयकज्ञानाभावात् कालान्तरीय-

फलविषयकेच्छाभावाच्च। देवानामपि कर्मसु नाधिकार इत्यत आह—**देवानामिति**। देवानां देवतोद्देशेन त्यागाभावात्। इन्द्रमुद्दिश्येन्द्रस्यैव न त्यागः समुचित इत्यत आह—**न हीति**। इन्द्रान्तरमुद्दिश्य त्यागसम्भव इत्यत आह—**तदानीमिति**। एककालावच्छेदेनैकस्यैवेन्द्रत्वसम्भावात्। **अतीतमिक्रमिन्द्रमुद्दिश्व** त्यगसम्भव इत्यपि नेत्यत आह—**अतीतस्येति**। तदानीमिन्द्रत्वं तत्र नास्तीति भावः। स्वमुद्दिश्य स्वस्य त्यागोऽपि नेत्यत आह—**स्वोद्देशेनेनि**। मीमांसकमते शब्दमयीं। देवता, न तु करचरणादिविग्रहवतीत्यता आह—**विग्रहाभावाच्चेति**। तर्हि विग्रहप्रतिपादकवचनानां का गतिरित्य आह—**तत्प्रतिपादकानामिति**। स्तुत्यर्थत्वेन तेषां प्रमाण्यमिति भावः अस्तु, देवाहां मास्त्वधिकारः, ऋषीणामस्त्विति चेत्, तदापि नेत्यत आह—**ऋषीणामिति**। तत्र भाष्यकारमते 'आर्षेयं वृणीते' इत्यनेन विहितमार्षेयवरणं न सम्भवम् तेषां ऋष्यन्तराभावात्। अतो न तेषामधिकार इति। एकं वृणीते, द्वौ वृणीते, त्रीन् वृणीते, न चतुरो वृणीते, न पञ्चातिवृणी' इति। **भाष्ये इति**। शावरभष्ये इत्यर्थः मीमांसकमते। संसारस्थानादित्वात् तत्पूर्वपूर्वर्षीणां सत्ता स्वीकारादार्षेयवरणसम्भवाद् ऋषोणां कर्मानुष्ठानेऽस्त्यधिकार इति वार्त्तिककारयतम् तदेवोपस्थापयितुमाह—**मनुष्येष्वपीति**। कर्मसु मनुष्याधिकारत्वात्सर्वेषां मनुष्याणामधिकारस्तत्र। स्यादित्यत आह—**अन्धस्येत्यादिः**। तत्रैव हेतुं दर्शयति—**अन्धस्येत्यादिः**। अन्धस्य कर्मानुष्ठानेऽऽज्यमवेक्षते, पत्यवेक्षितमाज्यं भवति' इत्यादयो। विधयो नानुगृहीताः स्युरिति। पङ्गोष्च चलवाभावाद् विष्णुक्रमणां न सम्भवम् वधिरस्य श्रवणासम्भवात्पदार्थस्मरणभावाः। मूकस्य वागभावात्न्मन्त्रोच्चारणं न सम्भवम्। अतो नास्त्येषामधिकारः। ननु काणस्याप्यङ्गहीनत्वात्थमधिकार इत्यत आह—**काणस्येति**। **विद्यतेऽधिकारइति**। इति चक्षुर्द्वस्य पर्याप्त्योभयत्र सम्भवादेकेनापि चक्षुषा आज्यावेक्षणादिसम्भवात्। मतान्तरं दर्शयितुमाह—**केचित्त्विति**। एतेषां मते चक्षुर्द्वं व्यासज्यवृत्त्या उभयत्र तिष्ठति। अत एकस्य चक्षुषोऽभावेऽङ्गहीनत्वे जाते काणस्य न कर्मस्वधिकार इति। पुनश्च शङ्कते—**नन्विति**। अयं भावः—अधिकारमनुसृत्यैवाङ्गानामनुष्ठानेऽधिकारः। स्वर्गस्य सर्वान् प्रत्यविशिष्टत्वात्तत्र तत्र स्वर्गकामशब्दप्रयोगाच्च सर्वेषामधिकारस्तत्रेति प्रतीयते। अतो ये यायतामङ्गानामअष्ठानेऽसमर्थाः सन्ति, तेषां प्रति तदङ्गरहित एव यागः फलजनकः स्यादिति समाधत्ते—**नैवमिति**। नायं पक्षः समीचीन इति भावः। अयमभिप्रायः—यदि पुरुषार्थत्वेनाङ्गानामुपदेशः स्यात्तदा यथापुरुषाधिकारमङ्गानां विनियोगकल्पनापि स्यात् परन्तु

नैवमङ्गानामुपदेशः, अपि तु क्रत्वर्थत्वेनाङ्गानामुपदेशः श्रुत्यादिभिः प्रमाणैः क्रियते। अतः सर्वाङ्गसम्पन्नस्य पुरुषस्यैव तत्राधिकार इति। तैरनुष्ठित एव यागः फलाय कल्पते। अतएव सर्वाङ्गानुष्ठानसमर्थ एवात्राधिक्रियते। स्वर्गकामशब्दोऽपि तादृशमधिकारिणमेवालम्बते। **एवमिति**। सर्वाङ्गानुष्ठानसमर्थाधिकारित्वे, सतीति। नित्यत्वेन श्रुतानामङ्गानां पाक्षिकत्वं न समुचितमित्यर्थः। एवमेव स्वर्गकामशब्दोऽप्युपपद्यति। उपसंहरति—**तेनेति**। विनियोगमनतिक्रम्य यथाविनियोगमिति। विनियोगमनुसृत्येत्यर्थः। सर्वाङ्गोपसंहारसमर्थस्य **अर्थात्** सर्वेषामङ्गानां यथाविधि विनियोगे समर्थस्य पुरुषस्येति। एवं नित्यनैमित्तिकेषु कर्मस्वपि सर्वाङ्गानुष्ठानमिति चेदाह—**नित्यनैमित्तिकेषु त्विति**। यथाशक्ति अङ्गानामनुष्ठानमिति 'यावज्जीवम्' इत्यादौ णमुलप्रत्ययेन निमित्तत्वं बोध्यते। 'वसन्ते वसन्ते' इत्यादौ च वीप्सया निमित्तत्वबोधः। वीप्सायां द्वित्वं स्मर्यते। **तत्रेति**। यदा यदा निमित्तं प्राप्यते तदा तदा नैमित्तिककर्मानुष्ठानमिति। नैमित्तिकमपि कर्म सर्वाङ्गयुक्तं कार्यमिति। **वक्ष्याम इति**। अग्रे इति शेषः। **एवमद्रव्यस्येति**। अयं भावः—धनार्जनं पुरुषार्थं क्रत्वर्थं वेति संशय्य क्रत्वर्थमेव धनार्जनमिति पूर्वपक्षयित्वा यजमानजीवनरक्षार्थत्वात् धनार्जनं पुरुषार्थमिति प्रसाधितम्। क्रत्वर्थता तु धनार्जनरूपार्थिकी। धनार्जनस्य पुरुषार्थत्वे क्रतुनिमित्तत्वाभाव एवाद्रव्यपदार्थ न तु निर्धनत्वम्। निर्धनत्वे यागसम्पादनाभाव एव स्यात्। यागस्य द्रव्यसाध्यत्वात्। अतएवार्थिनोऽधिकारिण इत्यधिकारनिरूपणप्रङ्गेऽभिहितम्। एतदेव स्पष्टयति—**जीवनार्थमित्यादिना**। द्रव्यार्जनस्य क्रत्वर्थत्वमेवास्त्विति शङ्कते—**न चेति**। समाधत्ते—**तत्रेति**। द्रव्याचेने विनियोजकश्रुत्यादिप्रमाणषट्काभावादिति। प्रत्यक्षप्रमाणेन द्रव्यार्जनस्य पुरुषप्रीतिसम्पादकत्वात्। यथा भोजनमुद्दिश्य प्रमाङ्मुखात्वादि नियमाददृष्टं कल्पते तथैव द्रव्यार्जमुद्दिश्य प्रतिग्रहादिनियमादप्यदृष्टं कल्प्यते। अत आह—**ब्राह्मणस्येत्यादिः**। द्रव्यार्जनस्य पुरुषार्थत्वेऽपि यथा द्रव्येण भोजनादिकार्यसम्पादनं भवति तथैव क्रतुसम्पादनमयीत्यत आह—**पुरुषार्थेनेति**। अद्रव्यः पुरुषः द्रव्यमीप्सति। तदर्थश्चावश्यमेव यतते। तेनैव द्रव्यार्जनेन भोजनादिवत् क्रतुरपि सिद्धयतीति क्रतावधिकारोऽद्रव्यस्यापि। हीनाङ्गत्वं प्रति समाधानेन तस्याप्यधिकार इत्याह—**एवमिति**। परन्तु यस्य पुरुषस्याङ्गहीनत्वमसमाधेयम्, न तस्याधिकार इत्याह—**यस्येति**। आधावस्याग्निसम्पादकत्वेन कामत्वन्नाङ्गहीनस्याधिकार इत्याह—**नित्येष्विति**। आहिताग्नेः श्रुतस्य प्रत्यवायस्य तन्निमित्तकविहितस्य प्रायश्चित्तस्य च का गतिरित्याह—**यस्त्विति**।

आधानसम्पादनान्तरं नित्यत्वेन प्राप्तक्रत्वनुष्ठानाकरणनिमित्तमेव। नाधानाकरणनिमित्तं प्रत्यवायः प्रायश्चित्तं वेति। **मिश्रा इति**। मिश्रमतमित्यर्थः।

आधावस्थापि फलतो नित्यत्वेन तंत्राप्यधिकारः स्यादेवेति केषाञ्चिन्मतमुपस्थापयितुमाह—**अन्येत्विति**। एवं रीत्यार्षेयवरणसमर्थस्यैवात्राधिकार इत्याह—**दर्शपूर्णमासयोरिति**। 'आर्षेयं वृणीते'। इत्यनेनार्षेयवरणमुपक्रम्य 'एकं वृणीते, द्वौ वृणीते, त्रीन वृणीते, न चतुरो वृणीते, न पञ्चाति वृणोते' इत्यार्षेयवरणं विहितम्। एतानि वाक्यानि विधिपदरहितानीति कृत्वैकवाक्यत्वसिद्धये 'त्रीन्' इत्यत्रैव विधित्वं प्रकल्प्यते। एकत्वद्वित्वयोस्तु सहपठितत्वादनुवादकत्वमात्रम्। त्रित्वे एवैकत्वादीनां समाविष्टत्वात्। एतत्सर्वमभिप्रेत्याह—**दर्शपूर्णसयोरिति**। निषेधवाक्येन सह कथमेवाबयतेत्याह—**निषेधाविति**। फलितार्थमाह—**तेनेत्यादिः**। चतुरार्षेयवतां त्रिरार्षेयवरणेन कथं चरितार्थतेत्याह—**त्र्यार्षेयवरणेनैवेति**। 'स्वाध्यायोऽध्येतव्य' इत्यध्ययनविधिसिद्धार्थज्ञानवतामेवाधिकारइत्याह—**एवमिति**। तथैवाग्निसाध्यकर्मसु आधानसिद्धाग्निमतामेवाधिकार इत्याह—**अग्निसाध्येष्विति**। अध्ययनमाधानञ्च त्रैवर्णिकानामेव विहितम्, न शूद्रस्य। अतो न शूद्रस्य यागादावधिकार इत्याह—**अतएवेति**। यद्यप्यध्ययने कर्त्ता न विहितस्तथाप्युपनीतान् त्रैवर्णिकानेव कर्त्तृत्वेन गृह्णातीत्याह—**अध्ययनं हीति**। आधाने त्रैवर्णिकानामेवाधिकार इत्याह—**आधानं त्विति**। शूद्रस्याप्याधानेऽधिकार इति शङ्कते—**नन्विति**। रथं करोतीति व्युत्पत्त्या त्रैवर्णिकानामेवाधिकार इति शङ्कते—**न चेति**। वचनेनानेन वसन्तादिकं कालं प्रबाध्य वर्षाकालो विधीयत इति भावः। समाधत्ते—**योगादरुढेर्बलीयस्त्वादिति**।

योगकल्पमापेक्षया मूढ्याः शीघ्रोपस्थिकत्वात् रथकारशब्दो जातिविशेषवचन इति। जातिविशेषं समर्थनाय स्मृतिवाक्यमुपस्थापयति—**व्रात्यात्त्वित्यादिना**। माहिष्येण करण्यन्तु इत्यादिस्मृतिवचनेन रथकारस्यानुलोमसङ्करजात्याध्ययनादिसद्भावात् सौधन्वनापरपर्यात्वाभावाच्च नात्र रथकारशब्देनास्य ग्रहणमित्याह—**यस्त्विति**। मिश्रमतमिदमित्यर्थः। वेदे ऋभूणां सौधन्वनापरपर्यात्वेन व्यवहृतत्वात् ऋभुपर्यायश्यैवात्र ग्रहणमित्याह—**ऋभूणां त्वेति**। आधानप्रतिपादकवचनबलेनैव तत्सम्पादकज्ञानमात्रस्याक्षेप इत्याह—**वचनाच्चेति**। कथं तर्हि त्रैवर्णिकानामेवधानमित्याह—**तदाधानमिति**। यथात्रैवर्णिकानामाधानमग्निसंस्कारसम्पादकं

भवति न तथा रथकारस्याधानमग्निसंस्कारसम्पादकमिति भावः। कुतः। आधानसंस्कृतामग्नीनामुत्तरक्रत्वनुष्ठाने उपयोगाभावात्। उत्तरक्रतुषु कथनाधिकार इत्याह—**उत्तरक्रतुष्विति**। वचनाभाव एवाधिकाराभाव-प्रयोजक इति। 'न कुर्यान्निष्फलं कर्म' इति न्यायेन न तत्र कस्यचित् प्रवृत्तिः स्यादित्य आह—**किन्त्विति**। स्वर्गस्य सर्वजनं प्रत्यविशिष्टतस्वर्ग-फलकत्वमेव कल्प्यत इति। 'अग्नीन्' इत्यत्र द्वितीया 'तथायुक्तं चानीप्सितम्' इत्यनेन विहिता वर्त्तते, न तु 'कर्त्तुरीप्सिततमं कर्म' इत्यनेन विहिता। अतएवोत्तरक्रत्वधिकारप्रयोजकता तत्र नास्ति, अपि तु त्रैवर्णिकाना मेव। अतः त्रैवर्णिकानानामेवात्राधिकार इति।

**स्त्रीणामनुपनीतत्वेनाध्ययनेऽधिकाराभावः**। आधने च पुंस्त्वविशिष्ट कर्त्ता एवाधिक्रियते। अतो न तासां यागादावधिकार वति शङ्कते—**नन्वेव-मिति**। सत्यमित्यर्द्धाङ्गीकारे स्त्रीणां पार्थक्येन यागादावधिकारो नास्त्येव, अपि तु भर्त्रा सहैवाधिकारो यागानुष्ठने अत आह—**पृथगिति**। दम्पत्योः संसृष्टद्रव्यत्वेन द्रव्यत्यागात्मकेषु कर्मसु न पृथक् पृथगधिकारः, अपि तु दम्पत्योः सहाधिकार एव। उक्तमपि—पाणिग्राहणात्तु सहत्वं कर्मसु तथा पुण्यफलेषु' इति ननु विभज्यानुष्ठानं कुर्यादित्याह—**न भर्त्रेति**। भर्त्रा सह स्त्रियाः विभागस्य निसिद्धत्वात्। पित्रा मात्रा भ्रात्रादिभिः प्रीत्या दत्तानि धनानि स्त्रीधनानि भवन्ति, तानि चाविभाज्यान्यपि। 'भार्या दासश्च' इत्यादिना तासां स्वतन्त्र्यस्य निषेधादधना एव भवंतीत्याह—**प्रीतिदत्ता-दीति**। कथं तर्हि तासां धर्मानुठानमित्याह—**पाणिग्रहणादिति**। सहैवेत्यर्थं द्रथयति - **यजमान इति**। ऋत्विगादिवत् परिक्रयेण यजमानप्रभृतीनामप्य-नुष्ठानमिति सङ्कते—**न चेति**। समाधत्ते—**स्वामी वचनादिति**। स्वामिशब्दप्रयोगात् परिक्रयासम्भवः दम्पत्योः। स्वामिशब्दप्रयोगमेवोपोद्-वलयति—पत्युर्नो यज्ञसंयोगे। इति पाणिनिस्मृत्यनया यज्ञस्वामिन्यामेव पत्नी शब्दप्रयोगात। पत्नीशब्दस्य यज्ञस्वामिन्यां प्रयोगेऽपि यजमानशब्दस्य कथं स्वामिवचनत्वमित्याह—**यजमानशब्दोऽपीति**। शानचप्रत्यस्य फलभोक्तृ-स्वाभिवचनत्वम् उपसंहति—**तस्मादिति**। वैदिकवचनमपि प्रमाणत्वेनोपन्य-स्यति—**तथा चेति**। द्विवचनान्तप्रयोगेणोभयोः सहत्वं प्रतीयते। 'वसानौ' इत्यत्रौकारेण पुंस्त्वविशिष्टमेव पुरुषद्वयं प्रतीयते, न तु दम्पत्योः सहाधिकारत्वमिति शङ्कते—**न चेति**। समाधत्ते - **क्षौमशब्द इति**। क्षौमशब्दस्यैव वैयर्थ्यात्। 'वसानौ' इत्यत्रौकारेणैव तद्वोधात्। 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादिना वाक्येनाथानज्ञानसत्त्वे क्षौमस्य पुम्द्वयस्य

च विधाने विध्यावृत्तिलक्षणवाक्यभेदः प्रसज्येतेत्याह—**वसन्तादिवाक्येनेति।** उपसंहरति—**अत इति।** क्षौमस्य विधानम्, औकारस्तूभयोरनुवादक इति। **स हीति।** यथौकारः पुम्द्वयस्यवाचकस्तथैव स्त्रीपुम्द्वयस्यापि वाचक इति। **एवञ्चेति।** यजमानेसानुष्ठितं कर्म दम्पत्योः फलं ददातीति न स्त्रीणां व्यावृत्तिः। तस्मादुभयोः सहैवाधिकार इति। **तस्यास्त्विति।** स्त्रियास्त्वित्यर्थं ब्रह्मचार्यादिकं सर्वंमुभमोर्भवति। आशीःशब्दं व्याख्याति—**आशीःशब्देनेति।** उभयोः दम्पत्योरित्यर्थः। तत्रापि केशश्मश्रु वपते इति वचनप्रामाण्यात् वपन पुरुषस्यैव, न स्त्रिया इति। **संस्कार्यत्वायोगादिति।** संस्कार्यत्वं तत्रैव संस्कारस्य चारितार्थ्यात्। **अनीप्सितकर्मत्वेनेति।** 'तथायुक्तं—चानीप्सितम्' इत्यनेन विहितेनेप्यर्थः। **तत्सम्भवादित।** वपनसम्भवादित्यर्थः। स्त्रिया न वपनं प्राप्नोति, वचनाभावात्। क्रत्वङ्गत्वेन विहितं ब्रह्मचर्यमुभयोर्भवति। फलिसंस्कारत्वेनवास्यापि ग्रहणसम्भवात् पृथगुपादानं कथमित्याह—**गोबलीवर्दन्यायेनेति।** पक्षान्तरमुपस्थापर्यति—**यद्वेति।** अनेकेषु कर्मसु येषां कर्मणां फलानि विवक्षितानि सन्ति, तानि फलानि दम्पत्योर्भवन्तीति। **तन्त्ररत्ने रति। वस्तुतस्त्विति।** पार्थसारथिमिश्रविरचिते दुप्टीकाव्याख्यानभूते इत्यर्थः तत्र व्याख्याद्वयमपि दृश्यते इति भावः। स्वमतं दर्शयति—**मृतभार्यस्यं त्विति। इतोऽन्यत्त्विति।** शिष्टमित्यर्थः। 'याजमान' इति समाख्यया प्रतिपादितम्। विद्वान् यजमान एव कर्मानुष्ठास्यति, तेन सहैव स्त्रीणामप्यधिकार इति। **मृतभार्यस्य।** पुंसोः ऽन्यभावान्नास्त्यधिकार इति। यदा अग्नयः सन्ति तदा विधायकवचनप्रमाण्यादग्निहोत्रमात्रेऽधिकारो वक्तुं न शक्यते। प्रमाणवचनमुपन्यस्याति—**तदाहुरित।** अग्निहोत्रारिक्ते दर्शपूर्णमासादौ नाधिकारः। **तथा चेति।** दर्शपूर्णमासादावधिकारसम्पादकव्यवहाराभावादित। **तन्त्ररत्ने इति। नन्नामके ग्रन्थे।** नन्वेवं त्रैवर्णिकस्यैवाधिकारः स्यान्न शूद्रस्य कुत्रापीत्याह—**क्वचिदित।** वचनप्रामाण्यात्क्वचिच्छूद्रस्याप्यधिकारो दृश्यते। यावन्मानकार्यसम्पादनायाधिकारः प्रदत्तस्तावन्मात्रानुष्ठाने न काचिदनुपपत्ति—**यथेति।** 'रौद्रं वास्तुमध्ये' इत्यादिवाक्येन निषादस्यारयधिकारो निषादेष्टयामिति। निषादस्थपतिरित्यत्र निषादश्चासौ स्थपतिश्चेति कर्मधारयसमासः। ततश्च कर्मधारयेसम्बन्धेनान्वयस्य सिद्धत्वान्निषादाभिन्नः स्थपतिः स्वामी कर्मानुष्ठानकर्त्तोति विधीयते। अतोऽत्र निषाद एवाधिक्रियते। निषादानां स्पपतिरिति षष्ठी समासे स्वीक्रियमाणे त्रैवार्णिकस्याप्यधिकार इति शङ्कते—**न चेति।** त्रैवर्णिके स्वाध्यायसिद्धयाः विद्याया आधानसिधानसिद्धायाश्चाग्निमत्तायाः विधमानत्ववात्। समाधत्ते—**तत्पुरुषः**

**इति**। कर्मधारयापेक्षया षष्ठीसमासस्य दौर्बल्यम्, निषादपदस्य तत्सम्बन्धिनि लक्षणास्वीकारात्। लक्षणायाश्च जघन्यावृत्तित्वात्। कर्मधारये कथन्न लक्षणेत्याह—**कर्मधारये हीति**। कर्मधारये उभयोः पदार्थयोरभेदसम्बन्धेनैवान्वयः अतो न लक्षणायत्तिप्रसक्तिर्दोषः। **तेनेति**। अनेन प्रकारेण वचनप्रमाण्यारन्निषाद एव तदौपपिकार्थज्ञानं कृत्वा लौकिके एवाग्नौ इष्टिं सम्पादयिष्यतीति शूद्रस्याप्यधिकार सिद्ध्यति। यदि तदधिकारप्रतिपादकं न दृश्यते तदा त्रैवर्णिकानामेवाधिकार इत्याह—**साक्षादिति**। तत्प्रतिपादकं साक्षाद्वचनमावश्यकमिति भावः। द्विवहुपत्नीकानां सर्वाभिः सहाग्निहोत्रः कार्याः, एकयासह वेत्याह—**तत्रेति**। एकवासहैवाधिकार इति। यद्यपि प्रधानपुरुषगतं लिङ्गमिव संख्याया अविवक्षितत्वेऽपि गुणभूतपुरुषगतायाः संख्याया आख्यातोपात्तायाः विवक्षितत्वात्। स्त्रिया अप्यधिकारनिवृत्तमाशङ्कते—**न चैतत्रमिति**। समाधत्ते—**दम्पत्योरिति**। कर्तृत्वस्यव्यासज्यवृत्तित्वात्। कर्तृगतायाः संख्यायाः आख्यातेनोपात्तत्वात्। सर्वत्र संख्याभिधानमाख्याभिधानमाख्यातेनैव न भवतीत्याह—**क्वचिदिति**। लक्षणयापि संख्याभिधानमिति। **यथेति**। **सर्वत्रनैकस्वै** पुरुषस्याधिकार इत्याह—**क्वचिदिति**। क्वचिद् द्वयोरपि पुरुषयोरधिकार इति। उदाहरति—**यथेति**। **कुलाय यज्ञ इति**। एतत्संज्ञके यागे इत्यर्थः यजेयातामित्याख्यातेन कर्तृगतं द्वित्वमभिधीयते। एककल्पस्थितयोः राजपुरोहितयोः सहाधिकारः सम्भवति, परन्तु भिन्नकल्पयोः राजपुरोहितयोः कथं सहाधिकार इत्याशङ्कते—**नन्विति**। उपपादयति—**तथा हीति**। राज्ञः नाराशंस एव द्वितीयः प्रयाजः। तथैव च ब्राह्मणस्य पुरोहितस्य वसिष्ठादिगोत्रीयस्य परन्तु तद्भिन्नगोत्रीयस्य तनूनपाद्द्वितीयो भवति। एवमेव राज्ञः फलचमसः ब्राह्मणस्ये च सोमचमस इति। औदुम्बरं फलं सम्पिष्य दध्ना सह मेलयित्वा भक्षनिर्माणम्। यद्यपि स्तिभिनीशब्दः लम्बमानरज्वाकारवस्तुविशेषवचनस्यापि वाक्यान्तरप्राप्तत्वात्पालग्रहणमिति तत्प्रतिपादकं वचनमुपस्थापयति—**तथेति**। वस्याप्येकस्य कल्पस्यानुष्ठानं कश्चदपि कुर्यादित्याह—**तन्नान्यतरेत्यादि**। यदि राजन्यः सोमचमसमनुतिष्ठति ब्राह्मणश्च फलचमसं तर्हि गुण्यात् फलाभाव एव स्यात्। उभौ उभयोरनुष्ठानं कुर्यातामित्याह—**चेति**। समादधाति—**अनुवादविरोधादित**। सिद्धान्तमुपस्थापयति—**तेनेति**। कथं समानकल्पयोरेकराजसम्बन्धिनोः ग्रहणमित्याह—**पुरोहिताविति**। पुरोहितश्च पुरोहितश्चेत्ययेकशेषः। ततश्च राज्ञः पुरोहित इति षष्ठीसमासः। अथया पूर्वं तत्पुरुषः, पश्चाच्चैकशेषः तेन च भिन्नराजसम्बन्धिनोः

पुरोहितयोरिति । अथवा कर्मधारयस्ततश्चैकशेषः तेन च राज्ञोः सतोः पुरोहितयोरिति स्यात् कः पक्षः श्रेयानित्याह—**उच्यत** इत्यादिः लक्षणदोषग्रस्तत्वान्नि षष्ठीसमासो युक्तः राजा च पुरोहितश्चेति द्वन्द्वसमासाश्रयणे लक्षणाभावात्स एवाश्रयणीयः । तदपेक्षया तस्यैव बलवत्त्वात् एकस्यैव राज्ञः पुरोहितद्वयेऽपि द्विवचनस्योपपत्तौ न काचित् क्षतिरित्याह—**न चैकस्येति ।** प्रमाणं दर्शयति—**'पुरोहित वृणीते'** इति । अनेनैकस्यैव पुरोहितस्य वरणविधानात् वाक्यार्थं योजयति—**वरणकर्मीभूतस्येति ।** वरणक्रियाकर्मीभूतस्येत्यर्थः । वृत्तेन पुरोहितेनेष्टं भाययेदिति वाक्यार्थसत्त्वात् उपादेयगतमेकत्वं विवक्षितं भवतीति भावः तत्पुरुषसमासोत्तरमेकशेषपक्षस्तु कथन्न युक्त इत्याह—**तत्पुरुषोत्तरमिति ।** राज्ञः पुरोहितः राजपुरोहितः । ततश्च पुनः राजपुरोहितश्च राजपुरोहितश्चेत्येकशेषः । पक्षेऽस्मिन् राजपदवैयर्थ्यं दर्शयति—**राज्ञ एवेति ।** राजा एव पुरोहितं वृणोति, नान्य इति कर्मधारयपक्षोऽपि न समीचीन इत्याह—**कर्मधारयोऽपीति ।** न राजा पौरोहित्य करोति । राज्ञः ब्राह्मणवृत्तिनिषेधात् । आपदि वैश्यावृत्तिरेवाभ्यनुज्ञाता वर्त्तते । तस्मान्न युक्तः कर्मधारय इति । उपसंहरति—**तेनेति ।** वचनाद् वचनप्रमाण्यादित्यर्थः । सहाधिकारः राजपुरोहितयोरित । **क्वचिदिति ।** द्वादुशाहादिसत्रेषु । 'चतुर्विंशतिपरमा' इत्यादिवचनेन धाहूनामपि सहधिकार इति । तत्प्रकृतिकत्वाद् द्वादशाहयक्रुतिकत्वादित्यर्थः । सत्रं लक्षयति—**यत्रेति ।** अहीनं लक्षयति—**यत्र यजतीति ।** **अहर्गणस्येति ।** इमौ द्वौ भेदावित्यर्थः विधिवाक्यमुदाहरति—**द्वादशाहश्चेत्यादिना ।** द्वादशाहं विभजते—**विविध इति ।** उभयोः स्वरूप दर्शयति—**तत्रेत्यादिना ।** सत्र बहुकर्तृकं भवति, अहीनश्चैकर्त्तृकः द्विकर्त्तृकः वहुकर्त्तृकश्चेति भेदः अतएवात्र वहूनामधिकारः । समानकल्पानामेवाधिकारोऽत्र । **वासिष्ठादीनामिति ।** वाराशंसे वासिष्ठादय एव कर्त्तृत्वेन विहिताः सन्ति ततश्च वासिष्ठावासिष्ठभयसाधारणैरनुष्ठीयमानो नाराशंसो वासिष्ठकर्त्तृक एवेति । ततश्च कर्मणि वैगुण्याभावात्सर्वेषां समानमेव फलं स्यात् । **षष्ठीश्रुत्येति ।** **प्राधान्यावगमादिति ।** नाराशंसादीनामपि तादर्थ्येनैव विधानं दृश्यते । कथं तादर्थ्यमित्याह—**तादर्थ्यञ्चेति ।** अनेन च स्वतन्त्रादृष्टकल्पनापि भवति । **एवञ्चेति ।** अनेनैव क्रतुफलमपि वासिष्ठादीनां भवतीति । अन्येषाञ्च तनूनपाद् सम्पादनेन फलप्राप्तिरिति विशेषः । नियमस्वीकारे चैवं पाक्षिकाश्रयणेऽन्येषां फलसिद्धिरिति । उभयोश्च सम्पादनासम्भवः संख्याविरोधात् । अतः समानकल्पानामेवाधिकार इति सिद्धान्तयति । सत्रमपि ब्राह्मणाब्राह्मसाधारणं न भवतीत्याह—**तत्र चेति ।** ब्राह्मणानामेवाधिकारो

न राजन्यप्रभृतीनामिति। **तेपु हीति**। सत्रेषु यजमाना एव ऋत्विजो भवन्ति। अत ऋत्विक्कार्यसम्पादननाय यजमाना एव विधीयन्त। फलमपि सर्वेषां भवतीति। प्रकृतिभूते ज्योतिष्टोमयागे ऋत्विक् यजमानभिन्नो भवति ब्राह्मणश्च भवतीत्याह—**प्रकृताविति**। तत्र ब्राह्मणस्य विधानाभावेऽपि सर्वत्र ब्राह्मणस्यैवर्त्विज्ये तत्रापि तस्देवेत्याह—**यद्यपीति**। **षण्णां त्विति**। कर्मषट्कमध्ये त्रीणि कर्माणि जीविकात्वेन प्रसिद्धानि सन्ति। तत्रैव याजनमपि विद्यत एव। अतोऽऽर्त्विज्यं ब्राह्मणस्यैवेति। शेषभक्षणमपि ब्राह्मणानामेव, न सर्वेषामित्याह—**ब्राह्मणानामिति**। **एवमिति**। अयं भावः—ज्योतिष्टोमयागेषु आर्त्विज्यमतिदेशेन प्राप्ते। ब्राह्मणातिरिक्तानामार्त्विज्यं प्राप्तमपि न तेषां भवति। ब्राह्मणास्यार्त्विज्यबाधे प्रमाणाभावात्। अतएवात्र ब्राह्मणा एव यजमाना भवन्ति। तेषामेवार्त्विज्येप्यधिकार। इति। तत्रापि न सर्वेषां ब्राह्मणानामपि तु वैश्वामित्राणां तत्समानकल्पनांवाधिकार इत्याह—**तेष्वपीति**। तत्रैव प्रमाणत्वेन वचनमुपन्यस्यति—**विश्वामित्र इति**। वसिष्ठगोत्रस्यैव नाधिकार इत्याह—**यद्यपीति**। 'वसिष्ठो ब्रह्मा' इतिवचनस्य सत्त्वेऽपि 'य एव कश्चिद् स्तोमभागानधीयीत, स एव वासिष्ठः' इति वचनान्तरेण गोत्रस्य वाधितन्न तद्गोत्राणामेवाधिकारः, अपि तु तदध्येतॄणामेवेति। तत्रापि न सर्वेषामधिकार इत्याह—**तत्रापीति**। फलश्चाधातुरेव भवतीत्याह— **आधानविधिरित्यादिः**। सत्रं केषेषां फलप्रदं भवतीत्याह—**तेनेति**। तत्रैव वचनमप्युपस्थापयति—**श्रूयते चेत्यादिना**। **तेनेति**। सत्रेषु विशेषणत्रयविशिष्टानामेवाधिकार इति। एतन्नियमस्याव्यप्तिं दर्शयति—**नन्वित्यदिनां**। सार्द्धशतद्वयसम्वत्सरसाध्यं वा सहस्रसम्वत्सरसाध्यं सत्रं 'शतायुर्वा पुरुषः' इति वचनेन न पुरुषाधिकारः सम्भवः। तर्हि केषां तत्राधिकार इत्याह—**तेन येषामिति**। **मर्मसु** मनुष्याधिकारत्वात् गन्धर्वादिषु अध्ययनसिद्धाविद्याभावादाधानासिद्धाग्न्यभावाच्च नाधिकार इत्याह—**मनुष्याणामेवेति**। अत्रैव पक्षान्तरं दर्शयति—**यद्वेति**। पुनश्च पक्षान्तरं दर्शतुमाह—**यद्वैतदिति**। एतत्पक्षत्रयं खण्डयितुमाह—**नैतदिति**। तत्र प्रथमं पक्षं निराकरोति—**न हीति**। **आयुर्वृद्धेर-**प्रमाणिकत्वादिति भावः। द्वितीयः, कुलकल्पस्वीकारे न कश्चिदपि फलभाग् भविष्यतीति। यागादिकमारभ्य परिसमापयति यः स एव फलभाग् भवति। कर्मणः परिसमाप्तावेव शास्त्रस्य चरितार्थता। तदविनाभावेनार्थापत्त्याक्षिप्यतेऽऽरम्भ इति। योऽऽरभते स एव परिसमापयति। चेत्तर्हि स फलभाग्भवेत् नान्यथा। कुलकल्पे च नैतत्सम्भवमित्यादिकं स्पष्टयितुमाह—**यदि चेति**। योऽऽरभते न च च परिसमापयनि, स गर्हित इत्याह—

**आरब्धासमाप्ताविति** । आरभ्यापरिसमाप्तौ दोषमुद्घाटयति—**दोषप्रायश्चित्ते इत्यादिना** । आरब्धस्य काम्यकर्मणः परिसमाप्तिरावश्यकीत्याह—**अतएवेति** । पापक्षयार्थमारभ्य परिसमापयेत् । इत्यर्थापत्तिपरिकल्पितया श्रुत्यापि समापनमवश्यकमेव कर्त्तव्यमित्याह—**शिष्टेत्यादिना** । वैदिकेऽनुष्ठाने एवायं प्रतिबन्ध इत्याह—**लौकिकं त्विति** । तत्रारम्भपरिसमाप्तौ न नियोग इति भावः । **तेनेति** । लौकिके कार्ये न शिष्टजनगर्हणं दृश्यते । उपसंहरति—**तेनेति** । न कुलकल्पः समीचीन इत्यर्थः । तृतीयपक्षनिरासायाह—**त्रतीयस्त्विति** । अत्र प्रमाणाभावादेवायुक्तत्वमिति प्रकारान्तरेण कल्पयति—**तर्हीति** । सहस्तसंख्येयं न सम्वत्सराणाम्, अपि तु यजमानानामियं संख्येति । वाक्यं योजयति—**पञ्चपञ्चाशदिति** । पालिमाह **तेनेति** । पक्षमिमं खण्डयति—**नैवमिति** । सम्वत्सरसामाधिकरण्यश्रुतसंत्या सम्वत्सरस्यैव विशेषणीभूता, न यजमानस्येति अपि च चतुर्विंशतिपरमा इत्यादौ श्रुतायाः संख्यायाः बाधप्रसक्तिश्च स्यात् । अतो यजमानविशेषणत्वं संख्यायाः न युक्तम् । क्वचिद् सम्वत्सरशब्दः मासरूपेऽर्थेऽपि प्रयुज्यते तथैवात्रापि गौणः प्रयोगः कल्पनीय इति शङ्कते—**तर्हीति** । तदपि नेति खण्डयति—**तत्रापीति** । मनुष्याणां न शक्तिरिति । तावन्मात्रं जीवनं न सम्भवमित्याह—**न ह्यनुपनीतस्येति** । पुनश्च द्वादशरात्रिपरत्वमस्य सम्वत्सरशब्दस्य कल्पनीयमिति शङ्कते—**तर्हीत्यादिना** । खण्डयति—**तदपीत्यादिना** । एतादृशप्रयोगस्याप्रसिद्धत्वादित्यर्थः । वैपरीत्यापादनं करोति—**प्रत्युत इत्यादिना** । उपसंहरति—**तस्यादिति** । एतावत्कालपर्यन्तं मानवजीवनासम्भवादुपायान्तराभावाच्च मनुष्यभिन्नगन्धर्वादीनामेवात्राधिकार इति प्रतीमः । सिद्धान्तपक्षमत्रोपस्थापयति—**अत्रोच्यते** । इत्यादिना । कर्मसु मनुष्याधिकारत्वात्वात्तस्यैव च शास्त्रसम्मतत्वान्न गन्धर्वादीनामधिकारकल्पनमुचितमिति भावः । अपि चाध्ययनसिद्धा विद्याभावादाधानसिद्धाग्न्यभावाच्च न गन्धर्वादीनां सामर्थ्यकल्पनम् सम्वत्सरशब्दोऽयं दिवसेषु गौण इत्याह—**तेनायमिति** । दृष्टान्त दर्शयति—**द्वादशाहे हीति** । सम्वत्सरशब्दस्य निवसपरत्वमुपपादयति—**इहापीति** । तत्सामाधिकरणतत् त्रिवृदादिसामानाधिकरण्यादित्यर्थः । कर्मसु मनुष्याधिकार एवेत्युपसंहरति—**तेनेत्यादिना** । मनुष्येष्वपि ब्राह्मणानामेवाधिकार इति । क्वचिच्च वचनप्रामाण्यात् क्षत्रियस्याप्यधिकार इत्याह—**क्वचित्त्विति** । एवकारेणान्यव्यावृत्तिरिति बोध्यम् । वचनञ्च 'राजाराजसूयेनेत्यादि । राजसूयपदघटकराजपदं रूढया क्षत्रियत्वजातिवाचकदेशविशेषं ब्रूते । प्रजापानादिकर्मक्षत्रियस्य राजन्यपदेनोच्यते । यक्प्रत्ययमुपपादयति—**कर्मणीति** । शङ्कते—

**नन्विति ।** अयं भावः—आर्यावर्त्तदेशे प्रजापालनकर्त्तरि राजशब्दस्य प्रयोगात्प्रजापालनादिकञ्च त्रैर्वणिकेऽपि सम्भवात्क्षत्रियवाचकता न स्वीकर्त्तुं शक्यते राजपदस्य अतः स्वदेशीयव्यवहारं परित्यज्य देशान्तरप्रसिद्धार्थ-ग्रहणं नोचितमिति । **स्मृतिरपीति ।** यथा गच्छतीति गौरिति व्युत्पत्ति-सत्त्वेऽऽपि गोशब्दः पशुविशेषे रूढस्तथैव राज्यपदमपि सानुत्वानुशासन-मात्रार्थे रूढ इति । **तत्कर्त्तरि** प्रजापालनकर्त्तरि तत्र प्रयुक्तं राजपदं त्रैर्वणिकबोधकमिति । **अतएव** त्रैणवर्णिकबोधकत्वादेव । अत्रेष्टियागे त्रैवार्णिकाधिकारो बोध्यते । तदर्थमेव वचनमुदाहरति—**यदीत्यादि ।** उपसंहरति—**तस्मादिति ।** राजसूययागे त्रैर्वणिकानामधिकारः, न तु क्षत्रियाणामेवेति सिद्धान्तयति—**उच्यते इत्यादिना ।** अयं भावः—'राजान-मभिषेचयेत् । इति वचनेनाभिषेकसंस्कारानन्तरमेव राजशब्दः प्रवर्त्तते, न त्वभिषेकात्पूर्वं राज्यकर्त्तरि अभिषेकात्पूर्वं राज्यकर्तृत्वमपि न भवतीत्याह —**न चेति ।** **तस्य** राज शब्दस्य । **यदि चेति ।** यदा राजपदमप्रसिद्धार्थवाचकं स्यात्तदाभिषेकेण राजानं भावयेदिति वाक्ययोजना । राजपदं क्षत्रियत्वजातौ द्रविडादिदेशे प्रसिद्धम् । **तामेव प्रसिद्धिमेव ।** व्याकरणस्मृत्या तां प्रसिद्धिमेव साध्यते । आर्यावर्त्तदेशस्थत्रैर्वणिकादौ प्रयोगस्य का गतिरित्याह—**यस्त्विति ।** राज्यकर्त्तरि ब्राह्मणादौ औपचारिकः प्रयोग इति । तेन च श्रुतिस्मृत्योरर्थ-भेदकरणं नोचितमिति भावः । उपसंहरति—**तेनेति ।** राजसूययागे क्षत्रियमात्रस्यैवाधिकारः । अवेष्टौ ब्राह्मणादिपदश्रवणं किंप्रयोजनक-मित्याह—**एवञ्चेति।** एवञ्च यदि शब्दः कथं योज्यते इत्याह—**यदीति ।** योजनां **दर्शयति—यदि रोचेतेति ।** ब्राह्मणाय च राजसूयाद् वहिर्भूतस्या-वेष्टेर्विधानमिति । एवमेव राजन्यवैश्यकर्तृकमपि 'भवतीति बो'ध्यम् । किं फलकं तदित्याह—**तस्येति ।** फलप्रतिपादकं वाक्यमुपस्थापयति—**एतयेति ।** **सिद्ध इति ।** राजसूयनामके यागे क्षत्रियस्यैवाधिकारः सिद्ध्यतीति भावः । 'वैश्यो वैश्यस्तोमेव यजेत' इति वाक्येन विहितत्वात् वैश्यस्तोमे वैश्यस्यैवा-धिकारः, नान्यस्येति । परन्तु विशेषरूपेण कस्मैचित् वचनं नास्ति तर्हि वैदिककर्मानुष्ठान त्रैर्वणिकानामेवाधिकार इति । **संक्षेप इति ।** विस्तरस्त्व-न्यत्र द्रष्टव्य इति ।

अधिकारविधिनिरूपणान्तरं क्रमप्राप्तत्वात्प्रयोगविधिं निरूपयितु-मुपक्रयते—**एवमुत्पन्नस्नेति ।** उत्पन्नस्यैव व्याख्या विनियुक्तस्येति फलविशेषेण स्वर्गादिना सम्बद्धस्य च यागादिकर्मणः साङ्गस्य सर्वाङ्ग-विशिष्टस्व प्रयोगं यो विधिर्बोधयति, स प्रयोगविधिरिति । अधिकारविधिं

दृष्टान्तेनोदहरति—**यथेति**। अधिकारविधिरेव साङ्गप्रधानप्रयोगमनुष्ठापयतीति सम्बन्धः। पूर्वन्तावत् भावनायाः स्वर्गादिकफलविशेषेण सह सम्बन्धो भवति। तदनन्तरमितिकर्त्तव्याकाङ्क्षापरपर्यायभूता कथं भावाकाङ्क्षा जायते। तदनन्तरञ्चाङ्गवाक्यानां प्रधानवाक्येन सहैकवाक्यतया सर्वाङ्गसहितप्रधानानुष्ठानं सम्पादयति प्रयोगविधिः। क्रमं बोधयति—**तदित्थमित्यादिना**। देशकालकर्त्तारमभिसमीक्षय एतदनन्तरमेतदिति रीत्या सम्पूर्णतां यावदनुष्ठापयेदिति। मध्ये केनापि भिन्नेन पदार्थेन व्यवदध्यात्। अतएवोक्तं न्यायप्रकाले 'प्रयोगप्राशुभाववोधको निधिः' प्रयोगविधिरिति। प्राशुभावः शैघयम् अव्यवहितोत्तर यावत्। क्वचिदुत्पत्तिवाक्यप्राप्तपदार्थमेवानुष्ठापयतीत्याह—**क्वचिदिति**। उदाहरति—**यथेति**। क्वचिच्चैकेनेववाक्येनोभयप्राप्तिरित्याह—**क्वाचित्तेनैवेति**। उदाहरति—**यथेति**। 'उद्भिदा यजेत पशुकाम' इत्यत्रैव चत्वारोऽपि विधयः संघटन्त इत्याह—**अत्र हीति**। तत्तद्विधिप्राप्तान्येवाङ्गान्यनुष्ठाप्यन्ते। अतश्च विधिशक्तिर्विहन्यते इत्याह—**तेनेति**। प्रकृतावङ्गानां विधिना सहैकवाक्यतां दर्शयति—**अङ्गविधयश्चेति**। विकृतौ च केचित् पदार्थाः श्रूयन्ते केचिच्चातिदेशवाक्येनोपस्थाप्यन्ते। अतिदेशं लक्षयति—**अतिदेसो नाम इति**। अन्यत्र प्रकृतौ श्रुतानामङ्गानामन्यत्र विकृतावतिदेशनम् **उक्तञ्चेति**। वार्त्तिके इति शेषा। **प्राकृतादिति**। प्राकृतकर्मणः समानकर्मसु विकृतिषु—धर्माणाषामतिदेशनम्। अतिदेशं विभजते—**स त्रिविधि इति**। प्रथममुदाहरति—**आधो यथेति**। वचनातिदेश इति। प्रथमन्तावत् 'इषुणाभिचरन् यजेत' इत्यनेनेषुयागो विधीयते। ततः 'इषुं विष्टुतिं करोति' इत्यादिवाक्येभ्यस्तङ्गानि विधीयन्ते। ततश्च 'समानमितरच्छयेनेन' इति श्रूयते इति स्थितिः। अनेन च वाक्येन श्येनसामान्यमिषाविति विधीयते। समानमिति वचनेनातिदिश्यन्ते। अतः श्येनयागे। यानि कण्टकविनोदनान्यङ्गानि श्रूयन्ते, तान्यत्राप्यतिदिश्यन्ते। द्वितीयमुदाहरणम् चातुर्मास्यस्य वैश्वदेवाख्ये प्रथमे पर्वणि आग्नेमादीमां पञ्चयागानां विधानं दृश्यते। ततो द्वितीये पर्वणि वरुणप्रधासे पुनस्तेषां विधानम्। ततश्च 'एतब्राह्मणानि' इति श्रुतमिति स्थितिः। अनेन वाक्येनैव पूर्वपर्वस्थानि हवींषि अङ्गवाक्यानि अर्थवादवाक्यानि चादिदिश्यन्ते। द्वितीये पर्वणि ऐन्द्राग्न एकादशकपालः, काय एककपालश्च हविः श्रुतम्। तस्याप्यतिदेशो भवति। एवमेव साकमेधसंज्ञके तृतीये पर्वणि ऐन्द्राग्न एकादशकपालः श्रुतः। ततः 'यद् ब्राह्मण इतरश्चेति' श्रूयते। अत्रापि ब्राह्मणवचनप्रामाण्यात् हविषोऽतिदेश इति। नामातिदेशोदाहरणम्—**द्वितीयस्त्विति**। 'उपसद्भिश्चरित्वा'

इत्यादि श्रुतम् । अत्र विहितानि होमादीनि नित्याग्निहोत्राद्यपेक्षया भिन्नानि कर्माणि अत्र प्रयुक्ताग्निहोत्रशब्दस्यांप्रवृत्तिनिमित्तभूताग्नादियोगज्ञानाभावान्न नामधेयम्, तथापि नामसाम्यात् नित्याग्निहोत्रधर्मा अत्रातिदिश्यन्त इति । एवमेव 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति श्रूयते । ततश्च 'यः पुरोधाकामः स्यात्स बृहस्पतिसवेन यजेत' इति श्रुतम् । उभाभ्याञ्च विहितं भिन्नं भिन्नं कर्म तथापि पौरोहित्यर्थत्वेऽपि बृहस्पतिसवधर्माणामतिदेशो भवति, नामसाम्यात् यौगिकस्य नाम्नोऽतिदेशकत्तं न भवतीत्याह—**यत्त्विति** । द्वादशाहे गवामयने च प्रमणीयसंज्ञमेवाद्यमहः इति तथापि प्रापणीय इति नामसाम्यादपि न तद्धर्माणामतिदेशः योगं दर्शयति—**प्रयन्तीति** । योगवलेनैवोभयोः प्रवृत्तिरूपपद्यते । तृतीयं चोदनालिङ्गातिदेशमुदाहरति—**'सौर्यं चरूं निर्वपेत्'** इत्युदाहरणम् । अत्र हि निर्वपतीति चोदनागतं लिङ्गम् । अनेनैव समानधर्माणामतिदेशः अर्थगतं लिङ्गं यथा—**'चतुरश्चतुरो मुष्टीर्निपति'** इत्याग्नेये वाक्ये देवतैक्यसाम्मत् औषधद्र यकत्वसाम्पाच्चातिदेशः । **एवमेवति** । 'आग्नावैष्णवमेकादशकपालं निर्वपति' इत्यत्रापि निर्वपतीति चोदनासामान्यादग्नीषोमीयधर्मातिदेशः । कुत इत्याह—**द्विदेवत्यत्वादिति** । ऐन्द्राग्नमित्यादौ ऐन्द्राग्नधर्मातिदेशः इन्द्राग्नीदेवतासामान्यात् । एवमेवआज्यद्रव्यकत्वंसामान्यात् 'सरस्वतीमाज्यस्य यजेत' इत्यादिषूपांशुयाजधर्मातिदेशः । 'दधि मधु घृतम्' इत्यादिविहितप्राजापत्ययागे दधिरूपद्रव्यसाम्यादैन्द्रदधिधर्मातिदेशः । मधूदकघृतेषूपांशुयाजधर्मातिदेशः, द्रव्यत्वसाम्यात् वर्णसामान्याच्च । पयोद्रव्यकत्वसामान्यात्पयसि चैन्द्रपयोधर्माणामतिदेशः । औषधद्रव्यकत्वसामान्यात् धानातण्डुलेष्वाग्नेयधर्माणामतिदेशः । यागादिकर्मणि देवता शब्द द्वारान्वेति । अतो न साक्षादन्वयः । साक्षादन्वयेन द्रव्यस्यान्तरङ्गत्वं भवति । परम्परान्वयेन देवतानां वहिरङ्गत्वम् । अन्तरङ्गे कर्त्तव्ये वहिरङ्गस्य दुर्बलत्वम, विलम्बोपस्थितिकत्वादिति सवमभिप्रेत्याह देवतासामान्याच्चेति उदाहृतम्—**यथेति** । **नाग्नेयधर्माणामिति** । गहिरङ्गत्वात् । दर्शपूर्णमासौ सर्वासामिष्टीनां प्रकृती । अतस्तद्धर्माणां सर्वास्विष्टिषु चोदनालिङ्गसामान्यादतिभवतीति । यत्र त्वङ्गविधिनैव नैराकाङ्क्ष्य तत्र नातिदेश इत्याह—**याष्विति** । उदाहरति—**यथेति** । 'आदित्यः प्रापणीयः इत्यादौ सर्वत्र पुनःश्रवणबलादेव नातिदेश इति द्रष्टव्यः । शङ्कते—**न चेति** । समाधत्ते—**तस्येति** । पाठप्रमाणप्राप्तत्वेन मन्त्रदेव प्राप्तिसत्त्वात् एतासामिष्टीनामपूर्वत्वं निवारयति—**तेनेति** । **एवमिति** । साक्षात्पशुप्रभवद्रव्यकत्वसामान्याद् दर्शान्तर्गतपयोधर्माणामग्नोषोमीयपशुयागेऽतिदेशः । **एकादशप्रयाजानिति** ।

अत्र प्रयाजमनूद्य गुणविधानम् विशिष्टविधिरपि नेत्याह—**विशिष्टविधा-विति**। सवनीयादिसर्वपशुयागेषु अग्नीषोमीयपशुयागधर्माणामतिदेशः। पशुद्रव्यकत्वात् द्वैरशन्यसाम्यात् पश्वेकादशिन्यां सवनीयपशुधर्माणामति-देशः। एवमेव पशुगुणत्वसाम्यात् पश्वेकादशिनीधर्माणां सर्वपशुगणेष्वति-देशः। अपूर्वपदार्थं स्पष्टयति—**यत्रेति**। उदाहरति—**यथेति**। पूर्वन्तावत् त्वाष्ट्रस्य पशोरालम्भनं विधायोत्सर्गे विहितः। अत्र पुनः श्रवणादेव पर्यग्निकरणान्ताङ्गरीतरुत्तराङ्गानां नातिदेशः। तत्फलमाह—**तेनेति**। एवमेव 'ईशानाय' इत्यादावपि बोध्यम्। 'आज्येन शेषं संस्थापयति' इत्यनेनाज्यद्रव्यकस्य कर्मान्तरस्यैव विधानम्। पशुयागाङ्गत्वेनेत्यादिना तस्य यागत्वसिद्धिरिति। वाक्यार्थं दर्शयति—**आज्यमिति**। आज्यभाग-स्यान्तेऽनुष्ठानं भवति अतएव तच्छेषसंस्थापनोपचार इति। सर्वेषु सोमयागेषु अव्यक्तत्वसाम्यात् ज्योतिष्टोमगतधर्माणामतिदेशः किं नामा व्यक्तत्वमित्याह—**अव्यक्तत्वञ्चेति**। **स्वार्थेति**। विधिवाक्यविहितदेवता-रहितत्वमिति। ज्योतिष्टोमस्याव्यक्तत्वं प्रसाधयति—**ऐन्द्रवायवमित्यादि-**ग्रन्थेन। तथाहि—'ऐन्द्रवायवं गृह्णाति' इत्यादिभिर्वाक्यैः ग्रहणक्रियाङ्गत्वेन विहिताः देवताः स्वसम्बन्धिनं यागं तथा 'सोमेन यजेत' इत्यनेन विहितो यागो देवतामपेक्षते। एतयोश्च यागदेवतयोः नष्टाश्वदग्धरथवत् सम्बन्धः, न त्वङ्गाङ्गित्वभावेनेति। यागाङ्गत्वेन देवताभिधानाभावादेवाव्यक्तत्वम-स्येति बोध्यम्। 'विश्वजिता यजेत' इत्यादिभिर्विहिताः विश्वजिदादयोऽ-व्यक्तयागा एवेति। देवताविधानाभावात्। अव्यक्तत्वसामान्यादेव द्वादशाहयागेऽपि ज्योतिष्टोमधर्माणामतिदेशः। एवमहर्गणत्वसामान्याद् द्वादशाहधर्माणामितरेष्वहर्गणेष्वतिदेशः। तत्रापि न सर्वत्र सर्वेषामतिदेशः, अपि तु सत्रात्मकद्वादशाहधर्माणां सत्रेषु तथा त्रयोदशरात्रादिधर्माणां गवामयनादिष्वतिदेशः। अहीनात्मकद्वादशाहयागधर्माणाहीनेष्वतिदेशस्तथा द्विरात्राद्येकादशरात्रपर्यन्तेष्वनिदेशा, अधिकांशसामान्यात्। सम्वत्सरसत्रत्व-सामान्यात् गवामयनधर्माणां सम्वत्सरसाध्यसत्रेष्वतिदेश इति। **एवमय-मिति**। एतेन प्रकारेण चोदनालिङ्गातिदेशो निरूपित इत्यर्थः। अतिदेश-क्रमं निरूपयति—**एवमित्यादिना**। त्रिविधेन पूर्वोक्तेनातिदेशेनेत्यर्थः। सर्वप्रथमं विकृतियागाकाङ्क्षितत्वेन प्राकृतयागाङ्गजन्योपकाराः। ततश्च तत्साधनभूतान्यङ्गानि, ततश्च तद्विधायकानि शास्त्राण्यतिदिश्यंते। ततश्च तदुपस्थापिताङ्गविध्येकवाक्त्वेन विकृतिप्रयोगविधिस्तदुपस्थापितान्यङ्गान्य-नुष्ठापयति। भाष्यकारीयवचनं प्रमाणत्वेनोपन्यस्यति—**ततुक्तं भाष्ये इति**। चोदकोऽतिदिष्टविधिवाक्यम् भाष्यं व्याख्याति—**प्रकृतोपकारपृष्ठभावे-**

**नेत्यादिना**। **तत्सिद्धये**ऽतिदिष्टपदार्थानुष्ठानसिद्धये इति। ऊहं लक्षयति—ऊहो नाम इति। **कार्यवशेन** कार्यमनुसृत्य **अन्यथाभावः** विपरिवर्त्तनम्। **तदुक्तमिति** वार्तिके इति शेषः। **प्रकृतेति**। प्राकृतयागे यत्पदं तत्स्थाने पतितः विकृतौ पदार्थान्तर ऊहः। ऊह्यमानमेव पदं प्रयुज्यतेऽनुष्ठानकाल इति। अनुपदमेवोदाहरणेन स्पष्टीभविष्यति। ऊहं विभजते—**स त्रिविध इति**। उदाहरति—**आद्यो यथेति**। आदौ भव आद्यः प्रथम इत्यर्थः। 'अग्नयेत्वा जुष्टं निर्वपामि' इति प्राकृतं वाक्यम्। अत्राग्निर्देवता। विकृतौ च सूर्यः देवता। तदर्थमूहोऽऽवश्यकः। अतस्तस्मिन् वाक्ये 'अग्नये' इति पदमयसार्य 'सूर्याय' इति पदप्रक्षेपः। तस्मात् 'सूर्यायत्वा जुष्टं निर्वपामि' इत्यूह्यमानो मन्त्रः। नाग्निपदं सूर्यदेवताप्रकाशनसमर्थम्। अतः सौर्यवाक्येऽतिदेशेन सूर्यदेवताप्रकाशसमर्थं सूर्यपदमूह्यते। अग्निपदं विपरिवर्त्त्य सूर्यपदप्रक्षेप एवान्यथाभावः तत्र एव प्रयोगविधिनानुष्ठाप्यते प्रकृतौ मुख्यार्थप्रतिपादक—प्रभृतीनां विकृतौ तत्कार्यसम्पादनान्यथाभावेन कल्प्यत इत्याह—**अयञ्चोह इति**। उदाहरदि—**यथेति**। अतएवेति पाठान्तरम्। प्रकृतौ सोमक्रयसम्पादनार्यैकहायनीत्वविशिष्टा गौरावश्यकी। तदर्थमेव वाक्यं 'इयं गौस्तया ते क्रीणामि' इति। विकृतौ च सोमक्रयणाय साऽस्त्रिवत्सो विहितः। अतस्तत्र साण्डेनोह्यते इत्याह—**यथा इयमिति**। प्रकृतावेकहायनीत्वकालविशिष्टायां गवि दुग्धादेरभावेऽपि भाविदुग्धदानमादाय गौणो व्यवहारः समुचितः। परन्तु साण्डे कदापि दुग्धसम्भावना नास्ति। कथं तर्हि साण्डेनोह इत्याह—**प्रकृतावेकेत्यादि**। साण्डेनोत्वादयिष्यमाणधेनुद्वारा साण्डेऽपि दुग्धदानहेतुतायाः सम्भवात्। अतस्त्राप्यौपचारिको व्यवहारः सङ्गच्छते। 'पत्नीं संनह्यति' इत्यत्रैकवचनस्यैकपत्नीकत्वे चरितार्थेऽपि द्वितीयपत्नीकानां कृते ऊहः प्राप्त इत्याह—**पत्नीमित्यादि**। नोह इति भावः। **प्रकृतौ हीति**। द्विबहुपत्नीकत्वस्य विद्यमानत्वेऽपि पत्नीशब्दोन सामान्यनारीवचनः, अपि, त्वपूर्वसम्पादकपत्नीव्यक्तिबोधकः। अतएव 'पत्युर्नोयज्ञसंयोगे' इति पाणिनिस्मरणमपि सङ्गच्छते। अतः सामान्यसंख्याबोधकत्वस्य विद्यमानत्वेन मुख्यार्थप्रतिपादकत्वेऽपि दृष्टप्रयोजनकत्वाभावेनादृष्टप्रयोजनकत्वात्। **दर्शपूर्णमासयोरिति**। 'उपहूता मनुष्याय' इत्यादिमन्त्र इड्रानिगते श्रुतः। तदर्थश्च दर्शयति—**ये ब्रह्मादय इति**। सत्रेषु यज्ञपतिशब्दस्य नोह इति हेतुमुपन्यस्यति—**एवञ्चेति**। यज्ञपतिशब्दः मुख्यार्थवृत्त्या यजमानवचनः। इडास्तुतेश्च यजमानप्रोत्सानरूपं दृष्टमेव प्रयोजनम्। दृष्टप्रयोजनकत्वेन स्वार्थत्वाभावेन परार्थत्वादिति।

यजमानसम्बन्धिवृद्धिबोधकत्वेऽपीडास्तुतेरूपपत्तेरित्याह—**एवञ्चेति**। इन्द्रागच्छेति। 'इन्द्रागच्छ' इत्यस्य स्थाने 'अग्नआगच्छ' इत्यूहेऽपि रोहिताश्वादिपदैर्नोह इति। तत्रैव हेतुमुपपन्यस्यति—**प्रकृतावित्यादि**। यद्यपि हरिवत्तादिगुणेषु मुख्यत्वमस्ति तथापि तस्यहरिवत्तादिगुस्य 'इन्द्राय हरिवते धानाः' इत्यादिभिर्मन्त्रैः देवतान्तर्गतत्वेदं दृष्टार्थत्वं प्रतीयते तथापि इन्द्ररूपार्थबोधनेन स्वार्थपरत्वेपि इन्द्रे हरिवत्तादेः समवायसम्बन्धेनाविद्यमानत्वात्समवेतार्थत्वाभावात्। यथा अविद्यमानगुणसम्बन्धेनेन्द्रप्रकाशनं तथैवाग्निप्रकाशनमपि अविद्यमानगुणसम्बन्धेनैवेति। ऋङ्मन्त्राणां निषेधसद्भावान्नोह इति। निषेधकवाक्यमुदाहरति—**पूयति वेत्यादि। वतएवेयि।** ऊहाभावादेव। यत्र याज्यानुवाक्ययोरनुपदेशस्तत्र गायत्र्यादिलक्षणेनानुवाक्या कल्प्यते त्रिष्टुबादिलक्षणेन च याज्या कल्प्यते इति भावः। **तादृग्लक्षणयोश्चेति**। यदि। चेत् कल्पनं न सम्भवम्। तर्हि 'इयमाश्रुणुध्री' इत्यमोर्ऋ चोरागमनमुपदिशति। **अस्ति चेति**। पूर्वोदाहृतमन्त्रगतपदवाच्ययागीयदेवताबोधकत्वेन मुख्यार्थत्वमिति 'सूर्याय जुष्टम्' इत्यत्र सूर्यरूपदेवताबोधनरूपकार्यमुखेनाग्निकार्यं सौर्ये प्राप्तम्। अग्नये जुष्टमित्यत्र यत्कार्यमग्निः सम्पादयति तदेव कार्यं सूर्याय जुष्टामित्यत्र सूर्यः सम्पादयति। कार्यापत्त्यै प्रमाणं दर्शयति **कार्यापत्तिश्चेति**। पञ्चभिः प्रमाणैरिति। तानि कामीत्याह—**यथाहुरिति**। प्रत्यक्षविधानाभावे इति। प्रत्यक्षविधेरूदाहरणम्—**नैवारश्चरूरिति**। नैवाश्चिरूरिति श्रुतिस्तथा नोवारस्य विकार हयस्मिनन्र्थे 'तस्य विकारः' इत्यनेन विकारार्थतद्धितप्रत्ययेन च नीवाराणां चरुप्रकृतित्वमिति प्रतीयते। अतएव प्रतीयते। अतएव प्रदेयचरुप्रकृतित्वरूपा व्रीहिकार्यापत्तिः प्रत्यक्षविधिना प्रतोयत इति। **संस्थित इति**। 'षडहे मध्वाशये घृतञ्च' इत्यत्र षडहाभावे विधानादभावे विधानेन षडहकार्यापत्तिः। **तयोरिति**। मधुघृताशनयोरिति। **भाष्ये इति**। **शावरभाष्ये** इत्यर्थ जुहूषा वेत्याद्यर्थवादवाक्यम्। तदर्थालोचनेन नान्यं ब्रूयादित्यादिना षडहजन्यवाक्योच्चारणजन्यश्रमविनोदनार्थत्वमवगम्यते। अतस्तयोः षडहकार्यापत्तिर्नितीवयुक्तं समीचीनमित्यर्थः। वार्त्तिककारीयं मतं दर्शयति—**वार्तिककारैरिति**। भट्टभादैरित्यर्थः। विश्वजिति। सत्रकार्यापत्तिरिति। **नैवारश्चरुरिति**। नखावपूतानामिति कथनेन नखनिर्लुञ्चनं वैतुष्यरूपविकारफलकमिति। प्रतीयते। तदङ्गत्वे नखानां विधानम्। तत्फलकं वैतुष्यभलकमित्यर्थः। विकाररूपेण फलेनावघात—सम्पादकोलूखलमुसलकार्यापत्तिरिति पशुनियोजनन्तावत् यूपे भवति। परन्तु सपशुकचातुर्मास्ये 'परिधौ पशुं नियुञ्जीते इति श्रूयते एनेन

नियोजनकार्यसम्पादनाय परिधेरूपयोग इति प्रतीयते। **अतः परिधौ यूपकार्यापत्तिरिति।** **न गिरागिरेति।** यद् गिरा रति पदं तद् गिरा इत्येवोच्चार्य न प्रयोक्तव्यम्, अपि तु ऐरमिति कृत्वा गायेत्। तस्य विधिवाक्येन सहैकवाक्यतासम्पादनाय। गिरापदोच्चारणनिषेधस्यानुवादकत्वमवगम्यते। **उभयोरक्षरसाम्येन** च गिरापदकार्यापत्तिः सम्भाव्यते। ततश्च निषेधानुवादेनेरापदस्य गिरपदकार्यापत्तिरिति निश्चीयते। **प्रकृते त्विति।** 'सूर्याय त्वा जुष्टं निर्वपामि' इत्यत्र प्रत्यक्षविधिनैव सूर्यस्य यागीयदेवतात्वरूपाग्निकार्यापत्तिर्भवति। अग्निदेवताकविकृतियागे नोहयत इत्याह— **अग्निदेवत्यायामिति।** उदाहरति—**यथेति।** प्रकृतावपि ऊहनिषेधः। यथा **व्रीहीणामित्यादि।** अत्र यवप्रयोगे व्रीहीणां नोह इति तर्हि किं भवतीत्याह— **अप्रयोग एवेति।** प्रयोगाभाव एवेत्यर्थः न व्रीहिकार्यापत्तिरित्यर्थः। हेतुमुपस्थापयति— **तत्रेत्यादिना।** कथं तर्हि विकृतावूह इत्याह— **विकृताविति।** ऊहो भवतीत्यर्थः विकृतावुपकारान्वयपूर्वकएव पदार्थान्वयो भवति। अत उपकारान्यथाभावो वक्तुं शक्यते वार्त्तिकं प्रमाणयति— **सर्वञ्चैतदिति।** सर्वञ्चैतन्निरूपितं महताप्रबन्धेनव्याकरणाधिकरणे तन्त्रवार्त्तिके।

**एवमिति।** 'व्रीहीणां मेधः सुमनस्यमानः' इति मन्त्रः। अत्र हविःप्रकृतिद्रव्यवाचकं व्रीहिपदम्। तस्य 'नैवारश्चरुः' इति विकृतावूहो भवति। ततश्च 'नीवाराणां मेधः सुमनस्यमानः' इति वक्तव्यम्। एवमेव दर्भस्तरणप्रतिपादकः 'दर्भैः स्तृणोत' इति मन्त्रः' 'समौद्गं चरुं निर्वपेत् श्रीकामः' इत्यनेन विकृतियागो विधीयते। अत्र च 'पौण्डरीकाणि बर्हिषि भवन्ति' इति वचनम्। अनेन च दर्भस्थाने पुण्डरीकः अतो दर्भकार्यञ्च पुण्डरीकेषूह्य इति। अर्थात् दर्भस्थाने पुण्डरीकपदस्य प्रयोगः कर्त्तव्यः हरितपदस्थाने रक्तपदं प्रयोक्तव्यमिति। सिताम्भोजे पुण्डरीकपदस्य प्रसिद्धत्वात्कथं रक्तत्वेनोह इत्याह—**यद्यपीति।** 'कप्यासं पुण्डरीकम् इति श्रुतिप्रामाण्यात् रक्तत्वेनोह इति' शावरभाष्ये चैवमेवोहः प्रतिपादितः। **तदेवमिति।** न्त्रादिगतानामूहः प्रदर्शितः। यत्र शक्त्या वृत्त्या समवेमार्थत्वं नास्ति तत्र लक्षणापि समवेतार्थत्वेऽपि ऊहो भवतीत्याह **किञ्चित्विति।** उदाहरति—**यथेति।** **धान्यमसीत्यादौ।** मन्त्रोऽयं तण्डुलपेषणार्थे प्रयुज्यते। धान्यपदञ्च सतुषव्रीहिवाचकम्, तथापि तण्डुलेऽर्थे प्रयुज्यमानं धान्यपदं लक्षणया तण्डुलान् गृह्णातीति लक्षणमोपस्थितानामूहदर्शनात्। शाक्यानामयननामके सत्रे इत्यर्थः। **गृहपतिर्यजमानः।** तत्र हतानां मृगानां तरसमयाः सवनीयाः पुरोडाशा भवन्ति। अत्र मांसमये पुरोडाशेऽपि

मांसपेषणार्थे मन्त्रस्योह इति तत्र कीदृश ऊह इत्याह—**मांसमसीति**। लक्षणया मांसप्रकृतिकमृगपदस्य नोह इत्याह—**न त्विति**। धान्यमसीत्यादौ तथैव मन्त्रपाठसत्त्वाल्लक्षणाश्रयणमगत्या, अत्र स्वाधीने शब्दप्रयोगे प्राप्ते कथमवाचकं पदं प्रयुज्य लक्षणास्वीकार इत्याह—**प्रकृताविति**। भाष्यवचनमुदाहरति—**यथोक्तमिति**। स्वायत्ते स्वाधने इत्यर्थः। शक्त्या वृत्त्या अवाचकमिति। क्वचिदुपचारबलेनैव समवेतार्थं सत् विकृतावूह्यते इत्याह—**किञ्चित्त्वित्यादिना**। उदाहरति—**यथेति**। **अग्नीषोमीये पशाविति**। पशुबन्धनप्रयोजकोऽयं मन्त्रः। तत्र प्रथमपक्षे 'पाशान्' इति। बहुवचनम्। द्वितीये पक्षे पाशमित्येकवचनम् तत्रैकपाशविमोचनप्रतिपादकः मन्त्रः, न बहुपाशमोचनबोधकत्वेन पशुगणे नोत्क्रष्टव्य इति। हेतुमुपन्यस्यति—**गुणभूतेत्यादि**। गुणबहुत्वे एवौपचारिकत्वं युक्तमित्याह—**बहुवचने एवेति**। जैमिनीयं सूत्रमत्र प्रमाणत्वेनोपन्यस्याति—**तथा चेति**। गुणे त्विति सूत्रांशः। सम्पूर्णं सूत्रञ्चेत्थम्—'विप्रतिपत्तौ विकल्पः स्यात् गुणोत्वन्याय्यकल्पनैकतेशत्वात्' (९.३.५) इति। विप्रतिपत्तौ विरोधे सति विकल्पः स्यात् गुणे बहुवनेऽन्याय्यकल्पना लक्षणकल्पना, एकदेशत्वात् बहुवचनस्यैकदेशत्वात्। **तेनेति**। गुणोऽन्याय्यकल्पनास्वीकारेणेत्यर्थः। **तत्रेति**। मैत्रं श्वेतम्, 'वारुणं कृष्णम्' इत्यादिद्विपशुकविकृतिप्रयोगे एकवचनान्तप्रयोग इव बहुवचनान्तस्याप्यूह इति। प्रकृतानुपचारेण व्यवहारसत्त्वेऽपि विकृतौ नोपचार इत्याह—**प्रकृतावुपचारेणेत्यादि**। द्वित्वबहुत्वविशिष्टस्योपचारेणापि लोके प्रयोगो न दृश्यत इत्याह—**द्वयोरिति**। **तदेवमिति**। पूर्वोक्तनिरूपणप्रकारेण मन्त्रोनिरूणं सम्पन्नमिति। **अयञ्चेति**। अहितश्चायं मन्त्र इत्यर्थः। न मन्त्रसंज्ञां लभते। न मन्त्रानेनास्यव्यवहार इति यावत्। हेतुं तत्र दर्शयति—**मन्त्रसमान्नाये इति**। **एवमिति**। मन्त्रसमाम्नाये पाठाभावादेव प्रवरपदेषु यजमानादिनामसु वा न मन्त्रसंज्ञा भवतीत्यर्थः। कथमिति चेदाह—**आर्षेयानिति**। उच्चारणनिष्ठविशेषरूपपाठाभावात् 'नाम्नी' इति सामान्यरूपेण पाठेऽपि न मन्त्रत्वमिति। **तदुक्तमिति**। जैमिनीनेति शेषः। **न तेषामिति**। मन्त्रलोपनिमित्तकं प्रायश्चित्तं न भवति अपि त्वङ्गलोपनिमित्तकं प्रायश्चित्तं भवतीति। मन्त्रोहनिरूपणानन्तरं क्रमप्राप्तः सामोहः निरूप्यते। **सामोहस्त्वित्यादिना**। वचनादितिदेशवशेन विपरिवर्त्तमिति भावः। उदाहरति—**तथा हीति**। अभि त्वा 'इत्यस्यामृचि इथन्तरं साम पठति' अतः 'अभि त्वा' इत्यस्य हेतुभूतत्वाद् गानस्य योनिशब्देनोच्यते। यनित्वमुपपादयति—**अध्ययनकाले इत्यादिना**। **तद्रथन्तरमिति**। पृष्ठस्तोत्रप्रयोजनकनयेत्यर्थः। **एवमिति**। 'साम तृचे

क्रियते स्तोत्रीयम् 'इति वाक्यम्' स्त्रोत्रार्थस्य साम्नः ऋक्त्रये प्रयोगो विहितः। **तत्रेति**। ऋग्द्वयापेक्षया सा योनिः। यामाश्रित्य पाठो भवति। 'यद् योन्यां गायति तदुत्तरयोर्गायति' इति वाक्यम्। अर्थात् योनिगानवदवोत्तरयोर्गानं भवति। तच्च गानं संस्कारसम्पादकं भवतीत्याह—**तत्रैतविति**। **तदक्षरणामिति**। योनिगताक्षराणां आईभावरूपमिति। अतिदेशस्य कायप्रधान्यं द्योतयितुमाह—**कार्यप्रधान इति**। अक्षरसंस्काररूपकार्यद्वारैवोत्तरयोरतिदेशः। संस्कार्यसामानुरोधेनैव संस्कारकं समाप्यन्यथा भवतीत्याह—**तयोरित्यादिना**। कवतीषु अक्षरसंस्कारानुराधेनैवोह इत्याह—**एव कवतीष्विति**। **एवमिति**। अनेनैव प्रकारेण बृहदादिसामस्वप्यूहो भवतोति। सामोहविरूपणानन्तरं क्रयप्राप्तः संस्कारोहः निरुप्यते—**संस्कारोहस्त्विवत्यादिना**। **पञ्च मानान्तरमानेनेति**। 'प्रत्यक्षविधिनाभावे' इत्यादिना प्रतिपादितानि मानानीत्यर्थः। अन्यथाभावः परिवर्त्तनमित्यर्थः। उदाहरति—**यथा व्रीतिष्विति**। 'व्रीहीनवहन्ति' इत्यनेय विहिताभवघातादीनां 'नैवारश्चरुः' इत्यादौ नीवारेष्वदृष्टजनकप्रहारादिरूपोऽन्याभावो वितुषीकरणरूपकार्यवशेन कियते। **तदेवमिति**। पूर्वोक्तप्रकारेणेत्यर्थः। ऊहबाधं निरुपयितुमाह—**क्वचिदिति**। **बाधोऽपीत्यस्यह**बाधोऽपीत्यर्थः। बाधप्रकारं दर्शयति—**त्रेधाचेति**। तत्राद्यमुदाहरति—**नीवारैरिति**। चरुसम्पादनाय व्रीहीणां पूर्वमाम्नातम् ततश्च 'नैवारश्चरु' रित्याम्नातम् अतो नीवारेषु व्रीहिकार्यापत्त्या नीवारेण व्रोहीणां बाधः। कुतः। प्रत्याम्नानात्। आम्नातं प्रत्याम्नातमित्यर्थः। एवमेव प्रकृतियागे 'कुशमयं बर्हिर्भवति' इत्याम्नातम्। ततश्च विकृतियागे 'शरमयं बीर्हिर्भवति' इत्याम्नातम्। अतः शरस्य प्रत्याम्नानेन विकृतौ कुशस्य बाधः। **द्वितीयस्त्विति**। अर्थलोपाद्बाध इति—उदाहरति—**प्राजापत्यमिति**। अनेनायुष्कामेन कृष्णलनिर्वायः कर्त्तव्य इति विहितः। कृष्णलेषु चावघातोऽतिदिश्यते। वैतुष्यसम्पादनमेवाघातफलम्। तच्च व्रीहिष्वेव शक्यम्। कृष्णले तुषाभावेन वैतुष्यार्थमवघातोऽपि निष्फल एव। अतो वैतुष्यरूपार्थलोपादवघातबाध इत्यर्थः। कृष्णलपदार्थमाह—**त्रयो यवा इति**। **तृतीयस्त्विति**। पर्युदासाद् बाध इत्यर्थः। **पित्र्येष्टाविति**। 'न होतारं वृणीते' इति। अत्र नअर्थः पर्युदासः, न तु प्रसज्यः। अत्रातिदिष्टस्य होतृवरणस्य पर्युदासवलेन बाध इति। नैमित्तिककाम्याभ्यां नित्यं बाधते। उदाहरति—**यथेति**। 'पञ्चदश सामिधेन्यो भवन्ति' इत्यनेन सामिधेनीनां पाञ्चदश्यं विहितम्' तच्च नित्यमिति। ततश्च 'सप्तदश वैश्यस्य' इत्यनेन सामिधेनीनां साप्तदश्यं विहितम् तच्च नैमित्तिकम्। ततश्च पुनः 'एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य' इत्यनेन

सामिधेनीनामेकविंशतिसंख्याविहिता। तच्च विधानं काम्यमिति। अत्र नैमित्तिककाम्याभ्यां सप्तदशैकविंशतिभ्यां नित्यस्य पाञ्चदश्यस्य बाध इति स्थितिः। **नैमित्तिकं च काम्येन**। बाध्यत इति शेषः। उदाहरति—**यथेति**। सप्तदश वैश्यस्य 'इत्यनेन विहितं नैमित्तिकं साप्पदश्यं एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य' इत्यनेन विहितेनैकविंशतिसंख्यया बाध्यत इति। **क्रत्वर्थं पुरुषार्थेन**। बाध्यत इति शेषः उदाहरति—**यथेति**। 'चमसेनापः प्रणयति' इत्यनेन विहितं प्रणयनं क्रत्वर्थम्। 'गोदहनेनापः प्रणयति इत्यनेन विहितं प्रणयनं पुरुष.र्थम्। अत्र पुरुषार्थेन क्रत्वर्थस्य बाधो भवति। **सामान्यं विशेषेण**। 'आहवनीये जुहोति' इति सामान्यशास्त्रम्। 'पदे जुहोति' इति विशेषशास्त्रण् अत्रापि त्रिलेषशास्त्रेण सामान्यशास्त्रस्य बाध इति। **सावकाशं निरवकाशेन**। सावकाशः चरितार्थं उपयुक्त इति यावत्। निरवकाशोऽचरितार्थेनुपयुक्त इति यावत्। अग्नीषोलीयान्तेनोपांशु चरन्ति' इत्यनेनाग्नीषोमीयप्राग्भाविपदार्थेषूपांशुत्वं विहितम्। 'यावत्या वाचा कामपीत' इत्यादिमा च मन्द्रं मन्द्रतरञ्च मन्द्रादिस्थानेऽपि यदि उपांशुत्वमेव विधीयेत तर्हि मन्द्रादीनां निरवकाशत्वमचरितार्थत्वं वैयर्थ्यं व भावेत्। उपांशुत्वन्तु तदङ्गेषु तदितरपदार्थेषु च चरितार्थमेव भविष्यति। अतो वैयर्थ्यभिया मन्द्रादिभिरूपांशुत्वस्य बाध इति। अतएव वैयाकरणाः निरवकाशो विधिरपवाद इति घोषयन्ति। **पूर्वं परेण**। बाध्यत इति। उदाहरति [यथेति। 'बहिष्पवमानार्थं सदसि प्रसर्पताम्' इत्यनेन अन्योन्यकच्छधारणपूर्वकं प्रसर्पणं विहितम्। तत्र नियमः 'यद्युद्गातापच्छिन्द्याददणिणं यज्ञं समाप्य पुनर्यजेत' इति। तत्र यत्पूर्वस्मिन् दास्यन् स्यात्तदेव दधादित्युद्गात्रपच्छेदे प्रायश्चित्तम् 'यदि प्रतिहर्त्तापच्छिन्यात्सर्ववेदसं दद्यादिति प्रतिहर्त्रपच्छेदे व्यवस्था। अत्र परेण पूर्वस्य बाधो भवति। यदि चैककालावच्छेदेनोभयोरपच्छेदस्तर्हि उभयोः प्रायश्चित्तयोः परस्परं विरोधात्। 'तुल्यबलविरोधे विकल्पः' इत्यनेन न्यायेन विकल्पः स्यात्। पौर्वापर्ये परं कार्यम्। तस्येत्यस्य परस्येत्यर्थः। पूर्वनैरपेक्ष्येण पूर्वं प्राबध्यैव चरितार्थतेति। यदिपूर्वमेव कार्यं सर्वत्र स्यात्तर्हि परस्य वैयर्थ्यमापद्येत। अतः परस्य बलीयस्त्वमिति। यत्र पूर्वसापेक्ष एव परस्य चरितार्थता तत्र पूर्वमेव बलीयो भवति। **यथेति**। पूर्वमेव वाक्यमुदाहरणमिति। **तदुक्तमिति**। वार्त्तिकादाविति शेषः। यत्र परस्परनिरपेक्षत्वेप ज्ञानं सज्जायते तत्रैव पूर्वपिक्षया परस्य बलीयस्त्वं बोध्यमिति। **अङ्गं प्रधानेन**। बाध्यत इति शेषः। दर्शपूर्णमासप्रकरणे 'अग्निहोत्रहवण्यः' इत्यादिना निर्वापो विहितः। स च पवमानेष्विष्टिष्वतिदिश्यते। तत्र पवमानेष्टयधानयोरुभयो

समप्रधानग्वादग्न्यर्थत्वमिति । पवमानेष्टमनुष्ठानकालेऽऽहवनीयाद्यभावेनाग्निहोत्रस्य प्रवृत्त्यभावादग्निहोत्रदृवण्यभावेऽपि निर्वायस्यानुष्ठानमिति । तस्य निर्वायस्य प्रधानत्वेनाङ्गस्य बाधकत्वादिति । न तु तदनुरोधनाङ्गानुरोधेन निर्वायस्य बाध इति । **अङ्गाङ्गं प्रधानाङ्गेन** । बाध्यत इति शेषः । उदाहरति—**यथेति** । 'य इष्टया पशुना सोमेन वा' इति वाक्यम् । अत्र सोमः प्रधानभूतः । दीक्षणीयादि चाङ्गभूतः । पर्वकालेनोभयोः सम्बन्धः । अतोऽत्र सोमाङ्गभूतः पर्वकाल इत्येकं प्रधानाङ्गम् । अङ्गभूतः पर्वकाल इति द्वितीयोऽङ्गाङ्गभूतः । सोमाङ्गभूतप्रधानाङ्गेह पर्वकालेनदीक्षणीयाङ्गाङ्गभूतस्यपर्वकालस्य बाध इति । **उभयानुग्रहायोगादिति** । प्रधानाङ्गाङ्गाङ्गयोरनुहायोगादित्यर्थः । साङ्गसामयागः पञ्चदिनसाध्यः । प्रतिपादितमेतत्प्रथमे परिशिष्टे । **एवमन्येऽपीति** । अन्येऽपि बाधाः सम्भवन्ति तेषां प्रतिपादनं प्रसङ्गानुसारं करिष्य इति । प्रयोगविधेर्न सर्वत्र बाध्यबाधकभावबोधकत्वमपि तु समुच्चयबोधकत्वमपीत्यत आह—**क्वचित्त्विति** । उदाहरति—**यथा नक्षत्रेष्टिष्विति** । अत्रोपदिष्टानामुपहोमानामतिदिष्टानां नारिष्ठहोमानाञ्च समुच्चयः, न तु बाध्यबाधकभाव इति । कथन्न बाध इत्यत आह—**प्रकृतौ हीति** । प्रकृतियागे हीति प्रधानयागानुष्ठानकालोत्तरं नारिष्ठहोमानामनुष्ठानं भवति । अत्रैव प्रधानविध्युत्तरमुपहोमानां पाठस्तत्रैवानुष्ठानमपि विहितम् । उभयोरेकस्थानत्वेऽप्यदृष्टसम्पादकत्वेन प्रत्याम्नाताभावान्न बाध्यबाधकभावः । अपितु प्राकृतानुष्ठानोत्तरं वैकृतानाभागन्तुकानामनुष्ठानमिति समुच्चयः 'आगन्तुकानामन्ते सन्निवेशः' इति सिद्धान्तसङ्ग्राहकं पारमर्षं सूत्रभवतारयति—अन्ते त्विति । बादरायणस्य मतमिदमिति कीर्त्तनाय बादरायणग्रहणम् । **एवमिति** । साङ्गहण्यामिष्टावप्युभयत्र त्रिसंख्यासाम्येऽऽप्यामनहोनानुयाजयोर्न बाध्यबाधकभावः, अपि तूभयोस्समुच्चय एव, अदृष्टार्थत्वात् एवं **बृहस्पतिसवादाविति** । समुच्चय इत्यर्थः । अत्र वैकृतेन बार्हस्पत्यग्रहेणैन्द्रवायवादिप्राकृतग्रहैः सह समुच्चयो, न बाध्यबाधकभाव इति । हेतुं दर्शयति—**अगृहीतस्यापीति** । प्राकृतग्रहमनूद्य देवतामात्रं विधीयतामिति शङ्कते—**न चेति** । समाधत्ते—**प्राकृतग्रहानुवादेनेति** । नायं पक्षः समीचीन इति । प्राकृतग्रहमनूद्य देवताविधाने ग्रहाणां बहुत्वात् 'आग्नेयाः ग्रहाः भवन्ति' इति बहुवचनापत्तिर्दोष इति ।

बाधनिरूपणानन्तरं क्रमप्राप्तं तन्त्रं निरूपयति—**बाधाभ्युच्चयाभ्यामिति** । ताभ्यां वेद्यत्वेनावतारितानां निश्चितानां पदार्थानामनेकप्रधानानां

समवायेऽनुष्ठेयार्थतया तन्त्रेणापि प्रयोगमनुष्ठापयति सम्पादयतीत्यर्थः। नायं सार्वत्रिको नियम इत्याह—**क्वचिदिति**। क्वचिच्चावृत्त्यानुष्ठानम्। क्वच्चि स्वप्रयुक्तिसत्यामपि परप्रयुक्तमेवोपजीवति। क्वचिच्च परार्थमेवोपजीवन् सन् प्रयोजक एव भवति। उदाहरति—**आद्य इति**। प्रयोगविधिः दर्शप्रयोगे त्रयाणामपि यागानां तन्त्रेण सकृतदेवानुष्ठापयति। विशेषार्थंप्रतिपादकशब्दाभावात्। **वह्यमिति**। सकृदनुष्ठिताः प्रयाजादयः किमाग्नेयार्था उत सान्नायार्था इति विशेषो न गृह्यते। तेन त्रयाणामपि तन्त्रेणैवानुष्ठानमिति। **एवमिति**। एवमेव वरुणप्रघासपर्वण्यप्युत्तरविहारानुष्ठीयमानानां प्रधानानां तन्त्रेणानुष्ठानमिति। आवत्तेरुदाहरणम्—**यत्रेति**। यत्र देशकालादिविशेषप्रतिपादकः शब्दो दृश्यते, तत्रावृत्त्यानुष्ठानम्। उदाहरति—**यथेति**। **दर्शपूर्णमासे चेति**। अत्र कालभेदादुत्तरदक्षिणविहाररूपदेशभेदाच्च प्रयाजादीनामावृत्तिः **यत्र त्वेकस्येति**। तन्त्रेणानुष्ठाने सति मध्येऽन्यद्विधानम्, तत्र नानुष्ठापयति प्रयोगविधिरिति। उदाहरति—**यथेति**। पूर्वमग्नीषामीपपुरोडाशनिर्वापः। अस्य च तन्त्रेणानुष्ठानम्। ततो द्विदेवताकोऽग्नीषोमीयविकारस्यानुष्ठानम्। तथापि अतिदेशप्राप्ताङ्गभूतान् प्रयाजादीन्नानुष्ठापयति प्रयोगविधिरिति।

तन्त्रं निरुप्य क्रमप्राप्तं प्रसङ्गं निरुपयति—**उपकाराय हीति**। **अनुष्ठीयमानस्य यागस्येति**। पदार्थानामनुष्ठानमित्यर्थः। **स चेति**। उपकारश्चेत्यर्थः। पश्वर्थमनुष्ठितैरेव जनित इति। किं पृथगनुष्ठानेनेति। किं क्षेपे। **यद्यपीति**। एकादशसंख्याप्रयाजा एकादशसंख्याश्यानुयाजाः क्रियन्ते। अनुयाजाश्च पृषदाज्यद्रव्यका इति। यथा **प्रकृतिपुरोडाशस्येति**। प्रकृतिपुरोडाशमनुसृत्यैवेत्यर्थः। **तथापीति**। उपकारमात्रस्यैवापेक्षितस्य ग्रहणमिति। प्रयोगविधिरत्र न पदार्थाननुष्ठापयति। सोऽयं प्रसङ्ग इति। **जामात्रर्थमिति**। जामातरमुद्दिश्य तदुपकाराय प्रज्वालितः। प्रदीपः सन्निहितं शिष्यमप्ययुपकरोतीति। तद्वदत्राप्युपकार इति। **यस्त्विति**। **तत्स्वयमिति**। **प्रयोगविधिरित्यर्थः**। उदाहृत्य स्पष्टीकरोति—**यथेति**। 'न तौ पशौ करोति' इत्यनेन पशुयागेऽऽज्यभागं निषेधति। **तदायमिति**। प्रयोगविधिरित्यर्थः। अप्रयोजकत्वं दर्शयति—**यस्त्विति**। उदाहरति—**यथेति**। 'तप्ते पयसि' इत्यस्य वाक्यार्थं दर्शयति—**दध्यानयनेनेति**। दृष्टान्तमुपस्थापयति—अगारे इति। गृहे इत्यर्थः। संस्काररूपं दृष्टं प्रयोजनमुपपादयति—**दृष्टश्चेत्यादिना**। **तेनेति**। 'सा वैश्वदेव्यभिक्षा' इत्यत्र तच्छब्देन प्रधानभूतस्य पयसः परामर्शः, तच्छब्दस्य पूर्वपरामर्शित्वात्।

**तदिति** । विश्वेदेवाः देवता अस्या आमिक्षाया इत्यपि बोधयति । **आमिक्षेत्यादि** । 'आमिक्षापदं स्त्रोलिङ्गम्' अतएव 'सा' इति स्त्रीलिङ्गेनानुवादः । **तेनेति** । दध्यानयनेनेत्यर्थः । अयं भावः—तप्ते पयसि दध्यानयनेन पयः भागद्वये विभज्यते । एकश्च भागः घनीभूतः । अपरश्च भागः द्रवीभूतः । घनीभूतभाग एवामिक्षापदेनोच्यते । द्रवीभूतश्च भागो वाजिनपदवाच्चः । याजिनश्चानुनिष्पन्न इत्युच्यते । **तदर्थेनेति** । आमिक्षासम्पादनेत्यर्थः । वाजिनस्य अर्थात् सिद्धत्वात् । तस्य द्रवीभूतस्य पदार्थस्य 'वाजिभ्यो वाजिनम्' इति वाक्येन वाजिनतेवता । सैव च यागाङ्गत्वेन विनियोगं प्राप्नोति । **न त्विति** । दध्यानयनभूता या क्रिया सा न प्रयोजिकेति । तत्र हेतुं दर्शयति—**वाजिनार्थत्वेनेति** । तस्य दध्यानयनस्य । अविधानात् विधानाभावादित्यर्थः । **तेनेति** । तदर्थत्वाभावेनेत्यर्थः । वाजिननासे सति पुनर्दध्यानयनस्याप्रयोजकत्वमिति । **तथेति** । 'एकहायन्या क्रीणाति' इत्यत्राभ्मञ्जनादिकमेकहायनीनयनस्याप्रयोजकमिति । कुत अप्रयोजकत्व-मित्याह—**क्रयार्थत्वादिति** । सोमक्रय एव प्रयोजनं तस्येति । **तदनुनिष्पादीत्यादि** । क्रयानुष्पादीत्यर्थः । **तेनेति** । तत्पदस्यैकहायनीपदस्य इत्यर्थः । **तथेति** । पूर्ववदेवेत्यर्थः । पुरोडाशकपालेनेति विधिः । कपालस्याप्रयोजक इति । कुत्रेत्याह—**पुरोडाशे इत्यादि** । पुरोडाशश्रपणनिनित्तकमुपजीवित्वं कपाले तिष्ठति । तुषोयवापे पुरोडाशयुक्तस्यैव कपालस्य विनियोगो भवति । **तेनेति** । पुरोडाशे एव विनियोगदर्शनेन चरौ न कपालेन तुषोपवायः कार्य इति । एवमेव स्विष्टकृताप्यप्रयोजकत्वमित्याह—**तथेति** । कुतोऽप्रयोजकत्वमित्याह—**आग्नेययागादीति** । **तेनेति** । अवत्तोत्तरार्द्ध-अज्येन स्विष्टकृत्कार्यं सम्पादनीयमित्यर्थः । प्रमाणत्वेन वचनमुपन्यस्यति—**यस्य सर्वाणीति** । **यस्येति** । पूर्ववदेवेत्यर्थः । शकृल्लोहितनिरसनस्यार्थात्सिद्धत्वादप्रयोजकं पशवालम्भस्येति । **तथेति** । शकृल्लोहितनिरसनस्यानु-निष्पादित्वादित्यर्थः । **तथेति** । तथैवेत्यर्थः 'प्रणीनाभिर्हवींषि संयौति' इति पूर्वं श्रुतम् । ततश्च 'अन्तर्वेदिप्रणीताः नियनयति' इति श्रुतम् । अत्र निनयनं प्रणीताया अप्रयोजकमिति । **तृतीययेति** । प्रणीताभिरिति तृतीया-विभक्तिश्रुत्या प्रणीतानां हविः संभवनप्रयोजनकत्वात् । 'हवींषि' इति द्वितीया विभक्तिश्रुत्या हविः संभवनसम्पादकार्थं प्रणीतानिनयननित्य-प्रयोजकमिति । **धारणास्येति** । हविःधारणे प्रयोजकत्वं तिष्ठत्येव प्रणीतायामिति । **एवमिति** । हविःशेषधारणप्रयोजकता सर्वासां प्रति-पत्तीनामिति । **अन्यथेति** । यद्येवं न स्वीक्रियेत चेत्तर्हि एकेनैव सम्पूर्णस्य

सोमपानस्य सम्भवादनेकपानबाधप्रसङ्ग इति मिश्रमतम् किं स्वरूपं प्रतिपत्तेरित्याह—**प्रतिपत्तिर्नाम इति । आकीर्णकरतेति** । आकीर्णं संकीर्णं व्याप्तं करोतीत्याकीर्णकरम् । तत्ता काकीर्णकरता, तस्याः निवृत्तिरिति-सारविवेचिन्यां श्रीचिन्नस्वाभिशास्त्रिणः न्यायप्रकाशे च 'उपयुक्तस्याकीर्ण-करता निवर्त्तकं कर्म प्रतिपत्ति कर्म' इत्यभिहितम् । यागे उपयुक्तानां इतस्ततो विप्रकीर्णानां पदार्थानामेकत्रीकरणमिति यावत । **सा चेति** । निवृत्तिश्चेत्यर्थः । **भक्षणादिति** । नियमकल्पनम् तन्नियनद्वारेण च प्रयोजकत्वस्योपपत्तावप्रयोजिका सेति तन्त्रादीनां चातुर्विध्यं वृद्धवचनैः प्रमाणयति—**तदेतदिति । साधारणमिति** । व्याख्यातञ्च मयूखमालिकायो शास्त्रदीपिकाटीकायाम्—'यदङ्गमनुष्ठीयमानमगृह्यमाणविशेषत्वादनेकशेष-त्वादनेकशेषिसाधारणं तत्र तन्त्रम्' यथाग्न्याद्विषु प्रयाजादेः । यत्त्वनुष्ठीय-मानपरार्थत्वेन गृह्यमाणविशेषत्वेऽपि परस्योपकारकं तत्र परार्थोपजीवी अप्रयोजकः, यथा वाजिन तुषोपवायादिकं दध्यानयनकपादेः । यत्र तु स्वविधेः प्रयोजकत्वशक्तिसद्भावेऽपि परार्थोपजीवनं तत्र प्रसङ्ग इत्यर्थः । एवञ्च 'परार्थेत्वप्रयोजक' इत्यत्र स्वविधेः प्रयोजकत्वशक्त्यभावे इत्यार्था-ल्लभ्यत हति बोध्यम्' इति । जीवदेवोऽपि व्याख्याति—**साधारणमिति** । विशेषग्रहणे त्वावृत्तिरित्यार्थाल्लभ्यत इति **परार्थे इति** । विषयसप्तम्या परार्थविषयेऽप्रयोजकत्वमिति । **एवमिति** । पूर्वोक्तप्रकारेणैवान्यत्रापीत्यर्थः । प्रयोगविधिः तन्त्रादिद्वारा पदार्थाननुष्ठापयति । क्रमेणैव पदार्थानुष्ठान-मिति बोधयति । क्रमनियगास्वीकारे च प्रयोगे विक्षेपापत्तिः स्यात् । अर्थात् पौर्वापर्यं न सिद्ध्येत् । अतएव एतदनन्तरमेतत्कर्त्तयभित्याकरकः क्रमोऽऽवश्यकः । क्रमबोधकानि प्रमाणानि कानीत्याह—**श्रुत्यर्थेत्यादि** । विनियोजकप्रमाणवत् क्रमबोधकान्यपि षट्प्रमाणानिसन्ति । श्रुत्यर्थपाठ-स्थानमुख्यप्रवृत्याख्यानीति । प्रमाणैरेभिरूपस्थापितक्रमविशिष्टपदार्थानेवा-नुष्ठापयति प्रयोगविधिरिति । **यद्यपीति** । क्रमस्य द्वैविध्यं दृश्यते लोके, पौर्वापर्यानन्तर्यभेदाच्च । **तथापीति** । प्रयोगविधिरुभयोः प्रयोगप्राशुभाव-सम्पानायानन्तर्भरूपमेव क्रममपेक्षते । प्राशुभावः शैघ्नयम् । अवलम्बिता-नुष्ठानमितियावत् । तच्च श्रुत्यादिभिः क्रमबोधकैः प्रमाणैरेव बोधपति प्रयोगविधिः स्मृतत्वे सत्युपेक्षानर्हत्वाच्छ्रुति निरूपमति—**तत्रेति । क्रमपर-मिति** । क्रमबोधकं वचननित्यर्थः वचनं वाक्यम् अतएव क्रमबोधकत्वे सति वाक्यत्वं श्रुतेर्लक्षणमिति । लौकिकवाक्येऽप्तिसम्भावनया वैदकपदमपि निवेश्यम् । अतः क्रमबोधकत्वे सति वैदिकवाक्यत्वमित्यपि लक्षणं बोध्यम् । उदाहरति—**यथेति** । 'वेदं कृत्व वेदि करोति' इति वाक्यम् । **वेदशब्दश्यात्र**

दर्भमुष्टिवचनः। अत्र कृत्वेति पदं 'समानकर्त्तृकपूर्वकाले क्त्वा' इत्यनेन पूर्वकालेऽर्थे क्त्वा प्रत्ययः। पूर्वशब्दस्य परसापेक्षत्वापूर्वापरीभावोऽर्थः। अयमेव च क्रमपदार्थः। पूर्वं वेदकरणमनन्तरञ्च वेदिकरणमिति। नैतादृशोऽर्थोवचनान्तरेण प्राप्यते। अतः क्रमबोधकवैदिकवाक्यत्वमेव श्रुतिलक्षणं संघटतेऽत्र। **वषट्कर्त्तुरिति**। अत्र च प्रथमशब्दः क्रमबोधकः। अतः क्रमविशिष्टपदार्थं विधत्ते। हेतुश्चात्र भक्षणं प्राप्तम्, तथापि तदनूद्य प्राथम्यरूपक्रमविधाने। एकप्रसस्ताभङ्गापत्तिः स्यात्। एकप्रसरता चैकवाक्ता। सम्भवत्येनवाक्यत्वे वाक्यभेदो न युज्यते इति। **एकस्य हीति**। एकमेव पदमेकदेवोद्देश्येन विधेयेन च न सम्बध्नाति। कुत इत्याह—'**यो भक्षः सं प्रथमः**' इत्यतोद्देश्योपादेययोर्यत्तच्छब्दपरामृष्टयोः परस्परविरुद्धयोरेकपदप्रतिपाद्यत्वाभावात्। अतः क्रमविशिष्टो भक्षो वषट्कारनिमित्तः, समाख्यादिनिमित्तश्च भक्ष भिन्नो विधीयते। अतः क्रमपरत्वस्यापि सम्भवादात्र श्रुतिप्रमाणं भवति। **एवमेवेति**। 'आश्विनो दशमो गृह्यते तं तृतीय जुहात'त्यत्र शुद्धक्रमपरत्वाच्छ्रुतिरिति। क्रमप्राप्तत्वादर्थं प्रमाणं निरूपयति—**अर्थं इति**। अर्थशब्दश्चात्र प्रयोजनवचनः, तद्वशेन यत्र क्रम आश्रीयते, सोऽर्थक्रम इति। न्यायप्रकाशे चाभिहितम्—'यत्र प्रयोजनवशेनार्थनिर्णया स आर्थं क्रम' इति। उदाहरणञ्च—अग्निहोत्रं जुहोति, यवाकगूं पचति' इति। यथापाठमाश्रीयते चेत्तर्हि पूर्वभग्निहोत्रहोमसम्पादनम्, ततश्च यवागूपाक इति। परन्तु होमसम्पादनानन्तरं कृतस्य निष्प्रयोजनत्वात् प्रयोजनवशेन यवागेपाकादेकमपूर्वं स्यात्, तदर्थत्वात्तस्य। ततश्चाग्निहोत्रहोमसम्पादनमिति। ततोदयेकमपूर्वं स्यात्। अतोऽपूर्वद्वयकल्पनापत्त्या पूर्वं यवागूपाकानुष्ठानम्, ततश्चाग्निहोत्रहोम इति। ततश्चैकमेवापूर्वकल्पनम्। अयमेव क्रम आर्थक्रम इति। **एवमिति**। 'उपहूत उपहूयस्व' इति अनेन चमन्त्रेण अनुज्ञादानयाचने प्रतिपाद्येते। पूर्वं याचते ततश्च ददातीति क्रमः। अतएवोक्तम्—'**याचनापूर्वकत्वाद्दानस्य**' इति। यदि पूर्वमेव दानं स्वीक्रियेत तर्हि याचनस्य वैयर्थ्यमापद्येत। अतः पाठक्रमं प्रबाध्य तद्विपरीतं पूर्वं याचनं दानमित्येव प्रातिपाद्यते। क्रमप्राप्तं पाठक्रमं निरूपयितु—**पाठक्रमस्त्विति**। मन्त्रपाठेन ब्राह्मणपाठेन वा अर्थात् मन्त्रपाठमनुसृत्य ब्राह्मणपाठवानुसृत्य यः क्रमः कल्प्यते, स पाठक्रम इति। न्यायप्रकाशेऽप्यभिहितम्—पदार्थबोधकवाक्यानां यः क्रमः, स पाठक्रम इति। स च पाठो द्विविधः—मन्त्रपाठो ब्राह्मणपाठश्चेति उदाहरपि—**यथेति**। 'प्रयाजानां समिधः समिधोग्न' इतिमन्त्रः। अनेन मन्त्रेण येन क्रमेण पदार्थाः स्मर्यन्ते, तेनैव क्रमेणनुष्ठोयन्त इति। कुत इत्याह—**मन्त्राणामिति**।

प्रयोगसमवेतानां पदार्थानां स्मारकत्वमेव मन्त्रत्वमिति । **तत्क्रमेणेति** । मन्त्रक्रमेणैव पदार्थाः स्मृतावायान्ति, तत्क्रमेणैवानुष्ठिताः भवन्तिः । अमन्त्रकेषु कथं परार्थस्य स्मरणमित्याह **अमन्त्रकपदार्थेष्विति** । तत्र ब्राह्मणवाक्यान्येव पदार्थान् स्मारयन्ति, तत्स्मरणक्रमेणैव चानुष्ठानमिति उभयोर्विरोधे किं कर्तव्यमित्याह—**विरोधे चेति** । मन्त्रपाठमनुसृत्यैव पदार्थ-स्मारागमनुष्ठानञ्च । उदाहरणेन स्पष्टीकरोति—**यथेति** । आग्नेयाग्नीषो-मीयभागयार्मध्ये मन्त्रेणैव स्मर्यमाणत्वादाग्नेययागस्य पूर्वमनष्ठानं भवति, ब्राह्मणवाक्येन स्मर्यमाणत्वादग्नीषोमीयस्य च पश्चादिति । प्रावतयदौर्बल्ये हेतुक्रपन्यस्यति—**मन्त्राणामेवेति** । मन्त्राणानेवरत्रार्थस्मारकत्वेन तत्स्मृतस्य क्रमस्यान्तरङ्गत्वात् । ब्राह्मणानां कथन्नान्तरङ्गत्वमित्याह—**ब्राह्मणानां त्विति** । ब्राह्मणवाक्यानि पूर्वमर्थं विदधति ततश्च पदार्नान् स्मारयन्ति । अतोऽर्थविधाने एव क्षीणशक्तिकानां ब्राह्मणवाक्यानां प्रयोगसमवेतार्थ-स्मारकत्वे तत्क्रमप्रतिपादने वा विलम्बोपस्थितिकत्वेन वहिरङ्गत्वात् । लोकेऽपि मनुष्यः प्रातरुत्थाय पूर्वं शरीरकार्याणि करोति, अन्तरङ्गत्वात् । ततोऽन्यानि कार्याणि अन्येषां वा कार्याणि करोति, तथैवात्रायीति अन्त-रङ्गवहिरङ्गयोर्मध्येऽन्तरङ्गस्य बलीयस्त्वादिति । अतएव मन्त्रस्मृतपदार्थ-स्यैव पूर्वमनुष्ठानम्, न ब्राह्मणवाक्यस्मृतपदार्थस्येति ।

पाठप्रमाणनिरुपणानन्तरं क्रमप्राप्तत्वात्स्थानप्रमाणं निरुपयति—**स्थानं त्विति** । उपस्थानं पदार्थानामुपस्थानमुपस्थितिरिति यावत् । न्याय-प्रकाशे च विस्तृतं लक्षणं प्रस्तुतम्—प्रकृतौ नानादेशानां पदार्थानां विकृतौ वचनादेकस्मिन् देशेऽनुष्ठाने कर्त्तव्ये यस्य देशेऽनुष्ठीयन्ते, तस्य प्रथम-मनुष्ठानमितरयोस्तु पश्चात्—अयं यः क्रमः स स्थानक्रम इति । स्थानं नामोपस्थितिरिति । पदार्थोपस्थितिक्रमेण यत्रानुष्ठानं स स्थानक्रम इति **साद्यस्क** इति सोभयागविशेषः । तत्र श्रूयते—'सह पशूनालभते । इति । न्यायेऽत्र ज्योतिष्टोमादतिदेशेन स्वस्वकालेऽनुष्ठेया अग्नीषोमीय-स्त्वनीयानूवन्ध्याः परावः प्राप्ताः । ते च परावः पूर्वोक्तेन वाक्येन सहैवा-लब्धत्या इति अत्रेदं वोध्यम्—प्रथमस्थानेऽग्नीषोमीयः । द्वितीयस्थाने सवनीयः, तृतीयस्थाने चानूवन्ध्या इति । सवनीयस्य पशोर्मध्यस्थ-त्वात्तत्स्थाने । इतरयोक्यानुष्ठानं भवेत् । तर्ठि उभयोरेकस्थातातिक्रम स्यात् । अतश्चायं पक्ष एव श्रेयानिति । यदि च प्रथमस्थानीयाग्नीषो-मीयस्थानेऽनुष्ठानं भवेत्तर्हि तृतीयस्थानीयाश्वन्ध्यस्य स्थानद्वयातिक्रमः स्यात् । सवनीयस्य चैक स्थानातिक्रम इति भिद्येत । **एवमिति** । यदि

चाश्वन्ध्यस्थाने एवेतरयोरनुष्ठानं स्यात्तर्हि अग्नीषोमीयस्य पशोः स्थानद्वयातिक्रमः स्यात्। सवनीयस्य चैकस्थानातिक्रम इति भेदः। तर्हीत्यत्रकिं कर्त्तव्यमित्याह—**तत्रादाविति** । आलब्धव्येषु पशुषु द्वितीयस्थानीयस्यैव सवनीयस्य प्रथममनुष्ठानमिति। तथा च प्रथमस्थानीयस्य तृतीयस्थानीयस्य च पशोरेकैकस्थानातिक्रमः स्यात्। अत उभयोस्समत्वान्न दोष इति। **पश्चादिति**। इतरयोः पश्वोः पश्चादनुष्ठानम्, तयोः स्थानप्रमाणेनोपस्थितत्वात्। तयोर्मध्ये कस्य पूर्वमनुष्ठानमित्याह—**तयोरिति**। कुत इत्याह—**प्रकृताविति**। प्रकृतियागे तथैवानुष्ठानस्य दृष्टत्वात् । **यद्यपीति**। प्रकृतौ भिन्नकालानुष्ठेयत्वादग्नीषोमीयानुवन्ध्ययोरार्थिकं पौर्वापर्यं वर्त्तते। विकृतौ चातिदेशवाक्यमार्थिकं न प्रतिदिशति । **तथापीति** । **सन्देहेऽणुरपीति** । सन्देहे उत्पन्नेऽणुरपि विशेषबोधकः पदार्थः निश्चायको भवतीति पूर्णदृष्टानुष्ठानमेवात्र प्रमाणभूतत्वान्निर्णायकमिति मिश्रमतम्।

राणकमतमुपस्थापयति—**अनियत इति** । **अनयोरिति** । अग्नीषोमीयानूबन्ध्ययोरित्यर्थः। नास्ति कश्चिन्नियतः क्रम इति राणकमतम्। स्वेच्छया कस्यापि पशोः पूर्वः पश्चाद्वानुष्ठानं कर्तव्यमिति।

स्थानक्रमनिरूपणानन्तरं क्रमप्राप्तत्वान्मुख्यक्रमं निरुपयितुमाह—**प्रधानक्रमेणेत्यादिः** । प्रधानानुष्ठानक्रमेण यदङ्गानामनुष्ठानक्रमः, स एव मुख्यक्रम इति । उदाहरति—**यथेति**। आग्नेययागानुष्ठानक्रमेण तदङ्गभूतानां निर्वापादीदामनुष्ठानक्रम इति।

मुख्यक्रमनिरुपणानन्तरं क्रमप्राप्तप्रवृत्तिक्रमनिरुपयितुमाह—**एकाङ्गेत्यादिः**। एकाङ्गक्रममनुसृत्यैवान्येषामङ्गानां योऽनुष्ठानक्रमः, स **प्रवृत्तिक्रम** इति । उदाहरति **यथेति** । वाजपेयमार्गं । सप्तदश प्राजापत्यान् पशूनालभेत। इति श्रूयते। ते च पशवः प्रजापति-देवताकाः प्रयोगविधिः तांश्च पशून् सम्प्रतिपन्नदेवताकत्वात् सहकार्यत्वेनानुष्ठापयति। आराद्रपकारकाणां तदङ्गानां तन्त्रेणानुष्ठानं भवति। सामवायिकानामुपाकरणादीनां विशेषग्रहणात्प्रतिपश्वावृत्त्यानुष्ठानमिति विवेकः । **तत्रेति** । येन क्रमेण पशूनामुपाकरणं भवति तेनैव क्रमेण नियोजनादिकमपि कर्त्तव्यमिति । अयञ्च यः क्रमः, स एव प्रवृत्तिक्रम इति । **एषामिति** । एषु प्रमाणेषु यथासम्भवं पूर्णं पूर्वं प्रमाणं प्रवलं भवति, परं परञ्च प्रमाणं प्रर्बलमिति व्यवस्था । **प्रवृत्तेरिति** । प्रवृत्तिक्रमापेक्षया मुख्यक्रमस्य बलवत्वमिति उदाहरति—**यथेति** । दर्शयागे दधियागाङ्गभूतमातञ्चनं पूर्णेद्युः प्रवृत्तं पश्चाच्चाऽनेययागप्रवृत्तिरिति । **प्रयाजशेषाभिधारणादि** त्विति । अत्र

प्रधानक्रममाश्रित्य पूर्वमाग्नेयहविषोऽनुष्ठानम पश्चाच्च दध्नोऽनुष्ठानमिति। **न त्विति**। प्रवृत्तिक्रमाश्रित्य पूर्णं दध्नोऽनुष्ठानं न भवति। पाठक्रमस्य बलवत्त्वमुपयादयति—**प्रवृत्तिक्रमे हीति**। प्रवृत्तिक्रमेऽङ्गानां परस्परं प्रत्यासत्तिर्भवति। मुख्यक्रमे चाङ्गानां प्रधानैः सह प्रत्यासत्तिरित्युभयोर्विशेषः। अतएव मुख्यक्रमस्य प्रवृत्तिक्रमापेक्षया बलवत्त्वमपीति बोध्यम्। मुख्यक्रमापेक्षया पाठक्रमस्य बलवत्त्वं प्रतिपिपादयिषयाह—**मुख्यक्रमाच्चेति**। मुख्यक्रमातेक्षया पाठक्रमस्य बलवत्त्वमिति। उदाहरति—**यथेति**। **उपांशुयाजेति**। अत्र पाठक्रममाश्रित्य पुरोडाशानां प्रथममनुष्ठानं भवति। मुख्यक्रममाश्रित्याग्नेययागव्रीहिनिर्वापानन्तरं तस्यानुष्ठामिति। पाठक्रमापेक्षयार्थक्रमः, अर्थक्रमापेक्षया च श्रुतिर्बलवती। उदाहरति—**यथेति**। पाठक्रमानुसारमाश्विनग्रहस्य तृतीये स्थाने ग्रहणं प्राप्तम्, तथापि। आश्विनो दशमो गृह्यते इति वचनविशेषरुपश्रुत्या दशमस्थाने गृह्यत इति श्रुतेः प्राकल्यमिति। **प्रपञ्चितञ्चैतदिति**। विस्तरेण प्रतिपादितान्येतानि। प्रमाणानि मीमांसान्यायप्रकाशे इति। **तातचरणैरिति**। आपदेरुसंहकैः पितृचरणैरिति। **अलमिति**। प्रमाणविषयेऽत्र निरुपणं पर्याप्तमित्यर्थः।

**एतैरिति**। एतैः प्रमाणजातैरित्यर्थः। प्रमाणैरेतैः प्रतिपादितमानन्तर्यरुपं क्रमं प्रयोगविधिः पदार्थविशेषणतयानुष्ठापयति। क्रमश्च पदार्थस्य विशेषणभूत इति। स्वरुपं दर्शयति—**अनेनेति**। भिन्नप्रयोगविधिना यत्र पदार्थाः परिगृह्यन्ते तत्र नायं क्रमोऽङ्गीक्रियते। अङ्गश्रुत्या च क्वचित्पौर्वापर्यमात्रं बोधयति प्रयोगविधिरिति। उदाहरति—**यथेति**। दर्शपूर्णमासाभ्यामित्यादिभिर्वाक्यैः दर्शपूर्णमासानुष्ठानानन्तरकाले सोमयागाङ्गमनुष्ठीयते इति श्रुत्या विधीयते। तद्विकृत्यङ्गत्वेनोत्तरकालता बोध्या। अग्निष्टोमसंस्थं ज्योतिष्टोमं सम्पाद्य उक्थ्यादीसामनुष्ठानं न कार्यमिति। **तस्य नित्यत्वादिति**। अग्निष्टोमसंस्थस्य ज्योतिष्टोमस्य नित्यत्वात्। सर्वेषां सोमयागानां प्रकृति भूतत्वादित्यर्थः। 'अथान्येने' त्यनवेन विकृतिमात्रं परामृश्यते। कामना-वशेनानुष्ठानात् उक्थ्यादयो विकृतयः इति। काम्यत्वप्रतिपादकानि वाक्यानुदाह्रियन्ते—**अत्रेत्यादिना**। चभिवीक्यैः सोमभागाश्रिताः विकृतयः प्रतिपाद्यन्त इति राणकमतमिदम्। मिश्रमते च पशुकाम इत्यादयश्चरमसोमयागाभ्यासरुपा इति। येन स्तोत्रेण यस्याः संस्थायाः परिसमाप्तिर्भवति। तेनैव नाम्ना तस्याः संस्थायाः व्यपदेशः। यथा—उक्थ्यस्तोत्रेण परिसमाप्यमानत्वाह उक्थ्यशब्देन व्यवह्रियते। एवमेवान्यत्रापीति बोध्यम्। ता उक्थ्यादियदाच्चाः संस्थाः

तत्तत्फलाय विधीयन्ते । **फलार्थगुणेष्विति** । तत्र चाश्रयफर्माणामतिदेश इति । सर्वासां सोमसंस्थानामग्निष्टोम एवाश्रय भूत इति । मन्त्रघटकेन । अथान्येन इत्यन्यशब्देन सन्निधिवशात्सोमसंस्थानामेव ग्रहणं भवेत् । विश्वजिदादीनां ग्रहणं न स्यादिति शङ्कते—**न चैवमिति**। समाधत्ते—**'यो वै' इति** । एतेनार्थवादवाक्येन विश्वजिदादीनामण्युपस्थितिसम्भवात्तेषामपि ग्रहणं स्यादेवेति । **क्वचिदानन्तर्यरुपोऽपि** क्रमोऽङ्गत्वं भजत इत्यत आह—**क्वचित्त्विति** । उदाहरति—**यः सोमेनेति** । अत्र । सोमेन यक्ष्यमाण । इति आधानकर्त्तुविशेषागम् । **तच्चेति** । विशेषणञ्चेत्यर्थः । अयोगत्यावृत्त्या सोमेन यक्ष्यमाण एव नायक्ष्यमाण इति नार्थः । सोमयागानुष्ठानस्य नित्यत्वेनायक्ष्यमाणत्वाप्रसिद्धेः । अन्ययोगव्यावृत्त्यापि सोमेनैव यक्ष्यमाणो नान्येनेति न वाक्यार्थः । सोमयागानुष्ठानेऽपि होमादेरप्यवश्यकर्त्तव्यत्वेन सोममात्रानुष्ठानकर्त्तुरप्यप्रसिद्धत्वादिति । न होमादिकं विहाय सोमानुष्ठानं कर्त्तुं शक्यते । **अत इति** । सोमेनेति पदमनन्तरं यक्ष्यमाण इति विशेषणार्थ इति । वाक्यार्थं दर्शयति—**तेनेत्यादिना** । आधानकालस्य प्रतिषेधकमिदं वचनमिति नेत्याह—**न त्वित्यादिना** । यदहरेवैनमिति । तस्याधानकालस्य कृतत्वात् सिद्धत्वादित्यर्थः । **तेनेति** । आधानस्य कृतत्वेनेत्यर्थः आधानसम्पादनान्तरं दर्शपर्गमासावनुष्ठाय यत्सोमानुष्ठानम्, तदेवेष्टेर्पूवाधानमित्युच्यते । **सोमस्यैवेति** । अत्र त्रैवर्णिकानां कृते पक्षद्वयमुपतिष्ठते—**सोमस्यैव करणे सोमपूर्वाधानमिति च** ब्राह्मणस्य निषेधति—**न त्विति** । कुत इत्याह—**तं प्रतीति** । वाक्यानि दर्शयति—**आग्नेय इत्यादि** । वाक्यैरेभिः पौर्णमास्या उत्कर्षविधानमिति । पौर्णमासी विना दर्शः न फलाय कतपते, उभयोः सहानुष्ठानादित्याह—**न चेति** । **तस्मादिति** । कृत्स्नोत्कर्ष अर्थात् दर्शपूर्णमा समोरुत्कर्ष इति । अत्र च मतद्वयमस्ति । तत्र पथममुपस्थार्यामतुमाह—**अत्र केचिदिति** । 'आग्नेय' इत्यादिभर्वचनप्रकाशैः पूर्णमास्या एवोत्कर्षः, न तु दर्शस्यायीति । दर्शस्तु पूर्वमेवानुनिष्ठत इति । वचनप्रमाणेनैव पार्थक्येनानुष्ठानेऽपि फलमपि भविष्यति । अन्यथोभयोः सम्मिलितयोरेव फलजनकत्वदर्शनात् । उभयोरेकानुष्ठानत्वात् । अपरं मतमुपस्थापयितुमाह—**अन्ये त्विति** । मतेऽस्मिन् पूर्णमासीधर्मकं कर्मान्तरविधानमिति । कर्मान्तरविधाने तस्यापि कर्मणः स्वतन्त्रत्वात् फलप्रदाने न कापि सतिरिति । मतद्वयमपि न ग्रन्थकारसम्मतमत आह—**सिद्धान्तस्त्विति** । अत्र न पूर्णमासीमात्रस्योत्कर्षः नापि दर्शपूर्णमासयोभयोत्कर्षः, अपि तु पूर्णमासान्तर्गताग्नीषोमीयपुरोडाशमात्रस्योत्कर्षविधानमिति । कुत इत्याह—**पूर्वोत्तरेति** । तत्र पूर्वोत्तरं हविरिति पाठः । निष्प्रमाणकत्वात्

कृत्स्नोत्कर्षकतपना न शक्येत्याह—**न चेति** । समाधत्ते—**वचनात्त्विति** । पूर्वोक्तवचनप्रामाण्यादित्यर्थः । दर्शपूर्णमासे षड्यागाः भवन्ति । तत्र पञ्चानां पूर्णानुष्ठानम् । षष्ठस्य यागस्य सोमोत्तरमनुष्ठानमिति । ब्राह्मणस्यापि पक्षद्वयं वर्त्तत एव, न केवलं त्रैर्वाणकानामेवेति । **संतप इति** । विस्तरस्त्वन्यत्र द्रष्टव्य इति ।

श्रुत्यादिप्रमाणषट्करुचिवैकप्रयोगविधिपरिगृहीतेष्वेव क्रमनियमः । अन्येषां वचनप्रामाण्येन नियमः, क्वचिच्च पौर्वापर्यम्, अथवानन्तर्यमिति समेषां समञ्जसमित्युपसंहति—**तस्यादिति** । एवमिति । पूर्वोक्तोत्कर्षापकर्षप्रक्रिययेति । नियतः निश्चितः क्रमोयेषां ते नियतक्रमास्तेषामेकस्योत्कर्षे सति तदापेरुत्कर्षापकर्षे तदन्तस्याप्यपकर्ष इति । **दण्डापूपवदिति** । अत्र न्याये मतद्वयं दृश्यते । तथाहि—दण्डेन सम्बद्धोऽयूपो यथा दण्डाकर्षणेनापूपस्यापि कर्षणं भवति, **तथैवेति** । अथवा—अपूपरक्षणार्थमपूपसमीपे एव दण्डोऽपि रक्षितः । प्रन्तश्चापूपाः न दृश्यन्ते, दण्डश्च मूषकभक्षितस्तत्र दृश्यते । तेनानुमीयते, येन मूषकेण दण्डः भक्षितस्तेनैवापूपा अपि भक्षिता इति । **तदवदत्रापीति** । उदाहरति—**यथेति** । 'सवनीपशा' वित्यादिनानुयाजानामिष्टौ दक्षिणादानानन्तरकालीनानामग्निमारुतशास्त्रात्तयोरुत्कर्षेविहिते सति तदादीनां सूक्तवाकादीनामप्युत्कर्षः । सूक्तवाकाङ्ग हि अनुयाजानन्तरमनुष्ठेयम् । तद्बाधेन सूक्तवाकाङ्गबाधेन पूर्वमनुष्ठीयमानः सूक्तवाको विगुणः स्यात् । वैगुण्यञ्चाङ्गानुष्ठानाभावादेव । **एवमग्रेऽपीति** । यावन्तो निबद्धास्तेषां क्रम उत्कर्षयोग्यता च बोध्या । **अतएवेति** । यावन्निबद्धक्रमत्वस्य स्वीकारादेव । पुरोडाशस्योपकुर्वद्भिरप्यनुयाजैः प्ररोडाशयिधिपरिगृहीतानां नोत्कर्ष इति । कुत इत्याह—**भिन्नेत्यादि** । निबद्धक्रमत्वाभावादेव नोत्कर्ष इति । **एवमिति** । 'तिष्ठन्तं पशुं प्रयजन्ति' इत्यादावपि प्रकृतौ हविरासादनोत्तरकालानां प्रयाजानां जीवति पशावपकर्षे विहिते सति प्रयाजान्तानां सामिधेन्यनुवचनदीनामपकर्षः सिद्ध्यति । यदि आधारसम्पादनानन्तरं प्रयाजाङ्गमनुष्ठीयते तदाङ्गबाधेनानुष्ठीयमानः प्रयाजाङ्गा विगुणाः भवेयुरिति । **तेनेति** । आगारेऽपकृष्टे सति ततः पूर्वमप्येत्रमपकर्षो यावन्निबद्धक्रममपकर्षे योग्यता चेति । **अतएवेति** । यावन्निबद्धक्रमयोग्यतास्वीकारादेव । सोमाङ्गाग्नीषोमीयप्रणयनानन्तरं श्रुतस्य पाशुयस्य यूपच्छेदनस्य दीक्षासु 'यूयं छिनति । इति प्रथमे दीक्षादिनेऽपकर्षे विहिते सति अग्नीषोमीयप्रणयनापकर्षो न भवति । कुत इत्याह—**भिन्न प्रयोगेत्यादि** । **निगद्धक्रमत्वाभावादिति** । **एवमिति** ।

दर्शपूर्णमासयोरपि हविरासादनं विहितम् । तदुत्तरकाले च वेदिरिति श्रूयते । तत्पूर्वेद्युः । अमावास्यायां वेदिं करोति । इति दर्शे च पूर्वेद्युरपकृष्टा न तदन्तमपकर्षति । सामान्यपाठकपकक्रमात्पूर्वमेव विशेषवचनेनापकर्ष-विधानस्य विश्रमानत्वात् । यद्यप्येकप्रयोगविधि परिग्रहो विद्यते तथापि क्रमनियतत्वाभावान्नास्त्यत्र क्रमः नियनि इति । **अनयैवेति** । दिशानिर्देशन-मात्र मिदमिति । अन्यत्रोत्कर्षापकर्षविषये ऊहः कार्यं इति । यत्र न क्रमे प्रमाणम्, तत्रानियतक्रमोऽपीत्याह—**यत्रेति** । उदाहरति—**यथेति** । 'वसन्त-मृतूनां प्रीणामि' इत्यादीनां प्रयाजानुमन्त्राणामयमेकोऽयमेकः इत्यादीनां च शाखाभेदेन श्रुतानामेतेषां सर्वशाखोपसंहारन्यायेन दृष्टप्रयोजनकत्वेन च समुच्चये प्राप्ते सति क्रमनियामक वचनाभावादनियतक्रम एव स्वीकार्य इति । उपाकरणनियोजना दिसंस्कारवदेव येन क्रमेण आद्ययोः प्रवृत्ति-स्तेनैव क्रमेणान्येषामपि संस्कारः समादिति शङ्कते । समाधत्ते—**नेति** । उपाकरणादितद् साहित्यवोधकैकप्रयोगविधिपरिग्रहासम्भवात् । पूर्वन्तावत् तत्तज्जातीयप्रयोगविधिनानुष्ठापितानि कार्याणि पश्चात्तदनुष्ठात्रा पुरुषेणोपसंह्रियन्ते । पदार्थानामेवापं क्रमः, नान्येषामिति । एकपदार्थत्वं निरुपयति—**एकविधिविहित इति** । विधिवाक्येनैकेन विहित एवैकपदार्थ इति । **न त्विति** नैकयत्नसाध्यत्वमेकपदार्थत्वमिति । **तेनेति** । एकविधि-विहितैकपदार्थत्वेनेति । 'चतुरश्चतुर' इत्यादिविधिविहितत्वाच्चतुर्मुष्टि-निर्वाणस्यैकपदार्थत्वं सिद्धयति । **तेनेति** । एकपदार्थत्वेन । अग्नेयाग्नीषो-मीययोरेकपदार्थत्वेनानुसमयः, न त्वेकमुष्टिनिर्वापेणानुसमय इति । **एव-मिति** । पूर्वोक्तप्रकारेणेत्यर्थः । 'अष्टौ कपालान्युपदधाति' इति विधि-वाक्येन विहितमष्टसंख्यासम्वलितं कपालोपधानमेकः पदार्थः । **तेनेति** । एकपदार्थत्वेनेति । आग्नेयादावष्टसंख्यककपालोपधानेनान्दुसमय इति । **एवमिति** । अनयैव दिशेत्यर्थः । सप्तदशप्राजापत्यपशुयूपाकरणादीनां पदार्थानुसमय इति । **एवमिति** । तथैवेत्यर्थः । 'चतुरवत्त' इति विधिवाक्य-विहितावदानमारभ्य होमपर्यन्त एकः पदार्थ इति 'चतुरवत्तं जुहोति' इति वाक्येन होमाङ्गत्वेन चतुरवत्तस्य विधानमिति भाष्यकारः वदन्ति । 'सकृदुपस्तृणाति' इत्यारभ्भ । सकृदभिघारयति' इत्यन्तवाक्यान्तरप्राप्तं यच्चतुरवत्तम् । तज्ज्ञानसम्पादकतया होमावयवभूतस्य प्रक्षेपस्यविधान-मिति वार्त्तिकाराः प्रतिपादयन्ति । **वक्ष्यते चैतदिति** । अन्यत्रेति शेषः । उभयोरपि मतयोरेकपदार्थत्वं सङ्गमयति—**मतद्वयेऽपीत्यादिना** । 'द्विर्ह-विषोऽवद्यति । इति वाक्यस्य स्वतन्त्ररुपेण द्वयवदानविधायकत्वं नास्ति ।

अतएवैकपदार्थत्वमपि न स्यात् । अपि तु चतुरवत्तविधायकविधिवाक्यापेक्षितमेव द्वयवदानं बोधयत् तच्छेषभूतमेवेत्येकविधिवाक्यविहितत्वादवदानाप्रिदानान्त एक एव पदार्थः । तेनैवानुसमय आग्नेयादाविति । यत्र विधिभेदस्तत्र कथमेकपदार्थत्वमित्याह—**विधिभेद इति ।** विधिभेदेऽप्येकविध्यववत्वेन विधानादेकपदार्थत्वं भवतीति । उदाहरति—**यथेति ।** 'व्रीहीनवहन्ति' इत्यनेन विधिवाक्येन तण्डुलकर्मिकाया अवघाव भावनाया विधानं भवति । कृष्णाजिनस्तरणमारभ्य त्रिः फलीकरणान्तैः विधिवाक्यैस्तरणादिफलीकरणान्त एकः पदार्थ इति । **तेनेति** । अनेनैव प्रकारेणेत्यर्थः । नानाबीजेष्टौ प्रतिबीजमनुसमय इति यत्र पदार्थानुसमयो न सम्भवस्तत्र किं स्यादित्याह— **यत्र त्विति** । यत्र पदार्थानुसमुये स्वीकारे किञ्चिद् बाधकं भवेत्तत्र काण्डानुसमयः स्वीकार्य इति । उदाहरति—**यथेति अश्वप्रतिग्रहेष्टाविति** । 'यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेदिति वाक्यं श्रूयते । यत्र यद् पौण्डरीकादिसम्बन्ध्यश्वदाननिमित्तकसहस्त्रादिसंख्यकाः पुरोडाशास्ते सर्वे एकदेवताकाः । अतस्तेषां सह प्रयोगे यदि निर्वापादीनां पदार्थानुसमयः क्रियेत ततः सर्वेषामधिश्रयणं कृत्वा यस्योद्वासनं स्यात्तस्य भस्मीभाव एव स्यात् । अतस्तत्रैकस्य निर्वाणादिकाण्डं परिसमाप्यान्यस्य कार्यमिति । गवमेव पश्वेकायशिन्यामपि वहुयूपपक्षेऽञ्जनादिपरित्याणान्तानां काण्डानुसमय इति । कुत इत्याह—**अञ्जनादीत्यादि** । पदार्थानुसमयेऽनवसर्गस्यासभ्यवादिति । **सर्वोऽपीति** । स्मार्त्ताचारप्राप्तपदार्थानुष्ठानानन्तरमनुष्ठास्यमानपदार्थेन सहाविरोधेनैवायं क्रमो वाध्यत इति । स्मार्त्ताचारप्राप्तपदार्थानुष्ठानेन सहाविरोधेनानुष्ठानं दर्शयति—**यथेति** । अत्र 'क्षुते आचामेत्' । इति प्राप्तस्मार्त्ताचमनेन सह द्वयवदानस्याविरोधेनानुष्ठानमिति । वैदिकानुष्ठानमध्येऽऽचमनस्य प्राप्तत्वाद् व्यवधानं स्थादित्याह—**न चेति** । न व्यवधाने सति परस्परं श्रुत्योर्विरोध इति । कुत इत्याह—**प्रधान भूतेत्यादि** । अत्राचमनरुपप्रवलपनार्थवोधकत्वात् स्मृतेरपि प्रवलत्वादिति । तथा गौणत्वाद् दुर्बलक्रमपदार्थबोधकत्वाच्छ्रुतेरत्र दौर्बल्यात् । स्मृत्यपेक्षया श्रुतेरेव प्रावल्यं दृष्टम् । अत्र कथं वैपरीत्यं जातमित्याह—प्रमाण—**बलाबलाद्धीति** । **प्रमेयगतबलाबलस्य** बलीयस्त्वमिति । प्रमेयगतविरोधमाश्रित्यैव प्रमाणविरोधोऽपि जायत इत्याह—**प्रमेयविरोधकृतत्वादिति** । बलावलविचाराय' विरोधविचारोऽऽवश्यक इत्याह—विरोधालोचनपूर्वकत्वादिति । श्रुतिस्मृत्योर्विरोधे स्मृतेः प्रावतयस्वीकारे औदुम्वराधिकरणविरोधः स्यादित्याह—**वस्तुतस्त्विति** । क्षुते आचामेत्' इत्यनया स्मृत्या प्राप्ताचमनस्या-

शुनिवृत्त्यर्थत्वादङ्गभूतत्वेन न श्रुतिव्यवधायकत्वमिति । अतो न औदुम्बराधिकरणविरोध इति । **तदुक्तमिति** । **वेदिरेवेति** । आचमने प्राप्तेप्यनाचम्य आचमनमकृत्वानुष्ठानं करोति चेत्तर्हि वेदेरेव वैगुण्यं स्यात् । तस्या वेदेरेव साद्गुण्यं सम्पादयितुमाचनजन्यमा शुक्त्रानैव व्यवधानं भवेदिति । **इत्थमिति** । एतेन प्रकारेणेत्यर्थः । अङ्गक्रमाभ्यां सहितं प्रधानप्रयोगानुष्ठानानन्तरं देशकालकर्त्राद्यपेक्षायां वाक्यान्तरबोधितदेशादीनङ्गत्वेम बोधयति प्रयोगविधिः । तत्रानुपादेयदेशानां ज्ञानं कथं स्यादित्याह— **तत्रेति । स्मृतिप्राप्ते एवेत्यर्थः** । स्मृत्यैव ज्ञायत इति भावः । एवमेत्र । समे दर्शपूर्णमासाभ्यां यजेत' इत्यादिभिर्वाक्यैः प्राप्तस्तूपादेयसमादिदेश इति । द्विविधोऽपि **देशो**ऽनुष्ठानाङ्गत्वेनैव बोध्यत इत्याह—**स इति** । कालस्योपादेयत्वमस्ति न वेत्याह—**कालस्त्विति** । 'पौर्णमास्यां पौर्णमास्या यजेत' इत्यादिर्वाक्यैः ज्ञातः कालोऽनुष्ठानाङ्ग भवति । प्रयोगे च भेदः कथमायातीत्याह—**अनयोरिति** । उदाहरति—**यथेति** । चातुर्मास्यस्य द्वितीये वरुणप्रवासपर्वणि—दिग्वाचिभ्यां दक्षिणोत्तरविहारशब्दाभ्यां भेदाद् देशभेद इति । दर्शपूर्णमासयोः कालभेदाद्भेदः । **कर्त्ता त्विति** । तत्तत्फलकामस्यैव कर्त्तृत्वं विहितम् । अतएव 'कर्त्तुः फलम्' इयि नियमोऽपि सङ्गच्छते । तथापि वरणादीनां श्रुतत्वात् स्वस्मिंश्च तदसम्भवादन्ये एव समानेया इति । **तत्रेति** । दर्शपूर्णमासादिषु ऋत्विक्संख्यायाः नियतत्वात् तस्यैवाङ्गत्वम् । तत्तत्फलकामस्य कर्त्तृत्वमुपपादयति—**तत्प्रयोगकत्वेनेति** । **दक्षिणाभेदादिति** । दक्षिणाभेदप्रयुक्तकर्त्तृभेदः, कर्त्तृभेदप्रयुक्तप्रयोग भेदं इति । उदाहरति—**यथेति** । अवष्टियागे एव 'आग्नेयमष्टाकपालं निर्वपति श्यामो दक्षिणा । इति वाक्येन एव 'आग्नेयमष्टाकपालं निर्वपति श्यामो दक्षिणा' इति वाक्येन दक्षिणाभेदोऽपि श्रूयते । तेनैव च । दिशामवेष्टयो भवन्ति' इत्यत्र बहुवचनत्वमप्युपपद्यते । एवनेवाम्पन्नाप्यूहः कर्त्तव्य इति । **इत्थमिति** । एतेनैव प्रकारेणेत्यर्थः । अनुष्ठापितस्य प्रयोगस्य प्राशुभावं शैघ्र्यं बोधयति प्रमोगविधिरिति । अनुष्ठानप्रसङ्गे विलम्बप्रतिपादकप्रमाणाभावात् । अविलम्बेऽपि प्रमाणाभाव इति शङ्कते—**न चेति** । समाधत्ते—**भवन्तमिति** । यागं भावयेत्, अनेन साधनेन भावयेत्, इत्थमेतेन भावयेत् इति ।

साध्यसाधनेतिकर्त्तव्यतारूपां शत्रयसम्वलितभावनाया एककालावच्छेदेनानुष्ठानादेकक्षणवृत्तित्वं त्रयाणां प्रतीयते । भावनाया अंशत्रयस्यैकक्षणवृत्तित्वासम्भवादविलम्बापरपर्यात्रिप्राशुभावकतपनमिति । अत्र

मतान्तरं दर्शयति—**पदार्थपरिमाणमपीति** । प्रयोगविक्षेणादिरहितसमस्त-पदार्थानुष्ठानाय पदार्थपरिमाणतानमप्यावश्यकमिति तदपि बोध्यते प्रयोगविधिनेति केषाञ्चिन्मतम् । तत्रैवान्येषां मतं दर्शयति—**अभ्यासादेवेति** । कार्यसम्पादनकौशल्येनैव सम्यक् समस्तपदार्थानुष्ठान सिद्धेः स्मृति-प्रतिपादितपदार्थेषु नियमाभावाच्च तन्न बोधयति प्रयोगविधिरिति । **इत्थमिति** । प्रयोगविधेरनु ष्ठायकत्वं प्रतिपादितम् । तेनैव प्रकारेणेत्यर्थः । अनुष्ठापितञ्च प्रयोगमिति । प्रयोगविधिनेति शेषः । **नित्यनैमित्तिकेस्विति** । फलाभिसन्धिरहितानां नित्यकर्मणा यथाशक्त्यनुष्ठानम्, वैगुण्यभीतेर-भावात् । नैमित्तिककर्मणां परित्यागोऽनुमतः । अतो ययाशक्त्यनुष्ठानयित्यु-पबन्धः । **तेनेति** । अवश्यकर्त्तव्यतादर्शनेनेत्यर्थः । विधिप्रतिपादितमुख्य-परार्थाभावेऽप्यवश्यसम्पादनीयत्वेन तत्स्थाने प्रतिनिधिग्रहण व्यवस्था शास्त्रे विद्यते । प्रतिनिधिभूतेन पदार्थेन कार्यं सम्पादनीयमिति तथैवाङ्ग-लोपे सति तन्निमित्तकप्रायश्चित्तानुष्ठानमपि शास्त्रं बोधयति । प्रतिनिधिः कीदृशो वा पदार्थः भवेदित्यत आह—**तत्रेति** । मुख्यद्रव्यसदृशद्रव्यमेव प्रतिनिधर्भवति । उदाहरति—**यथेति** । मुख्यद्रव्यभूतव्रीह्यभावे तत्सदृशाव-सम्पन्ननीवारा एव प्रतिनिधिभूतः भवन्तीति । तदेव स्पष्टयति—**'व्रीहि-भिर्यजेत' इति** । जातावेव शक्तिरिति मीमांसकमतम् । व्यक्तेश्च तदा श्रयत्वेन लक्षणया बोधः । अतएव कृत्योपस्थिततत्वाच्छाब्दबोधे भानमपि सञ्जायते । अवयवाश्चावयविनि तिष्ठन्ति । अतएव तदाश्रया अवयव्या-श्रयाः ह्यवयवाः पुरोडाशद्वारा यागाङ्गारि भवन्ति । विधिवाक्यैश्च तत्त्वेन विधीयन्ते । **व्रीह्यसम्भवे चेति** । व्रीह्यलाभे सति तन्निष्ठायाः जातेश्च तदाश्रयायाः व्यक्तेश्चाङ्गत्ववाधेऽप्यनुष्ठानसम्पादनाय तदवयसादृश्येन नीवाराणामुपादानम् । नीवारावयवानामङ्गत्वानुग्रहादानुष्ठाने यथाशक्ति-न्यायः प्रवर्त्तते । सदृशावयवविशिष्टानामेव द्रव्याणां ग्रहणमित्याह—**विसदृशोपादाने चेति** । यवानुग्रहः न स्यादिति । शङ्कते—**नन्विति** । अयं भावः—यवानां वैकल्पिकेनैव रुपेण ग्रहणं भवेत । न व्रीहिप्रतिनिधि रुपेणेति । समाधत्ते—**नेति** । वैकल्पिके स्वीक्रियमाणे व्रीहिगहणपक्षे यवानां ग्रहणाभावेनानङ्गत्वमापद्येत । अपि च 'व्रीहिभिर्यक्ष्ये' इति सङ्कल्पिते सति यवैरनुष्ठीयमाने सङ्कल्पस्य मिथ्यात्वेन 'नानृतं वदेत्' इति क्रत्वङ्ग-भूतानृतवदनरुपनिषेधातिक्रमः स्यादिति । अवयवसादृश्यमादाय यं कमपि प्रतिनिधिरुपेण ग्रहणं कर्त्तव्यं न वेत्याह—**सादृश्यमपीति** । अवयवसा-दृश्येऽपि विधिनिषिद्धं द्रव्यं न प्रतिनिधेयमिति । उदाहरति—**यथेति** । 'अयज्ञिया वै माषा' इति निषेधकवाक्येन 'निषिद्धानि' माषप्रभृतीनि

द्रव्याणि न प्रतिनिधेयानि । **यद्यपीति** । प्रतिनिधि भूतानां द्रव्याणां न स्वरुपेणाङ्गत्वं भवति, अपि तु मुख्यद्रव्यगतावयवसादृश्येन तथापि नान्तरीयकत्वेन अर्थात् अविनाभावेन तत्स्वरुपस्यापि यज्ञेन सह सम्बन्धं न निवारयितुं शक्यते कनापि । द्रव्यस्वरुपभावेऽवयवाः कुत्र स्यास्यन्ति । अतएव स्वरुपमपि यज्ञेन सम्बध्नाति । **स चेति** । यज्ञसम्बन्धश्चेत्यर्थः । 'अयज्ञिया वै माषाः' इत्यनेन निषिद्धाः माषादयः । अतो न तेषां निषिद्धानां माषादीनां प्रतिनिधित्वं भवतीति । ननु पूर्वं मुख्यालाभे प्रतिनिधिभूतेन द्रव्येणानुष्ठानमारब्धम् । ततश्च पुनः मुख्यं द्रव्यं लब्धम् तत्र किं कर्त्तव्यमित्याह—**यदेति** । तदवेदं मुख्यमेव द्रव्यमादेयमिति । तेनैव चानुष्ठानं परिसमापनीयमिति । तदसम्भवनिमित्तत्वात् मुख्यद्रव्यासम्भवनिमित्तत्वादित्यर्थः । प्रतिनिधेः प्रतिनिधिद्रव्यस्येत्यर्थः । कुत इत्याह—**निमित्तापाये** इति निमित्ते विनष्टे नैमित्तिकस्यापि विनाश इत्यर्थः । मुख्यद्रव्यालाभनिमित्तकं प्रतिनिधिद्रव्यग्रहणम् । मुख्यद्रव्यलाभे निमित्ताभावादेव नैमित्तिकप्रतिनिधिद्रव्यग्रहणाभाव इति । वैयाकरणा अपि स्मरन्ति—निमित्तापाये नैमित्तिकस्याप्यपाय इति । ननु मुख्यद्रव्यालाभे प्रतिनिधिद्रव्येण प्रधानानुष्ठानानन्तरं पुनः मुख्यद्रव्यलाभे प्रधानावृत्तिः स्यान्नवेत्यत आह—**प्रतिनिधिनेति** । पूर्वं प्रतिनिधिद्रव्येणानुष्ठाने वलते मुख्यद्रव्यलाभेऽपि न प्रधानावृत्तिरिति । गुणानुरोधेन प्रधानानुवृत्तेरन्याय्यत्वात् । प्रधानयागानुष्ठानमात्रपर्याप्ता व्रीह्यः शेषकार्यसम्पादनाय पर्याप्ताः नीवारास्तत्र कस्य ग्रहणं स्यादित्याह— **यदेति** । तत्रापि व्रीहीणामेवोपादानं स्यात् व्रीहीणां साक्षात्प्रधानयागाङ्गत्वेन विहितत्वान्न नीवाराः प्रधानाङ्गत्वेन विहिताः अतो नीवाराणां न ग्रहणमपि तु व्रीहीणामेव । नीवाराणां शेषकार्याङ्गत्वेन विधानमित्याह—**शेषकार्याणामिति** । **शेष**कार्यसंस्कारसम्पादकत्वेनाङ्गाङ्गत्वात् । **प्रधानाङ्गस्येति** । प्रधानाङ्गाङ्गाङ्गयोः प्रधानाङ्गस्य बलवत्त्रादिति । **एवं यदेति** । यदा पशुबन्धनमात्र समर्थः खदिरः प्राप्तो वर्त्तते । कदरस्तु तक्षणादियूपसंस्कारसमर्थस्तदापि खदिरस्यैवोपादानम्, विधिना विहितत्वेन तस्य प्रधानत्वात् । **क्वचित्त्विति** । क्वचित्साक्षाद्वचनेन विहित एव प्रतिनिधिर्भवति । यथा 'यदि सोमं न विन्देत्' इत्यादि । **अत्र हीति** । सोमाभावे पूतीकानां विधानमिति । तस्य सोमसादृश्यात् प्रति निधित्वेन ग्रहणमिति । **यद्यपीति** । अयं भावः— सोमेन सह यस्याधिकं साम्यं भवेत्तस्यैव ग्रहणमुचितमिति भावः । तादृशानां पदार्थानां विद्यमानत्वेनाल्पसदृशानां ग्रहणं नोचितम्, तथापि सर्वावयवसादृश्यमुक्तद्रव्यलाभे सत्यपि यावन्न्यायबलेन सुसादृश्यं नियम्यते ।

तत्र तावद् वचनप्रामाण्यान्मन्दसदृशानामतपसदृशानां पदार्थानां ग्रहणं भवति। प्रतिनिधिविषयेऽयमेव नियम इति । कुत इत्याह—**अपूर्वविधित इति**। नियमविधिस्वीकारे लाघवमित्यर्थः । शङ्कते—**प्रतिनिधिग्रहागे सति** ऽप्यपचारः सञ्जातस्तर्हि पुनर्ग्रहणे मुख्यसदृशं द्रव्यं नेयमुत प्रतिनिधिसदृशमिति। तत्राह—**यदा न्यायलब्धेने त्यादि** । अपचारे जाते प्रतिनिधिसदृशं न ग्राह्यम्, अपि तु मुख्यद्रव्यसदृशमेव द्रव्यं ग्राह्यमिति। कुत इत्याह—**प्रतिनिधेरिति** । प्रतिनिधीनां स्वरुपतोऽङ्गत्वं नास्ति अपि तु प्रतिनिधिद्रव्यगतमुख्यद्रव्यगतावयवसादृश्यादङ्गत्वमिति । **केषञ्चित्त्विति**। प्रातगिधिरेव न भवति। यथा-**देवतेति** न देवतायाः प्रतिनिधिर्विहितः। मीमांसकमते शब्दमयी देवता भवति । 'अतएवयस्मिन् यागे' इत्यादि प्रतिपादितम्'। देवता विधिवाक्यबोधिता भवति । तस्याश्चाजननद्वारा यागाङ्गत्वं जायते। अतो देवतापचारे प्रतिनिधि भूतया देवतया तदेवादृष्टं सेत्स्यतीत्यत्र प्रमाणाभावेन न देवतायाः प्रतिनिधिः। अदृष्टाभावात्फलाभावः, फलाभावाश्च कर्माननुष्ठानम् तेन च कर्मवैयर्थ्यमिति भावः। **तथाग्नेरित** । आह्वनीयादावाधानजन्यादृष्टसंस्कारसम्पादकोऽग्निरिति । तदपचारे सति अन्यदेवपया तददृष्टजननरुपकार्यसिद्धौ प्रमाणाभावान्न देवतायाः प्रतिनिधिः । एवमेवाहष्टार्थजनक प्रयाजादिक्रियापचारे क्रियन्तरेण न तत्कार्यसिद्धिरिति प्रतिनिध्यभावः । **सः प्रतिनिधारिति**। दृष्टप्रयोजनकत्वेऽपि मन्त्राणामचारे न प्रतिनिधिरित्याह—**तथेति। तत्कार्यं** मन्त्रकार्यम् । 'मन्त्रैरेव पदार्थाः स्मर्त्तव्या' इति नियमविध्याश्रयणात्। **अपचरितमन्त्रार्था** इति। मन्त्रेऽपचरिते तज्जन्यार्थास्मरणे कर्मसम्पादनाय पदार्थस्मरणाय प्रतिनिधरुपादानमावश्यकं स्यात्। **स्मरणे त्विति**। पदार्थस्मरणे कार्ये सिद्धे सति प्रतिनिधेर्वैयर्थ्यमापद्येत। यजमानभावेऽपि तत्प्रतिनिधिर्नभवतीत्याह—**तथेति** । यजमानप्रतिनिधिस्वीकारे किं स्यादित्याह—**प्रतिनिध्युपात्तस्येति**। यजमानप्रतिनिधौ तत्र स्वामित्वाभावेन यजमानत्वासम्भवात्। स्वामित्वञ्च फलभोक्तुरेव भवति। प्रोषितान्यकार्यव्यापृताभ्यां यजमानाभ्यां वपनादयः फलिसंस्कारः स्वयमेव सम्पादनीयाः । आज्यावेक्षणादस्तर्हि कथं सेत्स्यतीत्याह—**आज्यावेक्षणादयस्त्विति**। यजमानस्य 'यजमान' इति विशेषसमाख्यावाधेऽपि' आध्वर्यव इति सामान्यसमाख्याबलेनाज्यावेक्षणादयोऽध्वर्युः कुर्यादिति । **किं प्रतिनिधिनेति**। किं तेपे । प्रतिनिधेरावश्यकता नास्तीति भावः। यजमाने मृते किं स्यादित्याह—**मृते त्विति** । यजमाने मृते पुरुषान्तरोपादानेऽध्वर्यवादिप्रवर्त्तने च कर्त्तुरेवाभावः स्यात् । यजमानस्यैव कर्त्तृत्वेन व्यव-

हारात् । **पत्न्यास्विति** । पत्न्याः स्वतन्त्ररुपेणानुसिद्धाग्नेरभावाच्च कर्त्तृत्वमेव न सम्भवति । अतएव **प्रतिनिध्यभावोऽपीति** । एवं तर्हि सत्रादावपि यजमानस्य मृते तत्प्रतिनिधिन स्यादित्याह—**सत्रादाविति** । यजमानसंख्यायूरामाय ।

प्रतिनिधिर्भवत्येवेति । **यद्यपीति** । अयं भावः—प्रतिनिधिभूतो यजमानः न स्वामीमध्ये परिगण्यते तथापि यजमानसंख्या पूरणानेया । तथैव क्रत्वर्थपदार्थेषु फलिसंस्कारेषु कर्त्तृपरिच्छेदकसंख्यासम्पादनार्थमानेये यजमान इति । **यथाशक्तिन्यायात्** । सत्राणां नित्यत्वं काम्यत्वं वेत्याह—**सत्राणामिति** । काम्यत्वेप्यारब्धानां नित्यत्वमेवेति । **एवमिति** । अध्वर्यवादिकर्त्तृणां प्रयोजनकावघातादि क्रियायाः गुणस्य च प्रतिनिधिर्भवतीति ।

## अथ प्रायश्चित्तानि

प्रतिनिधिनिरुपणानतरंमनुष्ठानोपयोगितया प्रायश्चित्तं निरुप्यते—**यस्य सर्वाणीति** । यस्यानुष्ठातुः प्रधानयागानुष्ठानार्थं सम्पादितस्य हविषः नाशं स्यात्तदा शेषकार्यमाज्येन समापनीयम्, न तु शिष्टेन हविषा । हविष्ट्वविषये भाष्यकारवार्त्तिककारयोः कलहो दृश्यते । यथा भाष्यकारमते वैकल्परहितस्य सम्पूर्णस्य हविषः । मध्याद्धादवघति 'पूर्वार्द्धादवघति । इत्यादिवाक्यवलेन तदपादानकावदानस्य यागे हविष्ट्वं भवति । अत्रैव प्रसङ्गे वार्त्तिककारमतं दर्शयति—**वार्त्तिककारमतेऽपीति** । एतेषां मते पात्रद्वये सुरक्षितस्याखण्डितस्य सम्पूर्णय पुरोडाशस्यैव हविष्ट्वमिति । **तस्य चेति** । हविषश्चेत्यर्थः । **एवमिति** । एकां देवतामुद्दिश्यानेकानि द्रव्याणि विहितानि भवन्ति सर्वाणि च होमैकप्रयेजनानीति । **तेष्वेकैकस्य** द्रव्यस्यैकदेशे विनाशे प्राप्ते तप्परित्यज्यान्यदेव हविरुत्पादनीयमिति वार्त्तिककारमतम् । कुत इत्याह—**हविष्ट्वयस्येति** । **व्यासज्यवृत्तित्वादिति** । पात्रद्वयव्यासक्तत्वेनेति शेषः । भाष्यकारकतमुपस्थापयितुमाह—**भाष्यकारमते त्विति** । हविष्ट्वेन विहितानामनेक द्रव्यावाभेकद्रव्यनाशे सति तन्मात्रमेवोत्पादयेत् न तु सर्वाणि द्रव्याणीति । द्वयवत्तरुपहविष्ट्वस्येतरद्रत्येषु विद्यमानत्वात् । **सकलहोमिकैकेत्यादि** । सकलेषु होमिकैकद्रव्येषु एकदेशमात्र विनाशे प्राप्ते तन्मात्र स्यैवोत्पाद इति । **अत्र** चोभयोः सम्मतिरिति दर्शयति—**उभयमते** । **इत्यनेन** । उदाहरति—**यथेति** । करम्भ इति ।

**प्राजापत्यचित्रेष्विति** । प्रजापतिदेवताकत्वात् प्राजापत्यमिति । दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यम् इति । अत्र विचित्राणामनेकेषां पदार्थानां संसृष्टत्वात्सम्मिश्रितत्वाच्चित्रपदवाच्चता । **एककपालेष्विति** । एककपाल अर्पितेष्वित्यर्थः । **एवमिति** । स्विष्टकृदादावत्तहविर्नाशे जाते न प्रनस्तस्यैवावदानम्, अपि त्वदृष्टसम्पादनायाज्यमेव प्रयुज्यते । तर्हि आज्ये कथं चतुर्धाकरणमित्याह—**चतुर्धाकरणादेस्त्विति** । एतेषां लोप एव स्यात्, तत्रासम्भवात् । कृत्स्नहविर्दाहे किं कर्त्तव्यमित्याह—**यस्येत्यादः** । अनेन च मन्त्रेण प्रायश्चित्तं विधीयते । अत्र कृत्स्नदाहे प्रयोगात्मकं प्रायश्चित्तम् । सम्पूर्णदाहे एकदेशदाहस्यावर्जनीयत्वात् । सम्पूर्णऽवयविनि एकदेशस्यावयवस्य विद्यमानत्वात् ।

'भिन्ने जुहोति' इत्यादौ भेदेन वैदिकमेव, न लौकिकमित्याह—**भिन्ने जुहोतीत्यादि** । भेदनादिनिमित्त न लौकिकमपि तु याज्ञिकमिति । कुत इत्याह—**तन्निमित्तेत्यादि** । भेदननिमित्तकहोमरुपस्य कार्यस्य फलकतपनापत्तेः । तर्हि किं स्यादित्याह—**किन्त्विति** । प्रकरणवलेन कपाल भेदनं वा भवेत्, एकदेशभेदनं वा, उभयत्र निमित्तता स्वीकार्या । एवमेव हविःस्कन्दनेऽपि प्रायश्चित्तनिनित्तता द्रष्टव्या । कपाले भिन्ने सति तत्संस्कारकत्वेन होमस्य विधानम् कपालस्य सम्पूर्णावियवस्य भिन्नत्वे पुरोडाशसवणादिकार्यानुपयोगित्वेन निष्प्रयोजनत्वादसंस्कार्यत्वाद् कपालैकदेशभेदे एव होमविधानमिति शङ्कते—**न चेति** । समाधत्ते—**भिन्नस्येति** । भिन्नस्य कपालस्य संस्कार्यत्वे निमित्तप्रतिपादिकतया श्रुत्या नित्यवद्धोमस्य क्रत्वङ्गता स्यात् । **निमित्तसप्तम्या इति** । निमित्तेऽर्थे विहितायाः सप्तम्याः कर्मत्ववोधनदर्शनात् । **संस्कार्यञ्चेति** । संस्कार्यत्वस्यानित्यत्वेन नित्यानित्यसेयोगयोः परस्परं विरोधः स्यात् । उभयोः शब्दयो, परस्परविरुद्धार्थप्रतिपादकत्वात् । अपि च प्रतिप्रयोगं भेदनं कार्यमित्यापद्येत । उपसंहरति—**तस्मादिति** । सप्तमोविभक्ति श्रुत्या प्रायश्चित्तस्य निमित्तं भेदनमेवेति । कपालास्तावत्संघर्षणस्वभावाः भवन्ति । संघर्षणे चैकदेशभेदनमवश्यम्भावि । अत एकदेशभेदनस्य निमित्तत्वं न सम्भवतीत्याह—**न चेत** । समाधत्ते—**संघर्षणभेदनयोरिति** । संघर्षणे भेदने च परस्परं भिन्दत्वस्य लोकसिद्धत्वादनुभवसिद्धत्वाच्चैकदेशभेदस्यासार्वत्रिकत्वेन कादाचित्कत्वात् । यदा यदा भेदनं तदा तदा होमः कार्यः । अथवैकवारमेवेत्यार—**होमश्चायमिति** । प्रतिभेदनमावर्तते इति भावः । कुत इत्याह—**प्रतिनिमित्तमिति** । यदा यदा निमित्तप्राप्तिस्तदा तदा तन्निमित्ताकानुष्ठानमिति । **एवं**

**स्कन्दनेऽपि**। आवृत्तिरिति शेषः। **उदाहरणं यथा—यस्योभयमिति**। अनेन हविरार्त्तौ पञ्चशरावयागरूपं प्रायश्चित्तेन रूपेण दर्शयागाङ्गत्वमिति विधीयते। आर्त्तदोहप्रतिनिधिरूपेण पञ्चशरावद्रव्यस्य विधानं नास्तीत्याह—**न त्विति**। कुत इत्याह—**प्राप्तयाग इति**। यागस्य प्राप्तौ सत्यां द्रव्य-विधाने तथा महेन्द्रदेवतायाः विकल्परूपेणेन्द्रदेवतायाः नियमे सति वाक्यभेद प्रसर इति **अन्यथेति**। वाक्यभेदास्वीकारे पाक्षिकानुवादस्यानर्थकत्वं निष्प्रयोजनत्वमापादयति। शङ्कते—**न चेति**। अयं भावः—दर्शकर्मसम्पाद-कन्द्रव्यनाशेन द्रव्याभावद्दर्शकर्मणोऽपि समाप्तौ तस्य कार्यस्य साधना-काङ्क्षायां जातायामिदं कर्म तत्स्थानापन्नं कर्म इति स्थानापन्नत्वेनैव कार्यविधानं स्यान्न तदङ्गत्वेन विधाननिति। समाधत्ते—**द्रव्यान्तरस्यापीति**। एकस्य द्रव्यस्य नाशेऽपि द्रव्यान्तरस्य विधमानत्वात् कर्मनिवृत्तिरेव न स्यात्। **प्रकरणात्त्विति**। प्रकरणप्रमाणवलेनेत्यर्थः। द्रव्यविनाशे सति तन्निमित्तकवैगुण्यपरिहारार्थं तदङ्गत्वेन विधानमावश्यकम्। अतएव न तत्कर्मस्थानापन्नत्वेन विधानमिति। **यस्य हविरिति**। अनेन मन्त्रेणाकालोप-क्रमनिमित्ते सति दर्शयागस्यैव पूर्वदेवतापनयेनान्येन देवेन सह सम्वन्ध-विधानम्, कार्यान्तरविधानं न भवति। कुत इत्याह—**प्रकृतत्वविषामिति**। तदवेदं इविरिति प्रत्यभिज्ञानात्, **सत्यां गताविति**। भावनायां द्रव्यान्व योपायान्तसस्वेऽपि न विशिष्ट विधिस्वीकार उचितः। उपायान्तराभावे एव विशिष्टविधिस्वीकृतिः। अन्यथा विशिष्टविधिस्वीकारे गौरवापत्तिः प्रसज्येत। तदेव स्पष्टयति—**तथा हीति**। 'त्रेधा तण्डुलान्विभजेत्' इति वाक्यम्। अनेन विहितस्तस्य त्रेधा विभागस्य 'मे मध्यमाः स्युरि' त्यादि-वाक्यैरेव सिद्धत्वेन विधानाभावात्तण्डुलपदस्य च मध्यमस्यविष्ठतोदिष्ठ-क्षोदिष्ठहविस्त्रयो—पलक्षकत्वाद्धवींषि विवभजेदिति वाक्यार्थः। **विभागस्येति**। विभागश्च संयोगसापेक्षः। संयोगाभावे विभागोऽनुपपन्नः। 'ये मध्यमाः स्यु'रित्यादिवाक्येन प्रतिपादितहविषां देवतासंयोगोऽपि श्रूयते। अतो देवताभ्यो विभागो विधीयते।

**ततश्चेति**। 'ये मध्यमाः स्युः' इत्यादिवाक्यैः हविषामपेतातो देवतान्तरसंयोगेऽपि विधीयते। एवमेव मध्यमानुद्दिश्याग्निदाता, स्थविष्ठान् दधि चोदिष्य पदाता, क्षोदिष्ठान् श्रृतञ्चोद्दिश्य विष्णुःशिपिविष्टविधान-मिति। अत्र पदद्वयेनैकैव देवता प्रतिपाद्यते तथापि न वाक्यभेद इत्याह—**दात्रादिशब्दानामिति**। 'सहश्रपयती' त्यनेन सह श्रपणविधानादेव द्वयोर्द्वयोर्हे-

विषोरेकदेवतात्वं विहितनित्याह—**सहेति** । वाक्यभेदरूपो दोष उपायन्तरा-भावात् । एकमुद्दिश्यवाक्यद्वयविधाने वाक्ये एव स्वीक्रियते दोषः, न पदे इत्याह—**उद्देश्यनिमित्त इति** । **मतान्तरं दर्शयति—यदवेति** । धात्वर्थभेदा-भावेऽपि यथासम्भवसर्वकारकविशिष्टभावनान्तरविधाने वाक्यभेद इति । **तदुक्तमिति** । भावनायाः भेदेऽपि न धात्वर्थभेद इति । **एवञ्चेति** । पूर्वोक्तेनैव न्यायेनेत्यर्थः । दर्शयागस्योपांशुयाजपक्षे तद्यागीयहविषोऽपि पूर्वदेवतापनयो विद्यत एव । देवतान्तरासम्बन्धे सति किं स्यादित्याह—**देवतान्तरासम्बन्धात्विति** । निमित्तवाक्ये निर्वापः श्रूयते, तत्र निमित्तं किमित्याह—**यद्यपीति** । कुत इत्याह—**यस्येति** । अप्रवृत्तस्य इविषोऽभ्युदय-सम्बन्धाभावेन प्रवृत्तमेव हविरिति बोधः **तत्रद्विशेषणस्येति** । हविर्विशेषण-स्येत्यर्थः । निर्वापस्य विवसितत्वाभावात् । **अत इति** । दर्शयागोऽमावास्याया-मनुष्ठीयते, परन्तु दर्शग्रान्तिवशेन चतुर्दश्यामेवानुष्ठानारम्भः सञ्जातः । तत्र चन्द्राभ्युदयो भावीतिज्ञानान्तरं तन्निमित्तकदेवतान्तरसंयोगः हविषो निर्माणात्पूर्वं तण्डुलावस्थायां व देवतान्तरसंयोग इति । **तद्ग्रहणस्येति** । इविर्ग्रहणस्य विविक्षितत्वाभावात् । यद्येकद्विमुष्टिनिर्वापानन्तरं चन्द्रोदय-ज्ञानंतदार्किकर्त्तव्यमित्याह—यदात्वित । अवशिष्टस्य इविषः तूष्णीमेव निर्वाप इति ।

**विभागो हीति** । संयोगसापेक्षत्वाद्विभागस्य पदार्थ इव पदार्थावय-येऽपि विभागसम्भवात् । **संयोगस्त्विति** । यथाप्राकृतानां पदार्थेनैव संयोगः क्लृप्तः निश्चितस्तथैव तत्स्थानापन्नत्वेन वैकृतीनामपि पदार्थेनैव संयोग इति । **असन्नयतोऽपीदमिति** । नैमित्तिकं प्रायश्चित्तम् । **तस्येति** । निमित्त-स्येत्यर्थः । उद्देशेन सह यत्साहित्यं तस्याविवक्षितत्वात् । तण्डुलानामेव न तु हविषामिति । **संक्षिप्ताभ्युदयेष्टिस्विति** । यथामूलम् । मूलमनतिक्रम्ये-त्यर्थः । मूलमनुसृत्यैवात्र विचारः प्रवर्त्तते । अभ्युदयेशिष्टविचारस्त्वतीव निगूढः । **अस्या इष्टेः** । विस्तरो विस्तृतविवेचनम् । भ्रातृकृतेऽनन्तदेव-विरचितमीमांसान्याप्रकाशटीकायामित्यर्थः । आप्यताम् । प्राप्यतामित्यर्थः । आप्लृ व्याप्तौ इति स्मरणात् । उपसर्गवशेनार्थ भेदः । **एवमिति** । अनयैव दिशा प्रायश्चितान्तराण्यप्युक्तानि शास्त्रेषु । **वक्ष्यन्त इति** । अवसरप्राप्तौ तत्तत्प्रसङ्गे इत्यर्थः । **सोऽयमिति** । अङ्गवाक्यैकवाक्यतासम्पन्नप्रधान-विधिरेव प्रयोगविधिरिति । यथा कल्प्यत्वेनोहादिषु वेदत्वं न तिष्ठति तथैव कल्प्यत्वसामान्यात्प्रधानविधेरप्यवेदत्वमेवेति न्यायसुधाकृन्मतम् । मिश्रमते लिङ्गादिभिर्विनियोजकप्रमाणैः कल्पितायाः श्रुतेर्यथा वेदत्वं

सिद्धयति तथैवास्यापि कतव्यत्वेन वेदत्वमेवेति । प्रयोगविधिरिति पाठान्तरम् । **अपूर्वविधिरिति** । गतसंशयमिति । गतो निर्गतः संशयः येन तमित्यर्थः । विषयाणां सम्यक् प्रतिपादनेन संशयराहित्यमिति भावः ।

**बहुसन्दृश्यमिति** । अनेकेषु विप्रलकायेषु ग्रन्थेषु द्रष्टुं योग्यम् । विषयास्तेऽत्रैव प्रतिपादिताः जीवदेवेन । विस्तरेण तत एवावसेयः । न्यायप्रकाशे । यस्य पदार्थत्वं प्रमाणान्तरेणाप्राप्तं तस्य तदर्थत्वेन यो विधिः सोऽपूर्वविधिरि ति लक्षितम् । उदाहृतञ्च 'यजेत स्वर्गकाम' इति । नियमविधिं लक्षयति—पक्षप्राप्तार्थ इति । कदाचित्प्राप्त कदाचिच्चाप्राप्तार्थ इति । अस्यामवस्थायायेकत्र पदार्थं नियमयति यो विधिः स नियमविधिरिति । नियमस्वरूपं दर्शयति—**नियमश्चेति** । अप्राप्ता शः पूर्यतेऽनेनेति । इदमेव च नियमविधेः फलम् । उदाहरति—यथेति । व्रीहीनवहन्ति' इति वाक्यमिदं व्रीहीनुद्दिश्यावघातं विधत्ते । व्रीहीणाञ्च यागाङ्गत्वं प्रतीयते । व्रीहीणां यागाङ्गत्वेऽपि न साक्षात् यागाङ्गत्वं तस्येत्याह——**पुरोडाशद्वारेति** । पुरोडाशप्रकृतितया व्रीहीणां यागाङ्गत्वमिति भावः । व्रीहिभिश्च तण्डुलनिष्पादनम् । ततश्च तण्डुलपेषणम्, ततश्च पुरोडाशसम्पादनम् । तत्रैव व्रीहिभिस्तण्डुलनिष्पादनाय वैतुष्यं तेषामावश्यकम् । वैतुष्यञ्चावघातेन नखविदलनेन वा सम्भाव्यते । अतएव वितुषीभावस्य प्रकारद्वयमित्यवम्गम्यते । तत्रावघातदशायां नखविदलनमप्राप्तं भवति । नखविदलनदशायाञ्चवघातस्याप्राप्तिरिति । **आक्षेपादिति** । एतत्प्रकारद्वयाभावेन वैतुष्यस्यानुपपन्नत्वादिति । **तत्रेति** । नखविदलनपक्षेऽवघातस्याप्राप्तांशे 'व्रीहीनवहन्ति' इत्यनेन विधिवाक्येनावघातस्यावश्यकर्त्तव्यता विधीयते । अतएवाप्राप्तांशपूर्णानित्युक्तम् । यद्यप्यन्येऽपि सम्भवन्ति वैतुष्यसम्पादनाय तथाप्यवघातेनैव वैतुष्यं सम्पादयेदिति नियमः क्रियते । कथमिति चेत् ? तथैवापूर्वस्य सम्पत्तिसम्भवात् । अन्यथा क्रियमाणे सति अपूर्वोत्पत्त्यसम्भवात् । **मद्यपीति** । यत्कालावच्छेदेनाक्षेपजन्यं ज्ञानं सम्भाव्यते, ततः पूर्वमेव शास्त्रस्य प्रवृत्तिर्दर्शनादपूर्वविधित्वमेवास्य, न नियमविधित्वमिति शङ्का । समाधत्ते—**तथापीति** । तद्बोधकशास्त्राभावे एवाक्षेप प्रवृत्तिरिति विचार्यं फलतो नियमविधित्वमस्येति वोध्यम । तद्वोधकशास्त्रसद्भावेऽऽरेरप्रवृत्त्यभावः । निष्प्रयोजनत्वात् **अप्राप्तांशपूरणे इति** ।

वैतुष्यभावनायां नखविदलनपक्षेऽवघातप्राप्त्यभावेनाकनविधिना

तदंश एव पूर्यते । ततश्चावघाते प्राप्ते सति वैतुष्यस्य तेनैव सम्पन्नत्वात् विदलनादीनां निष्प्रयोजनत्वान्निवृत्तिर्भवतीति । **प्रथमोपस्थिताविति** । शास्त्रस्येति शेषः । ततश्च नियम एव स्वीक्रियते । स च नियमः भावरूपः । एतदेव नियमविधेः फलमिति । **एवमिति** । अनेनैव प्रकारेण हविष्कृदेहीत्यादावपि त्रिरभ्यासविशिष्टाह्वाननियम एव क्रियत इति न्यायसुधाकृन्मतम् । मिश्र मते चार्थप्राप्तमाह्वान मनूद्य त्रिरभ्यासमात्रस्य विधानं भवतीति । इत्येवोभयोर्विशेषो नियम्यते अर्थात् तस्मिन्नेव दिने तस्यानुष्ठानमिति भावः । तदेव स्पष्टयति— **द्वादशानामह्नामित्यादि** । अयं भावः—अङ्गसहितप्रधानानुष्ठानमेव फलप्रदायकं भवति । अतएव पूर्वाङ्गानां प्रयाजादीनामुत्तराङ्गानाञ्चानुयाजादीनां प्रधानेन सहैवानुष्ठानमित्यवगम्यते । सहप्रयोगाभावात्प्रधानापेक्षया पूर्वानुष्ठानयोग्यानां दीक्षोपसदादीनामन्येषाञ्च प्रतिदिनमनुष्ठानं स्यादिति ज्ञायते । एवमेवान्तिमे दिनेऽपि सहैवाङ्गादीनामनुष्ठानं स्यादिति प्राप्नोति ।

तत्र 'कियतामङ्गानां सह प्रयोगः । इति भवति ज्ञानापेक्षा । तत्र च नास्ति कश्चिन्नियामकः । अतो येषां केषाञ्चिदपि सह प्रयोगो भवेदिति न प्रयोग वैग्रण्यम् । तत्रैव नियम्यते यत् एकादशदिनं यावत् पत्नीसंयाजान्तान्यनुष्ठानायान्तिमे द्वादशतमे दिवसे शेषाणामवशिष्टानां समेषां सह प्रयोगः कर्त्तव्य । इति । **सर्वेष्विति** । सर्वेषु द्वादशदिनेषु पत्नीसंयाजन्तत्वविधाने कर्माङ्गस्य निषेधे सत्यस्यापूर्वविधित्वमेव स्यात्, न तु नियमविधित्वमिति । अपूर्वविधावङ्गीकारे का क्षतिरित्याह—**नियमविधाविति** । नियमविधिस्वीकारे सति लाघवं भवेत्, अपूर्वविधौ च गौरवमिति । लाघवपक्षसम्भावनायां गौरवपक्षाश्रयणं न युक्तम् **एवमिति** । व्रीहिभिर्मजेत इत्यादौ प्रकृतियागे द्रव्यनियमः क्रियते । **विकृताविति** । विकृतियागे इत्यर्थः 'जाघन्या पत्नीः संयाजयन्ति' इति वाक्यम् । दर्शपूर्णमासयागे पत्नीसंयाजेषु जाघन्याज्ययोर्मध्ये विकल्पः प्राप्तो भवति । पशुमागे च प्राप्तयोस्तयोर्जाघनीनियमः क्रियते । एवमेव प्रकृतियागे 'अरुणया क्रीणाति' इति वाक्यानुराधेनारुण्यगुणविषयकः नियमः । तत्रैव विकृतियागे 'भुक्तानां व्रीहीणाय' इति वाक्यानुसारं भुक्लगुणनियमः । **देशकालेति** । **देशकालकर्त्तृ**विषयेऽपि नियामकानि वाक्यानि दृश्यन्ते । तान्युपपादितान पूर्वमेवेति नेह तन्यते । दृष्टार्थानां विधीनां नियमविधित्वमुपादयति——**एषामिति** । अतएव 'समिधो यजति' इत्यादीनां दृष्टफलकत्वाभावान्न नियमविधित्वमित्याह—**तेनेति** । यत्र कुत्रचिद् भ्रमवशादपि पक्षप्राप्तिः,

न त्वप्राप्तिस्त्रापि नियमविधित्वमिति केषाञ्चिन्मतम् । तदेवोपपादयति—**भ्रान्त्येत्यादिना** । उदाहरति—**यथेति** । आत्मज्ञानप्रतिपादनाय वाक्यमिदं प्रकान्तमुपनिषदि । वाक्यस्यास्य पर्यालोचनया वैशेषिकददर्शनादपि भ्रमवशादात्मज्ञानं प्रसाध्यते । तर्हि तस्याध्यात्मज्ञानप्रतिपादकत्वं सेत्स्यति । तत्रैव नियम्यते । वेदान्तश्रवणेनैवात्मज्ञानं कर्त्तव्यमिति । **तीर्थान्तरे इति** । आत्मज्ञानविचारस्याप्रासङ्गिकत्वान्नेह वितन्यते । दर्शनान्तरे विस्तृतरुपेण प्रतिपादितमस्ति । तस्यैव मुख्यविषयत्वात् । तत एवावगन्तव्यः ।

नियमविधिनिरुपणानन्तरं क्रमप्राप्तवात्वातपरिसंख्यां निरुपयितुमाह—**इतरनिवृत्तिमूलक इति** । इतरस्य पक्षान्तरस्य निवृत्तिरेव फलं यस्य विधेः स परिसंयाविधिरिति । कथं निवृत्तिवाचकत्वमिति व्युत्पादयति—**परि इति** । 'परि' इत्युपसर्गो वर्जनार्थकः । संख्याशब्दश्च बुद्धिदयपरपर्यायः । अतः कलितार्थमाह—वर्जनबुद्धिहेतुरिति । नियमविधौ अप्राप्तांशपूरणात्मकस्य नियमस्य विधेपगतत्वेन सन्निहितत्वाद् विधेयत्वमेव वाक्यार्थः । तदेव च विधेयत्वं **फलमपीति** । नात्र निवृत्तेर्वाक्यार्थत्वं सम्भवति, विधेयगत्वाभावेन विप्रकृष्टत्वात् । परिसंख्याञ्चोभयोऽपि नित्यप्राप्तत्वेन स्वरुपप्राप्तेर्नियमस्य वा फलत्वायोगादन्यनिवृत्तिरेव वाक्यार्थो भवति । इतरनिवृत्तिरेव च फल मित्यपि वक्तुं शक्यते । अयमेवोभयोर्नियमपरिसंख्ययोर्विशेषः । स च परिसंख्याविधिश्च । **उभयोरिति** । परिसंख्या विभजते—परिसंख्या चेति । **द्विधेति** । द्विप्रकारेत्यर्थः । तत्र प्रथममुदाहरति—**त्रीणीति** । यज्ञस्योदररुपाणि । कथमुदरत्वमेषां छन्दसामित्याह—**तानीति** । मानवशरीरे उदरस्य यथाभ्यर्हितत्वं तथैव यज्ञशरीरे गायत्रीबृहत्यनुष्टुपूछकसामभ्यर्हितत्वमिति । उद्वपन्ति उदवापं कुर्वन्ति । उद्वापस्तद्भिन्नपदप्रक्षेपः । आवापश्च पदनिष्कासनमिति । **ज्योतिष्टोम इति** । एतत्संज्ञके यागे इत्यर्थः । पवमानस्तोत्रघटकीभूतेषु बहिष्पवमान संज्ञकेषु स्तोत्रत्रयेषु गायत्र्यादिछन्दस्कानामृचां विनियोगो भवति । उदरवदभ्यर्हितत्वेन तासां स्तुतिरिति । एकविंशतिरात्रेणेत्यादिवचनस्यार्थं स्पष्टयति—**यत्सोमेत्यादिवचनार्थ इत्यतेन** अत्रेति । **तयोरावापोद्वापयोः** । **परिसंख्या** वर्जनबुद्धिरित्यर्थः । **शाब्दी** इति । शब्दप्रतिपाद्यत्वात् । कुत इत्याह—**अत्र हीति** । अत्र प्रयुक्तस्यैवकारस्यान्ययोगवयवच्छेद एवार्थः, न त्वयोगव्यवच्छेदादयः । अतएवेतरनिवृत्तिः प्रनीपते । **इयमिति** । इयं परिसंख्या श्रौती भवति, एवकाररुपश्रुतशब्दप्रतिपाद्यत्वात् । न्यायप्रकाशे श्रौतीशब्देनैव व्यवहारः । शाब्दीं परिसंख्यां निरुप्य फलतः परिसंख्यां निरुपयितुमाह—**लाक्षणिकी**

**त्विति**। उदाहरति—**पञ्च पञ्चनखेति**। **भक्ष्या इति**। भक्ष्यत्वेन पञ्चनखानां न विधानमपि तु परिगणितपञ्चनखेतरेऽपि रागतः प्राप्तस्य भोजनस्य निवृत्तिरेव प्रतिपाद्यते। **अत्रपञ्चानामिति**। शशादिप्रभृतिषु पञ्चपञ्चनखेषु तदितरेषु च पञ्चनखेषु सामान्यरुपेण रागप्राप्तभोजनस्य नित्यप्राप्तत्वे शशादिभिन्नपञ्चनखपरिवर्जनं लक्षणावृत्त्या स्वीक्रियते।

लक्षणया कथमाश्रीयत इत्याह—**वाचकपदाभावादिति**। शशादिभिन्नपञ्चनखनिवृत्तिवाचकपदाभावादित्यर्थः। **अतएवेति**। वाचकपदाभावादेवेत्यर्थः। **अस्यामिति**। लाक्षणिकीपरिसंख्यायामित्यर्थ। **त्रयो दोषा इति**। दोषत्रयापत्तिरित्यर्थः। परिगणयति—**श्रुतहानिरित्यादि**। कथं दोषत्रयापत्तिरिति स्पष्टयति—**श्रुतपञ्चेत्यादिना**। भोजनं रागतः प्राप्नोति। न तदर्थं 'भोजनं कर्त्तव्यम्' इति विधेरावश्यकता, नापि विधिदर्शनम्, विधानवैयर्थ्यात्। बुभुक्षया स्वयमेव प्रवर्त्तते जनः। अतः 'भक्ष्याः' इत्यनेन प्रतीतस्य विधेयत्वस्य परित्यागाद्धानि र्भवति। शशादिभिन्नपञ्चनखभोजनवृत्तिवाचकपदाभावादपि विधेयत्वकल्पनं भवति। शशादीतरेषु रागप्राप्तभोजनस्य च बाध इति दोषत्रयाणामुपपत्तिः। तत्रापि दोषद्वयञ्च शब्दनिष्ठमन्त्यो दोषोऽर्थनिष्ठ इति विशेषः। लाक्षणिकी परिसंख्यामेव द्रढ़यति उदाहरणान्तरेण—**चयने इति**। चयननामके यागे इत्यर्थः। इमामगृभ्णन्निति वाक्यं श्रूयते तत्र। अत्रापि फलतः परिसंख्या स्वीक्रियते। उपपादयति—**इष्टकाहरणार्थेत्यादिना**। चयनयागे इष्टकाभिः स्थण्डिलं निर्माति। तदर्थमिष्टकानयनकार्यसम्पादनारवगर्दभयोर्नियोजनं भवति। **रशना चोभयत्र वर्त्तते**। रशना रज्जुः। 'रयिष्ठयारशनयाधित' इति मन्त्रे 'रशनया रज्ज्वा कृत्वा अधित धृतवान् पशून्' इति महीधरभाष्यम्। तत्र लिङ्गप्रमाणेन गर्दभरशनायां मन्त्रस्य नित्यप्राप्तिः सम्भाव्यते तथापि गर्दभरशनाग्रहणान्मन्त्रस्य निवृत्तिर्भवति। अश्वरशना एव गृह्यते, परिसंख्यावशात्। लिङ्गप्रमाणापेक्षया श्रुतिप्रमाणस्य निरपेक्षत्वेन प्राबल्यात्। पूर्वन्तावत् श्रुतिप्रमाणेनाश्वाभिधान्यामेवास्य मन्त्रस्य प्रवृत्तिरिति शङ्कते—**यद्यपीति**। समाधत्ते—**तथापीति**। **अयं मन्त्रविधिरिति**। एतदभावे सति लिङ्गप्रमाणादेवस्यश्वरशनादानप्रतिपादने प्रवर्त्तते एवायं मन्त्र इति विचार्य गर्दभरशनानादानप्रतिपादकोऽयं मन्त्र इति प्रतीयते।

अतः फलतः परिसंख्यात्र स्वीक्रियते। गर्दभरशनादानपरिवर्जने एव तात्पर्यं विधेः। स्वकथनमाकरग्रन्थेन प्रमाणयति--**उक्तञ्चेति**।

**प्रयोजनमिति** । अस्य परिसंख्याविधेः किं प्रयोजनं स्यादिति निरुपणप्रसङ्गे विचार्यमाणे सति गर्दभरशनानिवृत्तिमतिरिच्य न किमप्यन्यत्फलं प्रतिभाति। इतरनिवृत्तिप्रतिपादनायैवास्य विधेः प्रयोजनमिति । **एवमिति** । पूर्वोक्तेनैव प्रकारेणेत्यर्थः । गृहमेधीयगतानामर्थात् तत्प्रकरणपठितानाम् । 'आज्यभागौ यजति इति वाक्येऽङ्गान्तराणां तद्भिन्नानामङ्गानां फलतः परिसंख्या परिवर्जनं भवतीति । **अत्रेपि** । **सर्वत्रेति** । पूर्वोदाहृतस्थले इत्यर्थः। कथन्न नियमविधिरेवेत्यत आह—**अप्राप्तांशाभावादिति** । यत्राप्राप्तांशपूरणं भवति तत्रैव नियमोऽपि स्वीक्रियत इति भावः। **न नियम इति** । नियमविधिस्वीकाराभाव इति । फलमितरनिवृत्तिरेवेति । परिसंख्याविधेरति शेषः । विधिभेदनिरुपणप्रसङ्गे प्रतिज्ञातं । विधीनां विधायकत्वेन धर्मे प्रामाण्यम् इति वाक्यं सिंहावलोकनन्यायेन स्मारयति—**एवमेवेति** । तेनैव प्रकारेणेति । **त्रिविध इति** । अपूर्णनियमपरिसंख्याभेदात्त्रिविध इति । **भावनाविधानेनेति** । भावनाविधातद्वारेत्यर्थः । **धर्मे इति** । धर्माधर्मयोरित्यर्थः । **प्रमाणमिति** । अत्र प्रतिपादितं सिद्धान्तमभिप्रमाणयितुमाह—**उक्तञ्चेति** । प्रथमाध्यायस्य द्वितीये पादे मन्त्राधिकरणवार्त्तिके इति शेषः **विधिरत्यन्तमप्राप्ते** इति। अत्यन्तमप्राप्ते सतीप्यर्थः । यस्य पदार्थस्य केनाप्यन्येन लौकिकालौकिकोपायेन ज्ञानं न भवति, तत्पदार्थविषयक ज्ञानं यः सम्पादयति सोऽपूर्वविधिरिति । इदमेवात्यन्ताप्राप्तत्वम् । अज्ञातज्ञापकत्वमेव विधित्वमिति । उदाहरणं यथा—'यजेत स्वर्गकाम' इति । स्वर्गनिष्ठसाध्यतानिरुपिता या यागनिष्ठा साधनता सा नान्येनोपायेन ज्ञातुं शक्या, अपि त्वनेनैव वाक्येन यागस्य स्वर्गप्रयोजकत्वं ज्ञायते । अतएवायमपूर्वविधिपदवाच्यतां भजते । **नियमः पाक्षिके सतीति** । पाक्षिकप्राप्तौ सत्यां नियमः । कार्यैक्यसंसाधनाय साधनद्वयं यत्र प्रयुज्यते, तत्रैकस्य साधनस्य यदा प्राप्तिस्तदापरस्याप्राप्तिः । अप्राप्तिपक्षं परे नियमयति, स नियमविधिः, नियामकत्वात् ।

यथा—'व्रीहीनवहन्ति' अनेन च वाक्येन व्रीहीनुद्दिश्यावघातो विधीयते । व्रीहिवगतं वैतुष्यमेवावघातप्रयोजनमित्युक्तम् । तच्च प्रकारद्वयेन सम्पाद्यं भवति । 'उलूखलंमुसलाभ्यामवहन्ति' इति वचन प्रामाण्यादवहननमित्येकम् । द्वितीयादिकञ्चाश्मकुट्टननखविदलनादिकम् । तत्र नखविदलनजन्यवैतुष्यसम्पादनपक्षेऽवहननस्याप्राप्तिर्भवति । तस्यैवाप्राप्तांशस्य पूरणमनेन नियमेन भवति । नखविदलनपक्षेऽवघातस्य प्राप्त्यभावेनपाक्षिकप्राप्तौ नियम इति । **तत्र चान्यत्रेति** । अत्र सप्तमीद्वयमहिम्ना तेन सह

'प्राप्ते' इति पदस्य द्वेधान्वयः सम्भाव्यते—वैयधिकरण्येन वा सामानाधिकरण्येन वा तत्र वैयधिकरण्येनान्वयपक्षे तस्मिन् अन्यसिंश्च शेषिणि एक एव शेषः प्राप्नुयुच्चेत् तत्रान्यतरशेषिणः परिसंख्या भवतीति शेषिपरिसंख्या। सामानाधिकरण्येनान्वयपक्षे च स चान्यश्च शेष एकस्मिन्नेव शेषिणि यदि प्राप्नुयात्तर्हि अन्यतरस्य शेषस्य परिसंख्या भवतीति शेषपरिसंख्या। एवं प्रकारेणापि परिसंख्या द्वेधा सम्पद्यते। अत एकस्मिन् प्रधानेऽङ्गद्वयसम्बन्धे नियतप्राप्तेऽन्यतरनिवृत्तिफलको विधिः परिसंख्याविधिरिति निष्कर्षः। परिष्कृतं लक्षणञ्चैतेषां कौस्तुभे द्रष्टव्यम्। नियमविध्यादीनां विस्तृतं विवेचनं भाट्टालङ्कारेऽवगन्तव्यम्।

क्रमप्राप्तत्वाद्वा विधिप्रतियोगिकत्वाद्वा निषेधस्य विधिनिरूपणानन्तरं निषेधो निरूप्यते। विधिस्वरूपनिरूपणमिदमिति कथने तत्प्रतिपक्षित्वेन झटिति स्मर्यते निषेधस्वरूपं किमिति। अतो विधिनिरूपणानन्तरं निषेधनिरूपणं सङ्गतमिदमिति। विधिवाक्यानि यथा विहितकर्मसु पुरुषप्रवर्त्तकत्वेन प्रामाण्यं लभन्ते तथैव निषिद्धकर्मसु निषेधवाक्यानि पुरुषनिवर्त्तकत्वेन प्रामाण्यं भजन्ते। अत आह—**निषेधानामिति**। यथा विधीनां प्रवर्त्तनाबोधकत्वेन धर्मे प्रामाण्यं तथैव निषेधवाक्यानां निवर्त्तनाबोधकत्वेनाधर्मे प्रामाण्यमित्यर्थः। प्रवृत्त्यनुकूलव्यापारत्वमेव प्रवर्त्तनात्वम्। अनुकूलत्वञ्च प्रवृत्तिजनकीभूतेष्टसाधनताज्ञानजनकत्वम्। 'यजेत—स्वर्गकामः' इत्यत्र 'यागो मदिष्टसाधनम्' इतीष्टसाधनताज्ञानादेव 'कष्टं कर्मेति' न्यायस्य विद्यमानत्वेऽपि यागानुष्ठाने प्रवर्त्तते पुरुषस्तथैवानिष्टसाधनताज्ञानान्निवर्त्तते। यथा 'कलञ्जभक्षणं मदनिष्टसाधनम्' इत्यनिष्टसाधनताज्ञानादेव 'न कलञ्जं भक्षयेत्' इत्यादिवाक्येन निवर्त्तते। अतएव नञ्समभिव्याहृत लिङ्विशिष्टवाक्ये निवर्त्तनैव विध्यर्थः। निवर्त्तना च निवृत्त्यनुकूलो व्यापारः। तच्च प्रवृत्तिसामाग्रीविघटकत्वमेव, न निवृत्तिजनकीभूतानिष्टसाधनताज्ञानजनकत्वरूपम्। प्रवृत्तिप्रागभावरूपाया अनिष्टसाधनतायाः जन्मत्वाभावात्। अतोऽधर्मजनकात् कर्मणः निवृत्तिसम्पादने एव निषेधानां तात्पर्यमिति निषेधपदेनात्र नञः ग्रहणमित्याह—**निषेधो नञिति**। **तद्युक्तानि** नञ् युक्तानि वाक्यानि। यथा 'न ब्राह्मणं हन्यात्' 'न कलञ्जं भक्षयेत्' इत्यादीनि वाक्यानीति। निवर्त्तनास्वरूपं प्रतिपिपादयिषयाह—**निवर्त्तना चेति**। एतादृशो व्यापारः कस्यार्थ इत्याह—**स चेति**। **नञोऽर्थ इति**। तस्यैव निवृत्तिवाचकत्वात्। तदेवोदाहरणेन स्पष्टयति—**ब्राह्मणं नहन्यादिति**। कस्यचित् पुरुषस्य रागवशात् ब्राह्मणहननकर्मणि प्रवृत्तिः

सञ्जाता। ततश्च नञ्युक्तविधिपदघटितवाक्यश्रवणे सति लोकेऽयं पुरुषः वेदे चेदं वाक्यं 'मां निवर्त्तयति कर्मणोऽस्यात् इति प्रतीयते। अयमेव च निवृत्त्यनुकूलो व्यापार इति। निवृत्तिप्रतिपादकत्वेनैवानिष्टफलजनकत्वमप्याक्षिप्यते। एवमेव विधिस्थले प्रवृत्तिसम्पादकत्वेनैवेष्टसाधनत्वमाक्षिप्यते इति भावः। अनेनैव प्रकारेण प्रवृतिनिवृत्ती प्रतिपाद्येते। लिङ्गा लिङ्घटितेन पदेन लिङ्घटितवाक्येन वा। **रागत इति**। तत्र विध्यभावात्। **तत्प्रतीतेरिति**। विधिप्रतिपक्षबोधकत्वान्नञर्थस्येति। मतान्तरं दर्शयति—**केचित्त्विति**। निपातविषये द्योतकत्ववाचकत्वरुपपक्षद्वयं शास्त्रे सुप्रसिद्धं वर्त्तते। द्योतकत्वपक्षे तदर्थवाचकत्वं धातोरेव भवति। तद्धात्वर्थप्रकाशकत्वमात्रं कार्यं निपातानाम्। वाचकत्वपक्षेऽनुभवतीत्पादावनभवरुपोऽर्थः निपातस्यैवेति शम्मन्यन्ते विद्वांसः। पक्षेऽत्र चान्वयव्यतिरेकोऽपि संघटते। स च तत्सत्त्वे तत्सत्त्वं तदभावे तदभाव इति।

भूधातोः स्थित्यनुकूलो व्यापारः उत्पत्त्यनुकूलो व्यापारो वार्थः। अनुसंसर्गेणानुभवरुपोऽर्थस्तेनैव धातुना प्रतिपाद्यते। अनोरभावेऽनुभवरुपार्थप्रतिपादकतां जहाति भूधातुः। अतएवानुमीयते यदनुभवरुपोऽर्थः निपातस्यैव, न तु धातोरिति। पक्षद्वयमपि तत्तद्ग्रन्थे विचारितं वर्त्तते। विशेषस्तु ततोऽवसेयः। अस्माकं मीमांसकानां प्रायः कस्मिन्नपि पक्षे नास्त्याग्रहः। द्योतकत्ववादिनां मते नञादिनिपातानां द्योतकत्वान्नञ्समभिव्याहृतविधिपदानामेव निवर्त्तनारुपेऽर्थे शक्तिरिति भावः। **आहुरिति**। पक्षेऽस्मिन्नस्वरसं बोधयति। तदेवोपपादयति—**तद्विधाविति**। निपातानां द्योतकत्वपक्षे तेषामनेक त्वादनेकशक्तिकतपनापत्तिरुपो दोषः अतएव नातीव युक्तमिति। यद्यप्ययं पक्षः नापन्तं समीचीनं तथापि किञ्चिद्युक्तमिव प्रतिभाति। स्वाभिप्रायं दर्शयति—**निपातानामिति**। एतेषां मते न निपातानां द्योतकत्वमिति। किन्तर्हीत्याह—**स्वातन्त्र्येणेति**। अन्यानपेक्षत्वमेव स्वातन्त्र्यम्। न निपातानामर्थबोधकत्वेऽन्यापेक्षा वर्त्तते। स्वार्थबोधसमर्थत्वात्तेषाम्। **इहापीति**। न हन्यादित्यत्राषोत्यर्थ। हन्यादिति विधिपदसमीपोच्चरितत्वेनापि नञ्त्र निवर्त्तनारुपोऽर्थो बोध्यत इति भावः। न तु निषेधार्थः धात्वर्थ इति भावः। मतान्तरप्रतिपादयिषयाह—**अन्ये त्विति**। नञ्विध्योः नञः विधेश्च। केवलयोः शुद्धयोः न धात्वादिसमभिव्याहृतयोः। **अभावप्रवर्त्तनाशक्त्योरिति**। अभावनिष्ठशक्यतानिरुपितशक्ततावान् नञ् तथा प्रवर्त्तनानिष्ठशक्यतानिरुपितशक्ततावान् विधिरिति। अतएव तत्तदर्थे

तत्तत्पदं शक्तमिति वदन्ति । मिलितयोः नञ्विधिसमुदितयोः **निवर्त्तनायां शक्तिरिति** । अर्थात् निवर्त्तनानिष्ठशक्यतानिरूपितशक्ततावत् नञ्विधिसमुदितं पदमिति भावः । आहुरित्यनेनास्वरसोऽस्मिन् पक्षे द्योत्यते । **तदतिक्लिष्टमिति** । मतमेतत् क्लेशावहमिति । अत्र च नञोऽभावे शक्तिरिति द्वितीयम् उभयोश्च निवर्त्तनायां शक्तिरिति तृतीयम् । एतच्छक्तित्रयकल्पनमेव क्लेशोऽत्र अस्मन्मते नञ्समभिव्याहृतविधिपदं निवर्त्तनायां शक्तमित्येक एव वाच्यवाचकभाव इति लाघवम् । स्वमतं दर्शयति—**तस्मादिति** । अन्यमतस्य क्लिष्टत्वात् । **प्रवर्त्तनामिति** । न हन्यादित्यादावपि विध्यंशेन प्रवर्त्तना प्रतिपाद्यते । विधिप्रतिपादितां तां प्रवर्त्तनामनूद्य तद्विरुद्धां प्रवर्त्तनाविरुद्धां निवर्त्तना विधिसमभिव्याहृतेन नञा प्रतिपाद्यत इति । यद्यप्यत्राप्यर्थद्वयं प्रतीयते तथापि नञ्-वाच्यता निवर्त्तनायामेव । प्रवर्त्तनाया अनुवाद्यत्वात् तत्र वाच्यत्वाभावाङ्गीकारात् । वाक्यार्थं दर्शयति—**यदिति** । ब्राह्मणविषयकं हननं यत्प्राप्तं तन्न कुर्यादिति । पुनश्च शङ्कते—**नन्विति** । विधिसमभिव्याहृतनञः विधिना सह सम्बन्धे सत्येव पूर्वोक्तार्थः सम्भवः । तदेव मास्तु । कीदृशोऽन्वय इति चेच्छृणु - नञः सम्बन्धो न विधिना, अपि तु ब्राह्मणपदेन भवेत् । ततश्चाब्राह्मणं हन्यादित्येव वाक्यार्थः सम्पत्स्यते नञः प्रतिपक्षबोधकस्वभावत्वात् । अपरं पक्षं दर्शयितुमाह—**हनने वेति** । अथवा नञः हननक्रिययान्वयः । ततश्च हननप्रतिपक्षं हननाभावं बोधयिष्यतीति । ब्राह्मणविषयकहननाभावं कुर्यादिति च वाक्यार्थः । **अभावस्य चेति** । कार्यत्वादिति । ध्वंसजन्यत्वेन कार्यत्वादित्यर्थः । तेन च कार्येण सङ्कल्पो लक्ष्यते । ततश्च हननाभावं सङ्कल्पयेदिति वाक्यार्थः । लक्षणायाः जघन्यावृत्तित्वात्तदङ्गीकारो न समुचित इत्याह—**प्रधानविध्यर्थबाधायेति** । प्रधानविध्यर्थाबाधायेत्यर्थः । एवं क्रियमाणे च विधेः प्रधानरूपो योऽर्थः प्रवर्त्तनारूपस्तस्य बाधो न भवति, तथा विधिनिषेधयोरैकरूप्यमपि भवति । कथमेकरूपतेति चेदुच्यते—अभावबोधकत्वाभावेनोभयत्र विधिरूपेणैव वाक्यार्थस्य सिद्धत्वात् । अत्र लक्षणायाः विशिष्टवाक्यार्थबोधकत्वेन फलमुखत्वान्न दोषाधायकत्वमिति भावः । समाधत्ते—**नेति** । **सर्वपदार्थानामिति** । सर्वे पदजन्योपस्थिताः पदार्थाः प्रधानभूतविध्यर्थेनैवान्वियन्ति । भृत्यानां राजसेवावत्सर्वे तथैवाभिलषन्त्यपि । तथैव नञर्थस्याभावस्यापि विध्यर्थप्रवर्त्तनया सहैवान्वयो युक्तियुक्त इति ।

**तथा प्रतीतेरिति** । विध्यर्थे नैव नञर्थस्याप्यन्वयप्रतीतेरिति ।

विध्यर्थेनान्वयाभावे दोषोऽप्यापद्येतेत्याह—**ब्राह्मणपदान्वये चेति** । ब्राह्मणपदेन सह नञः सम्बन्धे तस्यापि सुबन्तत्वेन 'नित्वं समासे' इति वार्त्तिकेन समासापत्तिस्स्यात् । भवतु नाम समासः, तेन किं स्यादित्याह—**समासापत्त्येति** । नञ् समासे सति 'नलोपो नञः' इति नलोपविधायकं सूत्रं प्रवर्त्स्यते । ततश्चानेन नकारस्य लोपः सम्पत्स्यते । स्यान्नाम नकारप्लोपः, तेन किं स्यादित्याह—**अब्राह्मणं हन्यादिति** विधिः सम्पद्येत । विधौ च ब्राह्मणेतरहनने कर्त्तव्यताज्ञानं भविष्यति—'अब्राह्मणः हन्तव्य' इति । यथा 'यष्टव्य' इत्यनेन यागानुष्ठानं कर्त्तव्यताज्ञायते तथैव 'हन्तव्य' इत्यनेनं हननकर्त्तव्यताया ज्ञानं सञ्जायेत । हननकर्त्तव्याज्ञाने का क्षतिरित्याह—**हननस्य हिंसात्वात्** हिंसाजनकत्वाद्वा पापजनकत्वात् । पापस्य च नरकप्रापकत्वात्, नरकस्य चानिष्टत्वान्न ब्राह्मणपदेन सह नञोऽन्वयः स्वीकार्य इति । 'नरकः मदिष्टः' इष्टसाधनो वेति न कस्यचिदपि कदाचिदपि ज्ञानं जायते । द्वितीयं पक्षं दूषयितुमाह—**हननान्वये इति** । पक्षेऽस्मिन्नुभयोर्लक्षणा स्वीकार्या स्यात् । स च पक्षः नोचित इति भावः । हन्धात्वर्थस्य हननस्य नञर्थेन सहान्वयाभावमुपपादयितुमाह—**पदश्रुत्येति** । एकेनैव हन्यादिति पदेन श्रुतत्वादिति भावः । **भावनोपसर्जनत्वादिति** । भावनां प्रति धात्वर्थस्योपसर्जनत्वादप्रधानत्वादिति । प्रकृतिप्रत्ययार्थयोः प्रत्यायार्थस्यैव प्राधान्यस्वीकारात् हन्यादित्यत्र हननं धात्वर्थः भावना चाख्यातार्थः ।

अत एकपदश्रुत्या हननस्य धात्वर्थस्याख्यातार्थेन सह भावनया सहैवान्वयः । **न वाक्यादिति** । विनियोजकेन तृतीयेन प्रमाणेन धात्वर्थीभूतस्य हननस्य न नञर्थेनाभावेन सहान्वयः । हननस्याप्रधानत्वात् । प्रधानेनान्वयाभिलाषिणो भवन्ति सर्वे । एवमेव लोके दृष्टत्वात् । **अतएव** अप्रधानत्वादेव । आख्यातार्थ भूतया आर्थीभावनया सह न नञर्थस्यान्वयः । तस्या आर्थीभावनायाः । **समानाभिधानश्रुत्येति** । समानेनैकेनैव प्रत्ययेनाभिहितत्वात्प्रतिपादितत्वात् । **प्रवर्त्तनोपसर्जनत्वादिति** । प्रवर्त्तनापरपर्यायशाब्दीभावनापेक्षयार्थीभावनाया उपसर्जनत्वादप्रधानत्वात् । अयं भावः—हन्यादिति पदघटकीभूते तिङ्प्रत्यये शक्ततावच्छेदकद्वयं तिष्ठति । लिङ्त्वमित्येकम् । आख्यातत्वमित्यपरम् । अत्र लिङ्लकारस्थाने एव तिङ्प्रत्ययस्य विहितत्वात् तत्र धर्मद्वयस्य स्थितिः । तत्र लिङर्थः शाब्दीभावनापरपर्यायभूता प्रवर्त्तना आख्यातार्थश्चार्थी भावनेति । अत आर्थीभावनायाः प्रवर्त्तनोपसर्जनत्वम् । सर्वापेक्षया विध्यर्थस्यैव प्राधान्यप्रतिपादनात्तत्रैवान्वयः

नञर्थस्य । तद्विपरातार्थप्रतिपादनस्वभावत्वान्नञः प्रवर्त्तनाविरोधनिवर्त्त नैवार्थं इति सिद्धम् । **सा चेति** । निवर्त्तना चेत्यर्थः । **निषेध्यस्य** निषेधविषयीभूतस्य । **अनिष्टहेतुत्वमिति** । अनिष्टफलनिष्ठजन्यतानिरुपितजनकतावत्त्वम् । **न घटत इति** । तदभावे निवर्त्तनैव न प्रसिद्ध्यतीति भावः । **हतीति** । इत्यस्मात्कारणादित्यर्थः । **तदिति** । अनिष्टहेतुत्वमित्यर्थः । **आक्षिप्यते** । अर्थापत्तिप्रमाणेन गम्यते । पुरुषार्थत्वर्थभेदेन निषेधस्य द्वैविध्यात् पुरुषार्थस्थले निषेधः पुरुषनिष्ठं प्रत्यवायं जनयति । क्रत्वर्थस्थले च क्रतुनिष्ठं वैगुण्यमुत्पादयतीत्यत आह—**तच्चेति** । अनिष्टमिष्टभिन्नमनमिलषित मित्यर्थः । 'चमसेनापः प्रणयेत् गोदोहनेन पशुकामस्य' इत्यत्रायां प्रणयनस्य दव्यार्जनस्य वा पुरुषार्थत्वं भवति । 'नानृतं वदेत्' इत्यादिकञ्च क्रत्वर्थम् । यागादिकर्मण्यनृतवदने यागगतं वैगुण्यमुत्पद्येत । यागे च वैगुण्ये तज्जन्यफलाभावः स्यादिति भावः । शङ्कतेऽत्र—**नन्विति** । एषां 'नानृतं वदेत्' हत्यादोनां वचनानां पुरुषार्थोः यो निषेधस्तेषामनुवादकत्वमेव स्वीक्रयताम् । कुत इत्याह—**पर्वणरिति** । पर्वकाले पुरुषार्थत्वेनैव व्रह्मचर्यस्यविधानदर्शनात् यथा—

दिवा जन्मदिने चैव न कुर्यान्मैथुनं व्रती ।
श्राद्धं दत्वा च भुक्त्वा च श्रेयोऽर्थी न च पर्वसु ॥ इति ।

शिवरहस्ये तथा 'दर्शादौ तु न भवत्येव, पर्वणां पर्युदस्तत्वात्' इति निर्णयसिन्धुतृतीयपूर्वार्द्धे दर्शनात । **क्रतूनामिति** । दर्शपूर्णमासप्रभृतोनां तस्मिस्तस्मिन् पर्वण्येण विधायात् । केषाञ्चितदतिरिक्तकालेऽपि विधान दर्शनात् प्रायेणेत्युक्तम् । **अन्टतोक्तिवर्जनस्येति** । मिथ्याभिभाषणनिषेधकस्य 'नानृतं वदेत्' इत्यादिवचनस्य पुरुषार्थतया विधानदर्शनात् । मिथ्याभिषाणे पुरुषप्रत्यवाय एव स्यादित्यर्थः । न कुत्रापि व्यभिचार इत्यत आह—**सदेति** 'नानृतं वदेत्' 'नस्तियमुपेयात्' इत्यादिनिषेधवाक्यानां क्रतुप्रकरणपठितत्वात् क्रतुनापि सम्वन्धोऽस्तीति प्रतीयते । अतः केवलपुरुषार्थतयैवैतेषां विधानमिति वक्तुं न शक्यत इत्यरुचेराह—पुनः श्रवणार्थवत्त्वाय वेति । वा अथवेत्यर्थः । क्रतुप्रकरणपठितत्वात् क्रतुयुक्तपुरुषधर्मत्वेनैव विधानस्य युक्तत्वात्, शुद्धपुरुषार्थतया न वा शुद्धक्रत्वर्थतया । उभाभ्यां क्रतुपुरुषाभ्यां वचनस्यास्य सम्वन्ध इति । अनेनैव प्रकारेण वचनस्यार्थवत्त्वमपि प्रतिपादितं भवति ।**अर्थवत्त्व** प्रयोजनवत्त्वमित्यर्थः। उदाहरति—**तद्यथेति** । क्रतुयुक्तपुरुषधर्मत्वादेव 'जञ्जभ्यमानोऽनुक्तयात्' इत्यनेन क्रतुयुक्तजञ्जभ्यमान-

पुरुषार्थत्वेन मन्त्रजयविधानमपि सङ्गच्छते। क्रतुसम्बन्धरहितः कश्चित्पुरुषः नजृम्भते चेतन्न न प्रायश्चित्तविधानम्। अतः क्रतुयुक्तपुरुषधर्मतयैव विधानमिति मन्तव्यम्। तन्मतं खण्डयति—**नैवमिति**। यदुक्तं पूर्वपक्षिणा तन्नेत्यर्थः। कुत इत्याह—**युक्तमिति**। 'जञ्जभ्यमानोऽनुब्रूयात्' इत्यादौ क्रतुयुक्तपुरुषनिष्ठजृम्भानित्तकप्रायश्चित्तस्वरुपजपादीनां विहितत्वात् क्रतुयुक्तपुरुषधर्मस्यैव विधानात्समुचितोऽयं पक्ष इति। उभयत्र विषयभेदं दर्शयति—**इहेति**। जञ्जभ्यमानस्थले पुरुषसंयोगश्रवणात् क्रतुयुक्तपुरुषधर्मत्वेन विधानमुचितं तथापि 'नागृतं वदेत्' इत्यादिस्थले पुरुषसंयोगाभावात्क्रत्वर्थतैव मिथ्याभिभाषणस्येति। कथमिति चेदुच्यते—मीमांसकमतेऽऽख्यातार्थः भावना, न वैयाकरणमत इव कर्त्तृकर्मसंख्याकाला आख्यातार्थभूताः। अस्मिन्मतेऽऽख्यातेन कर्त्तुरभिधानं न भवति, अपि त्वविनाभावेन कर्त्तुराक्षेप एवेति। आख्यातप्रतिपाद्यकर्त्तृश्रवणाभावात्प्रकरबलेन क्रत्वर्थत्वमेव मिथ्याभिभाषणस्य युक्तमिति भावः। **एतेनेति**। आख्यातप्रत्ययेन कर्त्तुरनभिधानेन। अनुवादपक्षः प्रत्युक्तः खण्डित इत्यर्थः। पुरुषस्याख्यातार्थत्वाभावेन पुरुषाभावात्कथं पुरुषार्थो निषेधः। अर्थात् निषेधस्य पुरुषार्थत्वाभावात् तस्यानुवादोऽपि न सम्भव इति। **ते चेति**। पूर्वोक्ताः निषेधाः प्राप्तिपूर्वका एव। पूर्वन्तावत् केनादि शास्त्रेण कस्यापि पदार्थस्य प्राप्तिर्भवति। ततश्च पुनरपरेण शास्त्रेण निषिध्यते। ते एवं निषेधाः प्राप्तिपूर्वकाः भवन्ति। **अन्यथेति**। यदि निषेधाः प्राप्तिपूर्वकाः न भवेयुस्तर्हि तेषां नित्यानुवादकत्वं स्यात्। नित्यानुवादकत्वं नाग त्रैकालिकसंसर्गविच्छिन्नप्राप्त्यभावविषयकप्रतिषेधकत्वम्। उदाहरति **यथेति**। **न पृथिव्यामिति**। अग्निचयनप्रकरणे पठितोऽयं मन्त्रः। अनेन पृथिव्यामन्तरिक्षे दिवि चाग्निचयनं निषिध्यते। तत्र पृथिव्यां प्राप्तमग्निचयनम्, तस्यानेन विषेधः। अतोऽयं निषेधः प्राप्तिपूर्वकः। अत आह—अत्राद्य इति।

आदौ भव आद्यः। पृथिव्यां चयनस्य प्राप्तत्वान्निषेधस्य सार्थक्यम् अन्तरिक्षे दिवि च चयनाप्राप्तत्वात्कथं निषेधः सार्थक इत्यत आह—**द्वाविति**। अन्त्यौ द्वौ न विषेधकौ, अपि तु नित्याप्राप्तस्य चयनस्यानुवादकाविति। या चयनाप्राप्तिस्तामेवानुवदति। इमेऽनुवादकौ न निषेधकाविति। उदाहरणान्तरं प्रस्तौति—**एवमाज्यभागावित्यादिना**। पशुयागेऽऽज्यभागसंज्ञकमङ्गभवति। तस्मिन्नेव प्रकरणे पठितोऽयं मन्त्रः 'न तौ पशौ करोति' इति। **पशौ** पशुयागे। **तौ** आज्यभागौ। न कुर्यादित्यर्थः।

अनेनाज्यभागकर्त्तव्यता निषिध्यते। **अत्रापीति।** 'न तौ पशौ करोति' इत्यत्र तु निषेध एव। 'न सौम्येऽध्वर' इत्यत्र नित्यानुवाद एव, न निषेधः। कुत इत्याह—**सोमयागस्येति।** यागस्यास्यापूर्वत्वेनाज्यभागस्य प्राप्तिरेव नास्तीत्यर्थः। प्राप्तिप्रकारं दर्शयति—**प्राप्तिश्चेति। तत्रेति।** पूर्वोक्तेषूदाहरणेषु रागप्राप्तिरेवास्ति, न शास्त्रप्राप्तिः। द्वितीयं पक्षं प्रस्तौति—**द्वितीयेति। अतिरात्रे इति।** अतिरात्रसंज्ञके भागे षोडशिपात्रविशेषस्य ग्रहणं 'अतिरात्रे षोडशिनं गृह्णाति' इत्यनेन प्रतिपाद्यते। इदञ्च वैदिकं वाक्यम् 'नातिरात्रे षोडशिनं गृह्णाति' इत्यनेन च वाक्येनातिरात्रसंज्ञके यागे षोडशिपात्रविशेषस्य ग्रहणं प्रतिषिध्यते। इदमपि च वैदिकमेवावाक्यम्। समबलेनैकेनशास्त्रेण प्राप्तस्य षोडशिप्राप्तग्रहणस्यापरेण शास्त्रेण न निषेधः सम्भवः। समबलत्वात्। तर्हि किं स्यादित्याह—**विकल्पः।** विरोधे सति दुर्बलः प्रबलेन बाध्यते तथापि विषमबले एव बाध्यबाधकभावः, न समबले। समबले 'तुल्यबलविरोधेविकल्पः' इति न्यायेन विकल्प एव भवति। विकल्पेन च पक्षग्राहकता सिद्ध्यति। पक्षग्रहणे च स्वगृह्यसूत्रादिकमेव प्रमाणम्, न तु स्वकपोलकल्पितः कश्चन पन्था आश्रयणीयः। अयं भावः—'अतिरात्रे षोडशिनं गृह्णाति' 'नातिरात्रे षोडशिनं गृह्णाति' इत्युभयोर्वाक्ययोर्वैदिकत्वसामान्यान्न कस्याप्यप्राणाण्यं वक्तुं शक्यते। बाध्यबाधकभावकल्पने च पक्षेऽप्रामाण्यं भवत्येव। अतो विकल्पाश्रयणम्। श्रुतिस्मृतिविरोधे चासमानबलत्वान्न विकल्पः, अपि तु स्मृतिनिष्ठबाध्यतानिरूपितबाधता वैदिके वाक्ये तिष्ठति। तत्र बाध्यबाधकभावो युक्तः। **निषेध्यस्येति।**

निषेधविषमताश्रयस्येत्यर्थः। **नानिष्टहेतुत्वमिति।** अननुष्ठानपक्षेऽपि अनिष्ठफलजन्यतानिरूपितजनकताश्रयत्वं न भवतीत्यर्थः। तर्हि अनुष्ठानस्य किं फलनित्याह—**किन्त्विति।** करणेऽनुष्ठाने सत्यभ्युदयो फलाधिक्यमित्यर्थः। **अन्यथा** अनुष्ठानाभावे। **तदभावोऽ**भ्युदयाभावः। नोभयोः पक्षयोः समानफलजनकत्वमिति। अतोऽनुष्ठानपक्षस्यैव ज्यायस्त्वमिति भावः। कल्प्यशास्त्रमिति। कल्प्ये कल्पनायुक्तेऽतिदेशशास्त्रेपीयमेव व्यवस्था मन्तव्या। कल्प्यशास्त्रं यथा—अग्निमुद्दिश्य 'अग्नये जुष्टं निर्वपामि' इति मन्त्रः पठितः। तत्रैव यदि सूर्योद्देश्यको निर्वापः कर्त्तुं वर्त्तते तर्हि अग्निपदं निःसार्य सूर्यपदञ्च प्रक्षिप्य चतुर्थ्यन्तत्वेन विपरिणम्य 'सूर्याय जुष्टं निर्वपामि' इत्यतिदेशयुक्तं वाक्यं कल्पितं भवति। इदमेव च कल्प्यशास्त्रनित्यभिधीयते। अत्रोदाहरति—**यथेति।** 'न तौ पशौ करोति'

**कल्प्यस्येति** । कल्प्यं यदतिदेशशास्त्रं तस्योपजीव्यत्वेनेति । **विरोध-सम्भवादिति** । उपजीव्यविरोधस्यान्याय्यत्वादिति भावः । **कल्पितस्येति** । यथा सर्गतः प्राप्तस्य शास्त्रस्य बाधो भवति तथैव कल्पितस्यापि शास्त्रस्य बाध इति वक्तुमशक्यत्वादिति भावः । **एतच्चेति** । यत्र पदार्थनिष्ठोद्देश्यतावच्छेदकावच्छिन्नाप्राप्तिस्तत्रैव तदर्थनिष्ठोद्देश्यतावच्छेदकावच्छिन्नो निषेधोऽपि भवति, न विषयभेदे । यत्रान्यनिष्ठोद्देश्यतावच्छेदकावच्छिन्ना प्राप्तिस्तत्रान्यनिष्ठोद्देश्यतावच्छेदकावच्छिन्नो निषेधस्तत्र न निषेध्य-निषेधकभावः, विषयभेदात् । तदेव स्पष्टयति—**यत्र त्वित्यादिना** । विकल्प-स्थले निषेधनिष्ठानिष्टकारणता निष्ठत्येवेत्याह—**विकल्प इति** । उदाहरति—**यथेति** । अत्र पुरुषार्थत्वेन होमादीनां प्राप्तिः क्रत्वर्थत्वेन च तेषां निषेध इति । अतएवात्र होमादीनां नित्यमेवानुष्ठानाभाव इति । अनुष्ठिते च यागादिनिष्ठवैगुण्यसम्पादकत्वमेव भवति ।

प्रसज्यप्रतिषेधनिरूपणानन्तरमवसरप्राप्तत्वात्पर्युदासं निरूपयति । प्रसज्यपर्यदासभेदेन निषेधस्य द्वैविध्यं सुप्रसिद्धम् तत्र पर्युदासमुपक्रमितुमाह—**यत्र त्विति** । यत्र नञः प्रसज्यप्रतिषेधस्वीकारे किञ्चिद्बाधकं भवति, तत्र नञ् न विधिना सहान्वेति । तत्त्वेन न नञः निषेधकत्वम्, अपि तु विधिभिन्नेन केनचित्पदार्थेनैवान्वमः । अतएव तत्र नञः पर्युदासकत्वं भवति । बाधकञ्च द्विविधम्—उपक्रमबलात् विकल्पप्रसक्त्या च । ब्रह्म-चारिणां कर्त्तव्यापरपर्यायं व्रतमुपक्रम्याह—

नेक्षेतोद्यन्तमादित्यं यन्तं कदाचन ।
नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम् ॥ इति ।

तत्र 'तस्य व्रतम् । इत्युपक्रमबलात्पर्युदासः । 'नानूयानेषु ये यजामहं करोति' इत्यत्र च विकल्पप्रसक्त्या पर्युदासाश्रयणमिति । को वा प्रतिषेधः ? को वा पर्युदास इति लक्षणाभ्यां स्पष्टयितुमाह—**यच्चाहुरिति** । प्राचीना इति शेषः । प्रतिषेधं लक्षयति—**प्रतिषेध इति** । यत्र नञ् क्रियया सहान्येति, तत्र प्रसज्य प्रतिषेध इति विज्ञेयः । अर्थात् स नञ् प्रतिषेधप्रतिपादक इति । पर्युदासं लक्ष-यति-**पर्युदासं इति** । यत्र नञ् उत्तरपदेन सहान्वेति, तत्र पर्युदासः स्वीकार्यः । अर्थात् स नञ् पयुदासार्थप्रतिपादक इति । **उत्तरपदमिति** । अत क्रिया-वाचकत्वेऽपि विधिभिन्नमेव पदं गृह्यते, न विधिपदम्, उदाहरति— **यथेति** । 'नानूयाजेषु' ये यजामहं करोतीति । अनूयाजेषु ये यजामहं निषिध्यतेऽनेन । तदेवस्पष्टयति—**अत्रेत्यादिना ग्रन्थेन** । 'यजतिषु ये यजाकहं करोति' इति

ये यजामहविधायकं सामान्यशास्त्रम् । सामान्यरूपेण यजतिपदघटिते-ष्वनुयाजेषु ये यजामहकर्त्तव्यता प्रतिपाद्यतेऽनेनशास्त्रेण । तदेव प्राप्तं ये यजामहं निषिध्यते नानूयाजेष्वित्यनेन । अत्र यदि ये यजामहपदेन नञ् सम्बध्नाति तर्हि विहितनिषिद्धत्वात् समबलत्वेन विकल्पापत्तिः स्यात् । **तद्भूयादिति ।** विकल्पापत्तिभयादित्यर्थ । अनूमाजपदेनैव नञः सम्बन्धः, न ये यजामहपदेनेति । **तस्येति** । नानूयाजेषु ये यजामहं करोन्तीति शास्त्रस्य । अस्यैव वाक्यस्यार्थं दर्शयति—**सामान्यशास्त्रस्यैकेत्यादिना ।** यजतिषु ये यजामहं करोतीति सामान्यशास्त्रम् । नानूयाजेषु ये यजामहं करोतीति विशेषशास्त्रम् । उभयोश्च वाक्ययोरेकवाक्यता भवति । ततश्च पुनः समुदितवाक्यार्थः सञ्जायते । पर्युदासस्य तद्भिततन्नसत्सदृशग्राहित्वादनुयाजभिन्नेष्वित्यर्थः सम्पद्यते । अर्थात् नानूयाजेषु अनुयाजभिन्नेषु ये यजामहं कुर्यादित्यर्थः । **तेनात्रेति** । तदभिन्नपदघटितवाक्यार्थस्वीकारेण नानूयाजेष्वित्यत्र विकल्पभयात् पर्युदास एव स्वीकार्यः, न प्रतिषेध इति । नानूयाजेषुये यजामहं करोतीतिवत् नातिरात्रे शोडशिनं गृह्णातीत्यत्रापि पर्युदासाश्रयणमेवाश्यकं स्यादित्याह—**न चैवमिति** । नात्र षोडशिग्रहणप्रसङ्गे पर्युदास इति । कुत इत्याह—**प्रापकस्यापीति** । तद्बोधकशास्त्रस्यापीत्यर्थः । अतिरात्रे षोडशिनं गृह्णातीति शास्त्रस्यापि विशेषशास्त्रत्वेन । नातिरात्रे षोडशिनं गृह्णातीति शास्त्रेण सह नैकवाक्यता सम्भव इति । एकवाक्यताभावे चातिरात्रभिन्नत्वरुपस्यार्थस्याप्यसम्भान्न विकतपापत्तिः । अतो विकल्पभयात् पर्युदासाश्रयणं नावश्यकमिति भावः 'न तौ पशौ करोती' त्यत्रैकवाक्यत्वेऽपि भवति पर्युदासाभाव इति दर्शयितुमुपक्रयते—**यद्यपीति** । 'न तौ पशौ करोति' त्यत्रातिदेशशास्त्रमेव सामान्यशास्त्रं वर्त्तते । तेन सहैकवाक्यतां सम्पाद्याज्यभागवर्जमित्यर्थोऽपि कर्त्तुं न शक्यते, परन्तु नायं समीचीनः पन्था इति दर्शयति—**तथापीत्यादिना** । दर्शपूर्णमासप्रकरणे यत्कालावच्छेदेनाज्यभागविधिस्तत्कालावच्छेदेनैव पर्युदासस्यापि प्रवृत्तिः । परन्तु पासुकधर्मातिदेशकाले पर्युदासस्याविद्यमानत्वान्नैकवाक्यता सम्भवः । अतो विकल्पाश्रायणेन न पर्युदासः, अपि तु प्रतिषेध एवेति । **प्रकृते त्विति** । तत्र पर्युदासाश्रयणमेवावश्यकमिति । **एव मिति** । पूर्वोक्तप्रकारेण विकतपभयादेवेत्यर्थः । 'विश्वजिता यजेत' इत्यनेन विहितविश्वजिद्यागप्रसङ्गे 'विश्वजिति सर्वस्वं ददाती' त्यनेन शास्त्रेण सर्वस्वं दक्षिणाविधानं दृश्यते । सर्वपदवाच्यपदार्थान्तर्गतमेवाश्वादयोऽपि सन्ति । अतोऽश्वादीनामपि दानप्राप्तिरिति । परन्तु 'न केसरिणो ददाति' हत्यनेन निषेधशास्त्रेण केसरिप्रभृतयः पदार्थाः

निषिध्यन्ते । अत्रापि यदि पर्युदासो न स्वीक्रियते तर्हि वाक्यद्वयेऽपि वैदिकत्वसामान्यात्समबलत्वेन वैकल्पिकत्वं प्रसज्येत । अतो विकल्पभयादेवपर्युदासः स्वीकार्यः । ततश्च पर्युदासस्य तद्भिन्नतत्सदृशग्राहित्वात् केसरिभिन्नकेसरिसदृशं सर्वस्वमित्यर्थः सम्पद्यते । अतएव केसररिणमतिरिच्चान्येषामेव पदार्थानां दानं सिद्ध्यति । सादृश्यञ्चात्र सर्वपदजन्यपदार्थत्वेन बोध्यम् पर्युदासबलादेव केसरिदाननिषेधोऽपि प्रसिद्ध्यति । तस्माद् विकल्पभयादत्र पर्युदास इति । **मिश्रा इति**। पार्थसारथिमिश्राणां मतमिदमिति ।

न्यायसुधाकृन्मतमुपस्थापयति —**राणके त्विति**। 'नोभयतोदत प्रतिगृह्णातीति । अनेनोभयतादतां प्रतिग्रहं निषेधति । ब्राह्मणः प्रतिगृह्णीयादित्यादिनियनेन ब्राह्मणकर्तृकः प्रतिगृहं इति प्रतीयते । तत्र न केषाञ्चिदपि पदार्थानां वर्जनं समवलोक्यते । अयञ्च प्रतिग्रहनिषेधः क्रत्वर्थः, न पुरुषार्थः, परन्तु क्रत्वर्थनिषेधसाहचर्येण स्नेहवशान्मित्रादिकमुद्दिश्य कृतस्याश्वदानस्यापि निषेधः सम्पत्स्यते । अयञ्च निषेधो न विधिप्राप्तः । अतः प्रथमस्य विधिप्राप्तत्वादपरस्य च विध्यप्राप्तत्वात्समबलत्वाभावेनोभयोर्विकल्प इत्यपि वक्तुं न शक्यते । तर्हि विकल्पाभावे किं स्यादित्याह—**सामान्यविधेरिति**। **अयं भावः**—यत्र सामान्यविशेषशास्त्रयोर्न निषेध्यनिषेकभावः, न वा वैकल्पिकी व्यवस्था सम्भवति तत्र सङ्कोच्यसङ्कोचकभावो भवति सम्बन्धः सामान्यविशेषशास्त्रयोः । अतएव सामान्यपरिग्रहविधौ विशेषनिषेधविधिना सङ्कोचो भवति । सङ्कोचश्च कथमिति जिज्ञासायामुच्यते— सामान्यशास्त्रीयोद्देशतावच्छेदकावच्छिन्ने विशेषशास्त्रीयोद्देशतावच्छेदकावच्छिन्नातिरिक्तत्वेन सङ्कोचः अतोऽत्र ब्राह्मणोद्देश्यकप्रतिग्रहविधायकसामान्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने उभयदत्तपशुविशेषविषयकनिषेधशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिनिक्तत्वेन सङ्कोचः । ततश्योभयदतपशुविशेषभिन्नमेव वस्तुविशेषं प्रतिग्रहेण भावयेदिति वाक्यार्थः । एवं नास्त्यत्र पर्युदासावसर इति भट्टसोमेश्वरः । मतमिदं वार्त्तिककारसम्मतमिति प्रतिपादयितुमाह—**वार्त्तिकेऽपीति**। **एवमिति**। सामान्यविशेषविधिविषये सङ्कोच्यसङ्कोचकभाव इत्यर्थः । सामान्यविधौ विशेषविधिना तदतिरिक्तत्वेन सङ्कोचः क्रियते । एतत्सर्वं वार्त्तिकस्य तृतीयाध्यायस्य चतुर्थेपादे दशमैकादशेऽधिकरणे निरुपितं वर्त्तते । तत एवावसेयः । **एवमिति**। पूर्वोक्तप्रकारेणेत्यर्थः । **अनारभ्याधीतेनेति**। न आरभ्याधीतमितित्यनारभ्याधीतम् ।

यत्किञ्चित्प्रकरणमारभ्याधीतानि वाक्यानि आरभ्याधीतानि भवन्ति। यानि च वाक्यानि न कस्मिंश्चित्प्रकरणे पठितानि भवन्ति तान्यनारभ्यातानि सन्ति । यथा—'अथ दर्शपूर्णमासप्रकरणम्' इत्युक्त्वा यानि वाक्यानि पठ्यन्ते तान्यारभ्याधीतानि। तद्भिन्नान्यनारभ्यधीतानीति । **यत्प्रवर्ग्य-मिति**। नेदं वाक्यं कस्मिंश्चित्प्रकरणे पठितम्। अतएवानारभ्याधीतम्। अनेन च प्रवर्ग्यं विधीयते। **पुरस्तादिति**। तदनन्तरपठितमिदं वाक्यम्। अनेन चोपसत्पूर्वकालता प्रवर्ग्यस्य प्रतिपाद्यते। **उपसदाञ्चेति**।

ज्योतिष्टोमनामके यागे विधानमुपसदमिति । अनारभ्याधीतानां कुत्र सन्निवेश इत्याह—**अनारभ्याधीतानामिति** । अनारभ्याधीतानि प्रकृतावेव सन्निविशन्ति। प्रकृतिभूतो यागः क इत्याह—**ज्योतिष्टोमाङ्ग-भूतमिति**। ज्योतिष्टोमस्य प्रकृतिभूतत्वात्। तदङ्गत्वमधिकृत्य 'न प्रथमयज्ञ' इति वाक्यं पठ्यते। पूर्वोक्तं द्रढयितुमाह—**कौषीतकिब्राह्मणे त्विति**। तत्र तु ज्योतिष्टोमप्रकरणे एव प्रवर्ग्याविधानानन्तरं 'न प्रथमयज्ञ' इति वाक्यं दृश्यते। पूर्वोक्तप्रसङ्गे तु 'अनारभ्याधीतानां प्रकृतौ सन्निवेश' इति न्यायेन ज्योतिष्टोमाङ्गत्वं प्रसाधितम्। अत्र तु तत्प्रकरणे एव साक्षात्पठितत्वात् तदङ्गत्वं स्पष्टमेवेति विशेषः। प्रथमयज्ञशब्देन किं गृह्यत इत्याह—**अत्रेति**। अग्निष्टोमसंस्थाकस्य ज्योतिष्टोमस्य प्रथमप्रयोगविहितत्वात्प्राथम्यं तस्योचितमेवेति। कुत इति चेदाह—**प्रथमशब्दस्येति**। यस्मात्पूर्वं न प्रवृत्तं किञ्चिदपि कर्म, तदनन्तरञ्च प्रवर्त्तते कर्मान्यत्, सएवप्रथमः। तथा च 'प्रथमस्तु भवेदादौ प्रधानेऽपि च वाच्यवत्' इति मेदिनी 'अमरकोशेऽपि' आदौ प्रधाने प्रथमः इति। यस्मात्पूर्वं नास्ति परञ्चास्ति, स प्रथम इति। मुख्यया वृत्त्या प्रयोगगतं प्राथम्यमत्र विवक्षितमिति साधनाय शङ्कते—**—यद्यपीति**। 'एष वा व प्रथमो यज्ञो यज्ञानां यज्जयोतिष्टोमः' इति ज्योतिष्टोमगतप्राथम्यविधायकमिदं वाक्यम्। यजमानः पूर्वं यज्ञमिम-मनुतिष्ठति । तदनन्तरं दीक्षा तदनन्तरञ्च सत्राणामनुष्ठानमिति । अतोऽग्निष्टोमसंस्थज्योतिष्टोमस्य कर्मण एवात्र ग्रहणाम्। न प्रथमप्रयोग-स्येति प्रतिभाति। परन्तु तन्नेति समाधत्ते—**तथापीत्यादिना**। यद्यपि कर्मणः प्राथम्यमिति प्रतीयते तथापि तत्रापि प्रथमप्रयोगगतप्राथम्यगुणयोगादेव तत्र कर्मणि प्रथमप्रवृत्तिरिति। अतः मुख्यया वृत्त्या प्रयोगगतप्राथम्यमेव ग्रहीतव्यमिति । एतस्य च किं फलमित्याह—**तस्मादिति** । 'प्रथमं यजमानोऽतिरात्रेण यजेत' इति प्रथमानुष्ठानविधायकमिदं वचनम्। प्रयोगगतप्राथम्यग्रहणेनातिरात्र संस्थाकज्योतिष्टोमप्रयोगगतप्राथम्यस्यापि

ग्रहणं भवति प्रथमयज्ञशब्देन । अन्यथा अग्निष्टोमसंस्थाकज्योतिष्टोमस्यैव प्रथमयज्ञशब्देन ग्रहणं स्यात् । अतिरात्रसंस्थाकज्योतिष्टोमस्य च ग्रहणं न सञ्जायेत । तस्मात्प्रयोगगतप्राथम्यस्वीकारोऽऽवश्यकः । फलमस्य प्रतिपादयितुमाह—**तदत्रेति** । तद्वदत्रापीत्यर्थः । 'यत्प्रवर्ग्यं प्रवृञ्जति' इत्युत्पत्तिवाक्यम् । कर्मस्वरूपमात्रस्य वोधकत्वात् । अनेन च वाक्येन सर्वेषु प्रयोगेषु प्रवर्ग्यः प्राप्नोतीति प्रतीयते । तस्यैव प्रवर्ग्यस्य 'न प्रथम प्रयोगे प्रवृञ्जयात्' इत्यनेन वाक्येन प्रथमप्रयोगद्वये निषिध्यते । उत्पत्तिवाक्येन प्राप्ते प्रवर्ग्यसामान्ये निषेधकवाक्येन प्रथमप्रयोगद्वयातिरिक्तत्वेन सङ्कोच क्रियते । तस्मात्प्रथमप्रयोगद्वयातिरिक्ते प्रयोगे प्रवर्ग्यस्य विधानमिति । एवं तर्ह्युत्पत्तिवाक्यस्य कुत्र प्रवृत्तिरित्याह—**तेनेति** । द्वितीयादि प्रयोगे उत्पत्तिवाक्यस्य चारितार्थ्यं वोध्यम् । पूर्वोक्तप्रकारेण प्रवर्ग्यस्य प्रतिषेध, सञ्जातः प्रथमप्रयोगे, तर्हि 'अग्निष्टोमे प्रवृणक्ति' इति वाक्यस्य का गतिरित्याह—**एवमिति** । अग्निष्टोमस्यापि प्रथमप्रयोगत्वात्तत्र वाक्येनानेन प्रतिषेधस्य प्रतिप्रसवः क्रियते । कुतः प्रतिप्रसव इत्याह—**तस्येति** । न अन्योऽर्थः प्रयोजनं यस्य सोऽनन्यार्थः । वाक्यस्यास्य प्रवर्ग्यविधानाति-रिक्तमन्यत्प्रयोजनं नास्ति । अतस्तस्य वाक्यस्य चारितार्थ्यसम्पादनाय प्रवर्ग्यविधायकत्वमावश्यकमिति भावः । प्रतिप्रसवस्य फलमाह—**तेनेति** । प्रतिप्रसवेनेत्यर्थः । **तत्राग्निष्टोमे** । प्रवर्ग्यस्य विकल्पेनानुष्ठानमग्निष्टोमे इति ध्येयम् । विधिःनिषेधकयोरुभयोरपि वाक्ययोर्वैदिकत्वसामान्यात् बाध्यबाधकभावो न युक्तः । समबलत्वात् । विषमबले एव बाध्यबाधकभावो दृश्यते लोकेऽपि । दुर्बल एव प्रबलेन बाध्यते, न समबलः । अतएव वदति गौतमः—'तुल्यबलविरोधेविकल्पः' इति । तस्मादग्निष्टोमे प्रवर्ग्यंविकल्पः वोध्यः । श्रोत्रियकर्त्तृकाग्निष्टोमप्रयोगे एव प्रतिप्रसववाक्यं प्रवर्त्तते, नान्य-कर्त्तृकप्रयोगे इति दर्शयति—**कामं त्वित्यादिना** । तत्रैव प्रमाणं दर्शयति—**योऽनूचान** इति । श्रोत्रियकर्त्तृकप्रयोगे एवोपसंहरति वाक्येनानेन । **तत्रैवेति** । श्रोत्रियकर्त्तृकाग्निष्टोमप्रयोगे एव । **स इति** । विकल्प इत्यर्थः । अन्य-कर्त्तृकप्रयोगे किं स्यादित्याह—**अन्यकर्त्तृकेत्यादि** । श्रोत्रियातिरिक्त-यजमानकर्त्तृकप्रथमप्रयोगे प्रवर्ग्यप्रतिषेध एव मन्तव्य इति । वार्तिककारस्य मतमिदंमिति प्रदर्शयतुमाह—**वार्त्तिक इति** । पार्थसारथिमिश्रमतमुपस्थाप-यितुमाह—**मिश्रास्त्विति** । 'योऽनूचानः' इत्यादिनानुपसंहारवाचिना वाक्येनानुपसंहारं स्वीकृत्यनचानकर्त्तृकानुष्ठाने एवायं व्यवस्थित इति व्यवस्थितविकल्पः । न सर्वेषां विकल्पलाभः । तदर्थं स्पष्टयति—**अनूचान-प्रयोग** इति । अनूचानकर्त्तृकप्रथमप्रयोगे ।

नित्यमेव प्रवर्ग्यानुष्ठानम्। तदन्ययजमानकर्त्तृकप्रथमप्रयोगेऽनुष्ठानाभाव इत्यर्थः। **अतिरात्रप्रथमप्रयोगे त्विति**। अत्र प्रतिप्रसवाभावान्निषेध एव स्यात्तर्हि नित्यमेव तत्रानुष्ठानाभावः। मिश्रमतमुपसंहरति**तस्मादिति**। 'न प्रथमयज्ञ' इति वाक्यं निषेधकमेव, न विकल्पार्थमिति। वार्त्तिकानुगुणमेवेदं मतमिदमिति वार्त्तिकं स्मरति—**वार्त्तिकेऽप्येवमिति**। निषेधकत्वमेवास्य वाक्यस्येति वार्त्तिकेऽपि प्रसाधितमिति भावः। न्यायसुधाकृन्मतमुपस्थापयितुमाह—**राणके त्विति। निषेधे** निषेधस्थले। विहितप्रतिषिद्धत्वादेवेति। पूर्वन्तावत्प्रवर्ग्यस्य विधानं कृतम्। तदनन्तरञ्च प्रवर्ग्यनिषेधकं वाक्यमायाति। अतो विहितस्य प्रतिषेधाद् विकल्पः प्रसिद्ध्यति, उभयोस्समानबलत्वात्। एवन्तर्हि किं स्यादित्याह—**प्रतिप्रसवेत्यादिना**। विकल्पप्रसाधकस्य प्रतिप्रसववाक्यस्यानर्थक्यं स्यात्, तत्कार्यस्यान्येनोपायेन सिद्धत्वात्। आनर्थक्यप्रसङ्गाच्च ज्ञापयति—**अतिरात्रप्रथमप्रयोगेऽपि विकल्प इति**। तस्मादतिरात्रप्रथमप्रयोगऽपि विकल्पः स्यादेवेति। अयञ्च नञ् पर्युदासः प्रसज्यप्रतिषेधो वेत्याह—**पर्युदास एवायमिति**। ततश्च वाक्यार्थं दर्शयति—'प्रथमप्रयोगवर्जं प्रवृणक्ति' इत्येव वाक्यार्थः। न तु 'प्रथमप्रयोगे न प्रवृणक्ति' इति। तत्फलं दर्शयति—**पर्युदासस्तस्य चेति**। पर्युदासतस्य च प्रवर्ग्यस्याग्निष्टोमप्रथमप्रयोगे प्रतिप्रसवाद्विकल्पेनानुष्ठानम्। अतिरात्रप्रथमप्रयोगे च पर्युदासबलादनुष्ठानाभाव इति। राणकापरपर्यायस्य न्यायसुधाकारस्येदं मतमिति। **विस्तरस्त्विति**। आकरे इति। न्यायसुधाप्रभृतिष्वित्यर्थः। **एवमिति**। प्रवर्ग्यविकल्प इवेत्यर्थः। **विकल्पभयादिति**। यत्र निषेधवाक्यवशेन विकल्पप्रसक्तिस्तत्र विकल्पपक्षं परित्यज्य पर्युदासस्वीकार इत्यर्थः। यथा प्रवर्ग्य स्थले। एवमेव षोडशिग्रहणस्थलेऽपीत्यर्थः। **नञः** निषेधस्य। पर्युदासत्वं पर्युदासप्रतिपादकत्वमिति भावः। उपक्रमविरोधादपि पर्युदासः स्वीक्रियते। इति पक्षमुपस्थापयति—**क्वचित्त्विति**। यत्रोपक्रमविरोधः सञ्जायते, तत्र धात्वर्थेन सह नञोऽन्वयः। ततश्च शाब्दबोध इति। उपक्रमविरोधमुदाहरति—तस्य व्रतमिति। मनुस्मृतौ चतुर्थेऽध्यायेऽयं प्रसङ्गो वर्त्तते। तत्राध्याये सर्वप्रथमंमाजीकविकामुपवार्जयति। कया आजीविकया वर्त्तितव्यमिति। तदनन्तरं स्नातकव्रतं प्रतिपादयति। यथोक्तम्—

> अतोऽन्यतमया वृत्त्या जीवंस्तु स्नातको द्विजः।
> स्वर्गायुष्यप्रशस्यानि व्रतानीमानि धारयेत् ॥ इति।

अर्थात् स्नातक इमानि व्रतानि धारयेदिति। तदेव स्मारयति—**तस्य व्रतमित्यादिना**। तस्य स्नातकस्य। व्रतमनुष्ठेयमित्यर्थः। ततश्च

वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः।
तद्धि कुर्वन् यथाशक्ति प्राप्नोति परमां गतिम् ॥

इत्यारभ्य पञ्चमहायज्ञादिप्रतिपादनपूर्वकमन्येषामप्यनुष्ठेयकर्मणां विधिमुखेनप्रतिपादनं कृतम्। ततश्च

नानिष्ट्वा नवसस्येष्ट्या पशुना चाग्निमान्द्विजः।
नवान्नमद्यान्मांसं वा दीर्घमायुर्जिजीविषुः। इत्यादि—

भिःश्लोकैः निषेधमुखेन कर्त्तव्यानुशासनं करोति। तत्रैव प्रसङ्गेऽभिमितम्—

नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन।
नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम् ॥ इति।

**श्रुतमिति**। मनुस्मृतियतुर्थाध्याय इति शेषः। अत्र च पूर्वं स्नातकस्यानुष्ठेयमुपक्रम्योक्तत्वादनुष्ठेयप्रतीतिरेव भवति। यदि तत्र प्रयुक्तस्य नञः निषेधरुप एवार्थः स्वीक्रियेत तर्हि निषेधस्य प्रवर्त्तनाविरोधिनिवर्त्तनाप्रतिपादकत्वेनोपक्रमेण सह विरोधः प्रसज्येत। कुतः निवर्त्तनाप्रतिपादकत्वमितिवदन्तं प्रति वक्तव्यम्—**नञएष स्वभावो** यत् येन सह सम्बध्यते तद्विरुद्धार्थप्रतिपादनं करोति। स्वभावश्च दुष्परिहरः। अतो निवर्त्तनाप्रतिपादनं करिष्यत्येव। अत उपक्रमविरोधो वज्रलेपायते। तदर्थं किं कर्त्तव्यमित्याह—**धात्वर्थान्वयेनेति**। धातुश्चात्र 'ईक्ष दर्शने' वर्त्तते। तदर्थश्च ईक्षणम्। दर्शनमित्यर्थः। तेन सह नञः सम्बन्धे सति तदर्थविरोधिरुपोऽर्थः स्यात्। अतः ईक्षणविरोधिरुपईक्षणमर्थः। अनेन च प्रकारेण 'नेक्षेत' इति पदस्यानीक्षणमर्थः समपद्यते। अनीक्षणञ्च पर्युदासे सत्येन सम्पद्येत। अतोऽयं नञ् पर्युदासार्थक इति। अनीक्षणस्याभावरुपत्वेन कथमनुष्ठेयत्वमित्याह—**अभावस्यापीति**। अभावेऽप्यनुष्ठेयत्वं तिष्ठत्येवेति। नन्वीक्षधातोः दर्शनार्थकत्वे कथं तद्विपरीतार्थबोधकत्वमित्याह—**नञीज्ञतिभ्यामिति**। नञ्सहकृतेक्षधातोरित्यर्थः। **लक्ष्यत इति**। लक्षणया बोध्यत इत्यर्थः।

न त्वीक्षधातुनिष्ठवाचकतानिरुपितवाच्यतावच्छेदकताश्रयः स इति। अर्थात् नञ्युक्तेक्षधातुः नञर्थाभावविशिष्टसङ्कल्पोऽनेन प्रतिपाद्यते। लक्षणयेत्यर्थः। नन्वत्रैवैताइशो विलक्षणः शाब्दबोधो जायतेऽन्यत्रापीत्यत आह—**सर्वत्रेति**। नञ्युक्ते स्थले सर्वत्रे प्रवृत्तिनिवृत्त्यव्यभिचरितमानससङ्कल्पः सञ्जायत एवेति भावः। ततश्च वाक्यार्थः कीदृश इत्याह—

**तेनेति** । पर्युदासस्वीकारेणेत्यर्थः । उद्यदादित्योद्देश्यकनीक्षणसङ्कल्पेन भावयेदिति वाक्यार्थबोधः । **वाक्यार्थ** इति । वाक्यार्थबोध इत्यर्थः । शाब्द-बोधइति यावत् । ननु 'नेक्षेतोद्यन्तमादित्यम्' इत्यादिनानीक्षणसङ्कल्प-रूपार्थस्य प्रतिपादनन्तु कृतम्, परं फलं न श्रूयते तस्य किमपि, तर्हि 'न कुर्यान्निष्फलं कर्म' इति न्यायेन न कोऽपि प्रवर्त्तेतेत्याह—**एतावतेति** । एनसा पापेनेत्यर्थः । अयुक्तो भवति मुक्तो वा भवतीति । **वाक्यशेषादिति** । वाक्यं विधिवाक्यम् तस्य शेषोऽङ्गभूतं वाक्यमर्थवादवाक्यम् । तस्मा-दित्यर्थः । दृष्टपदमेव व्याख्यातं पापक्षय इति । पापक्षयं सर्वेऽभिलषन्ति, नास्त्यत्र विवादः केषामपि । पर्युदासाश्रयणसमर्थनाय चतुर्वर्गचिन्तामणि-ग्रन्थं हेमाद्रिविरचितं प्रमाणत्वेनोपन्यस्यति—**एवमिति** ।

एकादश्यां न भुञ्जीत पक्षयोरुभयोऽपि ।
वनस्थयतिधर्मोऽयं शुक्लामेव सदा गृही ॥ इति

स्मृतिवचनम् । अत्र हेमाद्रिग्रन्थस्य स्वारस्यं पर्युदासे एव । किमर्थं पर्युदास इत्याह—**धर्मशब्देनेति** । धर्मशब्दश्चात्रानुष्ठेयवचनः । तेनैव चोपसंहृतम् । अतस्तेन सह विरोधो मा भवेदित्यर्थं पर्युदासाश्रयणमावश्यकमिति भावः । ततश्च वाक्यार्थः कीदृश इत्याह—**अयोजनसङ्कल्प इति** । अर्थात् अयोजन-सङ्कल्पेन भावयेदिति । **हेमाद्राविति** । एतद्ग्रन्थकारविनिर्मितचतुर्वर्ग-चिन्तामणाविति । **एवमिति** । पूर्युदासाश्रयणमिति । दीक्षितान्नभोजन-निषेधकं वाक्यं दर्शयति—**दीक्षितस्यान्नमिति** । वाक्येनानेन दीक्षितान्नभोजनं निषेधति । पुनश्चापरेणवाक्येन विदधाति 'दीक्षितस्यान्नमश्नीयात्' इत्यनेन वाक्येन । परन्तु तत्रावधिं दर्शयति—**'संस्थितेऽग्नीषोमीये'** इति । अर्थात् अग्निषोमीयपशुसम्बन्धिकार्ये सम्पन्ने दीक्षितोऽपि भोज्यान्न इति । **त्रय्या वेदे** । अत एवं प्रतीयते, अग्नीषोमीयपशोरनुष्ठाने सम्पन्ने सति भोजने नास्ति दोषः । एवमेवाथर्ववेदेऽपि दृश्यत इत्याह—**क्रीतराजक इति** । क्रीतः राजा येन स इत्यर्थः । सोम एवात्र राजपदवाच्यतावच्छेदकतां लभते । अर्थात् सोमक्रयणानन्तरं यजमानः भोज्यान्न इत्यर्थः । **अथर्ववेदे इति** । अथर्ववेदीयमिदं वचनमिति बोधनाय ।

पर्युदासाश्रयणे हेतुतां दर्शयितुमाह—**न चेत्यादिः** । एकस्यैव दीक्षितान्नभोजनस्यावधिद्वयमुपपादितम् । तेन विरोधाभावान्न विकल्प-प्रसक्तिः । एवमुभयोस्समानत्वेन गुरुलघुभावोऽपि न सम्भवः । अतोऽपि

विकल्पाभावः। तर्हि कथं पर्युदास इत्याह—**अवधिद्वयान्यथानुपपत्त्येति।** एकस्यैव भोजनस्यावधिद्वयानुपपत्तिरेव पर्युदासाश्रयणे हेतुरिति। **तस्येति।** भोजनस्य वेदप्रतिपाद्यावधिद्वयमिति। निर्गलितवाक्यार्थं दर्शयति—**अग्नीषोमीयावधिरिति।** इत्येकः प्रकार इत्यर्थः। अपर प्रकारमुपस्थापयति—**द्वितीयस्त्विति।** तत्रत्यं मन्निषेध्यं तदेवावधिरिति। ततश्च वाक्यार्थः कीदृशं इत्याह—**सोमक्रयावधि इति।** **वार्त्तिके इति।** वार्त्तिककारीयमिदं मतमिति। तृतीयं पक्षमुपस्थापयितुमाह—**आपदनापदिति।** पूर्वन्तावत् भोजनस्यावधिद्वयं प्रतिपादितम्। तत्र प्रथमः अनायद्विषको निषेधः। दीक्षितस्यान्नं नैवाश्नीयादिति। परन्तु यदि मध्ये काचिद्विपत्तिः सम्भाव्येत तर्हि सोमक्रयणानन्तरं दीक्षितस्यान्नं भोक्तव्यमिति। एदर्थमेवावधिद्वयमुपपादितम्। **पक्षान्तरमिति।** तृतीयोऽयं पक्ष इत्यर्थः। **अनाहृतमिति।** नायं पक्षः स्वीकारमर्हः, अपि तु परित्याज्य एवेत्यर्थः। कथमिति चेत्, वैदिकत्यवस्थाभङ्गप्रसङ्गात्। स्वेच्छया कश्चित्स्वीकुर्यात्यदहमापग्रस्तोऽस्मि। स यदि भुञ्जीत तर्हि वैगुण्यमापद्येतानुष्ठाने। तस्मादनादरणीयोऽयं पक्ष इति। भाष्यकारमतमत्रोपस्थापयितुमाह—**भाष्ये त्विति।** भाष्यकारीया तावद्भिन्नैव व्यवस्था दृश्यते। तथाहि—'क्रीतराजको भोज्यान्नः' इति न वैदिकं वचनमपि तु स्मार्त्तं वचन वर्त्तते। 'संस्थितेऽग्नीषोमीये दीक्षितान्मश्नीयात्' इति च वचनं वैदिकम्। श्रुतिस्मृत्योर्विरोधे च श्रुतेः प्राबल्यस्याङ्गीकारात् कीतराजकवचनस्याप्रामाण्यं स्वाभाविकमेव। 'दीक्षितो न ददाति, न जुहोति' इत्यादिवचनस्यावधिनिर्धारयितुमाह—**दीक्षितो नेत्यादि।** दीक्षासमाप्त्यनन्तरमवभृथस्नानं यावदयं निषेधः प्रवर्त्तते। स्नानान्तरञ्च निवर्त्तते इति भावः। **अवधिनिर्धारणफलमाह—तेनेति।** अयं भावः—यावद्दिनपर्यन्तमुद्देश्यीकृत्य सङ्कल्पितस्तत्र यदि दैवमानुषादिप्रबलविघ्नवलादवभृथस्नाने उत्कर्षे जाते दीक्षाया अप्यनुवृत्तिर्भवति। तस्मात्तत्कालपर्यन्तं दानादिकार्यं न कर्त्तव्यमिति। अग्निहोत्रहोमनिषेधस्य का गतिरित्याह—**अग्निहोत्रहोमनिषेधस्येति।**

अवभृथस्नानान्तरमुदवसानीयेष्टिनुष्ठीयते। तत्प्रामाण्याय वचनमुपस्थापयति—**एतयेति।** दीक्षितान्नभोजननिषेधः कदा प्रवर्त्तते, इति प्रतिपादयितुमाह—**एवमिति।** अयमाशयः—दीक्षितान्न भोजननिषेधः नैमित्तिकः, दीक्षानिमित्तत्वात्तस्य। दीक्षाकार्यसम्पादनार्थमनुष्ठीयमानदीक्षणीयेष्टचनन्तरमेव। प्रवर्त्तते, न तत्पूर्वम्। **दीणणीया दीक्षार्था** भवतीत्यत्रप्रमाणमुपस्थापयितुमाह—**आग्नावैष्णवमित्यादिः।** अत्र क्रिया-

पदद्वयं वर्त्तते—निर्वयेत् दीक्षिष्यमाण इति च। दीक्षिष्यमाण इत्यत्र श्रूयते लृट्। योऽयं दीक्षिष्यमाणो यजमान स अग्निविष्णूदेवताकस्यैकादशकपालपनिमितस्य हविषो निर्वापं कुर्यादिति। यो दीक्षितो भविष्यति, स एवनिर्वपेत्। एकक्रियासम्पादनायापरा क्रिया वर्त्तते। अतएव क्रियार्थायां क्रियायामुपपदे 'तौ सत्' 'लृटः सद्वा' इति सूत्रेण शानचप्रत्ययोऽपि सङ्गच्छते। अनेन प्रत्ययेनैव च ज्ञायते, दीक्षणीया दीक्षार्था वर्त्तत इति भावः। ननु यथा दीक्षणीयेष्टयनन्तरं दीक्षा प्रवर्त्तते। तदनन्तरञ्च दीक्षितान्नभोजननिषेधः प्रवर्त्तते तथैव 'दण्डेन दीक्षयति' इत्यादिवाक्यविहितदीक्षानिमित्तकदण्डदानमिति प्रतीयते। अतो दण्डदानानन्तरमेव भोजनविषयकनिषेधप्रवृत्तिः कुतो न भवतीत्याह—**दण्डेन दीक्षयतीति**। अयं भावः—'दण्डेन दीक्षयति इत्यनेन विहितं दण्डदानं न दीक्षासम्पादनार्थं प्रभवति, अपि तु 'अयं दीक्षितः' इति दीक्षाभिव्यक्तिसाधकमिति। अतएव दण्डदानोत्तरं भोजननिषेधप्रवृत्तिर्नभवति, अपि तु दीक्षणीयेष्टयनन्तरमिति। **तद्दानोत्तरं** दण्डदानोत्तरम्। **निषेधप्रवृत्तिः**, भोजननिषेधप्रवृत्तिरिति। **एवमिति**। यथा दण्डदानानन्तरं भोजननिषेधो न प्रवर्त्तते, अपि तु दीक्षणीष्टयनन्तरं तथैव 'क्लिन्दं दावेग्नी' इत्यादिन वाक्येन विहितो निषेधोऽऽधानानन्तरमेव प्रवर्त्तते न तत्पूर्वमिति। मेघेवर्षति सति अग्निचिद् न धावेतदिति निषेधं स्पष्टयितुमाह—**एवमिति**। अयञ्च धावननिषेधः सोमयागसम्पाननानन्तरमेव प्रवर्त्तते, न तत्पूर्वमिति। अग्निचिद् पुरुषः क इत्याह—**अग्नियिदिति**। यः पुरुषश्चयनेनाग्निं संस्करीति सोऽग्निचिन्नाम्ना व्यवह्रियते। सोमप्रयोगपरिसमाप्तिं यावदग्निधारणमेवाग्निसंस्कार इति बोधयितुमाह—**चयनेनेति** ततः पश्चादेवाग्निचित्त्वप्राप्तिरिति भावः।

वैदिकवाक्यनिरुपणानन्तरं स्मार्त्तवाक्यमुदाहर्त्तुमुपक्रयते—**एवमिति**। 'कलञ्जं भक्षयेत्' इति निषेधोऽमुपनयनसंस्कारसम्पत्त्यनन्तरमेव प्रवर्त्तते, न तत्पूर्वमपि। गौतमवचतमत्र प्रमाणयति—**प्रागुपनयनादिति**। **स्मृतेरिति**। गौतमस्मृतेरित्यर्थः। स्मरणञ्चात्र सूत्ररूपेणैव ग्राह्यम्। तत्रैवोपलभ्माद्वनस्यास्य। नन्वेवं महापतकादिनिषेधः कुत प्रवर्त्तत इत्याह—**महापातकादीति**। महापातकादिनिमित्तकानां निषेधात्तु सर्वदा प्रवृतिरेव, न तदर्थं कालप्रतीक्षा। तेषां सर्वथा निषिद्धत्वात् न च कस्मिंश्चिदपि काले तेषां कर्त्तव्यत्वं पश्यामः। यद्यप्येषामपि कर्त्तव्यत्वेन ज्ञानं न भवति, अन्यथानुष्ठानमावश्यकं भवेत् अपि तु यदि कुर्यात्तर्हि न दोषाय कल्पते, प्रायश्चित्तं नावश्यकम्। नैवं महापातकादिविषये। तत्र तु प्रायश्चित्तमावश्यकमेव भवेत्। **संक्षेप इति**। निषेधवाक्यविमर्शस्येति शेषः।

नञर्थस्य धर्माधर्मयोः प्रामाण्यनिरूपणानन्तरमवसरप्राप्तत्वादर्थवादानां तत्र प्रामाण्यं निरूपयितुमाह—विधिनिषेधैकवाक्यतयेति । विधिश्च निषेधश्चेति विधिनिषेधौ, तयोरेकवाक्यता, तयेति । तदपेक्षितो विधिनिषेधापेक्षितः । स्तुतिश्च निन्दा चेति स्तुतिनिन्दे । तदपेक्षिते स्तुतिनिन्दे अर्थः प्रयोजनं यस्य तत्त्वेनार्थवादानामर्थवादवाक्यानां धर्माधर्मयोः प्रामाण्यम् धर्मयदमधर्मस्यास्युपलक्षणम् । अयं भावः—कर्मसु पुरुषप्रवृत्तिसिद्ध्यर्थं विधायकं वाक्यं कर्म विदधाति, तथापि 'कष्ट कर्मेति' न्यायात् पुरुषस्तत्र न प्रवर्त्तते । कर्मणोऽस्य किं फलं स्याद्वा नवेत्यपि चिन्ता भवति । तादृशमप्रवृत्तं पुरुषं प्रवर्त्तनामार्थवादवाक्यमपेक्षते । अर्थवादवाक्यञ्च कर्म स्तौति । कर्मणोऽस्य फलमिदं वर्त्तते, तच्च फलं महत्त्वं धारयतीत्यादि । तच्छ्रुत्वा फलकामनया पुरुषस्तत्र कर्मणि प्रवर्त्तते । विधिस्थले इदमेव स्तावकत्वमर्थवादानां प्रयोजनीभूतं वर्त्तते । अन्यथा कर्मणि कस्यापि पुरुषस्य प्रवृत्तिर्यदि न स्यान्तर्हि तस्यानर्थक्यं प्रसज्येत । तयुक्तमपि जैमिनिना—'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते' इति । आम्नायस्य वेदस्य क्रियार्थत्वात्क्रियाप्रतिपादकत्वाद् अतदर्थानां क्रिया—प्रतिपादकतारहितानामक्रियाप्रतिपादकानां वा आर्थक्यं निष्प्रयोजनत्वादप्रामाण्यम् । अनित्यपदमप्रामाण्यप्रतिपादकम् । एतत्प्रभृतिभिरनेकैः सूत्रैः पूर्वपक्षितम् । तत्सार्थक्यं प्रतिपादनाम च । विधिना त्वेकवाक्यत्वात्—

स्तुत्यर्थत्वेन विधीनां स्युः इत्यादिभिः सूत्रैर्विधिवाक्यैकवाक्यत्वेन प्रामाण्यं सिद्धान्तयामास । अयमर्थः—तुशब्देन पूर्वपक्षं व्यावर्त्तते । विधिना विधिवाक्येन सहार्थवादवाक्यानामेकवाक्यत्वात् व्यात्यर्थत्वेन स्तुतिप्रयोजनत्वेन स्तावाकत्वात् विधिवाक्यानां स्युरर्थात् प्रामाण्यं धर्माधर्मयोः स्युरर्थवादवाक्यानाम् । अनेन प्रकारेणार्थवादवाक्यानां प्रामाण्यं प्रतिपादितं भवतीति सम्प्रदायः । तदेव सोदाहरणं साधयति ग्रन्थकारो वायव्यमित्यादिना । 'वायव्यं श्वेतमालभेत पशुकामः' इति विधिवाक्यम् । अनेन च वायुदेवताकः श्वेतपशुद्रव्यको भूतिफलको यागो विधीयते । फलञ्च सर्वे वाञ्छन्ति, परन्तु यागानुष्ठाने द्रव्यव्ययायासादयश्चावश्यमेव स्यात् । एतत्सर्वं पर्यालोच्यालस्यादिगुणगणविशिष्टः पुरुषः न तत्र प्रवर्त्तते । अर्थात् फलेच्छायां सत्यामपि द्रव्यव्ययादिनिष्ठप्रतिबन्धकतानिरुपितप्रबध्यताश्रयः यागो भवति । तां प्रतिप्रबन्धकतामयसारयितुमर्थवादवाक्यं तन्निवर्त्तिकां

प्ररोचनां प्रतिपादयति। अतएव यागादिकं कर्म स्तौति। ततश्च स पुरुषः प्रवर्त्तते । यागानुष्ठानद्वारा तत्तत्फलमपि प्राप्नोति । इदमेव स्तुतेः प्रयोजनम् । एतदेव स्पष्टयितुमाह—**तत्सन्निधाविति** । पूर्वोदाहृतविधि-वाक्यसमीपे इत्यर्थः। अर्थवादवाक्यं प्रस्तौति—**'वायुर्वै' इति**। क्षपिष्ठा शीघ्रगामी। शीघ्रगामी वायुर्देवता स्वोचिते भागेन तोषितो भागंप्रदाय यजमानायैश्वर्यं प्रयच्छतीति। भूतिमैश्वर्यम्। यथा वायुर्देवता शीघ्रगामी वर्त्तते तथैव फलप्रदानेऽपि शैघ्र्यं करोतीति भावः। यो यजमानः शीघ्रमेव यागजन्यफलेप्सुर्वर्तते स वायुदेवताकं यागं कुर्यादिति । अनेन प्रकारेण प्ररोचनां प्रतिपाद्य विधिवाक्यैकवाक्यतां लभते । सार्थक्यञ्च भजते । विधिवाक्यमिवार्थवादवाक्यानामपि स्वार्थवाचकतामेव कुतो न भवतीत्याह—**स स्वार्थपरत्वे इति**। स्वार्थप्रतिपादकत्वेऽर्थवादवाक्याना वैयर्थ्यं निष्प्रयो-जनत्वं स्यादिति । कुत इति चेत्—सिद्धार्थप्रतिपादकत्वेन क्रियाप्रति-पादकत्वाभावात् प्रवृत्तिनिवृत्त्यजनकत्वाच्च । अर्थवादवाक्यानां कथमेत-द्विलक्षणार्थप्रतिपादकत्वमित्याह—**लक्षणयेति**। नामिधयेति भावः। लक्षणया प्रशस्तप्रतिपादकता भवति । तदेव स्पष्टयति—क्षिप्रदेवतेत्यादिप्रशस्त इत्यन्तेन ग्रन्थेन। क्षिप्रफलप्रदातृत्वमेवास्य प्राशस्त्यम्।

**स्तुवन्निति**। कर्म इति शेषः। **विध्यवेक्षित इति**। विधिनापेक्षित इत्यर्थः । शेषीभूतस्य विधिवाक्यस्य शेषस्यार्थवादस्यापेक्षा भवति स्वसार्थक्यसम्पादनाय। शेषस्य च स्वसार्थक्यसिद्ध्यर्थमङ्गिनोऽपेक्षावर्त्तविते। अतएव साकाङ्क्तयोसमयोरेकयाक्यता सम्पद्यते । एकयाक्यतायाः द्वारं निर्दिशति—**प्ररोचनाजननेति** । यिध्येकयाक्यतयेति । विधिवाक्येन स याक्यैकयाक्यतयेति भावः। अयमाशयः—अत्र पदैकवाक्यता न भवति, अपि तु वाक्यैकयाक्यतैव सम्पद्यते। कुत इति चेच्छृणु—यत्र तावदर्थवाद-वाक्यानां प्राशस्त्ये लक्षणां स्वीकुर्वन्ति, तत्र च लक्षणया पदजन्यपदार्थ-विधया पदार्थ उपतिष्ठते। ततश्च विध्याख्यातार्थे लक्षितस्य प्राशस्त्य-स्यान्वयः। तत्र पदैकवाक्यता भवति। अत्र च नैतादृशी स्थितिः। अतः पदैकवाक्यता न जायते। यत्र च पूर्वं पदाहिताः पदार्थाः भवन्ति तेषाञ्चा-काङ्क्षायोग्यतासन्निध्यादिरुपवाक्यार्थवोधकारणसहकृतपरस्परं सम्बन्धः सञ्जायते। सम्बन्धे सञ्जाते सति अङ्गाङ्गिभावाद्यकाङ्क्षया वाक्यार्थयोः परस्परमन्वयस्तत्रैव वाक्यैकवाक्यता स्वीक्रियते। अत्र विध्यर्थवादवाक्य-योरर्थः पूर्वमेवोपस्थापितः। तयोः परस्परं शेषशेषिभायापेक्षया वाक्यैक-वाक्यता भवति। भवतु नाम, ततश्च वाक्यार्थः कीदृश इत्युच्यते—यतः

विक्षिप्रगामिस्वभावतया क्षिप्रफलप्रदो वायुरस्य श्वेतपशोर्देवता, अतः प्रशस्तमिदं वायुदेवताकं कर्मानुतिष्ठेदिति । इयमेव याक्यैकवाक्यता । तद्बोधितधर्मे इति । विधिवाक्यविहितयागरूपे धर्मे इति । प्रामाण्यं भजते । अर्थवाक्यमितिशेषः । धर्मकर्मणोरैक्यं मीमांसकमते । तत्र प्रमाणयन्ति च 'यो यागादिकमनुतिष्ठति, तं धार्मिक इत्याचक्षते इत्यादि-भाष्यकारवचनम् ।

द्रव्यगुणक्रियादीनां धर्मत्वं स्थापयिष्यते' इयादिवार्त्तिककारवचनञ्च । विधिवाक्यानि यथा श्रेयःसाधनभूते कर्मणि पुरुषं प्रवर्त्तयन्ति, तत एवतानि स्वसार्थक्यमपि प्रतिपादयन्ति तथैव निषेधवाक्यान्यपि अनिष्टफलजनक-कर्मणः सकांशात् पुरुषं नियर्त्तयन्ति, अनेनैव प्रकारेण च तेषां सार्थक्यमपि भवति। तथा च प्रवृत्तिसम्पादकत्वेन विधेयस्य यागादेः श्रेयः साधनत्वमपि प्रसाधितं भवति रागद्वेषशून्यो वेदः कथमनर्थसाधनीभुते कर्मणि प्रवर्त्त-येत्पुरुषम्। एवमेव निषेधविषयीभूतस्य कलञ्जभक्षणादेः श्रेयःसाधनत्वा-भावोऽपि प्रतिपादितो भवति। अनर्थसाधनीभूते कर्मणि परमकारुणिकस्य वेदस्य प्रवृत्तिसम्पादकत्वाभावात्, अतएव ततो निवर्त्तयति । एतदेव प्रतिपादयितुमुपक्रमते—**बर्हिषीति** । एतन्नामके यागे रजतदक्षिणा न दात्येत्यर्थः। वाक्यमिदं रजतदानान्निवर्त्तयति । उत्साहमूलं हि सर्वं कार्यम्। तेन विना कार्यसम्पादनाय नोत्सहते पुरुषः। उत्साहाभावे च कार्ये प्रवृत्तिर्न भवति। अत उत्साहनिवर्त्तकत्वमावश्यकम्। तच्च तस्मिन् कर्मणि द्वेषजनकताप्रतिपादनेनैव सम्भवम् । अतएवाह—**निवृत्तिप्रतिबन्धकेत्यादि**। निवृत्तिप्रतिवन्धकीभूतो य उत्साहः तन्विर्त्तकश्च यो द्वेषः, तज्जनिका च निन्दा, तस्य अपेक्षा। इदं कर्म प्रवृत्ययोग्यं द्रिष्टबुद्धिविषयतावच्छेदकता-श्रयत्वादिति ज्ञानं यत्र सञ्जायते, ततः पुरुषो निवृत्तो भवति। निवृत्तिरेव प्रयोजनं निषेधवाक्यानाम्। विधिस्थले पुरुषप्रवृत्तिसम्पादकत्वसिद्ध्यर्थमर्थ-वादवाक्यं कर्म प्रशंसति तथैव निवृत्तिसम्पादकत्वसिद्धयर्थं निन्दार्थवाक्यं निन्दति कर्म। तदेव स्पष्टयितुमाह—**तत्सन्निधाविति**। 'बर्हिषि रजतं न देयम्, इति निषेधवाक्यसन्निधाविति । यो बर्हिषीत्याद्यर्थवादवाक्यम्। यो, यजमानः वर्हिष्नामके यागे रजतदक्षिणां प्रददाति, तस्य गृहे सम्पत्सरा-त्पूर्वमेव रोदनं भवतीत्यर्थः । रजतस्याश्रुप्रभवत्वमेव तत्र कारणम् । सोऽरोदीत् यदारोदीत् तद्रुद्रस्य रुद्रत्वमिति । रोदनेन यदश्रुव्यशीर्यत तद्रजतमभवदिति। यथा रजतमश्रुप्रभवं तथैव रजतदक्षिणादाने गृहे रोदनं भवेदिति । तस्मान्न रजतदक्षिणा दातत्येति निन्दार्थं वाक्यं प्रवर्त्तते।

वर्त्ततेऽत्रैकाख्यायिका—देवासुरसंग्रामसमये युद्धे गमनात्पूर्वं ते देवाः स्वस्वमहार्हाणि धनानि अग्निदेवसन्निधौ स्थापयित्वा समगमन्। पुनरागत्य वयं स्वीकुर्म इति च समचकथन्। गतेषु देवेषु अग्निदेवेन चिन्तितम्—यदि देवाः विजयिनो भविष्यन्ति तर्हि आगत्य स्वस्वधनानि ग्रहीष्यन्ति। अहन्तु पुनः पूर्ववदेव निर्धनत्वं गमिष्यामि। किं कर्त्तव्यमत्र विषये इति विचारितम्।

इतो यदि पलायनं भवेत्तर्हि शोभनं भवेत्। एवं विचार्य स अन्यत्र कुत्रापि गत्वा विलीनः सञ्जातः। संग्रामे च देवाः विजयिनः समभवन्। यत्राग्निदेवः संस्थापितस्तत्र नापश्यन्। देवाश्च समुद्विग्नाः भूत्वा किं कुर्म इति चिन्तितवन्तः। ततश्चान्वेषणतत्पराः देवाः विजने स्थानेऽग्निमपश्यन्। तैः सर्वैः तत्र गत्वा स्वस्वधनानि बलाद् गृहीतानि। ततश्चाग्निदेवः सुदुःखितः सन् रुरोद। तस्माद्यदश्रुव्यशीर्यत तद् रजतमभवदित्यादिकं सर्वं बोध्यम्। प्रकृतमनुसरामः। रोदनहेतुत्वात् रजतदक्षिणा प्रतिषिद्धेति। एतदेव स्पष्टीकृतम्—**सोऽपीत्यादिना**। **अप्रशस्तमिति**। निन्दितमित्यर्थः। निन्दाद्वारा कर्मणि द्वेषं जनयति। निषेधाय च द्वेष एवापेक्षितः। तत एव निवृत्तिसम्भवात्। **तदेकवाक्यतयेति**। निषेधवाक्यस्यार्थवादवाक्यतयेत्यर्थः। **तद्बोधिताधर्मे इति**। निषेधवाक्यबोधिताधर्मे इत्यर्थः। **प्रामाण्यं भजते इति**। निषेधशेषाण्यर्थवादवाक्यानीत्यर्थः। एवं विधिस्थले स्तुतिप्रतिपादकत्वं निषेधस्थले च निन्दाप्रतिपादकत्वमर्थवादवाक्यानामिति सुस्पम्। प्रयोजनञ्च प्रवृत्तिनिवृती कर्मसु। अर्थवादवाक्यानां स्तुतिनिन्दाप्रतिपादकत्वं न समीचीनम्। तत्रापि नाभिधया अपि तु लक्षणया। लक्षणा च जघन्यावृत्तिर्भवति। स्तुतिनिन्दाप्रतिपादकत्वाभावे तेषां वैयर्थ्यं स्यात्। सिद्धार्थप्रतिपादकत्वात्तेषाम्। तर्हि वैयर्थ्यमेवास्तु, का क्षतिरिति शङ्कते—**न चेति**। समाधत्ते—**स्वाध्यायविध्यध्यापितस्येति**। 'तस्मात्स्वाध्यायोऽध्येतव्य' इति स्वाध्यायविधायकविधिः। स्वशब्दश्चात्र स्वकुलपरम्परावाचकः। अध्यायशब्दश्च शाखावचनः। अधिपूर्वकेङ्धातोरध्ययनमर्थः। तव्यप्रत्ययश्च भावनाभिधायकः। अतः स्वकुलपरम्पराप्राप्तशाखामध्ययनेन भावयेदित्यर्थः। प्राप्नुयादिति भावः। अनेन च विधिना सम्पूर्णस्य वेदस्याध्ययनं प्रतिपादितं भवति। वेदे च यथा विधिवाक्यानि पठितानि सन्ति तथैवार्थवादवाक्यान्यपि। अतोऽर्थवादवाक्यसहितस्यैव विधिवाक्यस्याध्ययनमिति वैदिकपरम्परा। अधीतस्य च वेदस्याक्षरमात्रमपि व्यर्थं भवितुं नार्हति, किमियतामर्थवादवाक्यानाम्। तस्माल्लक्षणया स्तुतिनिन्दार्थप्रतिपादकता

तेषां युक्तैव। अध्ययनस्यादृष्टार्थत्वं प्राभाकरमते। तन्मतेऽध्ययने चार्थज्ञानस्यानावश्यकत्वादर्थवादवाक्यानां वैयर्थ्याभावाल्लक्षणया स्तुत्यादिप्रतिपादकता न युक्तेत्याह—न चेति। यथा हुम्फडित्यादीनामर्थावगमाभावेऽपि कार्यसम्भवात्तथैवार्थवादवाक्यानामर्थज्ञानं नावश्यकमिति भावः।

समाधत्ते—**अध्ययनविधेरिति**। कौमारिलमतेऽध्ययनस्यार्थज्ञानपर्यवसायित्वादध्ययनस्यार्थज्ञानरूपं इष्टमेव प्रयोजनम्। तस्माद्विधिवाक्यमिवार्थवादयार्थतानस्याप्यर्थज्ञानमावश्यकम्। प्रयोजनञ्च प्रवृत्तिर्वा निवृत्तिर्वेति पूर्वमुक्तम्। अतस्तेषां वैयर्थ्यं नोचितमिति। **दृष्टार्थत्वादिति**। दृष्ट अर्थः प्रयोजनं यस्य तत्त्वात्। दृष्टप्रयोजनकत्वादिति भावः। अध्ययनस्य दृष्टार्थत्वमेव स्पष्टयति—**तथाहीत्यादिना**। 'स्वाध्यायोऽध्येतव्य' इति विधिः। 'अध्येतव्य' इत्यत्राधिपूर्वकादिङ्धातोस्तव्यप्रत्ययः। अधिपूर्वकेङ्धातोरध्ययनमर्थः। तव्यप्रत्ययस्य च भावनारूपोऽर्थः। प्रत्ययार्थभावनायां धात्वर्थस्याध्यनस्य करणत्वेनान्वमः। अतोऽध्ययनेन भावयेदित्यर्थः। किं भावयेदिति साध्याकाङ्क्षायां समीपोच्चरितत्वात्स्वाध्यायः साध्यत्वेनान्वेति। अतएवोक्तम्—**अध्ययनकरणिकामित्यादि**। साध्यत्वकर्मत्वयोरनार्थान्तरत्वं बोध्यम्। उभयोः द्वितीयार्थत्वात्। ईप्सितानीप्सितोभयानुगत्वं साध्यत्वं भवति। अनीप्सितसाध्यतात्वेकैव। ईप्सितसाध्यता च चतुर्विधा—उत्पाद्यं प्राप्यं विकार्यं संस्कार्यञ्चेति तदुक्तं भाट्टरहस्ये खण्डदेवेन—'तच्च कर्म चतुर्विधम्—उत्पाद्यम्, आप्यम् विकार्यम्, संस्कार्यञ्चेति। मतमिदं मीमांसकानाम्, न तु वैयाकरणानाम्। तेषां मते ईप्सितकर्मत्वं त्रिविधम्, अनीप्सितकर्मत्वञ्च चतुर्विधंभवति। आहत्य च सप्तविधं कर्मत्वमामनन्ति ते। तथा चोक्तं हरिणा—

निर्वर्त्यश्च विकार्यश्च प्राप्यञ्चेति त्रिधामतम्।
तच्चेप्सिततमं कर्म चतुर्धान्यत्तु कल्पितम्॥
औदासीन्येन यत्प्राप्यं यच्च कर्त्तुरनोप्सितम्।
संज्ञान्तरैरनाख्यातं यच्चाप्यन्यपूर्वकम्॥ इति।

तत्र स्वाध्यायस्योत्पाद्यत्वाभावान्नोत्पाद्यकर्मता। विकार्यत्वाभावाच्च स्वाध्यायस्यतदपि न। एवमेव संस्कार्यत्वमपि न सम्भवति। संस्कार्यत्वाभावत्तस्य। परिशेषात्प्राप्यकर्मत्वमेव स्वीकर्त्तव्यम्। गुरुमुखोच्चारणाश्चारणरूपेण तस्य प्राप्यत्वात्। अनेनैव प्रकारेण स्वाध्यायस्य प्राप्ति-

योग्यता । **तच्चेति** । स्वाध्यायनिष्ठं कर्मत्वञ्चेत्यर्थः । **योग्यतयेति** । स्वाध्यायस्य प्राप्तियोग्यतयेति । **प्राप्यत्वमिति** । गुरुमुखोच्चारणानुच्चारणरूपेण प्राप्त्याश्रयत्वम् । वाक्यार्थं वक्तुमुपक्रमते—**तेनेति** । निष्प्रयोजनस्येप्सितमत्वाभावेन प्राप्यत्वाभावं प्रतिपादयितुमाह—**अनर्थकस्येति** । अनेन च स्वाध्यायार्थज्ञानप्रयोजनत्वेन सार्थक्यमुपयादयति— **वाक्यान्तरेणेति** । अपरेण वाक्येनेत्यर्थः । **अर्थवत्त्वज्ञानादिति** । स्वाध्यायस्येति शेषः । वाक्यान्तरेण व्यञ्जितं वाक्यार्थं दर्शयति—**अधीतेनेत्यादिना** । यच्छक्नुयात्तत्सर्वमनेन कुर्यादिति सर्वशक्तिसम्पन्नत्वेनार्थज्ञानमपि कारयितुं समर्थः । अतो न निप्रयोजनत्वमित्याह—**तत इति** । **शक्त्यालोचनेनेति** । स्वाध्यायस्येति शेषः । **यावत्सम्भवमिति** । यावदपेक्षितमित्यर्थः । **तस्य स्वाध्यायस्य लैङ्गिककर्मविनियोगेनेति** । विनियोजकप्रमाणेषु तृतीयेन लिङ्गप्रमाणेन कर्मविनियोगेनेत्यर्थः । **अर्थवत्त्वातदिति** ।

अर्थज्ञानस्य इष्टप्रयोजनवत्त्वादित्यर्थः । **तदसम्भव इति** । अर्थवत्त्वासम्भवे सतीत्यर्थः । हुम् फडित्यादिष्वप्यर्थवत्त्वप्रतिपादनायाह—**हुमादिष्विति** । ऋचि यदा सामगानं क्रियते तदा नियतकालपरिपूरणार्थमावश्यकम् । अतस्तेषामपि सप्रयोजनत्वं प्रसाधितं भवति । क्षत्रियधीतसत्रादिवाक्यानामिति । क्षत्रियेणाधीतानां सत्रानिरूपणघटकवाक्यानां पारायणसम्पादनायोपयोगित्वं कल्प्यतेऽनेनैव प्रकारेणेत्यर्थः । अनेन प्रकारेण विधेरर्थवत्त्वस्य प्रसाधितत्वान्नादृष्टमेव प्रयोजनं स्वाध्यायस्येत्याह—**नत्विति** । वार्त्तिककारसम्मतिं प्रदर्शयति—**तेनेति** । अर्थवादाधिकरणे इति । प्रथमाध्यायस्य द्वितीयपादस्य प्रथमाधिकरणे इति । **तृतीये चेति** । हेतुवन्निगदाधिकरणेऽपि चैवमेव प्रतिपादितमित्यर्थः । **मीमांसारत्नेऽपीति** । एतन्नामके ग्रन्थे इत्यर्थः । अत्रापि पूर्ववदेव वाक्यार्थं सम्पादितमिति दर्शयति—**अधीतेनेत्यादिना** । **मिश्रास्त्विति** । पार्थसारथिमिश्रा इत्यर्थः । **न्यायरत्नमालायामिति** । एतद्विरचितेतन्नामके प्रकरणग्रन्थे प्रयुक्तितिलके प्रथमे प्रकरणे इत्यर्थः । स्वप्रतिपादिताध्ययनकरणं वाक्यार्थं द्रढयितुमाह—**स्वाध्यायसंस्कारेणेत्यादिः** । यद्यपि ग्रन्थकारेण पूर्वं प्राप्यं कर्म इति प्रतिपादितम्, तथाप्यनेन मिश्रवाक्यार्थदर्शनेन संस्कार्यं कर्म इति प्रतिभाति । अध्ययनेन स्वाध्यायं संस्करोति । संस्कृतेन स्वाध्यायेन ज्ञानादिकं कुर्यादित्युभयोर्भेदः । **अत्रैवार्थे** भवदेवसम्मतिं दर्शयियुमाह—**भवदेवोऽपीति** । अस्यैवार्थस्य युक्ततरत्वमुपपादयितुमाह—**युक्तञ्चैतदिति** । **कर्मत्वानुपपत्तावपीति** । प्राप्यत्वं संस्कार्यत्वं वा कर्मत्वं प्रतिपादितं पूर्वम् तथापि येषां

प्राभाकरादीनां मतेऽदृष्टार्थत्वमेवाध्ययनस्य वर्त्तते, तेषामपि मते इत्यर्थः। **पदश्रुत्यवगतेत्यादीति**। 'अध्येतव्य' इत्येकं पदम्। अत्र प्रकृत्यर्थोऽध्ययनम् प्रत्ययार्थश्च भावना। एकेनैव पदेनोभयोः श्रवणमित्यर्थः। **अध्ययनकरणत्वाबाधायेति**। अध्ययननिष्ठकरणत्वस्य यथा बाधो न भवेत्तथेत्यर्थः। धात्वर्थस्य भावनायां करणत्वं सुसिद्धम्। अध्ययनशब्दार्थश्च क इत्याह **—गुरुमुखेत्यादिः**।

लोकेऽपि शब्दोच्चारणश्रवणसमनन्तरमेव प्रवृत्तिर्भवति। तद्व्यवहारानुकूलार्थज्ञाननिष्ठोद्देश्यता च कल्प्यते। ततश्च व्यवहारोपपत्तिरिति दर्शयितुमाह—**लोके इति**। **क्लृप्तत्वादिति**। अर्थज्ञाननिष्ठोद्देश्यतायाः निश्चितत्वादित्यर्थः। **तस्मिन् भाव्ये इति**। अर्थज्ञानस्य भाव्यत्वे साध्यत्वे कल्पिते सतीत्यर्थः। **सामर्थ्यादिति**। शक्त्यात्मकेन लिङ्गप्रमाणेनेत्यर्थः। तस्या एव शक्तेः स्वाध्यायावाप्तौ द्वारत्वमिति स्वीकुर्वन्ति। यदि स्वाध्यायनिष्ठसाधनतैव न स्यात्तर्हि तत्प्राप्तौ द्वारत्वकल्पनमप्युनुपपन्नं स्यात्। निष्प्रयोजनत्वात्। **तस्यापीति**। स्वाध्यायस्यापीत्यर्थः। तत्साधनत्वम्। फलसाधनत्वम्—**अर्थादिति**। अर्थापत्त्येत्यर्थः। **सिद्ध्यतीति**। प्रसिद्ध्यतीत्यर्थः। अत्रैव शाखान्तराधिकरणमपि प्रमाणयति—**एवञ्चेति**। तत्रार्थात्सिद्धवाक्यार्थज्ञानं प्रत्युपादेयत्वेन् स्वाध्यायनिष्ठैकत्वं विवक्षितं भवतीति साधितम्। शाखान्तराधिकरणञ्च द्वितीयाध्यायस्य चतुर्थपादस्य द्वितीयाधिकरणमिति। हुम् फडित्यादयो मन्त्राः जपपारायणावुपयुज्यते। अतस्तत्राक्षरज्ञानमेव भाव्यत्वेनान्वेति भावनायाम्। तस्यैव तद्भाव्यत्वात्। अतोऽर्थज्ञानाभावेऽपि नैव किञ्चिद्दूषणं पश्यामः। अक्षज्ञानं प्रति **सर्वप्रथम**न्तावदक्षरावाप्तेः कारणत्वम्। यतो ह्यक्षरग्रहणानन्तरमेव पदज्ञानं पदार्थज्ञानं वा भवति। ततश्च वाक्यार्थज्ञानं सम्पद्यते। अतः सर्वान् प्रत्युपयोगित्वेन सर्वत्राक्षरावाप्तिरेव भाव्यमस्त्विवति शङ्कते—**न चेति**। समाधत्ते—**यावत्सम्भवमिति**। परमपुरुषार्थं प्रति यस्यातीव प्रत्यासत्तिस्तस्यैव ग्रहणौचित्यादितिभावः। तदेव स्पष्टयति—**अर्थज्ञानस्येति**। यद्यप्यर्थज्ञानस्यापि क्रतुजन्यापूर्वं प्रत्युपयोगिता वर्त्तते तथापि क्रतुना सहाविनाभावसम्बन्धो नास्ति अतः क्रतुजन्यापूर्वोपस्थितिं प्रत्युपयोगित्वासम्भवादिति भावः पुनर्वाक्यार्थं स्पष्टयति—**तेनेति**।

अज्ञज्ञानस्य भाव्यत्वे कथंभावाकाङ्क्षायां कस्यान्वय इत्याह—**कथमित्याङ्क्षायामिति**। कथंभावाकाङ्क्षायां जायमानायां **शास्त्रविहितब्रह्म-**

चर्यपालनं तथा गुह्योः सेवादिनोपकार सम्पाद्यार्थज्ञानं भावयेदित्यन्वयः। ब्रह्मचर्यादिधर्माणां पालनं कथमावश्यकमित्याह—**तेषाञ्चेति**। विघ्नविनाशस्यापि कार्यसमाप्ति प्रति कारणता स्वीकाराद्विघ्नभावोऽप्यावश्यकः। अतोऽध्ययनरुपकार्यसमाप्ति प्रति प्रतिबन्धकीभूतर्विघ्नाभावाय तेषां धर्माणां पालनम्। एतेन प्रकारेणाध्ययनेन सहोपकार्योपकारकभावः सिद्धयति। ननु नियमपालनाभावेऽप्यध्ययनरूपकार्यपरिसमाप्तिदर्शनानिन्नयमंवैर्थ्यमिति। शङ्कायाः समाधानार्थमाह—**नियमाच्चेति**। यद्यपि नियमपालनाभावेप्यध्ययनकार्यस्य समाप्तिः सम्भाव्येत तथापि नियमः क्रियते—ब्रह्मचर्यादिनियमपरिपालनपूर्वकमेवार्थज्ञानं कुर्यादिति। नियमस्य किं प्रयोजनमित्याह—**अदृष्टमिति**। नियमपालनपूर्वकज्ञानसम्पादेनपूर्वकमर्थज्ञानेनैवादृष्टं सम्पत्स्यते, नान्यथेत्यर्थः। मिश्रमतमिदमिति स्पष्टयितुमाह—**मिश्रा इति**। न दृश्यते लौकिकेन चक्षुषा, अतएवादृष्टमिति।

न्यायसुधाकृन्मतमुपस्थाययितुमाह—**जयपारायणादीत्यादिः**। एतेषां मते जपादिकं प्रत्युपयोगितादृष्टस्य, तदरुपं यद् वेदत्वं तस्य प्रसिद्धयर्थं नियमादिकमावश्यकमियि। उपमिनोति—**लक्षणादीनामिवेति**। यथा काष्ठेषु तक्षणादिसंस्कारेण यूपत्वं सिद्धयति, तथैवेत्यर्थः। **राणके इति**। न्यायसुधायामित्यर्थः। उपसंहरति—**एवमिति**। एतेन शास्त्रार्थेनाध्ययनविधेरदृष्टार्थत्वं प्रसोधितं भवतीत्यर्थः। **स चेति**। अध्ययनादिविधयश्च विधिनिषेधयोः प्रवर्त्तनानिवर्त्तनागमकत्वं दर्शयति—**विधीनामिति**। कस्य प्रवर्त्तकत्वं कस्य वा निवर्त्तकत्वमित्याह—**अधीतविधाय इति**। भावनायां केन प्रकारेणान्वेतीत्याह—**केनेत्याङ्क्षायमिति**। करणाकाङ्क्षायामित्यर्थः। विधिस्थले प्रवर्त्तनाज्ञानेन निषेधस्थले निवर्त्तनाज्ञानेन वान्वेति। प्रवर्त्तना केत्पाह—**प्रवर्त्तना चेति**। शाब्दीभावनापरपर्यायेत्यर्थः। तद्विरुद्धा च निवर्त्तना भवति। नञ्सम्बद्धविधिः स्वार्थनिरुद्धार्थं प्रतिपादयति।

कुत इति चेत्। नञः स्वभावत्वात्। निवर्त्तना च कथमन्वेतीत्याह—**निवर्त्तना चेति**। कथंभावाकाङ्क्षायामितिकर्त्तव्यताकाङ्क्षायामित्यर्थः। **प्ररोचनाद्वेषाभ्यामिति**। प्ररोचना द्वेषश्च ताभ्यामित्यर्थः। विद्यस्थले प्रवर्त्तकत्वसिद्धयर्थं प्ररोचनोपयुज्यते। निषेधस्थले च निवर्त्तकत्वसिद्धयर्थं द्वेष उपयुज्यते। तत्तत्स्थले तत्तत्प्रकारेणोपकारं करोति। कीदृश उपकार इति स्वयमेवाह—**फलप्रतिबन्धकेत्यादिना**। फलं भागादिरुपम् तस्य प्रतिबन्धकमालस्यमुत्साहनिवृत्तिर्वा। तत्प्रतिबन्धकमपाकृत्य पुरुषं प्रवर्त्तमति

इष्टफलके कर्मणि । अनिष्टफलकाच्चकर्मणः निवर्त्तयति । निर्गलितार्थ-मुपस्थापयितुमाह—**इत्यमिति** । **अंशत्रयमिति** । साध्यसाधनेतिकर्त्तव्यतारुपं भावनाया अंशत्रयमित्यर्थः । एतदंशत्रययुक्तां शाब्दीभावनापरपर्यायां प्रवर्त्तनामिति । विधिकार्यत्वेन प्रवर्त्तकत्वेन । एतदर्थप्रतिपादकशब्दाभावेन शब्दतोऽर्थाभावेऽप्यर्थत सिद्धयतीत्याह—**अर्थादिति** । **निषेधार्थत्वेनेति** । निषेधप्रयोजनत्वेनेत्यर्थः । **निवर्त्तनामिति** । नञ् सम्बद्धविधिः निवर्त्तनां प्रतिपादयति । प्ररोचनाजनिका स्तुतिर्भवति द्वेषजनिका च निन्देत्यर्थः । तत्तत्स्थले उभयोरपेक्षा वर्त्तते तत्कार्यसम्पादनाय । तयोश्च साधनमर्थ-वादवाक्यमेव भवति । तन्निष्ठैव साधनता कल्प्यते । अर्थवादाभावे च विधिनिषेधनिष्ठमेव तत्साधनत्वं स्तुतिनिन्दासाधनत्वं कल्पितं भवति । एकमेवविधिनिषेधवाक्यं कार्यद्वयसाधकमिति । कार्यद्वयसाधकत्वमेवोदा-हरणेनस्पष्टयिष्यति—**यथोक्तमिति** । वार्त्तिककारेणेतिशेषः । अर्थवादा-धिकरणे इत्यर्थः ।

**विध्युद्देशस्यैवेति** । तत्रैव शक्तिद्वयकल्पनमित्यर्थः । उदाहरति—**यथेति** । 'वसन्ताय कपिञ्जलानालमेत' इति । वसन्तदेवतोद्देश्यकपिञ्जल-कर्मकालम्भनविधायकमिदं वाक्यम् । अत्र स्तुतिप्रतिपादकमर्थवादवाक्यं न दृश्यते । अत एकस्मिन्नेव वाक्ये विधिशक्तिः स्तुतिशक्तिश्योभयोः कल्पनं भवतीत्यर्थः । ननु यत्रार्थवादवाक्यं वर्त्तते तत्र कथन्न विधिवाक्यगतेनैवों-भयोः परिकल्पनमित्याह—**अर्थवादसद्भावे त्विति** । सन्निहितार्थवाद-वाक्यानां स्तुतिनिन्दार्थप्रतिपादकत्वाभावे वैयर्थ्यं स्पादतस्तत्प्रतिपादकत्व-मावश्यकं भवति । उभयोश्चैकवाक्यता पूर्वमेवोपपादिता । **लक्षणयेति** । अर्थवादवाक्यानां सिद्धार्थप्रतिपाकत्वेन स्तुतिनिकाप्रतिपादकत्वं लक्षणैव भवति ।

अध्ययनविधेरदृष्टार्थत्वं वारयति—**न त्विति** । नैतावता 'स्वाध्या-योऽध्येतव्य' इत्यध्ययनविधेरदृष्टार्थत्वं प्रतिपादितं भवति । नन्वत्रापि लक्षण-यादृष्टार्थत्वमध्ययनविधेः कथं स्वीक्रियत इत्यत आह—**लक्षणयेति** । अक्षर-ग्रह्मरुपं दृष्टं प्रयोजनमस्ति । लक्षणया चादृष्टार्थत्वं स्वीकर्त्तुं शक्यते । तत्र सम्भवति दृष्टफलकत्वेऽदृष्टफलकल्पनाया अन्याप्यत्वदिति न्यायेनाक्षर-ग्रहमरुपं दृष्टफलमेव स्वीकार्यमिति । कथमित्याह—**लाघवादिति** । अभिधायां क्षिप्रमेव वाच्यवाचकभावेनार्थबोधः सञ्जायते । लक्षणायान्तु

शक्यार्थस्य पूर्वं बोधः। तदनन्तरञ्च तेन सह सम्बद्धस्य पदार्थस्य बोधः। अतोऽत्र ज्ञानगतं गौरवं प्रसज्येत। तस्मादक्षरग्रहणमेव स्वीकार्यगम् लाघवात्।

अगत्यैवादृष्टार्थता स्वीक्रियते। अतएवोक्तम्—**वैयर्थ्यपरिहारायेति।** दृष्टार्थपक्षे लाधवं भवति। नन्वत्र सर्वेष्वर्थवादपदेषु पार्थक्येन लक्षणा-स्वीकारे पुनश्च गौरवं स्यादेव। तेषामनेकत्वात्। अत आह—**सर्वार्थवाद-पदेष्विति।** एकैव लक्षणा स्वीक्रियते सर्वत्र, न सर्वेषु पदेषु भिन्नाभिन्ना काचिल्लक्षणा भवति। अतो न गौरवापत्तिर्दोषः। ननु प्रतिपदं स्वार्थे शक्तं भवति। न त्वेकेनैव पदेन समेषामर्थानां बोधः। तथैव लक्षणापि प्रतिपदमेव स्यादत आह—**न चेति।** स्वार्थे प्रत्येकानां पदानां शक्तत्वेऽपि लक्षणापि तथैव स्यादिति नास्ति नियमः। **कुलधर्म इति।** अनुलंघनीया परम्परेति। दृष्टान्तप्रदर्शनायाह—**वाक्यार्थलक्षणावदिति।** अयं भावः—यथा वाक्यार्थ-लक्षणायां सम्पूर्णेऽपि वाक्ये एकैव लक्षणा स्वीक्रियते तथैवात्रापि सर्वेषु पदेष्वेकैव लक्षणेति। **तत्रेति।** अर्थवादेष्वित्यर्थः। अयमर्थ—येऽर्थवादाः लोकसिद्धार्थप्रतिपादकाः सन्ति, ते खलु लौकिकार्थप्रतिपादनद्वारैव विधेयस्य-स्तुतिं लक्षयन्ति, यथा—वायुर्वै क्षेपिष्ठादेवेत्यादयः। तथाहि—वायोः शीघ्रगामिता लोकप्रसिद्धा वर्त्तते अनेनैवार्थेन सम्वध्नाति कर्म। यथास्य कर्मणः देवता शीघ्रगामी वर्त्तते तथैव तद्देवताकं कर्मापि शीघ्रफलप्रदं स्यादिति। ये लोकप्रसिद्धार्थविरुद्धार्थप्रतिपादका अर्थवादाः भवन्ति, ते गौण्या वृत्त्या स्तुवन्ति कर्म। तदेव प्रतिपादयितुमाह—ये त्विति। उदाहरति यजमानः प्रस्तरोऽग्निर्माणबक इत्यादयः प्रस्तरोऽदर्भमुष्टिविशेषः। यजमानश्च चेतनः दर्भमुष्टिश्चाचेतनः। उभयोरैक्यं कथं सम्भवति। अतोऽत्र तद्गुणभूतत्वेन गौण्यास्तौति यजमानम् तथैवाग्निभिन्नः पदार्थः न—दाहकत्वशक्तिविशिष्टः। माणवकश्च भिन्नः पदार्थश्चेतनः शान्तः। कथं माणवकोऽग्निरिति। अत्राप्यग्निगतपैङ्गतयादिगुणविशिष्टः माणवक इति गौण्या प्रतिपाद्यते। एवमेव स्तुत्यस्तावकभावसम्बन्धः गौण्या भवतीति। स्मृतत्वे सत्युपेक्षानर्हत्वाद् गौणीं निरूपयितुमुपक्रमते—गौणी नाम इति। गौणीं लक्षयन्ति—**स्वार्थनिष्ठेत्यादिना।** स्वं यजमानादिकं पदं तस्य योऽर्थः यजमानः कार्यसम्पादयिता तन्निष्ठो यो ग्रणः स्तुवादिधारणादि-रुपस्तत्स्तुवादिधारणगुणयोगाद् ग्रणसम्वन्धातदर्थान्तरे प्रस्तरादौ वृत्तिर्यज-मानशब्दस्येति। यथा स्तुवादिधारणशक्तिविशिष्टो यजमानस्तथैवायं दर्भ-मुष्टिरपीति यजमाननिष्ठगुणेन प्रस्तरो स्तूयते। अतएवोक्तम्—'यजमान-

गुणेन यागसाधनत्वेन युक्तः प्रस्तरो यंजमानशब्देन स्तूयते 'इति' गुणाश्चात्र न नैयायिकसम्मतचतुर्विंशतिगुणाः विवक्षिताः सन्ति, अपि तु तद्भिन्ना एवेत्याह—**गुणश्चेति** । **षड्विध इति** । न न्यूनाः नाप्यतिरिक्ता इत्यर्थः । तस्य कार्यस्य सिद्धिः सम्पादनम् । कार्यसम्पादकत्वगुणयोगात्स्तावकत्व-मित्यर्थः । जातिरूत्पत्तिः । उत्पत्तिस्थानस्य समानत्वात्स्तूयते । सारूप्यं सादृश्यम् । उभयोः साम्यात्स्तुतिः । प्रशंसा, अर्थवादजन्यप्रशस्तगुणयो-गात्स्तावकत्वम्—'यत्र सर्वाणि वाक्यानि सृष्टिशब्दोपेतानि, तत्र यथा सृष्टिभूमता, तथात्रापीति भूमगुणयोगेन सृष्टचसृष्टिसङ्गे सृष्टिशब्दप्रयोगः' इति । शब्दविशेषसम्बन्धो लिङ्गसमवायः । एकमन्त्रनिष्ठैकलिङ्गप्रयोगे-नैवान्येषामपि तत्त्वेन व्यवहारः । उक्तञ्च—एकस्यैव मन्त्रस्य प्राणभृत्त्वेऽपि 'छत्रिणो गच्छन्ति' इतिवत्तत्सहचरिताः सर्वे मन्त्राः प्राणभृच्छब्देन लक्ष्यन्त इति सङ्ग्रहरूपेणोक्तञ्च पार्थसारथिमिश्रेण—

तत्सिद्धिजातिसारूप्यप्रशंसालिङ्गभेमभिः ।
षड्भिः सर्वत्र शब्दानां गौणीवृत्तिः प्रकल्पिता ।। इति ।

प्रत्येकं स्पष्टयितुमक्रमते—**तत्रेति** । यजमानः प्रस्तर इति । प्रस्तरे इति पदमेव व्याख्यातं दर्भमुष्टाविति । यथायजमानो यज्ञं सम्पादयति तथैव प्रस्तरोऽपि स्तुवादिधारणद्वारा यज्ञं निष्पादयति । तस्मात्प्रस्तरो यजमान-त्वेन स्तूयते । एवं प्रस्तरस्य यजमानाभावेऽपि तत्त्वेन स्तूयमानत्वात्तत्र यजमानशब्दस्य गौणः प्रयोग इति । **अग्निर्ब्राह्मण इति** । उभौ च ब्रह्मणः मुखात्प्रभवतः । अत उत्पत्तिस्थानस्यैकत्वाज्जन्मना ब्राह्मणस्य स्तुतिः । ब्राह्मणार्थेऽत्रास्यग्निशब्दो गौण इति । अत्र श्रुतिं प्रमाणयति—**ब्राह्मणोऽस्ये-त्यादिना** । अत्रोभयोः ब्रह्मणः मुखस्थानादेवोत्पत्तिरिति श्रूयतो । तदुत्पत्ति-सादृश्यादेवाग्नित्वेन ब्राह्मणः स्तूयते इति भावः । आदित्यो यूप इति । अत्रादित्ये यूपे चोभयत्र चक्षुरिन्क्रियग्राह्यतेजस्वित्त्वस्य विघमानत्वात्सारुप्य-सद्भावात् यूपेऽर्थेऽऽदित्यशब्दस्य गौणो व्यवहारः । यूपेऽऽदित्य इव कथं तेजस्वित्त्वमित्याह—**लक्षणाञ्जनकृतमिति** । काष्ठं लक्षणादिना घृतेनाञ्ज-नादिना च तेजस्वित्त्वं प्राप्नोति । अतः तेजःसामान्यात् गौणव्यवहार इति । **अपशवो वाऽन्ये इति** । वाक्येनानेन गवाश्वनिष्ठप्रशंसा प्रतिपाद्यते तथा गवाश्वभिन्नपशून् निन्दति । अत्र प्रयुक्तापशुशब्दः तद्भिन्नमानवादिवाच्य-जातिषु व्यवहृतः । **गवाश्वगतप्रशंसाभव** इति । यथा गवाश्वगतप्रशंसा-भावस्तथैवाजादिपभुषु मनुष्यादिषु वा वर्त्तते । अहोऽत्र प्रशंसाभावरूपं

सादृश्यं ग्राह्यम् । सादृश्यघटकीभूतो योऽभावः । प्रशंसाभावस्तस्य प्रतियोगी प्रशंसा, यस्याभावः स प्रतियोगी इति न्यायवत् । **सैव प्रशंसा गौण्याः** निमित्तमिति । **अपशव इति** । अपशुघटकीभूतो यः पशुशब्दस्तेन गवाश्वगतं प्राशस्त्यं लक्षणया प्रतिपाद्यते । **नञेति** । **तदभावः** प्राशस्त्याभावः । स्तुति-प्रकारं दर्शयति—**गवाश्वगतेत्यादिः** । **चयनप्रकरणे इति** । 'सृष्टीरुपदधाति' इति श्रुतिः । तदर्थं स्पष्टयति—**तस्येत्यादिना** । **तत्रेति** । **तस्मिन्नेव** चयन-प्रकरणे केषाञ्चिन्मन्त्राणां पाठादिति । **सृष्टिलिङ्गकानामिति** । सृष्टयसृष्टि-लिङ्गकमन्त्रसमुदाये इत्यर्थः । **बहुत्वादिति** । वाहुल्यादित्यर्थः । **भूम्नेति** । भूम्ना निमित्तेनेत्यर्थः । यद्यपि तत्र केचित्सृष्टिलिङ्गकाः मन्त्राः सन्ति केचिच्चासृष्टिलिङ्गकाः मन्त्रास्तथापि सृष्टिलिङ्गकानां मन्त्राणां वाहुल्या-त्सृष्टिशब्देनैव तेषां व्यवहार इति भावः । दृष्टान्तं दर्शयति—**छत्र्यछत्रि-समूह इति** । पथि गच्छन्तः केचिज्जनाः सन्ति । तत्र केचिच्छत्रिणः केचिच्य न, तथापि छत्रिणां बाहुल्याज्जनाः वदन्ति—छत्रिणो यान्तीति, तथैवात्रापि सृष्टिलिङ्गकमन्त्राणां वाहुल्यात्तेनैव व्यवहार इति भावः । **एवमिति** । पूर्वोक्तप्रकारेणैवेत्यर्थः । **प्राणभृतउपदधातीति** । पूर्वापेक्षयास्य वैष्टियं दर्शयितुमाह—**अन्येषामिति** । पूर्वस्मिन्नधिकरणे भूम्ना व्यवहारः प्रसाधितः । अस्मिंश्चाधिकरणेऽल्पत्वेनापि तेनैव नाम्ना व्यवहार इति विशेषः । प्रकरणेऽस्मिन् प्राणभृल्लिङ्गकानां मन्त्राणां न भूयस्त्वेन व्यवहार-स्तथापि तत्समूहे मन्त्रसमूहे लिङ्गसमवायेन हेतुना प्राणभृच्छब्दस्य व्यवहारः । **प्राणभृदप्राणभृत्समूहे** इति । उभयलिङ्गकमन्त्रसमूहे इत्यर्थं । हि त्रहेतौ । यस्मात्कारणादित्यर्थः । प्राणभृच्छब्देन व्यवहारः । अत्रेयं स्थितिः—यद्यप्यत्र प्रकरणेऽपि सृष्टिलिङ्गकानामेव मन्त्राणां बाहुल्यं वर्त्तते । अतः पूर्वन्यायेन सृष्टिशब्देनैव व्यवहारः समुचितस्तथापि प्रथममन्त्रे एव प्राणभृच्छब्दाम्नायते । यथा—'अयं पुरोभ्रवस्तस्य प्राणो भौवायनः' इति ।

मन्त्रस्यास्यार्थवादवाक्यं श्रूयते—'रेतस्मेव प्राणानन्दधाति' इति । अर्थवादस्यास्योपपत्तये प्राणभृच्छब्देन मन्त्रानुवादः । अत एकस्यैव प्राण-भृल्लिङ्गकस्य मन्त्रस्य सत्त्वादेतत्सहचरिताः सर्वे मन्त्राः प्राणभृच्छब्देन व्यवह्रियते । छत्रिणो यान्तीतिवत् । प्रथममन्त्रे एव प्राणभृच्छब्दव्यवहार एव कारणम् । यथा कस्मिंश्चिदं ग्रामे प्रथममेव कश्चिन्मूर्खं मिलति तर्हि मूर्खग्राम इति व्यवह्रियते । अथवा प्रथमेव यदि कश्चित्सज्जनः विद्वान् मेधावी वा मिलति तर्हि तेनैव नाम्ना व्यपदिश्यते, तद्वत् । उदाहरणान्तरं

दर्शयितुमाह—**एवचिति** । पुरोडाशानलङ्कुर्विति । अत्र पुरोडाशमुद्दिश्यालङ्करणं विधीयते मन्त्रेस्मिन् पुरोडाशशब्दः श्रूयते । **प्रैषमन्त्रे इति** । अत्र पञ्चानां हविषां परिगणनं दृश्यते, यथा—धानाः, करम्भः परिवायः, पुरोडाशः, पयस्या चेति । भृष्टाः यवाः धानाः । 'धाना भृष्टयवे स्त्रियः' इति कोशात् । 'करम्भः दधिसक्तवः' इति कोशात् दधिमिश्रताः सक्तवः करम्भपदवाच्याः । अथवा दीपपात्रसदृशानि यवपिष्टनिर्मितानि पात्राणि करम्भपात्राणीत्यपि । परिवायोऽपि किञ्चिद्धविरिति प्रतीयते । अत्र पञ्चसु हविष्षु पाठात् । परन्तु अन्यत्र कोशादौ क्रियावाचकता दृश्यते । पुरोडाशशब्दश्चानेकार्थः । तथाहि—

पुरोडाशो हविर्भेदे चमस्यां पिष्टकस्य च ।
रसे सोमलतायाश्च हुतशेषे च कीर्त्तितः ।। इति ।

विश्वः । पयस्या च पयसि श्रपिता क्षैरेयीप्रभृतयः । 'पयस्यमाज्यदध्यादि' इति कोशोऽपि । 'गोपयसोर्यत्' इति पाणिनिसूत्रेण यत्प्रत्ययः । **पुरोडाशशब्द इति** । अयञ्च शब्द, लिङ्गसमवायवलेन पुरोडाशापुरोडाशोभयसमूहे पुरोडाशत्वरूपं चिन्हं प्राप्नोति । तत्फलं प्रतिपादयितुमाह—**अतइति** । पुरोडाशापुरोडाशसमूहे प्रयुक्तेन पुरोडाशशब्देनेति । **उद्दिश्येति** । तमेव पुरोडाशमुद्दिश्येत्यर्थः । प्रैपमन्त्रत्वात्प्रेष्यतेऽलङ्करणादिकमित्यर्थः । उपसंहरति—**एवमिति** । ननु सूत्रकारेण 'रूपप्रायात्' 'दूरभूयस्त्वात्' इत्यादिना गौणार्थप्रतिपादनायान्यान्यपि कारणानि प्रतिपादितानि, तर्हि कथं षट्त्वसंख्या पुज्यत इत्याह—**अन्येषामपीति** । एतेषामपि दूरभूय—स्त्वादीनां गुणानां तत्सिद्धयादिष्वेवान्तर्भावो बाध्यः । उदाहरणेन स्पष्टयितुमाह—**यथेति** । **स्तेनं मन इति** । अर्थवादवाक्यमिदम् । स्तेनशब्दश्चौरवाचकः । 'चौरैकागारिकस्तेनदस्युतस्करमोषकाः 'इति कोशात्' कथं मनसि चौर्यमारोप्यत इत्याह—**प्रच्छन्नगामित्वेनेति** । यथा चौराः प्रच्छन्नाः विचरन्ति तथैव मन अपि न चक्षुरादीन्द्रिय—गोचरतामुपैति । अतस्तत्सारुप्यात्स्तेनशब्दस्य मनसि प्रयोगः । यद्यपि वाचो न सर्वथानृतवादिनीत्वमेव तथापि प्रायशः ।

बाहुल्येनानृतवादिनीत्वादेव प्रयोग इति । अयञ्च कस्य विधेरर्थवादः इत्याह—'हिरण्यं ते हस्ते भवति' इत्यस्येति । हिरण्यधारणस्य किं प्रयोजननित्याह—**वाङ्मनःकृतदोषनिवृत्तय इति** । हिरण्यधारणेन वाचिकं मानसिकं

कुत्सितसङ्कल्पजन्यं दूषणं निवृत्तं भवति। अतः पुरुषाणां कृते हिरण्यधारणं प्रशस्तं श्रेयः सम्पादकमिति। अतोऽस्य सारूप्येऽन्तर्भावः। दूरभूयस्त्वरूपं गुणं भूम्न्यन्तर्भावयितुमुपक्रमते—**धूम एवेति**। इदममप्यर्थवादवाक्यम्। दिवसेऽग्नेर्धूम एव दृष्टिपथमायाति, अर्चिषो दर्शनं न भवति। रात्रौ चार्चिरेव दृश्यते न धूम इति। कुतः। **दूरभूयस्त्वादिति**। अतिशयदूरत्वादित्यर्थः। **अवधारणनिर्देश इति**। धूम एव अर्चिरेवेत्यवधारणम्। तदुक्तम्—कथं तु धूम एवेत्यवधारणा। दूरस्थैर्भूम्ना दिवा धूम एव गृह्यते रात्रावर्चिरिति केनदिदंशेन स्तुत्यालम्बनमिति। अर्थवादवाक्यस्योपपत्ति यर्शयति—**तस्मादिति**। दिवसेऽग्निरादित्यमनुप्रविशति, तत्र तेजोभूयस्त्वात्। रात्रौ चास्तमितं गच्छति सूर्यस्तदार्चिरेव दृश्यते न धूम इत्युपपत्तिः। कस्य विन्धेर्वास्यायमर्थवाद इत्याह—**अयञ्चेति**। तत्प्रयोजनमाह—**दिवेति**। दिवा अग्निरादित्यमनुप्रविशति धूमस्य चाधिक्येन दर्शनं जायते। अतः सूर्यस्यैव ज्योतिष्ट्वं दिने। अतएव तन्मन्त्रेणैव प्रातःकालीनो होमोऽनुष्ठेय इति। अन्यत्रापि यत्र गौणप्रयोगस्तत्राप्येवमेव व्यवस्था सम्पादनीयेत्याह—**एवमिति। इतरत्रापीति**। शोभतेऽस्य मुखम्, पूर्णाहुत्या सर्वान् कामानवाप्नोति, न पृथिव्यामग्निचेतव्य इत्यादावपि गौण्या वृत्त्यैवार्थनिर्धारणमिति बोध्यम्। अर्थवादत्वस्य चाप्युपपत्तिरेवमेव कर्त्तव्या। ननु ये ब्राह्मणत्वेन प्रसिद्धास्त एवर्त्विजो भवन्ति तर्हि पुनर्ब्राह्मण्यलाभस्य किं प्रयोजनमित्याह—**न चैतद्विद्म** इति। कदाचिन्मातुरपराधसम्भवात् ब्राह्मणत्वस्य दुर्ज्ञानत्वादेवं विनिर्दिशति। दुर्ज्ञानत्वारेवाज्ञानाद् गौणव्यवहारः। अतएव च 'न चैतद्विद्म' इत्यादिनिर्देशः। स्त्रीणामपराध एवात्र कारणम्, न तु ब्राह्मणत्वविषयकाज्ञानादिकं वक्तुं शक्यते इति निराकरणायाह—**न चात्रेति**। ब्राह्मणत्वविषयकसंशयविपर्ययादिज्ञानं न सम्भवम्। संशयश्चैकस्मिन् धर्मिणि परस्परविरुद्धकोटिद्वयावगाहिज्ञानम्। मिथ्याज्ञानं विपर्ययः। कुतः संशयादिकं न सम्भवन्तीत्याह—**ब्राह्मणत्वस्येति**। उत्पादयितुर्जातिज्ञानपूर्वकमुत्पाद्यस्य चक्षुर्गभ्यत्वेन तदसम्भवात् संशयादीनामसम्भवात्दित्यर्थः। **वार्त्तिके इति**।

तन्त्रवार्त्तिकप्रथमस्य द्वितीयस्य प्रथमे इत्यर्थः। 'न चैतद्विद्म' इत्यर्थवादवाक्यं कस्य विधेश्शेष इत्याह—**अयञ्चेति**। 'प्रवरे प्रक्रियमाणे' इति प्रवरानुमन्त्रणविधेस्यमर्थवाद इति। प्रयोजनमस्याह—**निरुढब्राह्मण्यस्येत्यादिः। अब्राह्मणेऽपीति**। अब्राह्मणोऽपि ब्राह्मण्यं लभतेऽनेन मन्त्रेणेति स्तुतिः प्रतिफलिता भवति। **एवमिति**। अन्यत्राप्येतादृशस्थले गौण्या वृत्त्या

स्तावकत्वं प्रसाध्यम् । ननु विधिस्थलेषु तावत्स्तावकत्वं स्वीक्रियते, निषेधस्थलेषु स्तावकत्वं कथं सङ्गच्छत इत्याह—**एवं निषेधार्थवादेष्वपीति** । निषेधस्थलेऽपि स्वार्थसत्यत्वप्रतिपादनद्वारा गौण्या वृत्त्याकर्मणः निकाप्रतिपादकत्वं बोध्यम् । उदाहरति तद्यथेति । 'बर्हिषि रजतं न देयम्' इति निषेधवाक्यम् । तस्योपपादकश्च—'यो बर्हिषि रजतं दद्यादि' त्यर्थवादः । अस्याप्युपपादकमर्थवादवाक्यं 'सोऽरोदीदित्यादि' । तद्यदश्रु इति । पततं अश्रुणः रजतोपपादकत्वं बोधयति । पुरावृत्तमुदाहरति—**अत्र हीत्यादिना** । रोदनकर्त्तृत्वेनाग्नौ गौण्या रुद्रशब्दस्य प्रयोग इति । रोदनादेवाश्रुश्र सञ्जायते । तच्च शुक्लं भवति । रजतमपि शुक्लमेव । अतः सारुप्यादश्रणि रजतत्वोपचारः । अश्रु च रोदनवेतुकमत एव रजतदानमपि रोदनहेतुरेवे भन्निष्यति । **कुटुम्बपीडायामिति** । प्रायः दुःखजन्यमेव रोदनं दृश्यते । अतएवोक्तम्—दृष्टवियोगादनिष्टसंयोगाद्वा रोदनं भवति । न तदिच्छातो भवति । इति । पीडाजन्याश्रुजन्यरजतदानं निन्दति । निन्दया च निवर्त्तते जनोऽनिष्टात्कर्मणः । एतोऽर्थवादाः निषेधशेषा भवन्तीति । ननु येषु खल्वर्थवादवाक्येषु स्तुतिनिन्दार्थप्रतिपादकतायां सन्देहः समुत्पद्यते । तेऽर्थवादाः विधिशेषाः वा निषेधशेषा वेति कथं निर्णय इत्याह—**विधिनिषेधैकवाक्यतयेति** । विधिवाक्येन सहैकवाक्यतासम्भवे तच्छेषाः, निषेधवाक्येन सहैकवाक्यतासम्भवे । च तच्छेषा अर्थवादाः भविष्यन्तीति न किमपि दूषणम् । तन्निर्णयः शेषत्वनिर्णय इति । उदाहरति—**यथेति** । **ऋचेति** । ऋग्वेदिकमन्त्रेणेत्यर्थः । स्तुवते स्तवनं करोति तदासुरानयनेऽपि समर्थः । यदि साम्ना स्तौति तदासुरान् नानमति । कया च स्तवनमुचितमित्याह—**य एवमिति** । साम्नैव स्तुवीतेत्यर्थः । अप्रगीतयर्चा स्तोतव्य प्रगीतया वेति सन्तेहमुपयादयितुमाह—**तत्रेति** । सन्देहनिराकरणयाह—**अन्तिमसामविध्येकवाक्यतयेति** । विधिवाक्येनसहैवैकवाक्यतया निर्णयमधिगच्छति । निर्णयः क इत्याह—**प्रगीतयेति** । प्रगीतया स्तोतव्यमप्रगीतया च निन्दितव्यम् । अत्र निर्णायकः क इति चेत्, न कोऽपि । कुतः । विनिगमनाविरहात् । तर्हि तद्विपरीतमपि सम्भाव्यत इत्याह—**अन्यचेति** । अप्रगीतायाः स्तुतिप्रतिपादकत्वम्, प्रगीतायाः निन्दाप्रतिपादकत्वमित्यपि वक्तुं शक्यते । कथमुभयमुपपद्यत इपत्याह—**अतिक्रूरानिति** । अतिक्रूरस्वभावानसुरानप्यानयितुमेषा समर्था चेत्तर्हि अतिसरलस्वभावान् देवानानयने किम् ? अर्थादानयिष्यत्येवेत्यर्थः । अनेन च प्रकारेण स्तावकत्वं प्रसिद्ध्यति । एवमेव यप्यनमा शीघ्रगमनस्वभावानसुरानप्यानयितुं न शक्यते तर्हि मन्थरप्रवृत्तिसम्वलितान् देवान् कथकानयिष्यति । अनेन च निन्दा गम्यते । अनेन

प्रकारेणोभयप्रतिपादकता सिद्ध्यतीति भावः। उभयार्थप्रतिपादकतां समर्थयितुमाह—**यथोक्तमिति**। भाष्यकारेणेति शेषः। नवमाध्यायेद्वितीयपादेऽष्टमधिकरणे। संदिग्धस्तुतिनिन्दामपि च प्रक्रमादेव निर्णय इतिवार्त्तिकप्रसङ्गः।

उदाहरणान्तरं दर्शयति—**एवमिति**। जर्तिलयवाग्वा गवीधुक् यवाग्वा वा होमः कार्यः इत्यत्र सन्देहः। ततश्चारण्यग्राम्यपशुविषयकहिंसां निषेधति। ततश्च पुनः जर्तिले गवीधुगि वा अनाहुतित्वं दर्शयति—ततश्च केन होतव्य इति सन्देहेऽऽह—**तस्मादिति**। अत्र जर्तिलादिविषयकनिन्दा प्रतिपाद्यते। तत्कथमिति चेत्—**पयोहोमविध्येकवाक्यतयेति**। 'अजाक्षीरेण जुहोती'ति विध्येकवाक्यत्वेन पयसः प्रशंसा। जर्तिलादीनामर्थान्निन्दैवेति निर्णयः। **एवमिति**। अत्राप्यभिधारणविषयकसन्देहनिराकरणाय विचार्यते—**यदभिधारयेदित्यादि**। योऽभिधारणं करिष्यति स रुद्रायास्येपशून् दास्यति। यो हि नाभिचारणमनुष्ठास्यति स रुद्रायास्ये पशून् नैव दास्यतीति। अतः रुद्राय पशुदानं प्रशस्तमिति निश्चिनोति। अतश्चाभधारणं कर्त्तव्यमिति निश्चयः। स्तावकत्वमस्य प्रदर्शयति—**अभिधारणविध्येकंवाक्यंतयेति**। अभिधारणं त्र्यम्बकपुरोडाशदेवतारूपरुद्रास्यनिधानसम्पादकमिति तस्य स्तुतिः। एवमेव होतव्यमग्निहोत्रं न वा होतव्यमिति विचार्थं।

यदि यजुषग्निहोत्रं सम्पादयेत्तर्हि अयथापूर्वं सम्पादितं स्यात्। अयथापूर्वमविधिपूर्वमित्यर्थः। यश्च नैवाग्निहोत्रं सम्पादयेत्तमग्निदेवः पराभवेत्। तर्ति किं कर्त्तव्यमिति समाधत्ते—**तूष्णीमेव** होतव्यमग्निहोत्रमिति। एवमेव 'उदिते जुहोति' इति विधिवाक्यम्। उभयोश्चैकवाक्यता भवति। एकवाक्यतया चानुदितहोमस्य निन्दा तथोदितिहोमस्य प्रशंसा निश्चिनोति। निन्दायाः तात्पर्यमुपवर्णयति—**यथाहुरिति**। भाष्यकारा इति शेषः द्वितीयाध्यायस्य चतुर्थे पादे एकविंशतितम—सूत्रव्याख्याने। **नहीति**। निन्द्यं निन्दितुं निन्दा न प्रवर्त्तते अपि तु विधेयं स्तोतुमेव प्रवर्त्तते इति तात्पर्यं निन्दावाक्यस्य। विधिनैक—वाक्यतात्वेन स्तावकत्वनिश्चायकाः हेतवः समुपस्थाप्यन्ते—**एवमित्यादिना**। फलादय एव हेतवः। **विधिसरुपाणामपीति**। वस्तुतो विधयो न सन्ति तथापि विधिवद्भासन्ते, तेषामपीति। यत्रासंख्यमुदाहरति—**तद् यथेति**। 'औदुम्बरो यूपो भवती'ति विधिवाक्यम्। 'उर्ग्वा उदुम्बरः' इत्यर्थवादवाक्यम्। उभयोरेकवाक्यता भवति। यद्यपि अर्क् प्राप्तिरूपं फलं प्रतीयते तथापि स्तावकत्वमेवास्य वाक्यस्य

स्वीकुर्वन्ति । अर्क शब्दोऽन्नपर्यायः । कारणं स्पष्टीकरोति—**क्रत्वर्थयूपोद्देशेनेति** । 'औदुम्वरो यूपो भवति' इत्यनेन वाक्येन यूपमुद्दिश्यौदुम्वरता विधीयते । यूपश्च क्रत्वर्थः, न पुरुषार्थः । क्रतावेवोपयुज्यमानत्वात् । अतस्तस्या औदुम्वरतायाः फलाकाङ्क्षैव न स्यात् । तस्मात्स्तावकत्वमेव युक्तम् । औदुम्बरतायाः कथन्न फलपरत्वमित्याह—**कामशब्दाभावेनेति** । औदुम्वरत्वेन सह कामशब्दप्रयोगाभावात् फलबोधकत्वस्याप्रतीत्यभावात् । उदाहरणान्तरं दर्शयति—**एवमिति** । 'यस्य पर्णमयी जुहूर्भवति' इति विधिवाक्यम् । 'न स पापं श्लोक' मित्यादिना फलं तस्य निर्दिशति । अपापश्लोकश्रवणरूपफलप्रतिपादकत्वेऽपि न फलविधायकत्वमपि तु अर्थवाक्यत्वमेव अर्थात् स्तावकत्वमेवास्येति सिद्धान्तः । अत्र जुह्वादिकमुद्दिश्य पर्णमयीत्वं विधीयते । स च क्रत्वर्थः न तु पुरुषार्थः अतः पर्णमयीत्वादिविधीनां फलाकाङ्क्षैव नोदेति । तस्मात्फलप्रतिपादकत्वाभावेऽपि स्तावकत्वमेव युक्तम् । अत्र चतुर्थाध्यायस्यतृतीयपादस्थं पारमर्षं सूत्रमुपन्यस्यति—**तथा चेति** । परार्थत्वात् क्रत्वर्थत्वात् फलश्रुतिः फलश्रवणमर्थवाद एव भवति न तस्य फलस्य विधायकः । **अत्रेति** । द्रव्यफलश्रुत्यापि अर्थवादत्वमेवेति विरुपितं पूर्वम् । संस्कारमुपस्थापयति—**तीर्थे इति** । 'तीर्थे स्नाति' इति विधिवाक्यम् । तदर्थं तीर्थमेव समानानां भवतीत्युक्तम् । अत्र यद्यपि संस्काररूपं फलं प्रतीयते तथाप्यर्थवादत्वमेव । वर्म उदाहरति—**वर्म वेति** । प्रयाजानुयाजाः यज्ञस्य वर्मस्वरूपाः सन्ति । भातृव्यस्य शत्रोः पराभवाय यजमानस्य च वर्म वर्त्तते । **कर्मणीति** । आरादुपकारके प्रयाजादौ कर्मणि फलं न श्रूयते तथापि क्रत्वर्थत्वादर्थवादत्वमेव **'उभयत्रापीति'** 'वर्म वा एतद् यज्ञस्य' 'वर्म यजमानस्य' इत्यत्रपीति । **प्रकरणादिति** । विनियोजकाच्चतुर्थ—प्रमाणादित्यर्थः । **क्रत्वर्थत्वावगतेरिति** । क्रतुप्रयोजनकत्वज्ञानादित्यर्थः । **अर्थवादत्वमिति** । स्तावकत्वमिति भावः । ननु यत्र क्रतुप्रयोजनकत्वमेव न स्यान्नवा किमपि फलं वा श्रूयते, तत्र फलग्रहणं कुत स्यादित्याह—**यत्र त्विति** । यत्र फलावगमस्तत्रार्थवादप्रतिपादितं फलमेव गृह्यते रात्रिसत्रादाविति । तत्र न किमपि फलं श्रूयते, परन्तु 'प्रति तिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' । 'ब्रह्मवर्चसिनोऽन्नादा वा भवन्ति' इत्यर्थवादवाक्ये प्रतिष्ठारूपं फलं श्रूयते । तदेव फलं रात्रिसत्रस्य भविष्यतीति मन्यते । अतएवोक्तम्—'आर्थवादिकं फलं गृह्यते' इति । अन्यदुदाहर्त्तुमाह—**एवमिति** । 'शूर्पेण जुहोति' इति विधिवाक्यम् । 'तेन ह्यन्नं क्रियते' इत्यर्थवादवाक्यम् । उभयोश्चैकवाक्यता भवति । हिशब्दश्च हेतुवाचकः । अतो

हिशब्दप्रयोगात् हेतुवाचकत्वं प्रतीयते तथापि हेतोस्नावश्यकत्वात् स्तुतेश्चापेक्षितत्वादर्थवादत्वमेव भवति न हेतुवाचकत्वम् । **निष्फलत्वाच्चेति ।** हेतुवाचकत्वे सतीत्यर्थः । हेतोर्न किमपि फलं पश्यामः । अत्रैव विचार्यते— हेतोर्न किमपि फलं वर्त्तते इति यदुक्तं तन्न शोभते । यद् पदन्नसाधनं तत्रहोमसाधनमिति व्याप्तिकल्पनार्थं तस्यावश्यकत्वादिति शङ्कते—**न चेति** व्याप्तिकल्पनया च तर्व्यादिनिष्ठहोमसाधनतापि प्राप्यते तेषामप्यन्नसाधनत्वात् । तदेव च फलमपि स्यात् । तन्न समीचीनमिति समाधत्ते—**प्रत्यक्षशिष्टेलादिना** । 'शूर्पेण जुहोति' इति प्रत्यक्षेण विधिना शूर्पस्य प्राप्तिर्भवति । दर्व्यादीनाञ्च काल्पनिकं होम—साधनत्वं वर्त्तते । उभयोर्मध्ये विधिविहितस्यैव प्रावल्याच्चसूर्पस्यैव ग्रहणं भवति । सर्वत्र हेतुविधावेवमेव न भवतीत्याह—**यत्र त्विति ।** अत्र हेतुविधीनां निष्फलत्वान्न ग्रहणं भवति परन्तु यत्र हेतुविधेः फलवत्ता प्रतीयते तत्र हेतुविधिरेवाश्रीयते । उदाहरति—**यथेति** । 'आतिथ्यायां चतुर्गृहीतान्याज्यानि भवन्ति इति विधिवाक्यम् । तदनन्तरं 'नह्यत्राश्याजान् यक्ष्यन् भवति' इत्युक्तम् । हिशब्दोऽत्रापि वर्त्तते, स च हेत्वर्थकः । स चानूस्य विधिप्रमेयत्वाभावे । 'आतिथ्यायां चतुर्गृहीतान्याज्यानि भवन्ति' इति प्रकृतितः चतुर्गृहीत इति पदेन चतुर्गृहीतचतुष्टयं प्राप्यते । 'चतुर्गृहीतान्याज्यानि' इत्यत्र वहुवचनप्रयोगो दृश्यते । वहुवचनस्य च त्रित्वे एव परिसमाप्तिः । एतदर्थमाह—**कपिञ्जलाधिकरणन्यायेनेति ।** अनेन च चतुर्गृहीतत्रित्वं विधीयते । विधिश्चतुर्गृहीतं तर्हि त्रित्वं निर्वर्त्यं चतुर्गृहीतं न वेति ज्ञानविषयताश्रयो न भवेत् । **एवमिति** । चतुर्गृहीतान्याज्यानि भवन्तीतिवत् । **द्वादशाहे इति ।** एतन्नामके यागे इत्यर्थः । 'पत्नीसंयाजन्तान्हानि सन्तिष्ठन्ते' इत्युक्तम् । तदनु 'न बर्हिरनुप्रहरति' इति च । पत्नीसंयाजान्तता कदानुष्ठेयेत्याह—**असंस्थितो हीति** । 'असंस्थितो हि यज्ञस्य' इत्यत्रापि हिपदं श्रूयते । तच्चापि हेतुवाचकम् । अतोऽसंस्थारूपंहेतोनिर्देशादन्तिमदिनात्पूर्वमस्मिन्नेव दिनेऽनुष्ठानसमर्थनाय हेतोर्विद्यमानत्वात् । यदि तत्समर्थकहेतुर्न स्यात्तर्हि किं स्यादित्याह—**अन्यथेति ।** हेतोरभावे इति । विधिवाक्ये 'अहानि' इति सामान्येन निर्देशात् सर्वत्र सर्वेष्वहःसु ।

सा = पत्नीसंयाजान्तता स्यात् अथात् सर्वेषु दिनेषु अथवा यस्मिन् कस्यिंश्च्च दिने वा स्यादित्यनियमः प्रसज्येत । **एवमिति ।** 'उपव्ययते देवलक्ष्ममेव तत्कुरुते' इति विधिवाक्याम् । तदनु च 'निवीत' मनुष्याणां प्राचीनावीतं पितॄणामुपवीतं देवानाम् 'इत्यर्थवादवाक्यम्' **उभयोश्चैक-**

वाक्यता भवति। अत्र निवीतादिपदवाच्यतावच्छेदकताश्रयभूता परिकरवन्धादिरुपा या क्रिया तस्याः विधायकत्वेन गम्यमानानां वाक्यानामुपवीतार्थवादत्वं भवति। परिकरशब्दश्चानेकार्यमभिदधाति। तथाहि—

भवेत्परिकरो व्राते पर्यङ्कपरिवारयोः।
प्रगाढगात्रिकाबन्धे विवेकारम्भयोरपि ॥ इति।

विश्वः। 'यत्नारम्भौपरिकरौ' इति त्रिकाण्डशेषश्च। कुतश्चार्थवादत्वमित्याह—**स्वातन्त्र्येणेति**। स्वतन्तविधिरूपेण कुत्राप्यश्रवणादित्यर्थः। हेत्वन्तरमुपदर्शयितुमाह—**शास्त्रान्तरेणेति**। धर्मशास्त्रादिनेत्यर्थः। मनुष्यादिः प्रधानं यस्मिन् कर्मणि तत्र निवीतादीनां विहितत्वादित्यर्थः। भवतु नाम, परन्तु यत्र तद्बोधकं शास्त्रान्तरमेव न वर्त्तते, तत्र किं कार्यमित्याह—**यत्र त्विति**। यत्र शास्त्रान्तरं न मिलति तत्र स्वतन्त्रस्य विधेः कल्पनमुचितमिति। उदाहरति—**यथेति**। मृताग्निहोत्रे श्रूयते 'उपरिहि देवेभ्यो धारयती'ति। कस्योपरीत्याह—अधस्तात्समिधं धारयन्निति। अधोभागे समिधं स्थापयित्वा उपरितं धारयेदित्यर्थः। जीवदग्निहोत्रे च कथं स्यादित्याह—**जीवदग्निहोत्रगतमिति**। पूर्वन्तावत् स्रुग्दण्डधारणं ततश्च समिद्धारणमिति। कथमेवं कल्पितमित्याह—**शास्त्रान्तराप्राप्तेरिति**। एतदर्थप्रापकं शास्त्रान्तरं न मिलति। अत एवं विधीयत इत्यर्थः। तृतीयाध्यायस्य तृतीयपादस्थं पारमर्षं सूत्रमत्रावतारति—**तथा चेति**। विधिस्तुधारणेऽपूर्वत्वात्।

**एवमिति। नयनं दक्षिणमित्यादि**। 'नयनं दक्षिणं दीक्षित पूर्वमङ्क्ते। इति दीक्षितस्य नयनाञ्जनविधिः। तदनुप्रोक्तम्—सव्यं हि मनुष्याः पूर्वमञ्जते। इति तच्छेषः। अत्र च सव्यं नयनं पूर्वाञ्जनं कार्यमितिश्रुतम्। तच्च शास्त्रान्तराप्राप्तत्वादनेन विधीयते। अप्राप्तत्वादज्ञातत्वात्। **द्रव्यविधिसरुपाणमिति। प्रागुक्तमिति**। जर्तिलादीनामनाहुतित्वनिरूपणप्रसङ्गे इत्यर्थः।

**चयने इति**। दृष्टकाचयनप्रकरणे। 'चरुमुपदधाति' इति विधिः। 'बृहस्पतोर्वा एतदन्नं यन्नीवाराः' इति तच्छेषः। कथमस्यार्थवादत्वमित्याह—**देवताविधिसरूपस्येति**। देवताविधिसारूप्यादस्यार्थवादत्वं स्वीकृतं भवति। कुत इत्याह—**चरूपधानविधेरिति**। विधेरस्य देवताकाङ्क्षारहितत्व-

मित्याह—अस्य चेति। चरुपधानविधेरित्यर्थः। **तद्धितचतुर्थ्यभावेनेति**। देवताबोधकेनेति शेषः। तद्धितप्रत्ययेन चतुर्थीविभक्त्या वा देवता बोध्यते तयोरभावाद् देवताविधायकत्वासम्भवात्। **एवमिति**। पूर्वोक्तप्रकारेणेत्यर्थः। **अन्यत्रापीति**। यत्रार्थवादत्वमावश्यकं भवेत्तत्रेत्यर्थः। **अह्यमिति**। अर्थवादत्वं प्रसाध्यमिति दिक्। **अर्थवादसामान्यमुपपाद्यार्थवादं विभजते—ते चेति**। **द्विविधा इति**। द्विप्रकाराइत्यर्थः अर्थवादस्य प्रकारद्वयमिति यावत्। यद्यप्यत्र मीमांसापरिभाषायां प्रकारचतुष्टयं प्रतिपादितम् यथा—स चतुर्विधः निन्दा—प्रशंसापरकृतिपुराकल्पभेदात्। अत्र च प्रकारद्वयमेव प्रतिपाद्यते तथापि न दोषाय कल्पते। निन्दाप्रशंसार्थवादयोः पूर्वमेव यथा—प्रसङ्गं प्रतिपादित्वात्। शेषावत्रविभज्य प्रतिपाद्यते। परकृतिपुराकल्पभेदादिति। परकृतिं लक्षयति—**एककर्त्तृकेत्यादिः**। एकः कर्त्ता यस्यासावेककर्त्तृकं यच्चरित्रं तस्यान्वाख्यानं कथनं परकृतिरिति। मीमांसापरिभाषायाञ्च—परेण महता पुरुषेणेदं कर्मकृतमिति प्रतिपादकोऽर्थवादः परकृतिरिति लक्षितम्। व्याख्यातञ्चाशुबोधिन्यां गुरुचरणैः—परेण केनचिन्महता पुरुषेणेदं कर्म अनुष्ठितंमित्यर्थप्रतिपादकं वाक्यं 'परकृति' संज्ञकोऽर्थवाद इति। उदाहृतञ्च 'अग्निर्वा अकामयत' इत्यादिः। अत्राग्निदेवरुपेणैकेन महता पुरुषेण कामना कृतेति ज्ञायते। एवमेव जीवदेवोऽप्युदाहरति—मे मह्यं माषान् पचतेति। 'अमेध्या वै माषा' इति। न यागे उपयुज्यन्ते। कुत इत्याह—**न वेति**। ये माषयाकं कुर्वन्ति तेषामिति। देवा यागे हविर्न स्वीकुर्वन्तीत्यर्थः। तर्हि किं कर्त्तव्यमित्याह—**तस्मादिति**। आरण्यस्य प्रशंसानेन क्रियते। परकृतिरुपोऽयमर्थवादः। परकृतित्वमेव साधयति—**एकसंज्ञकचरित्रेत्यादिना**। पुराकल्पं स्पष्टयितुमाह—उल्मुकैरिति। इदञ्चार्थवादवाक्यम्। अस्यार्थवादवाक्यस्य विधिवाक्यं दर्शयति—**गृह्यते-रित्यादिना**। अनयोरेकवाक्यता भवति। पुराकल्पत्वं प्रसाधयति—**अनेककर्त्तृकेत्यादिना**। परिभाषायाञ्च—परप्रवक्तृकार्थादिप्रतिपादकः पुराकल्प इति। व्याख्यातञ्चाशुबोधिन्याम्—परेण केनचिदुक्तस्यार्थस्य प्रतिपादकमथवा पूर्वघनिष्टतस्य वृत्तस्य प्रतिपादकं वाक्यं 'कुराकल्प' संज्ञकोऽर्थवाद इति। उदाहृतञ्च 'तमशपद्धिया धिया त्वा वध्यासु'दित्यादिः। अत्र गृहपतेरेवेत्यादिर्विधिवाक्यम्—'उत्मुकैर्ह स्मेत्यादि चार्थवादनाक्यम्। उभयोरेकवाक्यता। अत्र च बहुकर्त्तृकचरित्रान्वाख्यानं वर्त्तते 'अतएवायं पुराकल्पशब्देन व्यपदिश्यते' मन्त्रार्थनिरूपणपूर्वकमेकवाक्यतां दर्शयति—**यस्मादिति**। पूर्वन्तावत् सत्रानुष्ठातारः स्वनुष्ठितस्य सत्रस्य सुसिद्ध्यर्थं प्रत्यक्षमेवाग्निदेवमाहूय पूजनादिकं सम्पादितम्। ततश्च ते देवा असुरा-

दिभिः पराभूताः समभवन् । तर्हि किं कर्त्तव्यमित्याह—**तस्मादिति** । **पराभवकारणादित्यर्थः** । ततश्च तत्राग्नीन् समारोप्य अर्थात् संस्थाप्य आनयनञ्च कृत्वा अरणिभ्ना निर्मथ्य गृहपत्यग्निषु प्रक्षिपेदिति । अनेन प्रकारेणोभयोरेकवाक्यता सम्पद्यतेऽर्थश्च निर्गलितो भवतीत्यर्थः । अर्थवादानां स्तुतिनिन्दाप्रतिपादकत्वेन विधिनिषेधवाक्याभ्यामेकवाक्यतयैव प्रामाण्यं भवतीत्युपसंहरति—**तस्मादिति** । सर्वे चार्थवादाः विध्यपेक्षितस्तुतिप्रतिपादकत्वेन निषेधापेक्षितनिन्दाप्रतिपादकत्वेन वा ताभ्यां सहैकवाक्यतयैव धर्माधर्मयोः प्रामाण्यं भजन्ते । अर्थवादानां प्रामाण्याय प्रकारान्तरं प्रदर्शनायाह **केषाञ्चित्त्विति** । अर्थवादानामिति शेषः । केषाञ्चिद्विधिवाक्यानां श्रवणानन्तरं सन्देहः समुत्पद्यते । तत्र सन्देहनिवृत्तिरिपि प्रयोजनमर्थवादानां भवति । उदाहरति—**यथेति** । **चयने इति** । चयनप्रकरणे इत्यर्थः । विधिवाक्यं प्रस्तौति—**अक्ता इति** । अञ्जिता इत्यर्थः । शर्कराः क्षुद्रपाषाणविशेषाः । अनेन विधिवाक्येन शर्करानुद्दिश्याञ्जनं विधीयते । अञ्जनविशिष्टशर्करानुद्दिश्योपधानं विधीयते च । अत्र सन्देहः शर्कराणामञ्जनं केन द्रव्येण कार्यमिति । तैलादिनाप्यञ्जनं कर्त्तुं शक्यते घृतादिनापि । तर्हि केन द्रव्येणाञ्जनं विधेयम् । विनिगमनाविरहाच्च तैलादिना घृतेन वा येन केनाप्यञ्जनसमर्थेनाञ्जनं विधेयमिति प्रतिभाति, परन्तु नैतत्समीचीनम् । विधेरस्यशेषो वर्त्तते—'तेजो वै घृतमि'ति' अतः घृतेनाञ्जनं कुर्यात् यः स तेजस्वी स्यादिति अनेनार्थवादेन तैलादीन् व्यावर्त्त्य घृतेनैवाञ्जनं कर्त्तव्मति प्रतिपादितो भवति । तस्मात्सन्देहनिर्णायकत्वमप्यर्थवादानां प्रयोजनमिति अत्रैवोदाहरणान्तरमुपस्थापयितुमाह—**एवमिति** । **चातुर्मास्येष्विति** । चातुर्मास्यप्रकरणे इत्यर्थः 'यवमयानि करम्भपात्राणि भवन्ति' इति विधिवाक्यम् । तत्र यवशब्दे सन्देहः किं दीर्घशूकविशिष्टो यवः प्रियङ्गुर्वा । कुतः सन्देह इत्याह—**लोके इति** । उभयत्र यवशब्दस्य प्रयोगो लोके दृश्यते । अतएव सन्देह इत्यर्थः । अत्र सञ्जातस्य सन्देहस्य निवृत्तिरर्थवादवाक्येन भवति । उपस्थापयति चार्थवादवाक्यम्—**यदान्येति** । यस्मिन्कालेऽन्या ओषधयो म्लायन्ते तस्मिन्नपि काले एते मोदमानाः सुप्रसन्नाः तिष्ठन्तीति । **ओषधिफलपाकान्ता इति** । ग्लै म्लै हर्षक्षये । प्रियङ्गवश्च पूर्वमेव पक्वान्नाः भवन्ति । सर्वौषधिपाकानन्तरं दीर्घशूकविशिष्टस्य फलपाको जायते । अतोऽनेनार्थवादेन दीर्घशूका एव यवाः गृह्यन्ते यवमयानि करम्भपात्राणीत्यत्र । अनेनापि सन्देहनिर्णयजनकत्वं प्रसाधितं भवति । **अलमिति** । पर्याप्तमित्यर्थः । अर्थवादविषयकं प्रतिपादनं पर्याप्तमिति यावत् । **प्रपञ्चेनेति** । पचि विस्तारे ।

विस्तृतव्याख्यानेनेत्यर्थः । प्रस्तुतविवेचनाधिकविवेचनस्यावश्यकता नास्तीत्यर्थः ।

अर्थवादनिरुपणानन्तरं क्रमप्राप्तं मन्त्रं निरूपयति—**मन्त्राणामिति** । नन्वर्थवादान्तरं हेतुवन्निगदाधिकरणादीनां निरूपणं वर्त्तते मूले, तर्हयत्र व्युत्क्रमविचारः कथं सङ्गच्छत इति चेत्, न 'कुतः' एतेषामपि विषयाणामर्थवादे एव सन्निवेशात् । तत्रैव प्रतिपादनस्याप्यावश्यकत्वात् । तेषामपि वस्तुतोऽर्थवादत्वात् । तस्मादर्थवादनिरूपणानन्तरं मन्त्रनिरूपणं **सुसङ्गतमेवेति** । मननान्मन्त्रा इत्युक्तम् । **प्रयोगसमवेतार्थस्मारकत्वेनेति** । प्रयोगो यागाद्यनुष्ठानं तत्समवेतस्तद्विषयीभूतो यः पदार्थः न तु समवायसम्बन्धेन वर्त्तमानः, समवायस्यैवात्राभावात् । ननु प्राभाकरमते समवायस्य विद्यमानत्वात्समवायसम्बन्धेन वर्त्तमानत्वं कथन्नेति चेत्, न । भाट्टमतस्थापयितुमेवास्य ग्रन्थस्य प्रवृत्तत्वात् । भाट्टभास्कर इति नाम्नैव तदर्थस्य प्रकाश्यमानत्वात् । तेषां पदार्थानां स्मारकत्वेनैवार्थवत्त्वं मन्त्राणामिति भावः । **पदार्थविधमेति** । अनुष्ठानोपयोगिपदार्थवोधकत्वेवत्यर्थः । पदार्थत्वञ्च पदजन्यप्रतीतिविषयतावच्छेदकताश्रयत्वम् । अतएवोक्तं सारविवेचिन्याम्—'कर्मणां स्मरणपूर्वकानुष्ठानस्यैव सर्वत्र विहितत्वात् तादृशस्मारकपदार्थपेक्षायां मन्त्राणामेव तादृशस्मृतिजनकत्वेनोपयोगस्य समुचितत्वात्' इति । **धर्मे इति** । धर्मपदमधर्मस्याप्युपलक्षकम् । अतो धर्माधर्मयोरिति । अतएव निषेधविषयीभूतानामप्यत्र प्रतिपादनं सङ्गच्छते । **प्रामाण्यमिति** । मन्त्राणामिति शेषः । स्मृताः पदार्था इति । यागाद्यनुष्ठाने मन्त्रेण पदार्थस्मरणमावश्यकम् । मन्त्रस्मृताः पदार्था एवानुष्ठानोपयोगिनो भवन्ति । अतएवोक्तमापदेवेन—'मन्त्रैरेव स्मर्त्तव्यमिति नियमविध्याश्रयणात् । **तत्स्मरणमिति** । पदार्थस्मरणमित्यर्थः । वाक्यार्थप्रभाकरणमिति । वाक्यार्थवोधकत्वात् । तथैव च तेषां प्रामाण्यात् । वाक्यार्थरूपा या प्रमा तस्याः करणमित्यर्थः । अर्थात् वाक्यार्थप्रमां प्रति पदार्थस्मरणस्य बोध्यमिति भावः । सत्यमेवैतत् । पदजन्यपदार्थवोध्य वाक्यार्थवोधं प्रति कारणता सर्वेऽङ्गीकुर्वन्ति । स्पष्टञ्चैतच्छाब्दवोधविचारप्रसङ्गे । **पदार्थास्तत्स्मृतिर्वेति** । पदजन्यपदार्थानां पदार्थस्मृतीनां वा वाक्यार्थप्रमां प्रति करणत्वमिति । तत्फलमाह—**तेनेति** । 'देवस्य त्वा सवितुरित्यादिमन्त्रः' 'देवस्य त्वेति निवपति' इति तद्विनियोजकं वाक्यम् । एतद्वाक्यघटकः 'देवस्य त्वेति' मन्त्रभागोऽपि । इतिकरणान्तः पदार्थः, अतएवैषा वाक्यार्थप्रमां प्रति करणत्वं भजते । अनेनप्रकारेण च प्रामाण्यं भवतीति वेदित्व

वेदितव्यम्। अर्थवत्त्वञ्च तस्य प्रतिपादयति—**भवति चेति**। अनुष्ठानविषयीभूतनिर्वापपदार्थस्मारकत्वेन मन्त्राणामप्यर्थवत्त्वमिति। प्रयोजनवत्त्वमित्यर्थः। निर्वापादिपदार्थवदेव दधिव्रीह्यादेरपि तत्तत्पदजन्यपदार्थत्वाद्वाक्यार्थप्रमां प्रति करणत्वेन प्रामाण्यं स्यादिति शङ्कते—**न चेति**। समाधत्ते—**तेषामिति**। दधिव्रीह्यादीनामित्यर्थः। **अबोधकत्वेनेति**। पदार्थादिबोधकत्वाभावेनेत्यर्थः। **तद्विशेषरूपप्रामाण्यासम्भवादिति**। बोधकत्वविशेषरूपप्रामाण्यासम्भवादित्यर्थः। प्रामाण्यमपि बोधकत्वविशेष एव, मन्त्राणां कथं प्रामाण्यमित्याह—**मन्त्राणामिति**। तुपदञ्च दध्यादीनां प्रामाण्यव्यावर्त्तकम्। मन्त्राश्च वाक्यात्मका एव भवन्ति। वाक्यानाञ्च बोधकत्वं सुप्रसिद्धमेव। **तदुपपद्यत** इति। प्रामाण्यमुपपद्यत इत्यर्थः। वाक्यार्थबोधकत्वादिति शेषः।

न्यायसुधाकृन्मतमत्रोपस्थापयितुमाह—**राणक इति**। पूर्वमतं व्यावर्त्तकमत्र तुपदम्। **वाक्यविधयैवेति**। वाक्यार्थबोधकत्वेनैव मन्त्राणां प्रामाण्यं भवतीत्यर्थः। **उक्तमिति**। न्यायसुधायामिति शेषः। प्रामाण्यप्रकारं दर्शयति—**अपूर्वसाधनत्वोपहित इति**। अपूर्वनिष्ठसाध्यतानिरूपितसाधनताविशिष्टे लवनादावित्यर्थः। लवनादिकार्यं प्रति आत्मनोऽङ्गत्वप्रतिपादनद्वारा आत्मन अनुष्ठानाङ्गत्व साधयति **मन्त्र इति**। **प्रामाण्यमिति**। धर्माधर्मयोरिति शेषः। अश्नुते अर्थात् व्याप्नोति प्राप्नातीत्यर्थः। अशू व्याप्तौ। अत्र न्यायसुधामेवप्रमाणयति—**यथोक्तमिति**। न्यायसुधायामिति शेषः। श्लोकस्यार्द्धभागावुद्धृतौ वर्त्तेते। सम्प्रति श्लोकयोः क्रमश्चेत्थं दृश्यते।

विधिप्राप्तानुवादत्वान्नं तथापि प्रमाणता।
अपूर्वसाधनत्वाच्च लवनादौ समीहिते॥
आत्मनोऽङ्गत्वबोधेन मन्त्रः प्रामाक्यमश्नुते।
अश्नुतद्रव्ययागादिकल्पनाच्च प्रमाणता॥ इति।

पदार्थस्मारकाः मन्त्रा इत्युक्तम्। तन्न संघटते। पदार्थानां स्मरणन्तु तत्पदार्थध्यानादिनापि सम्भवम्। अतो मन्त्राणां निष्प्रयोजनत्वमेव प्रतीयत इत्याशङ्कते—**न चेति**। समाधत्ते—**दृष्टार्थेत्यादिना**। 'स्वाध्यायोऽध्येतव्य' इत्यध्ययनविधिनार्थज्ञानरूपं दृष्टमेव प्रयोजनं मन्त्राणामिति प्रतिपादितम्। तच्चार्थज्ञानं प्रकारन्तरेणादि सम्भवम्। अतोऽत्र नियमः क्रियते—

'मन्त्रैरेव स्मर्त्तव्यम्' इति। तेन च नियमांशेन नियमादृष्टं कल्प्यते।

तदेव च प्रयोजनं मन्त्राणामिति। एतदेव स्पष्टयितुमाह—**यथा हीति**। यद्यपि लौकिकेनापि वाक्येन तदर्थज्ञानं जायते तथापि न तद्धर्माय कल्पते। अदृष्टजनकत्वं तत्र न स्वीकुर्वन्ति मीमांसकाः। अतो विधिवाक्येनैव पदार्थ-स्मरणमिति नियमयन्ति एतदेव द्रढयितुमुदाहरति—**यथा चेति**। अर्थवादनां स्तुतिप्रतिपादकत्वं प्रसाधितम्। तच्च लौकिकेनापि वाक्येन सम्भवति तथापि अर्थवादैरेव स्तुतिः कर्त्तव्येति नियम्यतेऽन्यथार्थवादानां वैयर्थ्यं स्यात्। **धर्म इति**। याग इत्यर्थः। **फलायेति**। फलसाधनायालमित्यर्थः। **तथेति**। अर्थवादस्थल इव। **मन्त्रैरेवेति**। फलप्रतिपादनाय प्रभुरिति। अर्थात् मन्त्रैरेव स्मृताः पदार्थाः स्वर्गादिफलप्रतिपादनाय समर्था इति। नियमस्वीकारे तदंशेऽदृष्टकल्पना कर्त्तव्या भवति। सा चादृष्टकल्पना मन्त्रोच्चारणादेव भवतु अर्थात् मन्त्रोच्चारणस्यैवादृष्टकल्पकत्वं स्यान्नतु नियमांशस्येति शङ्कते—**न चेति**। समादधाति—**अध्ययनविधेरिति**। न मन्त्रोच्चारणादीनामदृष्टफलकता युक्ता, अपि तु 'स्वाध्यायोऽध्येतव्य' इत्यध्यपनप्रतिपादकविधेरेव दृष्टफलकल्पतोचिता। **यावत्सम्भवनिति**। यत् यत्सम्भाव्यते दृष्टं फलं कल्पयितुं तत्सर्वंफल—कल्पनसमर्थत्वात्सर्वं तेनैव कल्प्यते, नान्येनेत्यर्थः। एतस्यैव फलं प्रतिपादयितुमाह—**अतश्चेति**। अतएव 'देवस्य त्वा' इत्यादयः करणमन्त्राः करिष्यमाणक्रिया तत्सम्बन्धि-पदार्थप्रकाशकाः वा भवन्ति तथैव क्रियमाणा या क्रिया तस्याः अथवा तत्सम्बन्धिपदार्थप्रकाशका वा मन्त्राः भवन्तीति। ते सर्वे दृष्टप्रयोजनका एव। अध्रिगुप्रैषादयः क्रियमाणानुवादिनो वा मन्त्राः भवंतु, मन्त्राणां दृष्टार्थत्वं सुसाधितं भवति प्रकारेणानेन तथापि येषामनुष्ठानोपयोगिपदार्थ-स्मारकत्वं नास्ति तेषां कथं दृष्टार्थत्वं सेत्स्यतीत्याह—**ये त्विति**। जपादि-मन्त्राणां पदार्थंस्मारकत्वाभावेऽपि तेषामदृष्टजनकत्वं नैव निराक्रियते। तेषामुच्चारणेऽदृष्टं भवत्येवेति। अतएवोच्यते—सम्भवति दृष्टफलकत्वेऽ दृष्टफलकल्पनाया अन्याय्यत्वादिति। मन्त्राणां दृष्टफलकत्वे सम्भवति सति अदृष्टं फलं न कल्पनीयम्। मंत्रे तु दृष्टफलं न सम्भाव्यते तत्रादृष्टमेव फलकल्पनीयमित्यर्थः। न तु सर्वथा वैयर्थ्यं तेषामिति भावः। 'देवस्य त्वा' इत्यादीनां यद्यप्यनुष्ठानोपयोगिपदार्थस्मारकत्वाभावेऽपि दृष्टार्थकत्वं प्रसाधयितुमाह—**दृष्टार्थेष्वपीति**। दृष्टप्रयोजनकेष्वित्यर्थः। क्लेशेन दृष्टार्थंत्वं प्रतिपादयितुमाह - **कथञ्चिदिति**। यद्यपि स्वार्थप्रतिपादनेन दृष्टफलकत्वं नास्ति तथापि निर्वापादिक्रियाविशेषणीभूतस्वार्थप्रतिपादनेन दृष्टार्थत्वमिति। निर्वापादिक्रियाविशेषणीभूतपदार्थप्रतिपादकत्वकल्पनद्वारा दृष्टार्थंत्वपरिकल्पनमेव क्लेशः। **साममन्त्रेष्वपीति**। तत्रापि 'हुम् फट्'

इत्यादीनि पदानि न स्वार्थप्रतिपादनेनानुष्ठानोपयोगिपदार्थं प्रतिपादयन्ति। अतस्तेन रुपेण यद्यपि दृष्टार्थत्वं नास्ति तेषां तथापि गानसमये पदपेक्षित-नियतकालपरिपूरकत्वेन दृष्टार्थत्वं भवत्येव। नियतकालपरिपूरणमेव दृष्टं फलं वेदितव्यम्। सर्वेषां मन्त्राणां दृष्टप्रयोजकत्वेऽदृष्टं कथमुत्पत्स्यत इत्याह—**नियमांशेनेति**। सर्वत्र च नियमः क्रियते—मन्त्रैत्वेदं कर्त्तव्यमिति। अनेनैव नियमांशेनादृष्टफलकत्वं सर्वत्र कल्प्यत इत्यर्थः। अतस्तदुभयं सिद्धयति। मन्त्राणां दृष्टार्थत्वं संसाधितम्। तन्नोचितं प्रतिभाति। दृष्टार्थप्रतिपादकत्वे तेषां लिङ्गादेव प्रमाणाद्विनियोगस्य सिद्धत्वाद्विनियोग-शास्त्रं व्यर्थं स्यादिति शङ्कते—**न चेति**। **लिङ्गादेवेति**। विनियोजकप्रमाण-षट्कमध्ये द्वितीयादेव प्रमाणादित्यर्थः। तद्विनियोजकशास्त्रेत्यादिः। मन्त्र-विनियोजकशास्त्रम् समाधत्ते—**तच्छास्त्रस्येति**। विनियोगशास्त्रस्येत्यर्थः। **गुणार्थवादपरिसंख्यार्थत्वादिति**। गौणार्थप्रतिपादकत्वाद्गुणार्थवादः। यथोक्तम्—'गुणवादस्तु' इति। गोणार्थप्रतिपादकत्वादर्थवादत्वम्। एवमेव सूत्रितम्—'परिसंख्या' इति। परि वर्जने संख्या च ज्ञानार्थकः। वर्जन-विषयकज्ञानप्रतिपादकत्वमिति यावत्। उदादरणेन स्पष्टयितुमाह—**तथा हीति**। **अग्निरसीति**। चत्वारो मन्त्रा इति। देवस्यत्वासवितुः प्रसव, अग्निर्देवेभ्योनिलीयत, स वेणुंप्राविशत्, व्योममात्रीभवत्येतावद्वैपुरुषेवीर्यम्। **लिङ्गादेवेति**। स्वसामर्थ्यरुपाद् विनियोजकप्रमाणद्वितीयादेवात्र्यादाने प्राप्ता इति। अभ्रिरत्र खनित्रवचनः। तद्विनियोजकं मन्त्रविनियोजकमित्यर्थः। तां चतुर्भिरिति शास्त्रं वर्त्तते, तदगुणार्थवादादित्यर्थः। एषां चतुर्णां मन्त्राणा-मर्थवत्त्वप्रकारं दर्शयति—**तच्चतुर्णामिति**। तां चतुर्भिरित्यत्र समुच्चयप्रति-पादकशब्दाभावात्तदर्थप्रतीत्यभावेन चतुर्णां विकल्प इति पूर्वपक्षयित्वा सिद्धान्तितं तदर्थप्रतिपादकशब्दाभावेऽपि समुच्चपरुपगुणविधानेनार्थत्त्व-मेषामिति। **अन्यथेति**। समुच्चयरुपगुणविधानाभावे। **दृष्टार्थत्वादिति**। मन्त्राणामिति शेषः। **विकल्प इति**। चतुर्षु 'मन्त्रेषु कस्याप्येकस्यैव ग्रहणं भवेदित्यर्थः। तन्न शोभनमित्यर्थः 'उरु प्रथस्वेति'। विधिवाक्यमिदम्। मन्त्रोऽयं लिङ्गप्रमाणादेव प्रथने रुपे कार्ये प्राग्नोति। विधेरस्भावर्थवाद-वाक्यं दर्शयति—उरु प्रथस्वेति पुरोडाशं प्रथयतीत्यादिः अर्थवादत्वमस्योप-पादयितुमाह—**यज्ञपतिपदप्रयुक्तेनेति**। यज्ञपतिशेब्दसम्वलितेन मन्त्रेण पुरो-डाशप्रथने विहिते प्रजाभिः पशुभिश्च यज्ञपतेरेव प्रथनं भवतीति सिद्धयति। यजमावस्य वैपुल्यप्रसाधकमिदं पुरोडाशप्रथनमित्यर्थः। तस्मात् प्रथनम-वश्यमेव कर्त्तव्यम्। **अन्यथेति**। यज्ञपतिप्रथनार्थप्रकाशकाभावे। यद्येवं न

—५२—

स्वीक्रियते चेत्तर्हि यज्ञपतिप्रथनरुपार्थेन पुरोडाशप्रथमनाभिधायकानां मन्त्राणां स्तुतिः निरालम्बास्यादित्यर्थः। स्तुतिप्रतिपादने स्तुत्यस्यावश्यकता भवत्येव । गुणार्थवादमुदाहृत्य परिसंख्यार्थमुदाहरति—**इत्यश्वाभिधानामिति ।** अनेनाश्वाभिधानीग्रहणप्रतिपादनेन गर्दभाभिधान्याः परिवर्जनं भवति। एतत्प्रयोजनाभाव इति। परिसंख्यार्थत्वाभावे इत्यर्थः। **नित्यानुवादत्वमिति ।** नित्यस्य मन्त्रप्राप्तस्याश्वाभिधानीग्रहणस्यानुवादकत्वमात्रं स्यादित्यर्थः। उदाहरति—**यथेति। अध्रिगुप्रैष** इति। अयं भावः—इडानिगदे यथा यज्ञदतिशब्दस्य नोहप्राप्तिस्तथैवात्रापि मात्रादिशब्दानां पशुगणमुद्दिश्य प्रयुक्तानां स्वार्थबोधकत्वाभावेन परार्थबोधकत्वादूहाप्राप्तिरेव, तर्हि 'न माता वर्द्धते न पिता' इत्याधूहनिषेधकं शास्त्रं किंप्रयोजनकं स्यादिति चिन्तास्यमाह—**नित्यानुवाद इति।** नास्य निषेधशास्त्रस्य निषेधकत्वं सम्भवति, प्राप्त्यभावात्। अतो नित्यस्य सिद्धस्य निषेधस्यैवानुवादमात्रमनेन क्रियते। कुत इत्याह—**तस्येति ।** निषेधशास्त्रस्येत्यर्थः। गुणार्थत्वाभावत्परिसंख्यार्थत्वाभावाच्च। मन्त्राणां पदार्थस्मारकत्वेन दृष्टार्थत्वं महता प्रयासेन संसाधितम्। दृष्टार्थत्वे च मन्त्राणां तत्र सर्वेषां वैदुष्यसम्पन्नत्वेन तत्तदनुष्ठानविषयकज्ञानत्त्वेन परबोधनवैयर्थ्यात् 'प्रोक्षाणीरासादय' इत्यादिप्रैषमन्त्राणां परबोधकानां वैयर्थ्यं स्यादिति शङ्कते—**न चेति।** तद्वैयर्थ्यं निवारयितुमाह—**तेषामिति।** प्रैषमन्त्राणामित्यर्थः। न तेषां परबोधकत्वमपि तु प्राप्तकालताबोधकत्वमित्यर्थः। यस्मिन् काले ये पदार्थाः प्राप्तास्तेषां स्मारकाः प्रैषमन्त्रा इत्यर्थः। परबोधकत्वेन प्रसिद्धानां प्रैषमन्त्राणां प्राप्तकालताबोधकत्वे विरोधः स्यात्, प्रैषशब्दस्य प्रेरणावाचकत्वात्। 'प्रैषः प्रेषणमर्दने' इत्यमरः।

'प्रैषः स्यात्प्रेषणे' इति विश्वः। प्रैषः प्रेषणपीडयोः' इत्यजयश्च। अयश्चार्थः न प्राप्तकालतायां सङ्घटतेऽपि तु परबोधने एव। परसम्बोधने च पुनः वैयर्थ्यप्रसक्तिरत आह—**परसम्बोधनार्थत्वेऽपीति ।** प्राप्तकालतापक्षं विहाय परसम्बोधनार्थपक्षस्वीकारेऽपीत्यर्थः। न वैयर्थ्यमिति शेषः। तत्कथमित्याह—**नियमांशेनेति ।** यद्यपि परस्परबोधनेनापि पदार्थज्ञानसम्भवस्तथापि प्रैषवाक्यैरेव प्रेरणात्मकं ज्ञानं भावयेत्। ततश्चासादनादिकार्यं सम्पादयेदिति नियमवाक्यकल्पनेन नियमादृष्टकल्पनात्सर्थक्यं तेषामिति। **संक्षेप इति ।** विस्तरस्त्वाकरे ज्ञेयः। अनुष्ठानोपयोगिपदार्थस्मारकत्वं मन्त्रत्वमिति लक्षणं न समीचीनम्, अमन्त्रकपदार्थेषु ब्राह्मणवाक्यानामप्यनुष्ठानोपयोगिपदार्थस्मारकत्वात्तत्रातिव्याप्तिसम्भावादिति शङ्कते—

**नन्विति** । किमु प्रश्ने । **तदिति** । प्रयोगोपयिकार्थस्मारकत्वम् । अतो मन्त्रस्य किमपि लक्षणं प्रतिभाति । असि पदान्यत्वं त्वाप्रत्ययान्तत्वं वापि मन्त्रलक्षणं न सम्भवतीति प्रतिपादनार्थमाह—**अस्यन्तत्वान्तत्वादीति** । तुपदं पूर्वपक्षव्यावृत्त्यर्थम् । यद्यपि 'मेधोऽसि' दृषे त्वा, अर्जे त्वा इत्यादयो मन्त्राः सन्ति तथापि सर्वेषु मन्त्रेष्विदं लक्षणं न संघटते, तत्पदरहितनामपि मन्त्राणां दर्शनात् । तथा असित्वामध्या अपि मन्त्राः दृष्यन्ते, यथा—ईडश्चासि वन्द्यश्च, तत्वा यानि, इत्यादयः। एवमेव ब्राह्मणव्यावृत्तमपीदंमिति वक्तुं न शक्यते । ब्राह्मणान्यपि तत्तत्पदघटितानि दृश्यन्ते । अप्रवरनामधेयेष्वमन्त्रत्वप्रसाधनायोपक्रमते—**अहप्रवरनामधेयेति** । एतेषु भिन्नपदप्रक्षेपेण मन्त्राः यथावन्न तिष्ठन्ति । अतएवोक्तम्—**अन्यथाभावादिति** । अन्यथाभावेन तेषां वेदावयवत्वाभावात्कथं तेषां मन्त्रत्वमिति । यथा 'अग्नये जुष्टं निर्वंवामि इत्यग्निदेवताकोऽयं मन्त्रः । सूर्याय यदिप्रयुज्यतेऽयं मन्त्रस्तर्हि आवापोद्वापोऽऽवश्यकः । पूर्वप्रयुक्तस्याग्निपदस्योद्वापः, अप्रयुक्तस्य सूर्यपदस्य च तत्रावापो भवति । ततश्च 'सूर्याय जुष्टं निर्वंयामि' इति मन्त्रस्वरूपं सम्पद्यते । अग्निपदघटितस्य मन्त्रस्य वेदावयवत्वेपि सूर्यपदघटितस्योदितस्य मन्त्रस्य न वेदावयवत्वमिति । यत्र यजमानस्यार्षेयं व्रियते स प्रवरः । यथा—'अदीक्षिष्येऽयं ब्राह्मणः' । अस्यैव शेषत्वेन तदीय प्रवरं पठन्ति—'असौ देवदत्तोऽमुष्यपुत्रोऽमुष्यपौत्रोऽमुष्य नप्तामुष्या पुत्रोऽमुष्याः पौत्रोऽमुष्याः नप्ता' इति । यच्च यजमानादीनां नामग्रहणं तन्नामधेयमित्युच्यते । यथा—**सुब्रह्मण्यायां** देवदत्तो यजत इत्यादि । येषां विध्यर्थवादादीनां वेदवयवत्वं भवति न तत्र क्वयिदंय्यन्यथाभावो दृश्यते । इत्येव दर्शयितुमाह—**न हीति** । अतएवैतयोर्वेदायवत्वं सिद्धयति । तर्हि किन्नाम मन्त्रत्वमिति प्रश्नस्तिष्ठत्येवेति॥ समाधत्ते—**उच्यत इत्यादिना** । अध्यापकगतेत्यादिः । गुरुमुखोच्चारणानूच्चारणरुपाध्ययनपरम्परायामध्यापकादिद्वारा 'मन्त्रोऽयम्' इति या प्रसिद्धिस्तद्विषयत्वेन येषां व्यवहारस्त एव मन्त्रा इति । अहादीनाममन्त्रत्वेन व्यवहाराभावेऽपि मन्त्रलक्षणंमिदं समीचीनमिति साधयितुमाह—**न चेति** । **तदिति** । अध्यापकादिगतमन्त्रत्वप्रसिद्धिविषयत्वम् । **अपठिते इति** । मन्त्रपाठेऽपठिते इत्यर्थः । महादीनां मन्त्रपाठे नैव पाठो दृश्यते । **तेषामिति** । अहादीनामित्यर्थः । **अमन्त्रत्वेऽपीति** । मन्त्रत्वाभावेऽपीत्यर्थः । **पठितानामिति** । मन्त्रपाठपरितानामित्यर्थः । अविहतं मन्त्रत्वमिति । मन्त्रत्वं विहतं विनष्टं न भवतीत्यर्थः । **अर्थान्मन्त्रत्वं** प्रसाधितमेव भवतीति यावत् । अत्रैव परामर्षं सूत्रं प्रमाणंयति—**तथा चेति** । **अनाम्नातेष्विति** । अनाम्नातेषु मन्त्रत्वं न स्यादभिधायकेष्विपि । नाभि-

धायकत्वं मन्त्रत्वे हेतुः, किन्तर्हि, अभियुक्तप्रयोग इति भाष्यम् । विध्यर्थवादेषु न क्वचिदन्यलाभावो दृश्यत इति पूर्वमुक्तम् । तत्खण्डनायाह—**दृष्टश्चेति** । विध्यर्थवादयोरपि स्वर्गकामादिपदप्रक्षेपेणान्यथाभावो दृश्यते तथापि पदप्रक्षेपमात्रेण वेदावयवत्वहानिर्न भवति । विधायकत्वं वार्थवादत्वं वेति प्रकारद्वयमभिप्रेत्य शङ्कते—**नन्विति** ।

इमे च प्रधानकर्मविधायकत्वगुणकर्मविधायकत्वशब्देनापि प्रतिपाद्येति । **तथापीति** । वेदावयवत्वक्षत्यभावेऽपि । अयं भावः—प्रकारद्वये एवानयोरपि समावेशोऽस्तु । अतो विधान्तरं प्रकारान्तरं न स्वीकर्त्तव्यमित्यर्थः । प्रकारद्वयसमर्थनायाह—**विधित्वमेवेति** । 'देवांश्च याभिर्यजते ददाति च ज्योगित्ताभिः स च ते गोयतिः सह' इत्यत्र विधित्वदर्शनाद् विधायकत्वं स्वीकर्त्तुं शक्यते । अथवा 'देवस्य त्वा' इत्यादियदानां स्तुतिप्रतिपादकत्वदर्शनादर्थवादत्वमेव स्वीक्रियतामिति । समादधाति—**उच्यत इत्यादिना** । 'याभिर्यजत' इत्यत्र यच्छब्दप्रयोगो दृश्यते । तस्य च पूर्वज्ञातपदार्थानुवादकत्वे शक्तिः । अत्यन्ताप्राप्तप्रापकत्वं हि विधित्वम् । यच्छब्देनात्यन्ताज्ञातपदार्थबोधकत्वरूपाया शक्तिः, सा प्रतिबध्यते । अतो 'देवांश्च' इत्यस्य यागविधायकत्वं न सम्भवति । तर्ह्यनेन किं कार्यमित्याह—**किन्त्विति** । विधिना प्राप्तस्य ज्ञातस्य पदार्थस्य स्मृतिः स्मरणमेवानेन कार्यमिति । एवं विधिशक्तिनिष्ठप्रतिबध्यता—निरुपितप्रतिबन्धकताश्रयो यच्छब्द इति सिद्धयति । अन्येऽपि विधिशक्तिप्रतिबन्धकाः भवन्तीत्याह—**एवमिति** । 'बर्हिर्देवसदनं दामि' इत्यत्र प्रयुक्तोत्तमपुरुष 'दामि' खण्डयामीति प्रयोगदर्शनात् विधिशक्तिः प्रतिबध्यते अत्र च प्रतिबन्धकतोत्तमपुरुषनिष्ठा । अस्मदर्थमात्रबोधकत्वं विधेर्नास्तीति प्रतिपादयितुमाह—**न हीति** । **तस्य** विधेः । **साधारण्यात्** । सर्वसाधरण्यादित्यर्थः । तत्रैव प्रमाणं दर्शयति—**उक्तञ्चेति** । विधौ विधिस्थले सिद्धत्वद्योतनात् सिद्धार्थप्रतिपादकत्वात् वक्त्राभिमुख्यसम्भवात् आत्मनिप्रेरणायोगातत् निमित्तस्याभिधानाच्च यवच्छब्दादिचतुष्टयं विधिशक्त्यभिहन्तृ अर्थात् विधेर्विधायकत्वरूपायाः शक्ते—र्विनाशको भवतीत्यर्थः । विधायकत्वं तत्र न तिष्ठतीति पावत् । **अप्राप्तौ** अर्थात् अप्राप्तप्रापकत्वे च न तद्भङ्गात् विधायकत्वरुपायाः शक्तेर्विनाशाभावोत् क्वयित्स्थलेऽविघ्नतृतापि भवतीत्यर्थः । अविघ्नतृतायामप्राप्तप्रापकत्वमेव हेतुरिति भावः । अर्थवादत्वं कद स्वीक्रियते कदा च न स्वीक्रियत इति स्पष्टयितुमाह—**कर्त्तव्यार्थविशेषणतयेति** । यत्रानुष्ठेयपदार्थविशेषणत्वेन स्तावकत्वं भवति तत्रार्थवादत्वं न स्वीक्रियते यत्र च

स्वतन्त्ररुपेण स्तुतिप्रतिपादकता भवति तत्रैवार्थवादत्वमपि स्वीक्रियते। अतएवाह—**स्वतन्त्रस्तुताविति**। हि हेतौ। यस्मात्कारणात्स्वतन्त्रस्तुतिप्रतिपादकत्वेऽर्थवादत्व भवति तस्मादन्यविशेषणतया स्तुतिप्रतिपादकत्वे नार्थवादत्वमिति भावः। सर्वत्र स्तुतिप्रातीतिरपि भवति न वेति शङ्कायामाह—**न चेति**। न सर्वेषु मन्त्रेषु स्तुतिप्रतीतिरित्युपसंहरति—**तस्मादिति**। **विधान्तरमिति**। प्रधानकर्मविधायकत्वं गुणकर्मविधायकत्वमिति प्रकारद्वयातिरिक्तमभिधायकत्वमित्यपि तृतीयः प्रकारोऽपि विद्यते। **मन्त्रत्वमिति**। अभिधायकत्वं मन्त्रत्वमित्यपि बोध्यम्। **तद्भेदाश्चेति**। मन्त्रभेदादित्यर्थः। **प्रायुक्ता एवेति**। मन्त्रविचारावसरे इत्यर्थः। मन्त्रत्रयलक्षणं सूत्ररूपेण प्रतिपादितं जैमिनिना तथाहि—**तेषामृग्यत्रार्थवशेनपादव्यवस्था। गीतिषु सामाख्या। शेषे यजुःशब्द इति**। ननु निगदानामेतल्लक्षणत्रये समावेशाभावात्कुतः मन्त्रस्य त्रिप्रकाऽतेति। तत्र च 'उच्चैऊंचा' क्रियते, उच्चैः साम्ना, उपांशु यजुषा, उच्चैर्निगदेनेति धर्मविशेषोऽपि श्रूयते। तथा च 'यूजूंषि वर्त्तन्ते, न निगदाः, निगदाः वर्त्तन्ते न यजूंषि' इति व्यवहारोऽपि तत्र प्रमाणम्। तस्माच्चतुर्थ मन्त्रजातं निगदो नाम इति मन्तव्यम्। इति हृदि निधायाह—**निगदश्चोच्चैरिति**। न मन्त्रस्य चतुर्थः प्रकारः सम्भवति, अपि तु निगदा अपि यजूंषि एव। निगदेष्वपि प्रश्लिष्टपाठादिरुपता ऋक्सामलक्षणविलक्षणता च वर्त्तते। तस्मात्तत्रैवान्तर्भावो **निगदानामपीति**। अतएवोच्चैः षठ्यमानो यजुर्भावग एवेति। परपुरुषबोधनसामर्थ्यं येषां यजुषां भवति तेषामुच्चैः पाठः क्रियते। तदेव च प्रयोजनं तेषामिति। अतएव प्रैषशब्देनापि व्यपदिश्यते। निगदशब्दं व्युत्पादयितुमाह—**नितरामिति**। उच्चैष्ट्वगुणयोगान्न ऋक्त्वं तेषाम्, अपि तु 'इतो ब्राह्मणाः भोज्यन्ताम् इतः परिव्राजका इतिवत् उच्चैष्ट्वरूपविशेषगुणयोगादं यजूंष्येव निगदा इति। तदाह भाष्यकारः 'न ऋग्व्यपदेशात्' इति सूत्रव्याख्यानावसरे 'न ऋचो' निगदा इति व्यपदिश्यन्ते। अयाज्या वै निगदा, ऋचैव यजन्तीति पृथक्त्वनिमित्ता हि व्ययदेशा भवन्ति 'उच्यते' व्यपदेशो लिङ्गम्, प्राप्तिरूच्यतामिति। अपादबद्धे गदतिर्वर्त्तते 'अपादबद्धो हि गद्य इत्युच्यते'। इति। वार्त्तिकेऽपि समर्थितं दृश्यते चैवमेव। चतुर्थप्रकारं निरसितुमाह—**न त्विति**। त्रिष्वेवान्तर्भावाद्विधान्तरं नास्तीत्यर्थः। ननु निगदानां यजुष्ट्वे उच्चैर्निगदेनेति वाक्यं कथं सङ्गच्छत इत्यत आह—**उच्चैर्निगदेनेति**। पूर्वन्तावत् 'उपांशु यजुषा' इत्युक्तम्। तस्यैव प्रशंसाप्रतिपादनार्थमुक्तमुच्चैरिति। तस्यैव नित्यप्राप्तस्यानुवादमात्रमनेन क्रियत इत्यर्थः कथमिति चेदाह—**परसम्बोधनेत्यादिः**। यद्यप्युपांशुत्वं यजुषां धर्मस्तथापि प्रैषकाले

परपुरुषसम्मुखीकरणरुपकार्यवशादेवोच्चैष्ट्वप्राप्तिर्भवति यजुषि । तर्हि कथमेकत्र धर्मद्वयसमावेश इत्याह—**अतएवेति** । उपांशुत्वं यजुषां सामान्य-धर्मः । तच्चैष्ट्वञ्च विशेषधर्मः । सामान्यविशेषयोरेकत्र प्राप्तयोः विशेषधर्मा-वच्छिन्नेन पदार्थेन सामान्यधर्मावच्छिन्ने पदार्थे भवति सङ्कोचः । तस्मा-त्सामान्यधर्मावच्छिन्नोपांशुत्वस्य विशेषधर्मावच्छिन्नेनोच्चैष्ट्वेन भवति बाधः । यत्र मन्त्रा अपरिपूर्णार्थाः भवन्ति तत्र वाक्यार्थपूर्णः कथं स्यादित्याह —**अपरिपूर्णार्थेष्विति** । यत्र वाक्यशेषानुषङ्गं विना वाक्यार्थः पूर्णतां न गच्छति तत्र वैदिकस्यैव वाक्यशेषस्यानुषङ्गो विहितः, न तु लौकिकस्य, वैदिकाङ्क्षा पूरणीया वेदेन' इति लाभात् । **तत्सहितस्यैवेति** । अनुषङ्ग-विशिष्टवाक्यभेदसहितस्यैवेति । **तस्य** वाक्यशेषस्येति । उदाहरति—**यथेति** । या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचो अपावधीत्त्वेषं वचो अपावधीत्स्वाहा । या ते अग्ने रजाशया, या ते 'अग्ने हराशया' इति । अत्र स्वाहान्तः प्रथमो मन्त्रः 'स च निराकाङ्क्षः' तद्वाक्यनिष्ठंपदानामेवा-काङ्क्षायोग्यतासत्तीनां वाक्यार्थज्ञानहेतूनां विद्यमानत्वादन्वयसम्भवात् । **तथारयनन्तरपठितयोः** 'या ते अग्ने रजाशया, या ते अग्ने हराशया' इत्य-नयोर्मंत्रयोर्वाक्यशेषाकाङ्क्षा वर्त्तते । अतएव तामाकाङ्क्षां पूरयितुं 'तनूर्व-र्षिष्ठा' इति वाक्यशेष भागस्तत्राप्यनुवज्जते । कथमित्याह—**आकाङ्क्षे-त्यादिः** । सत्त्वाद्विद्यमानत्वात् । एत एव वाक्यार्थज्ञानहेतुत्वेन प्रसिद्धाः । यत्र वास्तवाकाङ्क्षा न भवति तत्र कथमनुषङ्ग इत्याह—**वास्तवाकाङ्क्षा-भावेऽपीति** । आकाङ्क्षा द्विविधा—उत्थिताकाङ्क्षा उत्थाप्याकाङ्क्षा च । यत्र पदानां पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकता भवति, सोत्थिता-काङ्क्षा । यथात्रैव 'या ते अग्ने' इत्यत्र स्वाहान्तः प्रथमो मन्त्रः । अत्र प्रयुक्तानां पदानां परस्पराकाङ्क्षितत्वात्परमन्वयः सञ्जायते यत्र च वाक्यार्थबोधनायाकाङ्क्षादिवशात् समेषां पदानां परस्परमत्वये जाते निराकाङ्क्षत्वे सम्पन्नेऽपि पुनः केनचित्पदेनान्वयाकाङ्क्षा भवति तत्रैवो-त्थाप्याकाङ्क्षा स्वीक्रियते । सैव चात्रावास्तवाकाङ्क्षाशब्देन व्यपदिष्टः । यत्र वास्तवाकाङ्क्षा न भवति तत्रावास्तवाकाङ्क्षापरपर्याययोत्थाप्या-काङ्क्षयापि पदानामनुषङ्गोऽन्वय इत्यर्थः । उदाहरति—**यथेति** । चित्पति-स्त्वा पुनात्विति । चित्पतिस्त्वा पुनातु, वाक्पतिस्त्वा पुनातु, देवस्य त्वा सविता पुनत्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः' इति मन्त्रः । तत्र 'अच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः' इति वाक्यशेषः । स च सकृत्पठितो वर्त्तते । इतः पूर्वञ्च मन्त्रत्रयं वर्त्तते । सकृत्पठितोऽयं शेषः, येन केनयिदेकेनैव मन्त्रेण सम्भन्त्स्यति । तेषां पदानामाकङ्क्षादिवशा-

दन्वयस्य सिद्धत्वात्। न मन्त्रत्रयेणेति प्रतीयते। तथापि शेषशेषिणोराकाङ्क्षाभावेऽपि शेषस्याकाङ्क्षा त्वस्त्येव। 'पवित्रेण' इत्यत्र तृतीया श्रूयते। तदर्थश्च करणत्वम्। 'कर्त्तृकरणयोस्तृतीया' इति स्मरणात्। करणत्वञ्च क्रियां विनानुपपन्नम्। अतस्तद् क्रियामपेक्षते। क्रिया चात्र मन्त्रत्रयेष्वेकैव 'पुनातु' इति। अनया च क्रियाया सम्बद्धः शेषः क्रियाद्वारा तृतीयमन्त्रे निरपेक्षेऽपि यथान्वेति तथैव पूर्वयोरपि आकाङ्क्षामुत्थाप्यान्वेष्यति। तस्माद्वाक्यशेषस्य मन्त्रत्रयेणान्वयः सम्पद्यते। मन्त्रस्यास्य प्रयोजनं दर्शयति—**पवनक्रियेत्यादिना**। पवनरूपा या क्रिया तस्याः यत्करणं तस्य प्रकाशको बोधकोऽयं मन्त्र इति। पवनक्रिया च मन्त्रत्रयप्रकाश्या बोध्या एकैवास्ति। अतएव तच्छेषोऽच्छिद्रेण पवित्रेणेति त्रिभिर्मन्त्रैः सम्बद्धयत इत्यर्थः। एतदर्थसमर्थनाय न्यायमवतारयति—**प्रधानमिति**। हि हेत्वर्थकः। प्रधानमनुसृत्याङ्गानि गच्छन्तीत्यर्थः। अत्र 'पुनातु' इति पदघटितानि वाक्यानि प्रधानानि। 'अच्छिद्रेण पवित्रेणा' इत्यङ्गभूतं वाक्यम्। अतः प्रधानमनुरुध्याङ्गान्यन्वेष्यन्तीत्यर्थः। नायमनुषङ्गः सार्वत्रिक इति बोधयितुमाह—**असम्बद्धपदव्यवाय इति**। परस्परं सम्बद्धानां पदानामेवानुषङ्गो भवति न त्वसम्बद्धानां मध्ये व्यवधानादपि। असम्बद्धपदव्यवधाने नानुषङ्गः। उदाहरति—**यथेति**। 'सं ते वायुर्वातेन गच्छताम्, सं यजत्रैरङ्गानि, सं यज्ञपति राशिषा' इत्यनेन सह नानुषङ्गः। कुत इत्याह—**मध्य इति**। माध्यमिके वाक्ये 'अङ्गानि' इति बहुवचनान्तं पदं वर्त्तते। तदपेक्ष्य 'गच्छन्ताम्' इति समुचितस्य बहुवचनान्तस्य पदस्याध्याहारोऽऽवश्यकः। तेन चाध्याहृतेन पदेन व्यवधान्नानुषङ्ग इति। तथा च पारमर्षं सूत्रम् 'व्यवायान्नानुषसज्येत' इति। आकाङ्क्षायोग्यताबदलान्वयोऽस्तु, तर्हि का क्षतिरित्याह—**असित्तिरपीति**। वाक्यार्थबोधायावस्या अप्यन्वयहेतुत्वेन स्वीकृतत्वात्। सन्निध्यासत्तिरपरपर्यायः। बहुवचनेन व्यवधानादेकवचननिष्ठासत्तिरपि नास्तीत्यर्थः। वस्तुतस्तु आकाङ्क्षायोग्यतेऽपि न स्तः। तयोरपि सामानाधिकरण्ये एव प्रवृत्तिः। एकवचनस्यैकवचनविषयिण्येवाकाङ्क्षा दृश्यते। तथैव योग्यतापि। न बहुवचनस्यैकवचनेन सहैकवचनस्य बहुवचनेन सहवान्वययोग्यता प्रसिद्धा। **सा चेति**। **असित्तिश्चेति**। व्यवाये व्यवधाने नास्ति न भवत्यनुषङ्ग इत्यर्थः। यद्यपि वेदाकाङ्क्षा वेदेनैव पूरणीयेत्यस्ति नियमस्तथापि यत्र न तादृशपूरणं सम्भवम् तत्र लौकिके पदेनाध्याहृतेनाकाङ्क्षा पुरणीयेति सिद्धान्तः। अध्याहृतस्य मन्त्रत्वममन्त्रत्वं वेत्याह—**अध्याहृतस्येति**। **अपाठादिति**। मन्त्रसमुदाये मन्त्रत्वेनापाठादिति। **अमन्त्रत्वमिति**। अध्याहृते पदे मन्त्रत्वाभावः। **तेनेति**।

मन्त्रत्वाभावेनेत्यर्थः। **तद्भ्रेषे इति**। अध्याहृतपदभ्रंशे इत्यर्थः। यथोचितात् यथाप्राप्तान् भ्रंशोऽधःपतनम्। 'भेषो भ्रंशो यथोचितात्' इत्यमरः। मन्त्रलोपनिमित्तकं प्रायश्चित्तं न भवति। तर्हि किं भवतीत्याह—**किन्त्विति**। अङ्गभ्रंशनिमित्तकमेव प्रायश्चित्तं भवतीत्यर्थः। **एवमिति**। अन्यत्राप्येवमेवाध्याहृतेन पदेनाकाङ्क्षा पूरणीयेत्यर्थः। **इषे त्वा इत्यादिष्विति**। 'इषे त्वा ऊर्जे त्वा' इति मन्त्रः। इषे 'त्वेत्याच्छिनत्ति', ऊर्जे त्वेत्यनुमार्ष्टि' इति पलाशशाखायाः छेदनमार्जनयोरनयोर्विनियोगः। ततश्च विनियोगमनुसृत्यैव 'छिनदिम' 'अनुमार्ज्मि' इतिपदयोरध्याहारो भवति। ताभ्यामेव चाकाङ्क्षा पुर्णा जाता। एवमेवान्यत्राप्यूह्यमिति 'अलमिति' पर्याप्तं दिग्निर्देशायेति।

मन्त्राणां सप्रयोजनत्वप्रतिपादनानन्तरमवसरप्राप्तत्वात् कर्मनामधेयानामपि सप्रयोजनत्वमुपपादयितुमुपक्रमते—**नामधेयानामिति**। कर्मनामधेयानां धर्माधर्मयोः प्रामाण्यं न प्रतिभाति। तथाहि—साध्यसाधनेतिकर्त्तव्यतात्वेनान्वमप्रतीत्यभावात्' कायपदघटितशब्दप्रयोगाभावेन करणत्ववाचकपदाभावेन च साध्यादिवाचकत्वाभावात्। 'यजेत' इत्यादौ च यागो धात्वर्थः भावना च प्रत्ययार्थः, समानपदोपात्तत्वात्। प्रत्ययार्थे धात्वर्थस्य करणत्वेनान्वयस्य सिद्धत्वात्पदान्तरोपत्तानां करणत्वासम्भवात्। एवमेवेतिकर्त्तव्यात्वेनापि नान्वयः सम्भवः। उद्भिदादिपदानां गुणावाचकत्वात्। तदुक्तम्—

त्र्यंशवेदप्रमाणत्वादुद्भिदादि ततोऽधिकम्।
धर्मायानुपयुक्तं सदानर्थक्यं प्रपद्यते॥ इति।

नापि विधित्वम्। कस्यचिद् यागादेरविधायकत्वात्। नापि विधेयार्थस्तावकत्वादर्थवादत्वेन प्रामाण्यम्। उद्भिदादिपदेन स्तावकत्वाप्रतीतेः। नापि मन्त्रत्वयेतेषाम्। उद्भिदादिपदेषु मन्त्रत्वप्रयोजकोत्तमपुरुषाधभावात्। तथा योक्तम्—

उत्तमामन्त्रणास्यन्तत्वान्तरुपाद्यभावतः।
मन्त्रप्रसिद्ध्यभावाच्च मन्त्रतैषां न युज्यते॥ इति।

अतएवोक्तम्—'विध्यर्थवादमन्त्राशेष्वन्तर्भावतो न मा 'इति। एतद्भिन्नस्य

च धर्माधर्मयोः प्रामाण्यप्रकारस्यासम्भवान्न कर्मनामधेयानां तत्र प्रामाण्यसम्भवः। अत आह—**विधेयार्थपरिच्छेदकत्वेनेति**। विधिवाक्येन विधेयो योऽर्थो यागादिरूपो धात्वर्थस्तस्य परिच्छेदकत्वेन व्यवच्छेदकत्वेन भेदकत्वेन वा धर्मे धर्माधर्मयोः प्रामाण्यं कर्मनामधेयानामिति। अयमेव च तद्भिन्नः प्रामाण्यप्रकारः। परिच्छेदस्य प्रयोजनं वक्ति—**परिच्छेदश्चेति**। प्रथमं प्रयोजनमाह—**इतरव्यावृत्तिबोध इति**। तदितरनिष्ठव्यावृत्तिविषयकं ज्ञानमित्यर्थः। द्वितीय प्रयोजनमाह—**व्यवहारसौकर्यमिति**। चकारः समुच्चयार्थः। लोके वेदे वा अस्येदं नाम इति व्यवहारे सुकरतासम्पादकः। यदि नानैव न स्यात्तर्हि कथं तं व्यवहर्त्तुं शक्नुमः। अतो व्यावृतिर्व्यवहारो वा नामधेयस्य प्रयोजनमिति वक्तुं शक्यते। प्रथमं व्याख्याति—**यत्रेति**। यत्र नामग्रहणमात्रेणैव भेदप्रतीतिस्तत्र प्रथमः। यथा—**अथैष ज्योति'रित्यादौ**। द्वितीयमवतारयति—**यत्र त्विति**। यत्र मानान्तरेण प्रमाणान्तरेण भेदप्रतीतिस्तत्र द्वितीय इत्यर्थः। उदाहरति—**यथेति**। **ज्योतिष्टोमादिष्विति**। **असङ्करार्थमिति**। परस्परसाङ्कर्यानिर्वाहार्थमित्यर्थः। **उभयत्रोभयसम्भवादिति**। उदाहरणद्वये लक्षणद्वयमित्यर्थः। वाक्यजन्यवाक्यार्थोपस्थितिं प्रति वाक्यस्यैव कारणत्वं भवति, तस्यैव च व्यवहारोपयोगिवाक्यार्थजनकत्वात्। स्फोटवादिनोऽपि वदन्ति—'वाक्यस्फोटोऽति निष्कर्षे' इति। अतिनिष्कृष्टार्थविषयकबोधजनकता—वच्छेदकताश्रयं वाक्यमेव भवतीत्यर्थः। तत एव लोमव्यवहारदर्शनात्। नामधेयन्तु पदमात्रं भवति, न वाक्यात्मकं नाम क्वचित्प्रसिद्धम्। तर्हि पदमात्रस्य नाम्नः कथं धर्माधर्मयोः प्रामाण्यमिति शङ्कते—**नन्विति'**। अत्र शब्दपरिच्छेदीयं श्लोकवार्त्तिकं स्मारयति—**पदमभ्यधिकाभावादिति**।

पदमभ्यधिकाभावात्स्मारकत्वान्न विशिष्यते।
पदाधिक्यं भवेत् किञ्चित्तत्पदस्य न गोचरः॥ इति।

सम्पूर्णः श्लोकः। यथा हि स्मारकाः सम्बन्धिदर्शनादयोऽनधिकविषयास्तथैव पदमप्यधिकविषयत्वतुल्यत्वाद प्रमाणयिति न्यायकरत्नाकरः। पुनश्च तत्रैव प्रश्नमुत्थापयति—**अथेति**। अथशब्दस्यात्र प्रश्नवाचित्वात्। 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः। लौकिकानि पदानि तावद् गृहीतसङ्गतिकत्वेन पदार्थस्मारकानि भवन्ति। शक्तिग्रहश्च लोकव्यवहारादपि भवति। यथोत्तमः पुरुषः 'घटमानय' इति वाक्यं मध्यम-

पुरुषमुद्दिश्य प्रयुङ्क्ते । ततश्च मध्यमपुरुषः तद्वाक्यं श्रुत्वा कम्बुग्रीवादिमन्तं पदार्थमानयति । पुनः स वक्ति—'घटमपसारय' इति । ततश्च पुनः स तमेव परार्थं नयति । अनेन व्यवहारेण तत्रत्यो बालो जानाति यद् घटपदस्योच्चारणे कृते सति यस्य पदार्थस्यानयनं नयनञ्च भवति, स एव घटपदस्य बाच्यार्थ इति । घटपदं वाचकं कम्बुग्रीवादिमात्रपदार्थश्च वाच्य इति । अयमेव च सङ्गतिग्रहः । परन्तु 'अथैष ज्योतिः । इत्यादौ नात्र सम्भवः । कुतः । अलौकिकत्वात्तस्य । अतोऽलौकिकानि पदानि पदार्थानुभानकानि भवन्ति । **तथा सतीति** । अनुभावकत्वे सतीत्यर्थः । स्वार्थे प्रामाण्यमेतेषां भवितुमर्हति परन्तु श्रेयः साधनतारूपे धर्मे प्रामाण्यं न स्यात् । **सत्यमिति** । अर्द्धाङ्गीकारेऽव्ययम् । समादधाति—यद्यपि स्वतन्त्ररूपेण नामधेपानां धर्माधर्मयोः प्रामाण्यं न भवति तथापि विधिवाक्येन सहैकवाक्यतया प्रामाण्यं न भवति तथापि विधिवाक्येन सहैकवाक्यतया प्रामाण्यं भजन्ते । अतो न वैयर्थ्यशङ्का । यदि विधिनैकवाक्यत्वादेव प्रामाण्यमस्य तर्हि तेनैवास्यापि ग्रहणसम्भवात्पृथक्कथनं किमर्थमित्याह—**प्रकारभेदकथनार्थमिति** । 'प्रकारो भेदसादृश्ये । इत्यमरः । कीर्त्तनं कथनम् । 'कृत संशब्दने' इति चुरादिः । प्रकारपरिगणनार्थं भेदेन प्रतिपादनं कृतमिति । नामधेयं विभाजयितुमाह—**नाम चेति** । **द्विविधमिति** । प्रकारद्वयमित्यर्थः **यौगिकं मूढञ्चेति** । नामवधेये चत्वारि निमित्तानि भवन्ति । तानि प्रस्तौति—**तत्रेति** । चतुर्षु निमित्तेष्वित्यर्थः । तत्र प्रथमं निमित्तं मत्त्वर्थलक्षणा वर्त्तते । मतुपो योऽर्थस्तत्र लक्षणेति । लक्षणा च जघन्या वृत्तिः । अतस्तस्याः निराकरणमेव यथासम्भणमुचितमत आह—**भयादिति** । लक्षणा स्वीकार्या मा भवेदित्येतदर्थं कर्मनामधेयता स्वीक्रियते । अपरञ्च निमित्तं वाक्यभेद इति । सम्भवत्येकवाक्यत्वे वाक्यभेदो न युज्यते' इति न्यायेन वाक्यभेदोऽपि दोष एव । अतो वाक्यभेदरुपो दोषो नापतेदित्यर्थं कर्मनामधेयत्वं स्वीक्रियते । अनयोश्च यौगिकत्वं बोध्यम् । तृतीयञ्च निमित्तं तत्प्रख्यं वर्त्तते । तस्य गुणस्य प्रख्यापकस्य प्रापकस्य शास्त्रस्य विद्यमानत्वेनाग्निहोत्रशब्दः कर्मनाकधेयमिति न्यायप्रकाशः । 'अग्निहोत्रं जुहोति' इति शास्त्राम् । जैमिनिसूत्रमस्यत्रावतारयति—'**तत्प्रख्यं चान्यशास्त्रमि'ति** । चतुर्थं निमित्तं तद्व्ययदेश इति । तेन व्यपदेशस्तद्व्ययदेशः । व्ययदेशशब्दश्चात्रोपमानवचनः । तदन्ययानुपपत्त्या कर्मनामधेयत्वमिति । सूत्रितञ्च जैमिनिना—'**तद्व्यपदेशं च** इति । अनयोश्च रूढत्वं वेदितव्यम् । निमित्तानां परिगणनानन्तरं शास्त्रार्थमुखेन प्रत्येकस्य स्वरूपं प्रतिपादनायाह—**तत्रेति** । चतुर्ष्वित्यर्थः । **आद्यमिति** । आदौ भवमाद्यं प्रथममित्यर्थः ।

यत्त्वर्थलक्षणाभयान्नामधेयत्वस्य लक्ष्यमवतारयति—'**उद्भिदा यजेत पशुकाम**:' इति। अत्रोद्भिच्छब्दः प्रयुक्तो वर्त्तते। स च यौगिकः। योगो व्युत्पत्तिः। तत्साध्यावयवार्थप्रत्यापक इत्यर्थः। **गुणविधाविति**। 'दध्ना जुहोति' इतिवत् 'उद्भिदा यजेत' इत्यत्रापि यदि गुणविधित्वं स्वीक्रियेत तर्हि मत्त्वर्थलक्षणापि स्वीकर्त्तव्या भवेत्। उद्भिद्यते ऊर्ध्वं विदार्यते भूमिरनेनेति उद्भिच्छब्दः खनित्रवचनः। 'दध्ना जुहोति' इत्यादौ तु दध्यादिशब्दाः तत्तदर्थेऽत्यन्तप्रसिद्धाः। अतो यागनामधेयत्वासम्भवादगत्या गुणविधायकत्वं स्वीकृतम्। अत्र तु कर्मनामधेयत्वरूपा गतिर्वर्त्तते। तस्माद् गुणविधित्वं न युक्तम्। यद्यपि शब्दनिरुक्तिसाम्याद् गुणविधिनामधेयत्वयोः निर्णयाभावः प्रतीयते तथापि उद्भिन्नामकेन यागेन फलं कुर्यादित्यन्वये सति सामानाधिकरण्यस्यैव निर्णायकत्वं बोध्यम्। गुणविधित्वे खनित्रेण साध्यो यो यागस्तेन पशुरूपं फलं भावयेदिति वाक्यार्थः समाद्यते। भवत्वेवम् तर्हि वैयधिकरण्यान्वयः स्यात्। खनित्रसाध्योयाग इत्यर्थे मत्त्वर्थलक्षण आपतति। गुणविधौ मत्त्वर्थलक्षणैव भयकारणम्। तस्मादेव यागनामत्वं स्वीकृत भवति। उद्भिच्छब्दं व्युत्पादयितुमाह—**उत्पूर्वस्येति**। उत्पूर्वस्य भिद्धातोर्विदारणमर्थः। उद्भिद्यते ऊर्ध्वं विदार्यते भूमिरनेनेति व्युत्पत्त्या ऊर्ध्वविदारणरुपसाध्यं प्रति साधनभूतं यत्खनित्रादिकं तदुद्भिच्छब्दाभिधेयम्। वाच्यार्थ इति यावत्। यदि यागसाधनत्वेन तस्यैव खनित्रस्य विधानं स्यात्तर्हि वाक्यभेदप्रसञ्जनं स्यादित्युपपादयितुं **यदीत्यादि** ग्रन्थमवतारयति। अत्रान्वयस्य प्रकारद्वयं वर्त्तते। यदि खनित्रादेः यागसाधनत्वेन विधानं भवेत्ततश्च यागस्य पश्वादिफलं प्रतिकरणत्वेन विधानं भवेतश्च यागस्य पश्वादिफलं प्रति करणत्वेन विधानम्। कुत इत्याह—**यागस्याप्राप्तत्वेनेति**। 'उद्भिदा यजेत पशुकाम' इति वाक्यमतिरिच्योद्भिद्यागस्य बोधकोत्पत्तिविधिर्नास्ति। अतएवाप्राप्तत्वेनाज्ञातत्वेनेत्यर्थः। अस्यैव योत्पत्तिवधित्वमधिकारविधित्वञ्च स्वीक्रियते। **तत्करणतयेति**। यागं प्रति करणत्वेन गुणस्य खनित्रादेर्विधानम्। अनेनप्रकारद्वयेन विधाने कण स्यादित्याह—**वाक्यभेदापत्तिरिति**। वाक्यभेदरुपा आपत्तिर्दोषः प्रसज्येतेति। वाक्यभेदे च कीदृशो वाक्यार्थः फलतीत्याह—**यागेनेति**। प्रथमे पक्षे यागेन पश्वादिफलं भावयेदिति। द्वितीये च पक्षे 'उद्भिदा यागं भावयेदिति' वाक्यद्वये सञ्जाते सुतरां वाक्यभेद इति। पुनश्चशङ्कते—**न चैवमिति**। अयं भावः—उद्भिद्रुपस्य गुणस्य 'उद्भिदा यागं भावयेदिति' यागं प्रति करणत्वेन नान्वयः, अपि तु फलभाव्यकभावनामार्थीभावनां प्रति करणत्वेनान्वयोऽस्तु। तथा च 'उद्भिदा' पश्वादिफलं भावयेदिति

**उद्भिद्‌याग्श्चेति**। उभयोः परस्परं नान्वयः सम्भवः। उभयोः सिद्धत्वात्। अतः साध्यरुपायां भावनायामेवोभयोरन्वयः। प्रधानान्वयलिप्सापि भवति समेषाम्। ततश्च वाक्यभेदापत्तिः। कथं वाक्यभेद इति चेच्छृणु—यागेन भावयेदित्येकं वाक्यम्। उद्भिदा भावयेदित्यपरं वाक्यम्। एकस्या एव भावनाया आवृत्त्या उभाभ्यां करणाभ्यामन्वये वाक्यभेदस्तुस्पष्ट एव। धात्वर्थस्य यागस्याख्यातार्थभावनायां तन्त्रसम्बन्धमङ्गीकृत्य करणत्वेन कर्मत्वेन वान्वये वाक्यभेदाभावं साधयितुमुपक्रयते—**नन्विति**। **नेति**। धात्वर्थस्य यागस्याख्यातार्थभावनायां करणत्वेनान्वये वाक्यभेदात् मा करणत्वेनान्वयोऽस्तु, अपि तु तन्त्रेणोभयोरन्वये वाक्यभेदाभावमुपपादयितुं शक्यते। 'उभयार्थं प्रयोजके तन्त्रमित्यमरहलायुधौ मेदिनी च। सकृदुच्चरितत्वे सति बह्वर्थगमकत्वं तन्त्रत्वमित्यपि वदन्ति। **पदश्रुत्यवगताया-मिति**। 'यजेत' इति पदश्रुति। अर्थात् 'यजेत' इत्येकेनैव पदेन यागभावनयोः प्रतीतिरिति। अतएव यागसम्बद्धायां भावनायामित्युक्तम्। तत्र भावनायां गुणस्योद्भिदः करणत्वेन फलस्य च पश्वादिरूपस्य कर्मत्वेनान्वयोऽस्तु। ततश्च यागस्य फलं प्रति करणत्वं गुणश्च प्रति कर्मत्वं भवेत्। ततश्च यद्यपि यागेन पश्वादिफलं भावयेत्, उद्भिदा च यागं भावयेदिति वाक्यार्थः सम्पत्स्यत इति प्रतिभाति तथापि नैतादृशो वाक्यार्थः, सम्बन्धमात्रस्य स्वीकारात्। कदाचित्करणत्वेन सम्बन्धः कदाचिच्च कर्मत्वेन सम्बन्ध इति। तस्मान्न वाक्यभेदमापादयितुं शक्यत इति भावः। तन्त्रसम्बन्धे-नाप्यन्वये वाक्यभेदो वज्रलेपायत एवेति साधयितुमाह—**उच्यत इति**। यद्यपि तन्त्रसम्बन्धेनान्वये वाक्यभेदाभाव इति पूर्वपक्षिणः समीहा तथापि यागभावनयोः परस्परमन्वयोऽभीप्सित इति चेत्, तत्र—

कारकल्पनमावश्यकं भवति। कारककल्पनं विना सम्बन्ध एव भवितुं नार्हति। कुत इत्याह—**कारकमेवेति**। क्रियायां कारकस्यैवान्वयस्य सिद्धत्वात्। क्रियाजनकत्वादेव कारकत्वं प्रसिद्धयति। अन्यथा कारकत्वमेव न सिद्धयेत्। करोतीति कारक इति व्युत्पत्तिरपि। भवतु नाम, कारक-कल्पनं, का क्षतिरित्याह—**न चेति**। अयं भावः—भावनायां गुणयागयो-रन्वयसिद्धार्थं करणत्वं कर्मत्वं वा कल्पनीयं भवेत्। एतयोरेव योग्यत्वात्। कर्मत्वञ्च करणत्वञ्च परस्परमतीव विरुद्धम्। अत एककालावच्छेदेनैका-धिकरणे उभयोः कल्पनं दुरुपपादम्। कथमिति चेदत आह—**कर्मत्वमिति**। असिद्धधर्मः साध्यत्वमिति। हि हेतौ। करणत्वन्तु सिद्धधर्मः। सिद्धसाध्य-योरेकत्रैककालावाच्छेदेनावस्थानं न सम्भवम्, तस्मान्न तन्त्रेणान्वयपक्षः

वाक्यार्थः सम्पद्येतेति पूर्वपक्षाशयः। समाधत्ते—**तस्या इति**। आर्थीभावनायाः फलभावनायाः वेत्यर्थः। उभयोरपरपर्यायत्वं बोध्यम्। **समानपदोपत्तित्यादिः**। अयमाशयः—समानमेकं यत्पदं तेनोपात्तं कथितमित्यर्थः 'यजेत' इत्येकं पदं भवति। तत्रांशद्वयं वर्त्तते। प्रथमः धात्वंशः, अपरश्च प्रत्ययांशः। प्रत्ययांशेऽऽख्यातत्वांशार्थं आर्थीभावना 'प्रकृत्यर्थश्च यागः' अतएव समानपदोपात्तत्वं सङ्घटते। प्रत्ययार्थं प्रति प्रकृत्यर्थस्य करणत्वेनान्वयः सुसिद्धः। नास्ति केषामप्यत्र विवादः। समानपदोपात्तत्वेन प्रथमोपस्थितत्वात्सर्वप्रथममार्थीभावनायां धात्वर्थस्य यागस्य करणत्वेनान्वयो भविष्यति। तेनावरुद्धत्वान्निराकाङ्क्षत्वाद्धान्यस्य कस्यापि करणत्वेनान्वयासम्भवः। अतएवोक्तम्—**अदन्वयादिति**। **करणयोरिति**। अत्र करणद्वयं वर्त्तते। समुचित इति सिद्धान्तपक्षः। यद्यपि भावनायां यागस्य सम्बन्धमात्रं प्रतीयते तथापि करणत्वेनोपस्थितिदशायां न साध्यत्वेनोयस्थितिः सम्भवति, विरोधात्। विरुद्धत्रिकद्वयापत्तेश्च। इति न्यायप्रकाशवचनमपि सङ्गच्छते। मास्तु युगपद्बोधसम्भवः, क्रमेण बोधं प्रति कल्पयिष्याम इति चेदाह—**क्रमेण त्विति**। क्रमेण बोधकल्पनायां उद्भिदा यागं भावयेत्, यागेन फलं भावयेदिति वाक्यभेदो भवत्येव। **तेनेति**। वाक्यभेदापत्त्येत्यर्थः। यदि उद्भिच्छब्देन गुणविधानमेव स्यात्तर्हि उद्भिच्छब्दस्योद्भिद्वति लक्षणा स्यादेव। **अवश्यमिति**। उपायान्तराभावादित्यर्थः। तद्वन्तमुद्भिद्वन्तम्। ततश्च वाक्यार्थं दर्शयति—'उद्भिद्वता यागेन पश्वादिफलं भावयेदिति। एतादृश एवान्वयः स्वीकार्यः स्यात्तर्हि मत्वर्थलक्षणा त्वागतैव। तन्निवारयितुं यतते—**तद्भयात्त्विति**। उद्भिच्छब्दस्य यागरूपकर्मनामधेयत्वमेवोचितमित्यर्थः। **कथञ्चिदिति**। यद्यप्युद्भिद्यते भूनिरनेनेति व्युत्पत्तिः दर्शिता। तया च खनित्रादिवचन उद्भिच्छब्दस्तथापि पश्वादिरुपफलोद्भेदनकारित्वाद् यागेऽपि व्युत्पत्तेरस्याः सम्भवात्। तत्रापि तस्य प्रयोगसम्भवात्। उपसंहरति—**अतश्चेति**। यौगिकस्थले मत्वर्थलक्षणाभयात्।

कर्मनामधेयत्वं स्वीक्रियते। रूढानां पदानां व्यावृत्त्यर्थमाह—**न रूढानामिति**। यस्मादवयवार्थप्रतीत्यभावादेवार्थबोधः सञ्जायते, तत्पदं रूढं भवति। रूढस्थले न कर्मनामधेयत्वमावश्यकमपि तु तत्र मत्वर्थलक्षणैव गुणाय कल्पते न दोषायेति। उदाहरति—**सोमेनेति**। अत्र सर्वं परित्यज्य मत्वर्थलक्षणैव प्रसाधिता महता प्रयासेन। **तदुक्तमिति**। तन्त्रवार्त्तिके प्रथमस्य चतुर्थे इति। **पदमज्ञातसन्दिग्धमिति**। अज्ञातार्थबोधकं सन्देहविषयीभूतार्थबोधकञ्च पदम्। **अपृथक्श्रुतिरिति**। सामानाधिकरण्यनिर्दिष्टं

सदिति। **प्रसिद्धैः पदैरिति। निर्णीयते इति।** यौगिकानिपदानि स्वार्थप्रतिपादनाय निर्णयमधिगच्छन्ति । **निरूढन्त्विति।** अवयवार्थप्रतिपादनरहितानि निरूढानि पदानि सामानाधिकरण्यादिवशाद् स्वार्थप्रतिपादनान्नापनीयत इति। स्वार्थं न परित्यजन्तीत्यर्थः। अतएवोद्भिद्यादिपदे सामानाधिकरण्यादिबलेन तद्युक्ताद्यर्थप्रतिपादकता कल्प्यते । सोमपदञ्च सोमलतायां रूढम्। सोमपदं सोमार्थं न जहाति । अतस्तत्र मत्त्वर्थलक्षणैव स्वीकृतेति।

कर्मनामधेयत्वप्रयोजकं प्रथमं निमित्तमुपपाद्य क्रमप्राप्तत्वात्तत्रैव वाक्यभेदभयरूपं द्वितीयं निमित्तमुपपादयितुमाह **वाक्यभेदभयादिति।** चित्राशब्दश्रवणसमनन्तरमेव चित्रत्वं स्त्रीत्वञ्चोपतिष्ठति। उभयोर्विधाने वाक्यं भिद्येत। तस्माच्चित्रापदस्य कर्मनामधेयत्वमर्थात् तन्नामकयागनामधेयत्वमित्यर्थः। कथं वाक्यभेद इत्युपपादयति—**गुणविधित्वे हीति।** हि हेतौ। 'अग्नीषोमीयं पशुमालभेत' इत्यनेन पशुयागो विहितः। तमेव प्राप्तं यागमनूद्य चित्रत्वस्त्रीत्वरूपगुणद्वयविधाने सति अवश्यमेव वाक्यभेदप्रसक्तिः स्यात्। अत्रेयं स्थितिः—'चित्रया यजेत पशुकामः' इति वाक्ये विधायको विधिलिङ्प्रत्ययरूप एक एव।

विधेयभूतौ च पदार्थौ चित्रत्वस्त्रीत्वरूपे द्वे स्तः। तर्ह्येकेन विधिप्रत्ययेनैकस्यैव विधानं भवेत्। अपरस्य च पुनर्विधातुं विधिप्रत्ययस्यावृत्तिः स्यात्। न केवलायाः प्रकृतेः प्रयोगो भवति नापि केवलस्य प्रत्ययस्य। 'न केवला प्रकृतिः प्रयोक्तव्या नापि केवल प्रत्ययः' इति न्यायात्। तर्हि सम्पूर्णस्य प्रकृतिप्रत्ययविशिष्टस्य 'यजेत' इति पदस्यावृत्तिरवश्यम्भाविनी। पुनश्च विधिपदद्वये एकस्यैव चित्रापदस्य कथमन्वयो भवेदित्यापत्तिः स्यात्। तदर्थञ्च चित्रापदमप्यावर्त्तनीयम् । ततः सम्पूर्णस्य वाक्यस्यैवावृत्तिः करणीया। एवं 'चित्रया यजेत पशुकामः' इति वाक्यार्थं स्पष्टयितुमाह— **यः पशुसाधनत्वेनेति। चित्रवर्णेन स्त्रीलिङ्गेन चेति।** चित्रत्वस्त्रीत्वगुणद्वयविशिष्टेन पशुनेत्यर्थः। **तथा सतीति।** गुणद्वयविधाने सतीत्यर्थः। **प्राप्ते कर्मणीति।**

प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः।
अप्राप्ते तु विधीयन्ते बहवोप्येकयत्नतः॥ इति।

तन्त्रवार्त्तिकस्य द्वितीयस्य द्वितीये सम्पूर्णः श्लोकः। कर्मणि याग

प्राप्ते ज्ञाते सत्यनेको गुण एकेनैव विधिना न विधातुं शक्यते परन्तु कर्मण्यप्राप्ते सति एकेनैव विधिनानेकाः गुणाः विधीयन्त इत्यर्थः। अत्र यागस्तु 'अग्नीषोमीयं पशुमालभेत' इत्यनेन प्राप्तः। अतोऽत्रैकेन यत्नेनैकस्यैव गुणस्य विधानं भवेत्। अन्यथा वाक्यभेदप्रसक्तिः। चित्रत्वस्त्रीत्वयोः पार्थक्येन विधाने वाक्यभेदोऽस्तु। परन्तु एतद्गुणद्वयविशिष्टकारकस्य विधाने न वाक्यभेदापत्तिः। विशिष्टस्यैकत्वादिति शङ्कते—**गुणद्वयेत्यादिः।** समाधत्ते—**विध्यावृत्त्यभावेऽपीति।** अयं भावः—यद्यपि विशिष्टविधाने एकस्यैव विधानात् 'यजेत' इति विधिपदस्यावृत्तिर्न स्यात्तथापि विधेस्तात्पर्यभेदस्तु स्यादेव। तात्पर्यभेदेऽपि ज्ञानगौरवस्तु स्यादेवेति नायं पक्षोऽपि स्वीकार्य इति।

'चित्रया यजेत पशुकामः' इति फलविधेरुत्पत्तिवाक्यं दर्शयति—**दधीत्यादि।** अत्र परस्परविचित्राणि षड्द्रव्याणि समाम्नातानि इदमेव चित्रायागस्योत्पत्तिवाक्यम्। प्रजापतिरत्र देवता। अतएव यागस्वरुपोपलब्धिः। अनेनोत्पत्तिवाक्येनोत्पन्नस्य यागस्य दध्यादिविचित्रद्रव्यविशिष्टत्वं प्रतीयते। चित्राशब्दस्य स्त्रीलिङ्गत्वाच्चित्राशब्दप्रतिपाद्येन यागेन सह पशुरुपफलसम्बन्धविधविधायकत्वं प्रतीयते। अतएवोभययोरेकवाक्यता वाधिता भवति। विभिन्नार्थप्रतिपादकत्वात्। **पूर्ववाक्य इति।** दधिमधुघृतमित्याद्युत्पत्तिवाक्ये। उत्पत्तिवाक्ये न किमपि फलं श्रूयते। तर्हि तस्य किं फलं स्यादित्याह—**विश्वजिन्न्यायेत्यादिः।** स्वर्ग एव फलं यस्य भागस्य, तस्य विधानमित्यर्थः। यत्र विधिवाक्ये न किमपि फलं श्रूयते, अर्थवादवाक्ये च फलं श्रूयते, तत्रार्थवादिकमेव फलं रात्रिसत्रन्यायेन विधिवाक्यस्यापि कल्प्यते। यत्र च विधिवाक्ये न किमपि फलं श्रूयते, नाप्यर्थंवादवाक्य, तत्र स्वर्ग एव फलं तस्य यागस्य कल्प्यते, यथा—'विश्वजिता यजेत' 'बलभिदा यजेतेत्यादौ' तदुक्तं जैमिनिना—'स स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वात्' इति। सर्वे स्वर्गाभिलाषिणः भवन्ति। तत्र न केषामपि विवादः। अतः स एव फलत्वेन कल्प्यत इति स्थितिः। एवं रीत्या पूर्ववाक्येन स्वर्गविधानं सिध्यति। **चित्रावाक्येनेति।** यद्यपि 'अग्नीषोमीयं पशुमालभेत' इति वाक्यं दूरस्थं वर्त्तते तथापि तत्प्रतिपाद्य मग्नीषोमीययागमनूद्य चित्रत्वादिगुणविधानमनेन वाक्येन क्रियते, तथापि वाक्यद्वयकल्पनं स्यादेव। अतो वाक्यभेदापत्तिर्वज्रलेपायेते। उपसंहरति—**तेनेति।** वाक्याभेदरूपदोषापनयनेनेत्यर्थः। तद्भयाच्चित्रापदस्य कर्मनामधेयत्वमेवोचितमिति भावः। तस्माच्चित्रापदं कर्मनामनाम्नश्च धात्वर्थेन सहाभेदसम्बन्धेनान्वयः। ततश्च 'चित्राभिन्नेन यागेन पश्वादिफलं भावयेदिति वाक्यार्थः सम्पद्यते।

कर्मनामत्वप्रयोजकं निमित्तद्वयमुपपाद्य क्रमप्राप्तत्वात्तत्प्रख्यरूपं तृतीयं निमित्तं प्रतिपादयितुमारभते—**अग्निहोत्रं जुहोतीति** । तत्प्रख्य-न्यायेनात्र कर्मनामत्वं स्वीक्रियते । 'तत्प्रख्यं चान्यशास्तम्, इति सूत्रप्रभवोऽयं तस्य प्रख्यमिति तत्प्रख्यम् । तस्य गुणस्य प्रख्यापकस्य प्रापकस्य शास्त्रस्य विद्यमानत्वेनाग्निहोत्रशब्दः कर्मनामधेयमिति न्यायप्रकाशः । कर्मनाम-धेयत्वसम्पादनायाग्निहोत्रशब्दस्य व्युत्पत्तिप्रदर्शनपूर्वकं द्रव्यविधायकत्वं निरवारयति—**तथा हीत्यादिना** । होत्रशब्देन हूयमानं द्रव्यमुच्यते । अत-एवाग्नये हूयमानं द्रव्यमस्मिन्निति व्युत्पादितम् । यद्यप्यनया व्युत्पत्त्याग्नि-रुपायाः देवतायाः द्रव्यस्य च विधायकमिदं वाक्यमिति प्रतीयते तथापि 'अग्निहोत्रेति पदं न द्रव्यविधायकम् । कुत इत्याह—'दध्ना जुहोति' इति । दधिरुपगुणविधायकेन 'दध्ना जुहोति' इति वाक्येनैव द्रव्यविषयकज्ञानस्य सञ्जातत्वात् । यद्विषयक ज्ञानं नान्येन शास्त्रेण भवति तस्यैव विधानं क्रियते, 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायात् । मा भवतु, द्रव्यविधायकत्वं तस्य, अग्निरूपदेवताविधायकत्वमेव स्यादित्याह—**नाग्निदेवताविधित्व-मिति** । अग्निरूपायाः देवताया अपि विधानं 'अग्निहोत्रं जुहोति' इत्यनेन न सम्भाव्यते । कुत इत्याह—**यदग्नये चेति** । 'यदग्नये च प्रजापतये च सायं जुहोति' इत्यस्मिन् वाक्ये देवताद्वयं श्रूयते । सायंहोमे चाग्निसमुच्चितप्रजा-पतिदेवतोपयुज्यते । अग्निसमुच्चितप्रजापतिविधानादेव न वाक्यभेदः, समुच्चितस्यैकत्वात् । अनेनैव च वाक्येनाग्निदेवतायाः ज्ञानं सञ्जायते । अतः प्राप्तत्वात् पुनः 'अग्निहोत्रं जुहोति' ।

इत्यनेनाग्निदेवतायाः विधानं न सम्भवति, 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायात् । न्यायसुधाकृन्मतयिदमिति ज्ञापनायाह—**राणके इति** । मतमिदं भाष्यवार्त्तिकसम्मतमिति द्योतनायाह—**भाष्यवर्त्तिकयोरिति** । तत्प्रख्यन्यायाधिकरणे इति शेषः । 'यौ गुणावेताभ्यां विधीयेते । इत्या-शङ्क्यते तावन्मत एवावगतौ । 'यदग्नये च प्रजापतये च सायं जुहोति' इति देवताविधानम् इत्यादिभाष्यम् । तथा च—

सायं होमे यदि ब्रूयादाघरे च परो विधिम् ।
ततः शास्त्रान्तरप्राप्तेविधिः स्यान्निष्प्रयोजनः ॥
यदा त्वदेवते होमे देवताविधिरुच्यते ।
द्रव्यं चोपांसुयाजस्य तदा तत्प्रख्यता कथम् ॥

इत्यादिभिः बहुभिः श्लोकैः प्रतिपादितोऽयं विषयः । विशेषस्तु तत एवावगन्तव्यः ।

अत्रैव मिश्रमतमवतारयितुमाह—**मिश्रास्त्विति** । एतेषामयमभिप्रायः—'यदग्नये च प्रजापतये च' इति वाक्येन यदि सायमिति कालविशिष्टहोममनूद्याग्निप्रजापतिरुपदेवताद्वयविधाने वाक्यभेदः प्रसज्येत । अतो वाक्यमिदमग्निदेवताप्रापकं बोधकं भवितुं नार्हति । तर्ह्यग्निप्रापकं किं वाक्यमित्याह—**किन्त्विति** । 'अग्निर्ज्योतिःर्ज्योतिरग्निः स्वाहेति सायं जुहोति' इति सायंकालीनहोमप्रतिपादकं वचनम् । अग्निदेवताकल्पनं विना होमानुपपत्त्या अर्थापत्त्याग्निदेवताप्रापकत्वं स्वीक्रियते । **तत्प्राप्तिरिति** । अग्निदेवताप्राप्तिरिति' मन्त्राणामनुष्ठानं प्रत्यङ्गत्वं प्रतिपादयितुमाह—**मन्त्रो हीति** । हि तो । मन्त्रो हि क्रियां प्रकाशयति बोधयति अथवा क्रियासम्बन्धिद्रव्यदेवतादिकं प्रकाशयति । तेनैव रूपेण यानुष्ठानाङ्गत्वं मन्त्राणां प्रसिद्ध्यति । **तेनेति** । एतेन सिद्धान्तेनेत्यर्थः । होमक्रियासम्बन्धिदेवतां प्रकाशयम् बोधयन् मन्त्रोऽयमनुष्ठानाङ्गत्वं प्राप्नोति । एवञ्चैतदर्थंबोधयित्वाग्निदेवतायाः होमरूपक्रियां प्रत्यङ्गत्वं प्रतिपादनायार्थापत्तिप्रमाणेन वचनं कल्प्यत इत्यर्थः 'एवं सति' 'यदग्नये च प्रजापतये च' इति वाक्येन कस्य विधानं स्यादित्याह—**यदग्नये चेति** । वाक्येनानेन ज्ञाताग्निदेवतासमुचितं प्रजापतिदेवतामात्रं विधीयते । **प्रकरणप्राप्ते इति** । होमरूपानुष्ठानस्य प्रकरणप्राप्तत्वात् सायंकालमात्रमुद्दिश्य देवताविधानं भवतीति न वाक्यभेदापत्तिर्दोषः । **इत्यादुरिति** । मिश्रा इति शेषः । वार्त्तिकमत्रप्रमाणयितुमाह—**आघाराग्निहोत्राधिकरणेत्यादिः** । द्वितीयस्य द्वितीये पञ्चमाधिकरणे । तेन सायं होमस्याग्निप्रजापती देवते भविष्यतः । एवं प्रातर्होमस्य सूर्यप्रजापतीति सिद्धमित्यादिः । विस्तरभयान्नेह सर्वमुपस्थाप्यतेऽधिको तत एवावगंतव्य । **सर्वथेति** । येन केनयिदप्युपापनापीत्यर्थः । तत्प्रख्य शास्त्रस्य स्वरूपं दर्शयितुमाह—**तस्येति** । विधातुमिच्छतीति विधित्सति । विधित्सतीति विधित्सा । विधित्सा वर्त्ततेऽत्रेति विधित्सितस्तस्येत्यर्थः । विधेयस्य गुणस्येति यावत् । विधेयगुणबोधकमन्यच्छास्त्रं यत्र वर्त्तते, स एव तत्प्रख्यन्यायशब्देनोच्यते । उपसंहरति—**अत इति** । अग्निहोत्रशब्दोऽग्निहोत्रहोमस्य नामधेयम् । वाक्यार्थं दर्शयति—**अग्निहोत्रेणेति** । इष्टं स्वर्गादिकमित्यर्थः । अग्निहोत्रमित्यत्र द्वितीयायाः का गतिरित्याह—**द्वितीया चेति** । अग्निहोत्रेणेति तृतीया करणत्वं वक्ष्यति । करणत्वञ्च साध्यत्वं विनानुपयन्नम् । अतः करणत्वसिद्धयर्थं साध्यत्वस्याक्षेपोऽऽवश्यकः । द्वितीया च तस्याक्षिप्रस्य साध्यत्वस्यानुवादिका भविष्यतीत्यर्थः । अतो न वैयर्थ्यशङ्का । एवमेवान्यत्रापि कर्सनागधेयत्वं

भवपीत्यन्यान्युदाहरणानि दातुमारभते—**एवमिति** । तत्प्रख्यन्यायेनैव 'वाजपेयेन स्वाराज्यकामो यजेत' इत्यत्र प्रयुक्तवाजपेयशब्दस्य कर्मनामधेयत्वं भवति । तत्साधनायैव व्युत्पत्तिं दर्शयति—**सुराग्रहाणामिति** । वाजमन्तं पेयं सुराद्रव्यम् 'क्षुद्रपात्रविशेषाः ग्रहा इत्युच्यन्ते' तत्रैव पेयं द्रव्यं निक्षिप्यते । तेषाञ्च पात्रविशेषाणां यागाङ्गत्वेन विधानं भवति । अतो वाजं पेयं सुराद्रव्यमस्मिन्निति वाजपेयः । गुणविधायकत्वे च यजेरावृत्तिः स्यात् ।

ततश्च 'द्रव्येण यागं कुर्यात्' इत्येकं वाक्यम् । 'यागेन फलं कुर्यादि' त्यपरं वाक्यम् । तस्माद् वाक्यभेदः प्रसजयेत् । अतो वाजयेयशब्दो न गुणविधायकः, अपि तु कर्मनामधेयमेव । एवमेव 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यत्र प्रयुक्तज्योतिष्टोमशब्दस्यापि कर्मनामधेयत्वं बोध्यम् । ज्योतिष्टोमशब्दस्य व्युत्पत्तिं दर्शयति—**ज्योतींषीति** । 'तानि वा एतानि' इत्यर्थवादवाक्यम् । अनेन च वाक्येन ज्योती रुपा या स्तोत्रीया ऋक् तत्परिच्छेदिका या त्रिवृदादिसंख्यारुपः स्तोमस्तेन सम्बन्धं प्राप्नोति । **दर्शपूर्णमासाभ्यामिति** । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्र प्रयुक्तदर्शपूर्णमासशब्दस्यापि कर्मनामधेयत्वमेवेति । दर्शपूर्णमासयोस्तावत् 'षड्यागाः भवन्ति' पौर्णमास्यां त्रयो मागाः भवन्ति, यथा—आग्नेयः, उपांशुयाजः, अग्नीषोमीमश्चेति । एवमेव दर्शेऽपि त्रयो यागाः—आग्नेयः, ऐन्द्रदधियागः, ऐन्द्रपयोयागश्चेति ।

'यदाग्नेयोऽष्यकपालोऽमावस्यायां पौर्णमास्या श्चाच्युतो भवती' त्युत्पत्तिवाक्यम् । अत्र च वाक्ये येषामाग्नेयोपांशुयाञ्जाग्मीषोमीयानां यागत्रयाणां पौर्णमासीति कालेन सह सम्बन्धः प्रतीयते । तस्य यागत्रयसमुदायस्य 'य एवं विद्वान् पौर्णमासीं यजते' इति वाक्यगतपौर्णमासीपदेना नुवादो भवति । एवमेव येषामाग्नेयैन्द्रदधिपयोयागानां दर्शकालेन सह सम्बन्धः प्रतीयते, तेषां यागत्रयाणा 'य एवं विद्वान् अमावस्यायां यजते' इत्यत्र प्रयुक्तामावास्यापदेनानुवादः । अनेन प्रकारेण कालद्वयेन सह यागसमुदायद्वयेन सह च सम्बन्धो ज्ञायते ।

अत एतेषां दर्शपूर्णमासम्बन्धिनां षण्णां यागसमुदायानां नामधेयं दर्शपूर्णमास इति । यद्यपि दाक्षायणादयः पार्थक्येन प्रतीयन्ते तथापि ते न पृथक्भूताः । अपि तु दर्शपूर्णमासान्तर्गता एव । अतएवैतेषां कर्मनामधेयत्वं

न भवति, अपि तु गुणविधायकत्वमेवेत्यादिप्रतिपादनार्थमाह—**दाक्षायणेत्यादिः**। 'दाक्षायणयज्ञेन स्वर्गकामो यजेत' 'साकं प्रस्थाय्येन यजेत पशुकामः' इति वाक्ये दाक्षायणसाकं प्रस्थाय्यविधायके। अत्र च दर्शपूर्णमासाश्रियतोरेव गुणयोः फलयोश्च विधानं दृश्यते। अतो न यागान्तरनामधेयत्वम्, अपि तु गुणविधायकत्वमेवानयोरिति। अनयोर्विधिवाक्ययोः शेषभूतं वाक्यमिदं दृश्यते—'द्वे पौर्णमास्यौ द्वे अमावस्ये' इति। दाक्षायणशब्दः द्विरावृत्तिरूपगुणवाचकः। तत्रैव व्युत्पत्ति दर्शयति—**दक्षस्य समर्थस्येति**। अयनशब्द आवृत्तिवचनः। दक्ष उत्साही, पुनःपुनरावृत्तावनलस इत्यर्थः। तदीयानां प्रयोगाणामावृत्तिर्दाक्षायणशब्दार्थः। तथा चावृत्त्या युक्तः प्रवृत्तो दर्शपूर्णमासात्मको यज्ञो दाक्षायणयज्ञइति माधवः। 'स वै दक्षो नाम' तदनेन सोऽग्रेऽयजत 'तस्माद्दाक्षायणयज्ञः' इति शातपथश्रुतिः। 'दक्षो ह वै पार्वतिरेतेन यज्ञेनेष्ट्वा सर्वान् कामानवाप' इति कौषीतकिश्रुतिश्च। 'सह कुम्भोभ्यामभिक्रामेत्' इति साकंप्रस्थाप्यागविधेर्वाक्यशेषः। अनेन च वाक्यशेषेण दधियय: कुम्भीविशिष्टातिक्रमणरूपो गुणोविधीयते। स एव गुणः साकंप्रस्थाय्यशब्दवाच्यः। अमावास्यायागे द्वौ द्वौ दोहौ समाद्य चतसृणां दधिपयसोः कुम्भीनां सह प्रस्थापनं साकंप्रस्थाप्यः। तद्युक्तो यागः साकंप्रस्थाय्य 'इति माधवः' साकं प्रस्थातुं योग्यः साकं प्रस्थाय्यः।

इत्यणि केचित्। **उत्पत्तिवाक्येष्विति**। (यदग्नये च) इत्याद्युत्पत्तिवाक्ये यद्यपि आग्नेयादिपदं श्रूयते तथापि तन्नामधेयत्वप्रयोजकमणि तु देवतारूपगुणविधायकमेव कुत इत्याह—**तत्प्रख्येति**। तत्प्रख्यन्यायप्रवृत्त्यभावात्। तत्प्रख्यन्यायप्रवृत्त्यर्थंमन्यस्माच्छास्त्राद्देवताप्राप्तिविषयिणी शङ्कामुपस्थापयति—**न चेति**। सन्निहितपठिताग्निदेवताकयाज्यानुवाक्यायुगलादेव देवतायाः ज्ञानं भवेत्तर्हि तत्प्रख्यन्यायेन कर्मनामधेयत्वं स्यात्। तस्य देवतारूपगुणस्य प्रख्यापकस्य बोधकस्यान्यस्य शास्त्रस्य विद्यमानत्वादिति भावः। निषेधति—**तस्येत्यादिना**। याज्यानुवाक्यायुगलस्य न देवताप्रापकत्वं भवंदपि, क्रमपाठ एव नास्ति। यागस्याश्रुतत्वात्तद् यागकल्पनार्थं देवताविधायकत्वस्यावश्यकत्वात्।

देवतायाः सत्त्वात् यागकल्पनं सुलभं स्यादिति। 'प्राप्ते कर्मणि नानेको विधातुं शक्यते ग्रणः इति वार्त्तिकं मनसि निधाय शङ्कते—**न चेति**। अनेकगुणविधाने विध्द्यावृत्तिलक्षणवाक्यभेदो भवितुमर्हतीति भावः।

समाधत्ते —**अप्राप्ते इति**। यद्यपि कर्मणि प्राप्ते सत्यनेकगुण विधायकत्वं न सम्भवस्तथापि कर्मण्यप्राप्तेऽन्यतोऽज्ञाते सति वहवोऽपि गुणाः यत्नेनैकेनापि विधीयन्ते, न च दोषावहा इति। अतएवानेकगुणगणविशिष्टयागविधायकत्वे न वाक्यभेदादिदोष इति। अत्रैव कस्यचित्पद्यमुदाहरति—**अत्रेति**। **नान्यत्रेति**। यद्वचनसंश्रिताः क्वचनान्यत्र गुणः श्रुतः स्युः, विधिपदारुढमाख्यातमपि ते गुणाः ध्रुवं निश्चयेन स्फुटं स्फुटरुपेण विदध्युः। तद्गुणगणविशिष्टमर्थमपि एष प्राप्नोति। तैश्च प्राप्तमर्थं न केनाप्यन्येन प्रज्ञातं विशेषरुपेण वा ज्ञातं भवेत्। पदाच्चातुतोऽर्थोऽऽप्यते प्राप्यते इत्यर्थः।

उपसंहरति—**तस्मादिति**। आग्नेयादिशब्दानां कर्मनामधेयत्वं न भवति, अपि तु दर्शपूर्णमासस्यैव कर्मनामत्वमिति नेनैव तदन्तर्गतानां सर्वेषां ग्रहणसम्भवात्। इष्टिशब्दस्य कर्मनामधेयत्वं वक्तुमारभते—**दृष्टिशब्दस्त्विति**। प्रकृतिविकृत्युभयसाधारणं कर्मनामत्वम् अर्थात् दृष्टिः प्रकृतिभूतापि भवति विकृति भूतापि। उभयोरपि दृष्टिशब्देनैव व्यवहारो दृश्यते। उभयत्र व्यवहारं दर्शयितुमाह—**पौर्णमास्यामिति**। पौर्णमास्यां पौर्णमास्यां यजेत' इत्यत्र प्रकृतौ तस्य प्रयोगस्तथा 'य इष्टया पशुना सोमेन' इत्यत्र च विकृतिरूपेऽर्थे प्रयोगो दृश्यते। तस्मादुभयत्रास्य शब्दस्य प्रयोग इति निश्चीयते। वैश्देवशब्दस्य कर्मनामधेयत्वं प्रसाधयितुमुपक्रमते—**एवमिति**। चातुर्मास्ये चत्वारि पर्वाणि भवन्ति—वैश्वदेवः, वरुणप्रधानः, साकमेधः, शुनासीरोयश्चेति। तत्र वैश्वदेवनामके प्रथमे पर्वणि। आग्नेयमष्टाकपालं निर्वपति, सौम्यं चरूम्, सावित्रं द्वादशत्रपालम्। सारस्वतं चरुम्, पौष्णं चरुम्, मारुतं सप्तकपालम्, वैश्वदेवीमामिक्षाम्, द्यावापृथिव्यमेककपालम्, इति वाक्यैरष्टौ यागाः विहिताः। ततश्च तत्सन्निधावेव श्रूयते 'वैश्वदेवेन यजेत' इति। तत्र वैश्वदेवशब्दस्तेषामष्टानां यागानां नामधेयं भवति। ते चाष्टौ यागा: न वैरवदेवभिन्नास्तत्र च न तत्तद्देवताविधानमिति। तत्प्रक्यन्यायेनैवात्र कर्मनामधेयत्वं भवतीति बोधयितुं वैरवदेवशब्दं व्युत्पादयति—**यदिति**। वैश्वदेवयागस्यार्थवादवाक्यमिदम्। यद्यस्मात्कारणात् सर्वप्रथमं विश्वेदेवाः समयजात तस्मादिदमेव वैरवदेवस्य वैश्वदेवत्वं भवति। अनेन प्रकारेण यागस्य प्रशंसा क्रियते।

अर्थवादेनास्य विश्वेदेवकर्त्तृकत्वमव—गम्यते। तस्मादेव तत्प्रख्यन्यायेन कर्मनामत्वं सिद्धयति। यागान्तरकतपनाभावे हेत्वन्तरं प्रस्तौति—

**विश्वेदेवदेवत्यमपीति** । तद्देवत्यामिक्षेति । विश्वेदेवदेवत्याभिक्षेत्यर्थः । अयं भावः—तत्र 'वैश्वदेवीमामिक्षा' इत्यपि वर्त्तते । वैश्वदेवत्यामिक्षापद-घटिताष्टयागसमुदायस्य 'लिङ्गसमवायात्' इति न्यायेन वैश्वदेवत्वं सिद्ध्यत्येव । यथा तत्र । प्राणभृत उपदधाति, सृष्टीरुपदधाति' इत्यादौ सर्वेषामप्राणभृत्त्वेऽपि तथा सर्वासां सृष्टिलिङ्गकत्वाभावेऽपि लिङ्गसम-वायात् प्रयोगबाहुल्याद्वोभयत्र प्राणभृच्छब्दस्य सृष्टिशब्दस्य वा व्यवहार-स्तथैवात्रापि छत्रिन्यायेन यागगणे वैश्वदेवशब्दव्यवहारः । अतोऽत्रापि यागान्तरकल्पना न समुचिता । कल्पने च गौरवमापद्येत । तस्माद् यागगणे वैश्वदेवशब्दस्य व्यवहार इति । अपरमपि दोषं वक्ति—**अष्टावित्यादिना** । वैश्वदेवपर्वप्रकरणे । नव प्रयाजा इज्यन्ते । नवानूयाजाः । अष्टौ हवींषि । द्वावाघारौ । द्वावाज्यभागौ । त्रिंशत्सम्पद्यन्ते, इति कपितम् । यदि 'वैश्व-देवेन यजेत' इत्यत्रापि प्रधानस्य विधिः स्यात्तर्हि प्रधानहविषां संख्या-वृद्ध्या नवकापत्त्या 'अष्टौ हवींषि' इत्यष्टत्वकथनं विरुध्येत । अर्थवाद-त्वेऽपि तस्योपायान्तराभावावनन्यगतिकत्वं बोध्यम् । वातिकेऽप्युक्तम्—न हि । वसन्ते वैश्वदेवेन, प्राचीनप्रवणे वैश्वदेवेन । इत्यादिविधानं परस्पर-सहितानामष्टानां हविषां समुदायपदादवकल्पते । इति । यागाष्टकेषु विश्वेदेवताया एव विधानं भवेदिति शङ्कते—न चेति । पूर्वोक्तेष्वष्टसु यागेषु विश्वेदेवदेवतायाः विधानं स्वीक्रियताम् ततश्च गुणविधित्वं सेत्स्यति किं नामधेयत्वकल्पनयेति । समादधाति—**तेषामिति** । तेषां यागाना-मुत्पत्तिवाक्ये विहितास्तत्तद्देवताः श्रूयन्ते । ताभ्य अग्न्यापिदेवाताभ्योऽव-रुद्धत्वाद् वैश्वदेवस्य देवतात्वकल्पनं विधानं ःनोचितमिति भावः । **अत-एवेति** । उत्पत्तिवाक्यविहितदेवतारुपगणस्य बलीस्त्वादेव । उत्पत्ति-शिष्टगुणबलीयस्त्वमेव नामधेयत्वप्रयोजकमिति न्यायसुधाकारस्यमतम् । तदेव स्पष्टयितुमाह——**राणके इति** ।

मिश्रमतमुपयादयितुमाह—**पूर्वोक्तेति** । **तत्प्रख्यन्यायेनेति** । अनेनैव न्यायेनात्र कर्मनामधेयत्वमिति मिश्रमतम् । वार्तिकमप्यत्रैवानुकूलमिति बोधयितुमाह—**वार्त्तिकेप्येवमिति** । वार्त्तिकेऽपि तत्प्रख्यतयैव कर्मनामत्व प्रतिपादितमित्यर्थः । तथाहि—'तस्मादेकदेशस्यैरपि विश्वेदेवैरुपलक्षितानां छत्रिन्यायेन तत्प्रख्यतयैव सर्वेषां नामधेयत्वम्' इति । अजितायामप्युक्तम्—अनुवादस्य त्वेकविषस्य वैकृतयादुपपन्ना तद्वति गणे वृत्तिरिति । यागगणे वैश्वदेवशब्दस्य वृत्तिरित्यर्थः । संक्षेपेण प्रतिपादिटं जीपदेवेनेति बोध-

यितुमाह—**विस्तरस्त्विति** । जीवदेवपितृचरणापदेवविरचितन्यायप्रकाशे विस्तरेण प्रतिपादितं वर्त्तत इत्यर्थः । अधिकन्तु तत एव वोध्यम् ।

तत्परत्यरुपं तृतीयं नामधेयत्वनिमित्तं निरुप्य क्रमप्राप्तत्वाच्चतुर्थं नामधेयत्वनिमित्तं निरुपयितुमारभते—**श्येनेति** । अभिचरन्निति । यद्यपि 'चर गतिभक्षणयोः' तथापि अभिपूर्वकत्वाच्चर धातोः वैरिमरणानुकूलो व्यापारोऽर्थ, । तदुक्तम्—'उपसर्गेणैव धातत्वर्थो वलादन्यत्र नीयते' इति । ततश्च 'लक्षणाल्टेत्वोः क्रियायाः' इत्यनेन हूत्वर्थकः शतृप्रत्ययो विहितः । हेतुश्चात्र भलरुपो विवक्षितः । अतश्च 'श्येनेनाभिचरन् यजेत' इत्यस्य 'श्येनसेदसन यागेन अभिचाररुपं फलं भावयेदिति वाक्यार्थः सम्पद्यते । कर्मनामत्वञ्चात्र तद्व्यपदेशन्यायेन । व्यपदेश इत्यत्र विशब्दो विभिन्नार्थकः, अपदेशशब्दश्च कथनार्थकः । अतो विभिन्नरूपेणार्थप्रतिपादमित्यर्थो लभ्यते । प्राप्तं यागमनूद्य श्येनस्यगुणमेव विधीयतामिति मनसि कृत्वा शङ्कते—**यदिति** । यदि 'श्येनेनाभिचरन् यजेत' इत्यत्र यागमनूद्य श्येनरूपगुणो विधीयते तर्हि श्येनरूपस्य गुणस्यैव स्तुतिः स्यात्, 'यद्विधेयं तदेव स्तोतव्यमिति' न्यायात् । यद्यान्यस्च विधिरन्यस्य च स्तुतिः स्यात्तदा विभिन्नविषयकत्वेनार्थवादविध्योरेकार्थत्वाभावादेकवाक्यता न स्यादिति सारविवेचिनी' श्येनयाएस्य स्तावकमर्थवादवाक्यमुपस्थापयति—**यथेति** । अर्थवादवाक्यमिदम् । यद्युच्येत श्येनस्यैव श्येनोपमानेन स्तुतिः स्यात्तदपि न कथं नेत्याह—**अभेदेत्यादिः** । उभयोरभेदे उपमानोपमेयभाव एव नोपपद्येत । भेदे एव तस्योपपत्तेः । यथा चन्द्रवन्मुखमिति । चन्द्रवन्मुखमिति । चन्द्रपदार्थः भिन्मः मुखपदार्थश्च भिष्नः । तयोरुपमानोयेमेयभावः प्रसिद्ध्यति । **तथैवात्रापीति** । यागविशिष्टस्य श्येनस्यैव विधानं स्यादित्याह—**विशिष्टविधाविति** । विशिष्टविधिस्वीकारे मत्त्वर्थलक्षणा स्वीकर्त्तव्या स्यादिवि भावः । स्वीक्रियतां मत्त्वर्थलक्षणा, का क्षतिरित्याह—**गौरवापत्तिरिति** । लक्षणायाश्च पूर्वंशक्यार्थस्य कल्पना भवति । तेन सह च सम्वन्धोऽवकल्प्यते । ततश्च गौरवापत्ति—रावश्यकी । उपसंहरति—**अत इति** । तेन श्येन रूपेण गुणेन व्यपदेशादुपमानाच्छयेनशब्दस्य यागनामधेयत्वं सिद्ध्यतीति । 'तेन व्यपदेश उपमानमिति न्यायप्रकाशः । नामधेयत्ववोधनमेवार्थवादप्रयोजनमिति प्रतिपादयितुमाह—**इदमेवेति** । श्येनपक्षिणा सह सादृश्यप्रदर्शनद्वारा नामधेयत्वप्रतिपादनमेवात्रार्थवादवाक्यस्य प्रयोजहमिति । इदमेकमेवोदाहरणं वर्त्ततेऽथवान्यान्याप्युदाहरणानि सन्तीति, क्षापनायाह—**एवमिति** । अन्यान्यप्युदाहरणानि सन्तीति, यथा

'इषुणाभिचरन् यजेत' 'सन्देशेनाभिचरन् यजेत' 'गवाभिचरन् यजेत' इत्यादीन्युदाहरणानि विद्यन्ते। सर्वत्र चैवमेव कर्मनामधेयत्वं समर्थनीयमिति भावः। कुत इत्याह—उपमानार्थवादादिति । पूर्वोक्तोपमानोपमेयभावादित्यर्थः। **संक्षेप इति**। अत्र संक्षेपेश मया प्रतिपादितम् । विस्तरस्त्वाकरग्रन्थेभ्यो वोध्य इति दिक् ।

वृत्तं कर्मनामधेयादिनिमित्तप्रतिपादनम् । तदनन्तरं प्रसङ्गप्राप्तत्वाद् द्रव्यविषये केचन विचारः प्रस्तूयन्ते। द्रव्यस्यापि यागस्वरुपसम्पादकत्वात् अतएवोक्तम्—'द्रव्यनामानि विविच्पन्ते' इति । **बर्हिराज्यपुरोडाशशब्दा** इति। 'वर्हिर्लुनाति' आज्यं विलापयति' 'पुरोडाशं पर्यग्निकरोति' इति श्रूयते। लवनं छेदनम्। विलापनं कठिनस्य प्रवीकरणम्। ज्वलदङ्गारैः पुरोडाशस्योपरि प्रादक्षिण्येन भ्रामणं पर्यग्निकरणम्। परितोऽग्निर्यस्य स पर्यग्निः। परितोऽग्निमन्तं पुरोडाशं करतीति माधवेन व्याख्यातम्। तत्र यद्यपि वर्हिरादिशब्दानां प्रोक्षणादिसंस्कारमुक्तेषु वर्हिरादिषु याज्ञिकाः प्रयुञ्जते तथापि अन्वयव्यतिरेकसिद्धत्वाज्जातिमात्रवाचका एते शब्दाः भवन्ति।

वर्हिष्ट्वाज्यत्वपुरोडाशत्वादीनि प्रवृत्तिनिमित्तानि शब्दानामेतेषाम्। यद्यपि जातेरमूर्त्तत्वात्तत्रादानादिकं कर्म भवितुं नार्हति तथापि जात्या व्यक्तिमुपलक्ष्य प्रवर्त्तते व्यवहारः। यदि व्यवहारसम्पादने व्यक्तिरावश्यकी तर्हि तत्रैव शक्तिः स्वीक्रियताम्, किं जात्येति। न कुतः। व्यक्तौ शक्तिस्वीकारे तासामानन्त्याद् गौरवमापद्यते। एकस्या एव जातेः सर्वत्रानुस्यूतत्वात्तत्र शक्तिस्वीकारे लाघवमिति। अतो जातिवाचकत्वमेवोचितमितिभावः। संस्काररहितेऽपि जातिमात्रमुपजीव्य शब्दास्ते प्रयुज्यन्ते इत्युदाहरति—'वर्हिरादाय गावो गतः। इति। अत्रैव क्रय्यमाज्यम्, पुरोडाशेन मे माता प्रहेलकं ददाति' इत्यत्युदाहार्यं। अत्र जातिमात्रे शब्दा एते प्रयुज्यन्ते इत्यर्थः। **याज्ञिकप्रयोगेऽपीति**। संस्कृतेषु वर्हिरादिषु याज्ञिकानां प्रयोगेऽपि जातिवाचकत्वे नास्ति कश्चिद् व्यभिचारः। एकदेशे जातिनिमित्ता एते शब्दाः सर्वत्रजातिनिमित्ता एव भविष्यन्ति। तदुक्तं वार्त्तिके—

एकदेशेऽपि यो हृष्टः शब्दो जातिनिबन्धनः।
तदत्यागान्न तस्यास्ति निमित्तान्तरकल्पना॥ इति।

तस्माज्जातिमात्रवचना इति।

प्रोक्षणीशब्दस्यापि जातिमात्रवाचकत्वमुपपादयितुमुपक्रमते— **प्रोक्षणीशब्दस्यापीति** । 'प्रोक्षणीरामादय' इति प्रैषवचनं श्रूयते । अत्र च संस्कारयुक्ते जल एव प्रोक्षणीशब्दं व्यवहरन्ति याज्ञिकास्तथापि 'प्रोक्षणीभिरुद्वेजिता स्म' इति लौकिकप्रयोगदर्शनाज्जातिमुपजीव्यैव प्रोक्षणीशब्दस्य प्रयोगात् क्वचिद् व्यभिचाराभावाच्च जातिमात्रवचनत्वं निभृचोद्यते । तस्माज्जातिमात्रनामत्वमिति । प्रोक्षणीशब्दः न रुढः, अपि तु यौगिक इति बोधयितुमाह—**यौगिकभृचार्यमिति** । प्रकृष्टेनोक्ष्यतेऽभिरिति । प्रकृष्टोक्षणकारणत्वात् अर्थात् प्रकर्षेण सेचनसाधनत्वात्प्रोक्षणीति । **क्लृप्ते चेति** । योगे क्लृप्ते निश्चिते सति रुढेरकल्पनात् । रुढिविषणिकल्पनाभावादित्यर्थः । भाष्येप्युक्तम्—'तस्माद् यौगिक' इति । तस्मात्प्रोक्षणीशब्दोऽपि जातिमात्रवचन इति ।

निर्मन्थनशब्दस्यापि जातिमात्रवचनत्वं साधयितुमुपक्रयते— **निर्मन्थ्यशब्दस्यापीति** । अयं भावः—'य एवं विद्वानग्निं चिनुते' इत्यनेन चयनं विहितम् । चयनं च केन कार्यमिति साधनाकाङ्क्षायां 'इष्टकाभिरग्निं चिनुते' इत्यनेन चमनसाधनत्वेनेष्टका विहिताः । तदर्थञ्चेष्टकापाकः कर्त्तव्यः । तत्पाकसिद्ध्यर्थं 'निर्मन्थ्येनेष्टकाः पचन्ति' इत्यनेन पाको विहितः । चयनसाधनीभूता इष्टका अरणिद्वयसंघर्षणजन्येनाग्निना पक्तव्या इत्यर्थः । अत्र प्रयुक्तनिर्मन्थ्यशब्दः जातिमात्रवचनः तदवोदाहरणेन स्पष्टयति—

**निर्मन्थ्यमानेत्यादि** । प्रयोगेनानेदं ज्ञायते यन्मन्थनसंस्कृताग्नावेवाग्निशब्दो प्रवर्ततेऽपि तु जातिमात्रे । शब्दस्यास्य यौगिकत्वमुपपादयितुमाह—**यौगिकत्वञ्चेति** । **साक्षात्परम्परयावेति** । चिरनिर्मथितश्चाचिरनिर्मथितश्चेत्यग्निद्वयं भवति । आधानकाले निर्मथ्य गार्हपत्ये नित्यं धृतोऽग्निश्चिरनिर्मथितः । एवमेव सद्य एव लौकिकमथनेनोत्पन्नोऽग्निरनिर्मथित इति । तेनैवेष्टकाः पच्यन्ते । उभयत्र च मन्थनोत्पन्नत्वं वर्त्तते एव । अतो योगस्य विद्यमानत्वेन यौगिकत्वमेव बोध्यम् । अचिरनिर्मथितेवाग्निना कथमिष्टकाः पक्तव्या इति चेच्छृणु—यथा नूतन—नवनीतजन्यं घृतं भवति तथैव पुरविनवनीतजन्यमपि घृतं भवति । नवनीतजन्यत्वमुभयत्र समानम् । तथापि नूतननवनीतजन्यमेव नावनीतशब्देन व्यवह्रियते । तथैवात्रापीति गृहाण । लोकवेदप्रसिद्ध्योरेकत्र समावेशे वैदिकप्रसिद्धेर्बलवत्त्वात्तयैव नामधेयत्वनिर्णयो भवतीति प्रतिपादनार्थमुपक्रयते—**क्वचिल्लोक-**

**प्रसिद्धेरिति** । कलवत्त्वात्प्रावतयादियर्थः । **नामत्वनिर्णय** इति । नामधेयत्व निर्णयइत्यर्थः । उदाहरति—**यथेति—त्रिवृच्छब्द** इति । त्रिवृच्छब्दस्य लोके त्रैगुण्यविशिष्टे प्रयोगो भवति तथापि वाक्यशेषरूपवेदप्रसिद्धया च 'उपास्यै गायता नरः' इत्यादीनामृचां नवकमर्थं इति निश्चीयते । **चरुशब्द इति** । लोके चरुशब्दस्य स्थाल्यां प्रयोगः, परन्तु वेदप्रसिद्धिमादायौदनवाचित्वं सिद्ध्यति । **अश्ववालशब्द इति** । अश्वस्य वाला इति व्युत्पत्तिमाश्रित्य लोकेऽयं शब्दोऽश्वकेशेषु प्रसिद्धस्तथापि वैदिकं प्रयोगमाश्रित्य काशनामक-तृणविशेषे प्रयुज्यते । **ऐक्षवीशब्द इति** । ऐक्षवीशब्दस्य ईक्षुसम्बन्धित्व-रुपार्थवाचकत्वात् ईक्षुदण्डवाचकता प्रतीयते तथापि वेदप्रसिद्धया काशमूल-वाचित्वं भवति । एवं प्रसिद्धेर्बलवत्त्वान्नामधेयता भवति । **केषाञ्चिदिति** । केचन शब्दा एवं भवन्ति येषां वैदिकशिष्टसमाजेऽर्थः कश्चियन्नास्ति प्रसिद्धः, परन्तु म्लेच्छसमुदाये तेषामर्थः प्रसिद्धो वर्त्तते । तत्र म्लेच्छप्रसिद्धयाप्यर्थ-निर्णयः क्रियते । उदाहरति—**यथेति** । पिकशब्दस्य कोकिलवाचित्वम्, नेमशब्दस्यार्द्धवाचित्वम्, शतव्शब्दस्य च कमलवाचित्वं म्लेच्छप्रसिद्धयैव निर्णीयते । वैदिकसमाजे तेषामर्थस्याप्रसिद्धत्वात् । वैदिकवाक्यादिनाप्यर्थ-निर्णये न सम्भव इत्याह—**न चैषामिति** । निगमाः इत्यमरकोशात् । वैदिक-प्रयोगादिकमुपजीव्यप्यिर्थकल्पनं न सम्भवम् । तत्रैव हेतुमुपस्थापयति—**क्लृप्तार्थसम्भव इति** । क्लृप्तस्यार्थस्य पदार्थस्य भम्भवे सति तद्भिन्नार्थ-कल्पना न युक्ता । म्लेच्छप्रसिद्धेरप्यर्थनिष्चायकत्वमुपदादयति—**म्लेच्छ-प्रसिद्धेरिति** । प्रामाण्यनिश्चियादित्यन्वयः । यत्र म्लेच्छप्रसिद्धशब्दविषयक-कलहाभावस्तत्रार्थनिश्यविषयककलहाभाव इत्यर्थः । विप्लवशब्दोऽशस्त्र-कलहवचनः । अतस्तत्र म्लेच्छप्रसिद्धयाप्यर्थनिश्चय इति भावः । यत्र च शब्दविषयेऽर्थविषये वा परस्परं विरोधस्तत्र शिष्टप्रसिद्धिरेव ग्राह्या, न म्लेच्छप्रसिद्धिरिति । **उक्तञ्चेति** । तन्त्रवर्त्तिके प्रथमस्य तृतीये पादे पञ्चमाधिकरणे । पिकादिशब्दवाच्यमिति । पिकादिशब्दा आर्येष्वप्रसिद्धाः । अतो म्लेच्छैर्योऽर्थोवधारितिः, स एवार्थ आर्या अपि परिगृह्णन्ति । कुत इत्याह—**अविरोधात्** । आर्यम्लेच्योः परस्परं कलहाभावात् । वैदिकभाषैक-निरता आर्यावर्त्तनिवासिनस्त्रैवर्णिका आर्याः । कुमारिकाखण्डवर्ल्विासिनोऽ पभ्रष्टभाषाभाषिणो म्लेच्छा इति वदन्ति । **क्लृप्तार्थप्रसिद्धिविरोध इति** । तुशब्दः पूर्वपक्षव्यावर्त्तकः । सा म्लेच्छप्रसिद्धिः । यत्रार्थेषु यस्य शब्दस्यार्थ-प्रसिद्धः । म्लेच्छेष्वपि कश्चिदर्थः प्रसिद्धस्तत्र परस्परं विरोधे सत्यार्य-प्रसिद्धिरेव बलीयसी । आर्यप्रसिद्धया म्लेच्छप्रसिद्धिर्बाध्यत **इत्यर्थः** ।

उदाहरति—**यथेति**। पीलुशब्द आर्येषु वृक्षे रूपेऽर्थे प्रसिद्धः। म्लेच्छेषु च गजेऽर्थे प्रसिद्धः स शब्दः। अतः परस्परं विरोधेऽऽर्यप्रसिद्धया वृक्षवाचित्वमेवेति निश्चिन्वन्ति, न तु गजवाचित्वमिति। **संक्षेप इति**। विस्तरस्तु तन्त्रवार्त्तिकादौ द्रष्टव्यः। **एवमिति**। अनेन प्रकारेण सम्पूर्णस्य वेदस्य प्रामाण्यं धर्माधर्मयोः भवतीति निरुपितम्।

कृत्स्नस्य खलु वेदस्य प्रामाण्यमुपपादितम्।
कृतः श्रमो यथाबुद्धिस्तेन तुष्यतु पूरुषः। इति।

## । स्मृतिप्रामाण्यम् ।

वेयस्य खलु सर्वस्य प्रामाण्यं वै निरुपितम्।
मनुप्रणीतशास्त्रस्य प्रामाण्यमुच्यतेऽधुना।

'वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः' इत्यादि—मन्वादिवचनेनापौरुषेयत्वात्स्वतःप्रामाण्याच्च वेदानां सर्वप्रथमं प्रामाण्यमविचिकित्सितम्। अतस्तेषां प्रामाण्यनिरुपणानन्तरमवसरप्राप्तत्वान्मन्वादिस्मृतीनां प्रामाण्यप्रतिपिपादयिषया ग्रन्थमवतारयति—**अधुनेति**। वेदप्रामाण्यं निरुप्य सम्प्रति स्मृतीनां धर्माधर्मयोः प्रामाण्यं निरुप्यत इत्यर्थः। आसां स्मृतोनाम्। मन्वादिस्मृतीनां वेदमूलकत्वेनैव प्रामाण्यं प्रसाधितं स्मृत्यधिकरणे। स्मृतीनां वेदवत्स्वतःप्रामाण्यं निवारयितुमाह—**नापौरुषेयत्वेनेति**। मन्वादिस्मृतीनां पुरुषविशेषनिर्मितत्वादपौरुषेयत्वेन प्रामाण्यं न भवति। कुत इत्याह—**दृढकर्त्तृस्मरणादिति**। अत्र पुष्पिकायामन्यत्र वा पौनःपुन्येन कर्त्तुः स्मरणं भवति। लेखनेन परम्परयाऽथवा तत्र कर्त्तुः पुरुषस्य स्मरणं जायते। तस्मान्न स्मृतीनां स्वतःप्रमाण्यम्, अपि तु वेदमूलकत्वेनासां प्रामाण्यं प्रसिद्धयति। प्रत्यक्षादिप्रमाणमूलकत्वेनापि स्मृतोनां प्रामाण्यं भवितुं नार्हतीति निषेधति—**नेति**। न प्रत्यक्षादिप्रमाणमूलकत्वेन स्मृतीतां प्रामाण्यमिति भावः। कुत इत्याह—**तेषामिति**। प्रत्यक्षादिप्रमाणानां धर्माधर्मनिर्णये प्रामाण्यास्वोकारात्। आदिपदेनानुमानादीनां ग्रहणम्। तथाहि—प्रत्यक्षात्मकज्ञानसम्पादनायेन्द्रियेण सहार्थस्य संयोगोऽऽवश्यकः। घटादिपदार्थेन सह चक्षुरादीन्द्रियस्य सन्निकर्षो भवनि। ततश्च तद्विषयक ज्ञानमुत्पद्यते। न घटपटादिसदृशः स्थूलपदार्थो धर्म इति। तस्यालौकिकत्वात्। अत इन्द्रियार्थसन्निकर्षाभावान्न तत्र प्रत्यक्षं प्रमाणं प्रक्रमते। अतएव 'चोदनालक्षणोऽर्थो

धर्मः' इत्यनेन धर्मलक्षणं प्रतिपाद्य चोदनैव प्रमाणं चोदना प्रमाणमेवेति व्याख्याद्वयेन चोदनायाः धर्माधर्मयोः प्रामाण्यं संसाधितम् । तदुक्तं भाष्यकारेण—चोदनेति क्रियायाः प्रवर्त्तकं वचनमाहुः' इति । वार्त्तिककरोप्याह—

तेन प्रवर्त्तकं वाक्यं शास्त्रेऽस्मिन् चोदनोच्यते ।
एवम्—धर्मे सामान्यतः सिद्धे प्रमाणं चोदनोच्यते ।
तथा—चोदनैव प्रमाणं चेत्येतद्धर्मेऽवधारितम् । इति ।

प्रमाणानां परीक्षार्थं सूत्रितं सूत्रकारेण—'तस्य निमित्तपरीष्टिः' इति । इदानीं तस्य निमित्तं परीक्षिष्यामहे, किं चोदनैवेति, अन्यदपीत । तस्मान्न तावन्निश्चीयते चोदनालक्षणोऽर्थो धर्म इति । तत्परीक्षार्थमेव पुनरुक्तं सूत्रकारेण 'सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म, तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्' इति । सदित्यारभ्य तत्प्रत्यक्षमिति यावत्प्रत्यक्षस्य लक्षणम् । तदनन्तरं 'अनिमित्तं विद्यमानोपलम्भनत्वात्' इत्यशेन प्रत्यक्ष-प्रमाणस्यानिमित्तत्वं भर्माधर्मयोः प्रतिपादितम् । तदेव स्पष्टयति भाष्यकारः—प्रत्यक्षं तावदनिमित्तम् । 'सतश्चैतदुपलम्भनं नासतः' इति । मध्ये च प्रत्यक्षलक्षणं व्याख्यातम् । ननु मा भवतु प्रत्यक्षस्य प्रामाण्यम् । अनुमानादीनां प्रामाण्यन्तु भवेदेवेत्याशङ्कायमाह—प्रत्यक्षपूर्वकत्वाच्यानुमानोपमानार्थापत्तीनामप्यकारणत्वमिति' । एवमेवौत्पत्तिकसूत्रेऽपि—'...... ...अग्निहोत्रादिलक्षणस्य धर्मस्य निमित्तं प्रत्यक्षादिभिरनवगतस्य' इत्यादिः । एवमेव वार्त्तिकेऽपि—

यतोऽस्ति तत्र धर्मोऽयं विद्यमानोपलम्भनम् ।
तस्मात्तेन प्रसिद्धेन गम्यतामनिमित्तता ।।

इत्यादिभिर्बहुभिः श्लोकैः प्रत्यक्षस्य धर्माधर्मयोरनिमित्तत्वं प्रतिपादितं दृश्यते । विस्तरभयान्नेहावतार्यंते । ततोऽवसेयः । अनुमाने व्याप्तिग्रहणं जीवातुरम् । तेन विनानुमाताप्रसरात् । प्रथमन्तावद् गृहे महानसादौ धूमाग्न्योः साहचर्यं निश्चितं भवति, तेनानुमीयते—महानसं वन्हिमत् धूमादिति 'इदमेव स्वार्थानुमानम्' तदनन्तरं वनादौ गते सति पर्वतेऽपि पश्यति धूमम् । ततश्चपञ्चावयववाक्यप्रयोगद्वारा वन्हिज्ञानं कारयति । तदेव परार्थानुमानम् । वस्तुतस्तु मीमांसकमतेऽवयवत्रयमेवोपयुज्यते—

उदाहरणान्तमुदाहरणादिर्वा। अतः प्रत्यक्षज्ञानमूलकत्वमनुमानस्य। तथा च वदति भाष्यकारः—अनुमानं ज्ञातसम्बन्धस्यैकदेशदर्शनादेकदेशान्तरेऽसन्निकृष्टेऽर्थे बुद्धिः। तत्तु द्विविधम्—प्रत्यक्षतो दृष्टसम्बन्धम्, सामान्यतो दृष्टसम्बन्धञ्च। प्रत्यक्षतो दृष्टसम्बन्धं यथा—धूमाकृतिदर्शनादग्न्याकृतिविज्ञानम्। सामान्यतो दृष्टसम्बन्धं यथा—देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्यादित्यगतिस्मरणम्' इति। एतच्च वार्त्तिके महता प्रबन्धेन विचारितम्।

यत्र विशेषयोरेव पदार्थयोः प्रत्यक्षेण गृह्यते सम्बन्धस्तद्विशेषविषयमधिकृत्य प्रवर्त्तमानं प्रत्यक्षतो दृष्टसम्बन्धइत्युच्यते। यत्र खलु काष्ठाग्निविशेषतज्जन्यधूमविशेषयोः यत्परस्परं सम्बन्धग्रहणं प्रत्यक्षेण सञ्जातम्, तस्मिन्नेव धर्मिणि कालान्तरे तस्यैव धूमविशेषस्य दर्शनात् यदनुमानं जायते तत्प्रत्यक्षतो दृष्टसम्बन्धम्। यत्र च सामान्ययोरेव प्रत्यक्षेण गृह्यते सम्बन्धस्तत्सामान्यतो दृष्टसम्बन्धमिति कथ्यते। यथानुमानम्—आदित्यो गतिमान् देशान्तरप्राप्तिमत्त्वात्। यो यो देशान्तरप्राप्तिमान् स स गतिमानिति व्याप्तिः। उदाहरणं यथा—देवदत्त इति। देवदत्तोऽपि देशासामान्ययोरेव सम्बन्धः प्रत्यक्षेण गृह्यते। अतएव सामान्यतो दृष्टसम्बन्धोऽनुमानमित्युच्यते। तदनन्तरं शास्त्रप्रमाणं परीक्षितम्। तदर्थञ्च लक्षणमुपस्थापितं भाष्यकारे—'शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम्' इति। इदमपि शास्त्रप्रमाणं वेदार्थविचारोपयोगि। शास्त्रशब्देन चतुर्दशाष्टादश वा विद्यास्थानं परिगृह्यते। अत्र चोदनाप्रतिपादकः शब्दशब्दः। अर्थशब्दश्च धर्माधर्मौ परिगृह्णाति। अतश्चोदनात्मकशब्दविज्ञानात्प्रमाणान्तरापरिगृहीतधर्माधर्मविषयकज्ञानजनकतावच्छेदकताश्रयत्वं शास्त्रत्वमिति फलति।

प्रत्यक्षादिषु वक्तव्यं शब्दशास्त्रस्य लक्षणम्।
तदतित्वरितेनेह किं शास्त्रादभियते ॥ इत्याद्युक्त्वा।

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥

स्वरूपकथनं यत्तु कस्यचित्तत्र दृश्यते।
तदङ्गत्वेन तस्यापि शास्त्रत्वमवगम्यते ॥

चोदना चोपदेशश्च शास्त्रमेवेत्युदाहृतम्।
यथा च चोदनाशब्दो वैदिक्यामेव वर्त्तते ॥

शब्दज्ञानार्थविज्ञानशब्दौ शास्त्रे तथा स्थितौ। इत्यादि—बहुभिः श्लोकैः विवेचितम्। एवमेव प्रत्ययमात्रस्य पदमात्रस्य वा शास्त्रत्वं निषेधति—यथा—

भावनायां समस्तायां वाक्यादेवोपजायते।
प्रवृत्तिर्वा निवृत्तिर्वा तच्छास्त्रं न पदाद् यतः। इति।

एवं वार्त्तिके बहुविचारितम्।

उपमानमपि तावदनिमित्तम्। धर्माधर्मयोस्तावन्निमित्तत्वमस्तु वा मास्तु, परन्तु स्वरूपज्ञानन्तूभयत्रावश्यकमिति। अत उपमानं लक्षयति भाष्यकारः—'उपमानमपि सादृश्यमसन्निकृष्टेऽर्थे बुद्धिमुत्पादयति। यथा—गवयदर्शनं गोस्मरणस्य इति। यद् दृश्यमानं सादृश्यमसन्निकृष्टेऽर्थेऽतिप्रमाणान्तरागम्येऽर्थे बुद्धि ज्ञानमुत्पादयति तदुपमानमित्यर्थः। उपमित्यात्मिका या प्रमा, तस्याः करणमित्यर्थः। अतएव नैयायिकाः वदन्ति—उपमितिकरणमुपमानमिति। 'प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानम्' इति लक्षितमुपमानं गौतमेन। तद्भिन्नं लक्षणमुक्तं भाष्यकारेण शबरस्वामिना। तत्र कारणं किमित्यत्राह—वार्त्तिककार :—

कीदृग्गवय इत्येवं पृष्टो नागरिकैर्यदि।
ब्रवीत्यारण्यको वाक्यं यथा गौर्गवयस्तथा॥

एतस्मिन्नुपमानत्वं प्रसिद्धं शाबरे पुनः।
तस्यागमाबहिर्भावादन्यथैवोपवर्णितम्॥ इति।

यद्यपि

सदृशादुपजायेतां या मतिः सदृशान्तरे।
ध्यानादिस्मृतितुल्यत्वात्साप्रमाणं कथं भवेत्॥ इत्यादिना।

भाष्यकारीयं लक्षणमप्याक्षिप्तं तथापि पुनरन्तेसमाहितमपि। तत्सर्वं तत एव ज्ञेयम्। ये प्रमाणद्वयवादिनः सन्ति ये वा प्रमाणत्रयवादिनो वा, तानभिलक्ष्याप्माह—

न चैतस्यानुमानत्वं पक्षधर्माद्यसम्भवात्।
प्राक् प्रमेयस्य सादृश्यं न धर्मत्वेन गृह्यते॥

गवये गृह्यमाणं च न गवामनुमापकम्।
प्रतिज्ञार्थैकदेशत्वाद् गोगतस्य न लिङ्गता॥ इत्यादिबहुभिः।

श्लोकैः प्रमाणान्तरत्वमपि प्रसाधितम् । उपमानस्य स्वतन्त्रोपयोगित्वमप्याह—

भिन्नानुमानादुपमेययुक्तं सौर्यादिवाक्यैरसहायि दृष्टम् ।
सादृश्यतोऽन्यादियुतं कथं नु प्रत्याययेदित्युपयुज्यते नः ।।

प्रतिनिधिरपि चैवं व्रीहिसादृश्ययोगाद्,
भवति तदपचारे यत्र नीवारजातौ ।

तदपि फलमभीष्टं लणणस्योपमायाः,
प्रकृतिरपि गोर्वाध्यते यत्र चान्यैः ।।

यदि सुसदृशमन्यल्लभ्यते तत्र मिथ्या,
भवति विसदृशत्वान्मन्दसादृश्ययुक्तम् ।

मतिरपि च तथैव द्रागिवोत्पद्यतेऽस्मि—,
न्नितरविषयवोधेऽसत्यपीत्थं च वाधः ।।

अनेन प्रकारेणोपमानस्य प्रयोजनमपि सुस्पष्टं प्रतिपादितम् । अर्थापत्तिरपि तावदप्रमाणम् । तदर्थं लक्षयति भाष्यकारः—अर्थापत्तिरपि दृष्टः श्रुतो वाऽर्थोऽन्यथा नोपपद्यत इत्यर्थकल्पना । यथा—जीवति देवदत्तं गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पना इति । अनेनैवार्थापत्तिद्वयं प्रसिद्धयति—दृष्टार्थापत्तिः श्रुतार्थापत्तिश्च । दृष्टार्थापत्तेरुदाहरणं स्वयमेव भाष्यकारेणैव प्रदत्तम् । श्रुतार्थापत्तिरुदाह्रियते—यत्रापरिपूर्णस्य वाक्यस्यान्वयसिद्धयर्थं तदनुकूलशब्दोऽध्याह्रियते, तत्रैव श्रुतार्थापत्तिः स्वीक्रियते । यथा द्वारं द्वारमित्युक्तेऽन्वयसिद्धयर्थं 'पिधेहि' अथवा 'उद्घाटय' इत्यादिपदस्यध्याहारः क्रियते । ततश्चान्वयः सिद्धयति । शब्दकल्पनारूपेयं श्रुतार्थापत्तिरिति । प्राभाकरास्तावन्नानुमन्यन्ते श्रुतार्थापत्तिम् । तदर्थस्यैव कल्प्यत्वेन शब्दकल्पनाभावात । तस्मान्नास्ति श्रुतार्थापत्तिरिति । नारायणेनाप्युक्तम्—

अन्यथानुपपत्त्या यदुपपादककल्पनम् ।
तदर्थापत्तिरित्येवं लक्षणं भाष्यभाषितम् ।। इति ।

वार्त्तिककारोऽपि भाष्यार्थमाह—

प्रमाणषट्कविज्ञातो यत्रार्थो नान्यथा भवेत् ।
अदृष्टं कल्पयेदन्यं सार्थापत्तिरुदाहृता ।। इति ।

दृष्टार्थापत्तितः श्रुतार्थापत्तिं भिनत्ति । यथा—

दृष्टः पञ्चभिरप्यस्माद् भेदेनोक्ता श्रुतोद्भवा ।
प्रमाणग्राहिणीत्वेन यस्मात्पूर्वविलक्षणा ।।

दृष्टार्थापत्त्यपेक्षया श्रुतार्थापत्तेर्वैलक्षण्यमिदमिति । दृष्टार्थापत्तिश्च पञ्चप्रकाशः । तदुक्तं वार्त्तिककारेण—

तत्र प्रत्यक्षतो ज्ञानाद् दाहाद् दहनशक्तता ।
वन्हेरनुमितात्सूर्ये यानात् तच्छक्तियोग्यता ।।

श्रुतार्थापत्तिरत्रैव परस्तादभिधास्यते ।
गवयोपमिता या गौस्तज्ज्ञानग्राह्यता मता ।।

अभिधानप्रसिद्ध्यर्थमर्थापत्त्यावबोधितात् ।
शब्दे बोधकसामर्थ्यात्तन्नित्यत्वप्रकल्पनम् ।। इति ।

प्रमाणषट्केन प्रमितस्य पदार्थस्यार्थान्तरेण विनानुपपत्तिमालोच्य तदुपपत्त्यर्थं याऽर्थोन्तरकल्पना क्रियते सार्थापत्तिरिति । प्रत्यक्षप्रमितान्यथानुपपत्त्यार्थकल्पना यथा—

प्रत्यक्षतोऽवगताद्दाहाद्वन्हेर्दाहकत्वशक्तिकल्पना । अनुमानपूर्विकार्थापत्तिर्यथा—देशान्तरप्राप्तिलिङ्गेनानुमानेनादित्ये गतिमनुमाय तदन्यथानुपपत्त्यादित्ये गमनशक्तिकल्पना । शब्दपूर्विकाप्रमाणग्राहिण्यर्थापत्तिर्यथा—'पीनो देवदत्तो दिवा न भुङ्क्ते' इति श्रुतेन वाक्येन दिवाऽभुञ्जाने देवदत्ते पीनत्वरुपो योऽर्थः प्रमितस्तदन्यथानुपपत्तिमालोच्य तदुपपत्त्यर्थं 'रात्रौ भुङ्क्ते' इति रात्रिभोजनरुपार्थप्रतिपादकवाक्यान्तरस्य कल्पना । उपमानपूर्विकार्थापत्तिर्यथा—गवयदर्शनादेतत्सदृशो गौरिति यद्गवि गवयसादृश्यमुपमितं तदन्यथानुपपत्त्या तादृशसादृश्यविशिष्ठगवि तादृशप्रमाविषयत्वशक्तिरस्तोति कल्पना । अर्थापत्तिपूर्विकार्थापत्तिर्यथा—अर्थबोधान्यथानुपपत्त्या शब्दस्य नित्यत्वकल्पना । अभावपूर्विकार्थापत्तिर्यथा—जीवतो देवदत्तस्य गृहेऽभावो योग्यानुपलब्ध्या प्रमितः । तदन्यथानुपपत्त्या च बहिर्भावस्य प्रमाणान्तरागम्यस्य या कल्पना साऽभावपूर्विकाऽर्थापत्तिरिति सर्वं स्पष्टीकृतं प्रभायाम् । यद्यपि भाष्ये उदाहरणमेकमेव दृश्यते तथापि सर्वेषामुदाहरणानामुपलक्षकं तदिति बोध्यम् एवं महता प्रबन्धेन निरुपिता अर्थापत्तिः । परमतखण्डनपूर्वकमेव स्वमतस्थापनमिति शैली भट्टपादस्य । अर्थापत्तेरनुमानापेक्षया स्वतन्त्र प्रामाण्यमुपवर्णितम् । यथा—

स्मृत्या श्रुतिर्या परिकल्प्यतेऽस्मिन्,
लिङ्गादिभिर्या विनियोजिका च ।
फलादिभिर्यत्परिपूरणं च,
सम्बन्धदृक् तत्र न काचिदस्ति ।।
तत्सर्वमित्याद्यसमञ्जसं स्या—,
न्न चेदियं स्यादनुमानतोऽन्या ।
एवं स्वभावाप्यनुमानशब्दं,
लभेत चेदस्ति यथेप्सितं नः ।। इति ।

एतैश्च श्लोकैरर्थापत्तिः प्रसाधिता । अभावोऽपि तावदनिमित्तम् । तदर्थं तत्स्वरूपं प्रादर्शि । यथा—'अभावोऽपि प्रमाणाभावो नास्तीत्यस्यार्थस्यासन्निकृष्टस्य' इति भाष्यम् नारायणेनाप्युक्तम्—

अथोपलम्भयोग्यत्वे सत्यप्यनुपलम्भनम् ।
अभावाख्यं प्रमाणं स्यादभावस्यावबोधकम् ।। इति ।

प्रमाणमिदं प्राभाकराः न स्वीकुर्वन्ति । अतएव परिदृसन्ति--यथा--

अभावाख्यं तु वस्त्वेव नास्तीत्याह प्रभाकरः ।
तेन प्रमाणचिन्तामेवैनां परिहसत्यसौ ।। इति ।

अमावस्याधिकरणस्वरूपत्वात् । अत्रानुपलभ्भ एव कारणं भवमि । अनुपलभ्भश्च ज्ञानाभावरूपः । अतोऽनुपलम्भकरणकं प्रमाणाभावरूपः स्मरणाभावरूपश्च प्रत्यक्षादिप्रमाणषट्काभावरूपामनुपलम्भात् घटादिविषयकाभावज्ञानं जायते । एवमेवान्यत्रापि । प्रातरिह चैत्रो नासीदिति सायंकाले ज्ञानं जातम् । तत्र प्रातःकालविसिष्टस्य चैत्रस्य सायंकाले दर्शनायोग्यत्वात्स्मरणयोग्यत्वे सति अस्मरणमेव तदानीं प्रातःकालविशिष्टचैत्राभावस्य बोधकमिति । अभावप्रमाणस्यावश्यकतां दर्शयति वात्तिककारः—

प्रमाणपञ्चकं यत्र वस्तुरुपे न जायते ।
वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ।। इति ।

अपि चोक्तम्—

वस्त्वसङ्करसिद्धिश्च तत्प्रामाण्यसमाश्रया ।
क्षीरे दध्यादि यन्नास्ति प्रागभाव स उच्यते ।।

नास्तिता पयसो दध्नि प्रध्वंसाभाव इष्यते ।
गवि योऽश्वाद्यभावस्तु सोऽन्योन्याभाव उच्चते ।।
शिप्सोऽवयवा निम्ना वृद्धिकाठिन्यवर्जिताः ।
शशशृङ्गादिरूपेण सोत्यन्ताभाव उच्चते ।।

यद्यभावप्रमाणं न स्वीक्रियते चेत्तर्हि वस्त्वसङ्करोऽयः न सिद्धयति । तदर्थं प्रमाणमिदमावश्यकमिति ।

तथा चोक्तम्—

क्षीरे दधि भवेदेवं दध्नि क्षीरं घटे पटः ।
शशे शृङ्गं पृथिव्यादौ चैतन्यं मूर्त्तिरात्मनि ।।
अप्सु गन्धो रसश्चाग्नौ वायौ रूपेण तौ सह ।
व्योम्नि संस्पर्शिता ते च न चेदस्य प्रमाणता ।।

इत्यादिना महता प्रवन्धेनाभावाख्यं प्रमाणं प्रसाध्य तस्य स्वतन्त्रोपयोगोऽपि समुपवर्णितः । यथा—

कर्माणि सर्वाणि फलैः समस्तैः सर्वैर्यथावच्च यदङ्गकाण्डैः । न सङ्गतानीह परस्परं च नाङ्गं तदेतत्प्रभवं क्रतूनाम् ।। इति । सर्वप्रकारोऽपि वस्त्वसङ्करोऽभावप्रमाणक एव । तस्मादभावप्रमाणस्य प्रामाण्यं प्रसिद्धयति । सर्वाण्येतानि प्रमाणानि प्रत्यक्षमूलकानि । तत्सिद्धं प्रत्यक्षपूर्वकत्वाच्चानुमानोपमानार्थापत्तीनामप्यकारणत्वमिति । प्रकृतमनुसरामः कश्चित्पुरुषः भ्रमात्मकं ज्ञानमनुसृत्य किञ्चिल्लिखितवान् । तदनुसृत्यान्यः, तच्चानुसृत्यान्य इति भ्रमात्मकज्ञानपरम्परमा स्मृतीनां प्रामाण्यम् । तदेव निराकरोति—**न चेति** । भ्रान्त्यादिमूलकत्वेनासां प्रामाण्यं नास्तीति भावः । तत्रैव हेतुमुपन्यस्यति—**किञ्चिदिति** । वेदप्रतिपाद्यार्थप्रतिपादनप्रयुक्तमवधारितं निश्चितमाप्तत्वं येषामिति । तेषां मन्वादीनामित्यर्थः । **वेद एवेति** वेदानामेव धर्माधर्मयोः प्रामाण्यम् । अनेन 'चोदनालक्षणोऽर्थो धर्मः' इति सूत्रस्य चोदनैव प्रमाणमिति पक्षं स्मारयति । **नान्यदिति** । चोदनातिरिक्तानि प्रत्यक्षादीनि प्रमाणानि व्यावर्त्तयति । न प्रत्यक्षादिप्रमाणानां धर्माधर्मयोः प्रामाण्यमिति । अभिदधानामिति । एवमेव स्वीकुर्वतामित्यर्थः । वेदमूल-

कत्वेन प्रामाण्यस्वीकाराद् भ्रान्त्यादिमूलकत्वेन प्रामाण्यकल्पनानुपपत्तिरिति भावः ।

तत्प्रमाणयितुमेवोदाहरति मनुवचनं **'यः कश्चिदिति'** अत्रैव 'सर्वज्ञानमयो हि सः' इति चतुर्थः पादः । वचनमिदं व्याख्यातं कुल्लूकभट्टेन— 'यः कश्चित् कस्यचिद् ब्राह्मणादेर्मनुना धर्म उक्तः स सर्वो वेदे प्रतिपादितः । यस्मात्सर्वज्ञोऽसौ मनुः, सर्वज्ञतया चोत्सन्न विप्रकीर्णपठ्यमानवेदार्थं सम्यग्ज्ञात्वा लोकहितायोपनिबद्धवान्' इति । प्रकारेणैतेनैतासां वेदमूलकत्वमभिहितं भवति । ननु मनुना यः कश्चित् कस्यचिद्धर्मः परिकीर्त्तितः इति कथनेन नेदं शास्त्रं मनुप्रणीतमपि त्वन्येन केनचित् प्रणीतमिति प्रतिभाति । तत्कथं मानवं धर्मशास्त्रमिति व्यपदेश इति चेत्, न । भट्टकुल्लूकेनैव समाहितत्वात् । तथाहि—प्रायेणाचार्याणामियं शैली यत्स्वाभिप्रायमपि परोपदेशमिव वर्णयन्ति । अत एव 'कर्माण्यपि जैमिनिः फलार्थत्वात्' इति जैमिनिसूत्रम्, तथा 'तदुपर्यपि बादरायणः सम्भवात्' इति बादरायणप्रणीतं शारीरकसूत्रमपि सङ्गच्छते । अथवा मनूपदिष्टाः धर्मा—स्तच्छिष्येण भृगुणा तदाज्ञयोपनिबद्धाः । कथितमपि—

'एतद्वोऽयं भृगुः शास्त्रं श्रावयिष्यत्यशेषतः' इति । अतः मनूपदिष्टधर्मोपनिबद्धत्वान्मानवीयं धर्मशास्त्रमिति व्यपदेशोऽपि सङ्गच्छते । एकां पूर्वां स्मृतिं दृष्ट्वा अपरां विनिर्मितवान् । तां च दृष्ट्वा अपरामिति स्मृतिपरम्परैव स्मृतिप्रणयने मूलमित्यपि निवारयति—**नापीति** । स्मृतिपरम्परामूलकत्वेन स्मृतीनां प्रामाण्यस्वीकारेऽन्धपरम्पराप्रसक्तिः स्यात् । तस्मान्नेदं कथनं समीचीनमिति भावः । रूपादिप्रत्यक्षे दृष्टिविहीनानामप्रमाणवत् । **अतएवान्धपरम्पराप्रसक्तत्वादेव** । नित्यानुमेयवेदमूलकत्वमपि नेति निवारयति । अपि तु प्रत्यक्षवेदमूलकत्वमासामित्यर्थः । विनष्टशाखामूलकत्वमपि स्मृतीनां वारयति—**नापीति** ।

विनष्टवेदशाखामूलकत्वमपि स्मृतीनां नास्तीत्यर्थः । कुत इत्याह— **अत्यन्तावहिताध्येतृकानामिति** । वैदिका वेदाध्ययनेऽतीव सावधानाः भवन्ति । मात्रामप्यधिकं न्यूनं वा न गृह्णन्ति । गुरुमुखोच्चारणानूच्चारणविशिष्टत्वाच्च यथावदधीयते । तस्मात्तस्य नोत्सादः सम्भवः । वेदानामुत्साद एव न सम्भवस्तर्हि तन्मूलकत्वं स्मृतीनां कथं वक्तुं शक्यते । अनयोः पक्षयोः स्वीकारे का हानिरित्याह—**शाक्यादिष्वति** । आदिपदेन सर्वं

वेदबाह्या: ग्राह्या: । शाक्य: बौद्ध: । **अनयोरिति** । अन्धपरम्परामूलकत्वा-ऽसन्नवेदशाखामूलकत्वयो: । अनयो: पक्षयो: वेदबाह्यशाक्यादिग्रन्थेऽपि सम्भवात्तेषामपि प्रामाण्यप्रसञ्जनं स्यात् । तेऽपि स्वमतं प्रमाणयितुमुत्स-न्नादिवेदमूलत्वं ख्यापयेयु: । अतएवानयो: पक्षयो: खण्डनमावश्यकम् । उपसंहरति—**अत इति** । प्रत्यक्षवेदशाखामूलकत्वेनैव स्मृतीनां प्रामाण्यं बोध्यम्, नानुमेयवेदशाखामूवत्वेनेति । वेदमूलकत्वेनैव स्मृतीनां प्रामाण्ये तदर्थस्य वेदादेव प्रसिद्धत्वात्स्मृतिप्रणयनमेव व्यर्थमिति शङ्कायामाह—**न चैवमिति** । स्मृतिप्रणयनं न व्यर्थमिति तस्य वैयर्थ्यं निवारयति । कुत इत्याह—**नानाशाखागतेत्यादि:** । नानाशाखासु नाना प्रकरणेषु च ते ते विषया: प्रतिपादिता: सन्ति । तत्रापि केचन अर्थवादरूपा: ! केचन: च मन्त्ररूपा: । प्राशस्त्यादिप्रतिपादका: मन्त्रा अर्थवादरूपा: । मन्त्रत्वेन प्रसिद्धा: मन्त्रा इति । अर्थवादवाक्यतासम्पन्नविधिवाक्येनोपसंह्रियते श्रुत्यर्थ: । तेन चार्थवत्त्वं स्मृतोनामिति । अनेकत्र विप्रकीर्णा: विषया एकत्रीकृत्य सर्वजनसुलभतया प्रतिपादने न सर्वे समर्था: । तत्र सर्वज्ञ एव कश्चिच्जन: प्रभु: । अतएव सर्वज्ञा: मनुप्रभृतयस्तान् तानर्थान् संगृह्य स्मृतिरूपेण प्रतिपादितवन्त: । तेन च तानि तानि निगूहितानि धर्मतत्त्वानि सर्वजनसुलभानि सञ्जातानि । अतएव स्मृतिप्रणयनस्यार्थवत्त्वं सिद्धयति । तदेवोदाहरणेन स्पष्टीकरोति—**न हीति** । द्वयो: प्रणयन्तीति वाक्येन प्रणयनं विधीयते । वाक्यमितिमेकस्यां शाखायां पठितम् । तद्भिन्नायां शाखायां श्रूयते 'आहवनीयादध्वर्युप्रतिप्रास्थातारौ' इति । उभयोश्च वाक्ययो: भवत्येकवाक्यतेति न सर्वैश्वगन्तुं शक्या, अपि तु ये विशिष्टविज्ञानसम्पन्ना: सन्ति तेषामेव सुलभमित्यर्थ: । अत्रैवोदाहरणान्तरं प्रस्तौति—**दर्शपूर्णमास-प्रकरणाधीतानामिति** । दर्शपूर्णमासप्रकरणे रजस्वलानां स्त्रीणां कृते केचन धर्मा: विहिता: । तेषाञ्च धर्माणां तत्रानावश्यकत्वेन सम्बन्धाभावात् रजस्वलाव्रतेषु भवत्युत्कर्ष: । नायमुत्कर्ष: सर्वैरवगन्तुं शक्य:, अपि तु विशिष्टप्रेक्षावद्भिरेव । तस्माद् विप्रकीर्णविषयं ज्ञात्वा स्मृत्वा चोपदिशन्ति स्मृतिकारा इति । स्मृतीनां वेदमूलकत्वं तथा मूलभूतवैदिकवाक्यकल्पनद्वारा तासां प्रामाण्यं स्पष्टयति—**तद् यथैवेति** । अर्थवादवाक्यमिदम् । एतन्मूलक-मेव स्मृतिवचनं **महोक्षं वा महाजं वेति** वचनमिदं भगवतो याज्ञवल्क्यस्य । सम्पूर्णश्लोकश्चेत्थम्—

महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत् ।
सत्क्रियान्वासनं स्वादु भोजनं सूनृतं वच: ।। इति ।

एवमेव **'केवलाद्यो भवति केवलादी'** इति श्रुतिवाक्यम् । मात्मानमुद्दिश्य सम्पादितं भोजनादिकमद्यजनकं भवति । अतएव केवलादी केवलाघो भवतीत्यर्थः । तन्मूलकमेव स्मृतिवचनं **'न पचेदिति'** । आत्मने केवलमात्मानमुद्दिश्य न पचेत् पाकं न कुर्यादित्यर्थः । सम्पूर्णं वचनञ्चेत्थम् । अयमपि श्लोकस्तत्रैव द्रष्टव्यः ।

अन्नं पितृमनुष्येभ्यो देयमप्यन्वहं जलम् ।
स्वाध्यायं सततं कुर्यान्न पचेदन्नमात्मने ।। इति ।

अन्नग्रहणं सकलादनीयद्रव्यप्रदेशनार्थम् । कथं तर्हि ? देवताद्युद्देशेनैव 'इति मिताक्षरा' इदानीन्तनानां जनानामर्थवादमन्त्राभ्यां श्रुतिकल्पनमेव निषेधति **न होत्यादिना** । द्रागिति शीघ्रार्थेऽव्ययम् । साम्प्रतिकाः जनाः शीघ्रमेवार्थवादमन्त्राभ्यां श्रुतिं कल्पयितुं न समर्थाः सन्ति ।

श्रुतिकल्पनं विना कथं विनियोगः सम्भवः । उपसंहरति—**तेनेति** । कारणैरेतैः मन्वादीनां स्मृतिप्रणयनं सार्थकमेवेति । अनेनैव प्रकारेण कल्पसूत्रादीनामपि प्रामाण्यप्रतिपिपादयिषयाह—**एवमिति** । पूर्वोक्तेनैव पथा श्रुतिमूलकत्वेनैव पुराणादीनामपि धर्माधर्मयोः प्रामाण्यमिति । **ऊह्यमिति** । वितर्क्यमित्यर्थः । वेदविरुद्धानां स्मृतिपुराणादीनां प्रामाण्यं निषेधाति—**वेदविरुद्धानामिति** । एषां कल्पसूत्रेतिहासपुराणादीनामित्यर्थः । उदाहरति—**यथेति** । 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति श्रुतिवाक्यम् । ज्योतिष्टोमनामके यागे सदोनामकस्य मण्डपस्य मध्ये काचिदौदुम्बरी शाखा निखन्यते । तत्रैवेदं स्पर्शविधायकं वाक्यम् । अनेन विधीयते स्पर्शः । तत्रैव च 'औदुम्बरी सर्वा वेष्टयितव्या' इति वाक्येन समग्राङ्गवेष्टनं स्मर्यते । तत्र किं कर्त्तव्यमिति विषये प्रत्यक्षवेदवाक्यप्रतिपादितस्पर्शेन सह विरोधात् स्मृतिप्रतिपादिस्य वेष्टनस्य जायते बाधः । अतः कालात्ययापदिष्टत्वाद् विप्रलम्भवाक्यत्वान्निर्मूलत्वाच्च स्मृतिवाक्यमिदमप्रमाणमिति । सर्वमेतत्प्रथमाध्यायस्य तृतीयपादस्य द्वितीयाधिकरणे सम्यग्विचारितम् । एतदेव प्रमाणयितुं भाष्यकारमतमुपस्थापयति—**श्रुतिविरोधेनेति** । स्मृतिवाक्यस्य श्रुत्या सह विरोधे सति स्मृतिमूलभूतश्रुत्यनुमानासम्भवादप्रमाणं स्मृतिवाक्यमिति । तथा च सूत्रम्—'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्' इति । तथैव भाष्यमपि—'तदव्यामोहात्स्मार्त्तश्रुतिकल्पनानुपपन्ना प्रमाणाभावादित्यादि' । अर्थात् भाष्यकारमते सर्वथा तादृशस्मृतीनामप्रामाण्यमिति भावः । अत्रैव वार्त्तिककारमतमुपस्थायितुमाह—**वार्त्तिके त्विति** । वार्त्तिककारमते श्रुतिविरुद्ध-

स्मृतीनां न सर्वथा अप्रामाण्यमपि त्वननुष्ठानलक्षणमप्रामाण्यं भवति । तादृशस्मृतिप्रतिपादितपदार्थानामनुष्ठानं न भवतीत्येव न तु सर्वथाप्रामाण्यमेवेति । कुत इत्याह—**सर्वशाखागतेत्यादिः** । सर्वेषां न सर्वशाखाविषयकं ज्ञानं सम्भवति । अतः तादृशस्मृतिमूलभूतश्रुतिकल्पनमेव न स्यादिति वक्तुं न शक्यते । तदा कदाचिन्मूलभूतश्रुतिः स्याच्चेत्तदा तासामपि प्रामाण्यं सम्भाव्येत । अर्थात् यावन्मूलभूतश्रुतिर्नास्ति समक्षं तावदेवाप्रामाण्यमिति भावः । कुत्रचिच्छ्रुतिविरुद्धानामपि स्मृतीनां प्रामाण्यं भवतीति प्रदर्शनायाह—**कासाञ्चित्त्विति** । कदाचिच्छ्रुतिविरुद्धानामपि स्मृतीनां प्रामाण्यं भवतीति । उदाहरति—**यथेति** । 'क्षुते आचामेत्' इति स्मृतिवाक्यम् । यागाद्यनुष्ठानमध्ये क्षुते प्राप्ते तन्निमित्तकमाचमनं कर्त्तव्यम् । अनया स्मृत्याचमनं विधीयते । आचमनमिदं नैमित्तिकम् । निमित्ते प्राप्ते विहितत्वात् । तथा चेदमाचमनं क्रत्वङ्गम् । क्रतुमध्ये विहितत्वात् । अननुष्ठाने क्रतुगतवैगुण्यं स्यात् । विगुणे च क्रतौ फलाभावः । अतोऽनुष्ठानमवश्यमेव कर्त्तव्यम् । 'वेदं कृत्वा वेदिं करोति' इति श्रुतिवाक्यम् । अनेन च वाक्येन वेदकरणानन्तरं वेदिकरणं विधीयते । सम्मार्जनसाधनीभूतः दर्भमुष्टिविशेषो वेदः । आहवनीयगार्हपत्यमध्यवर्त्तिनी चतुरङ्गुलखाता भूमिर्वेदिः । क्त्वाप्रत्ययेन च नैरन्तर्यं प्रतीयते । यदि वेदकरणवेदिकरणयोर्मध्येऽऽचमनं करोति तर्हि नैरन्तर्यं भज्येत । तत्र किं कर्त्तव्यमिति प्राप्ते माधवः—वेदवेद्यादिश्रुत्युक्तपदार्थवदाचमनादयः स्मृत्युक्त्या अनुष्ठेयपदार्थाः । क्रमस्तु पदार्थनिष्ठो धर्मः । स च पदार्थानुपजीवति । तत उपजीव्यविरोधात्क्रम एव बाध्यते न तु क्रमेणाचमनस्य बाधोऽस्ति । क्त्वाप्रत्ययेन च न नैरन्तर्यं बोध्यतेऽपि तु पूर्वकालतामात्रं बोध्यते । पूर्वकाले एव क्त्वा स्मरणात् तस्मादियं स्मृतिः प्रमाणमिति । अतोऽत्र स्मृतिविहिताचमन—पदार्थेन श्रुतिविहितस्य क्रमस्य बाधः । क्रमापेक्षयाचमनस्य प्राधान्यात् 'कदाचित्कालबाधोऽपि भवति' तथा कदाचिच्छ्रुतिविहितपदार्थनिष्ठपरिमाणबाधोऽपि सञ्जायते । तदेव दर्शयति—**कदाचिदित्यादिना** । कालपरिमाणयोरपि पदार्थनिष्ठत्वात्पदार्थापेक्षया प्राधान्यात् । एतावपि पदार्थानुपजीवतः । तस्मादुपजीव्यविरोधादेतावेव बाध्येते, न पदार्थबाध इति भावः आचमनादेरनुष्ठेयत्वं बोधयति—**तत्रैवमिति** । **विरोधे** इति । परस्परमुभयोर्विरोध इत्यर्थः । क्रम प्रबाध्याचमनस्यानुष्ठानमित्यर्थः । हेतुं दर्शयति—**पदार्थानामिति** । पदार्थगतक्रमापेक्षया पदार्थानां प्राधान्यम् । तेन किं स्यादित्याह—**प्रधानानुरोधेनेति** । प्रधानाप्रधानयोः बाधे प्राप्तेऽप्रधानबाधस्यैवोचितत्वादिति भावः । स्वमतमत्र दर्शयितुमाह— **वस्तुतस्त्विति** । अत्र नास्ति विरोध

इत्यर्थः। कुत इत्याह—**सर्वपदार्थेत्यादिः**। यागाद्यनुष्ठानेच्छया पूर्वन्तावत् सर्वान् पदार्थान् संगृह्णाति। तदन्तरं प्रयोगविधिना प्रतिपादितक्रमादिनानुतिष्ठति। तत्र येन क्रमेण पदार्थाः विहितास्तेनैव क्रमेणोपतिष्ठन्ति। पदार्थोपस्थितिक्रमेणैवानुष्ठानं भवति। अतएव परस्परं विरोधाभावः। यद्यनुष्ठानकाले एककालावच्छेदेन पदार्थद्वयप्राप्तिः स्यात्तत्रैव विरोधसम्भवः। तन्नास्त्यत्र। तस्मान्नास्ति विरोधोऽपीति ग्रन्थकारमतम् **प्रपञ्चितमिति**। विस्तरेण प्रतिपादितम्। **प्रागिति** क्रमनिरूणावसर इत्यर्थः।

स्मृतित्वसामान्याद् बौद्धादिस्मृतीनां प्रामाण्यं स्यान्न वेति विचारयितुमवतारयति—**बौद्धस्मृतीनामिति**। तुना प्रामाण्यं निषेधति। **वेदविरुद्धानामिति**। चैत्यवन्दनादीनामित्यर्थः। **तदविरुद्धानामिति**। उभयोश्चाप्रामाण्यमिति भावः। न तेभ्यो ग्रन्थेभ्यो धर्मं जानीयात। तदुक्तं वार्त्तिककारेण—

या वेदवाह्याः स्मृतयो याश्च काश्चित्कुदृष्टयः।
सर्वास्ता निष्फलाः प्रोक्तास्तमोनिष्ठा हि ताः स्मृताः॥ इति।

तथैव माधवेनाप्युक्तम्—

शाक्योक्ताहिंसनं धर्मो न वा धर्मः श्रुतत्वतः।
न धर्मो नहि पूतं स्याद्गोक्षीरं श्वदृतौ धृतम्॥

वह्मचर्यमहिंसां च परिग्रहं च सत्यं च यत्नेन रक्षेत्। श्रुतावहिं—सादिधर्मत्वेनोक्तः। स एव धर्मः शाक्येनाप्युक्तः। तस्माच्छाक्यस्मृतिर्धर्मे प्रमाणमिति पूर्वपक्षयित्वा स्वरूपेण धर्मस्यापि गोक्षीरन्यायेन शाक्यसम्बन्धे सत्यधर्मत्वप्रसङ्गात्। तदीयग्रन्थेनाहिंसादिर्नावगन्तव्यः। तस्मान्न सा धर्मे प्रमाणमिति। यथा श्वदृतौ रक्षितं पवित्रमपि गोदुग्धमपवित्रं भवति तथैवाहिंसादीनां धर्मत्वेऽपि शाक्यादिमुखनिःसृतत्व'दधर्मत्वं सम्पद्यते। तत्रैव हेतुमुपस्थापयति—**वेदविद्वेषीकरिणपरग्रहाभ्यामिति**। कुत्रचिद्वेदेन सह द्विषन्ति कुत्रचिच्च विषये वेदं परिगृह्णन्ति। तस्माद्वेदमूलत्वाभावादप्रामाण्यमिति। अर्द्धजरतीयन्यान्यस्यानौचित्यात्। **अतीन्द्रियार्थगोचरत्वेनेति**। धर्मस्य शास्त्रैकमूलत्वाद् वाह्येन्द्रियविषयत्वाभावेन तदग्राह्यत्वात्प्रत्यक्षादिप्रमाणमूलकत्वासम्भवात्। न प्रत्यक्षादिना धर्मज्ञानं सम्भवम्। तन्मूलकत्वाच्चानुमानादीनामपि प्रामाण्यं सुनिराकृतम् तर्हि किं प्रमाणकः स्याद्बौद्धादिस्मृत्याह—**परिशेषादिति**। शास्त्रादिप्रमाण्यनिराकृते प्रत्यक्षादिप्रमाणनिरा-

कृते च न किञ्चिदपि प्रमाणत्वेनावशिष्यते । अतो भ्रान्त्यादिमूलकत्वमेव तासां बौद्धादिस्मृतीनामिति वक्तुं शक्यते । तस्माद्भ्रान्तिमूलिकेयं स्मृतिरिति सिद्धम् । अतएवाननुष्ठानमेव तस्या इति । ननु च भो ! अपौरुषेयत्वेनैव कथन्न प्रामाण्यं तासामित्याह—**दृढकर्त्तृस्मरणाच्चेति** । सर्वत्र बौद्धशास्त्रे ग्रन्थकर्त्तुः स्मरणं दृश्यते । ग्रन्थकर्त्तृस्मरणाच्च नापौरुषेयत्वं तासामिति स्पष्टमेव । तस्मात्सर्वथा अप्रामाण्यमेव तासां स्मृतीनामिति सिद्धान्तः ।

वेदोऽखिलो धर्ममूलः स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥
वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः । इति मनुः ।
श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मन ॥ इति याज्ञवल्क्यः ।

अतः धर्मं प्रति ज्ञापकाः हेतवः प्रतिपादिताः सन्ति । तत्र श्रुतिस्मृतिशब्देन किं गृह्यते ? इत्यत्राप्याह—

श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रन्तु वै स्मृतिः ॥ इति । श्रुतिशब्देन वेदस्य स्मृतिशब्देन च धर्मशास्त्रस्य ग्रहणमिति । तत्रापौरुषेयत्वेन वेदानां प्रामाण्यम् । वेदमूलकत्वेन च स्मृतीनां प्रामाण्यं प्रसाधितम् । अधुना प्रसङ्गात्प्राप्तत्वात्सदाचाराणां प्रामाण्यं प्रतिपादयितुमाह—**सदाचाराणामिति** । **श्रुतिस्मृतिमूकत्वेनेति** । सदाचाराणां स्मृतिमूलकत्वेन प्रामाण्यम्, स्मृतेश्च श्रुतिमूलकत्वेनेति । अर्थात् सदाचारं दृष्ट्वा स्मृतेः कल्पनम्, स्मृतेश्च श्रुतिकल्पनम्, ततश्च विनियोग इति क्रमः । **तदुक्तमिति** । भट्टपादेन स्मृत्याचारबलाबलचिन्तने इति शेषः । **आचारास्त्विति** । अनेन श्लोकांशेन सह 'तेन द्व्यन्तरितं तस्ये प्रामाण्यं विप्रकृष्यते' इत्ययं श्लोकांशः सङ्गच्छते । यथा स्मृतीनां साक्षाच्छ्रुत्यनुमापकत्वं भवति तथैव सदाचाराणामपि साक्षाच्छ्रुत्यनुमापकत्वं कथन्न भवतीति शङ्कते—**न चेति** । समाधत्ते—**मन्वादिवदाचरितृणामिति** । यथा मन्वादयोऽनेकशाखाविप्रकीर्णश्रुत्यर्थोपसंहारे समर्थास्तथान्ये न । अतएव सदाचाराणां न साक्षाच्छ्रुत्यनुमापकता । अपि च पूर्वन्तावत्स्मृतीनामालोचनम्, ततश्च तत्प्रतिपादिताचारेऽनुष्ठान्तुं प्रवृत्तिः । स्मृत्यालोचनानन्तरं प्रवृत्तत्वात्सदाचारस्यस्मृत्यनुमापकतैवोचिता, न श्रुत्यनुमापकता । पक्षान्तरं प्रस्तौति—**यद्वेति** । आचारितृणां सदाचारनिष्ठानामेव महापुरुषाणाचारमूलकस्मरणं कल्प्यते । कुतः ? स्मृतिं विनानुष्ठानमेव न सम्भवम् । स्मृतिमूलकत्वात्सदाचारास्य । **तन्मूलमिति** । स्मृतिमूलमित्यर्थः । स्मृतिमूलं श्रुतिः । द्व्यन्तरितं प्रामाण्यं सदाचारस्येति ।

आचारेण स्मृतिकल्पम्, स्मृत्या च श्रुतिकल्पनमिति द्वयन्तरितत्वम्। द्वयन्तरितत्वम्। द्वयन्तरितत्वादेत्र प्रामाण्यं विप्रकृष्टमिति साक्षाच्छ्रुतिकल्पनं न युक्तम्। **अतएवेति**। स्मृत्याचारयोर्विरोधेऽऽचारस्यैव बाधः, न स्मृतेरिति। उदाहरति—**यथेति**। **मातुलकन्यापरिणयनादिष्विति**। केषुचित् दाक्षिणात्येष्वयमाचारः। ते खलु मातुलकन्यां विवहन्ति। परन्त्वाचारोऽयं स्मृतिविरुद्धः। तदेव स्मृतिवचनमुदाहरति—**मातुलस्येति**। यदि कश्चिद् प्रमादपि मातुलस्य सुतां मातृगोत्रां समानप्रवराञ्च कन्यामुद्वहति तर्हि तां परित्यज्य तत्प्रायश्चित्तरूपेण चान्द्रायणयाचरेत्। अनया च स्मृत्या मातुलकन्याविवाहो निषिध्यते। अतएवात्र मातुलकन्योद्वाहाचारोऽनया स्मृत्या बाध्यते। अत्रैव राणकमतमुपस्यातुमाह—**राणके त्विति**। न्यायसुधाकृन्मतेऽयमाचारः प्रमाणभूतो वेदमूलकश्च। वेदमूलकत्वादस्याचारस्य न स्मृत्या बाधः। न्यायसुधायास्तृतीयेऽध्यायेऽयं विचार उपक्षिप्तः। वैदिकवचनमुदाहरति—**तृप्तामिति**। अस्मिंश्चाचरे इदमेव वैदिकं लिङ्गं मूलम्। अतोऽयमाचारः प्रमाणमेवेत्येषां मतम्। **अन्येषां त्विति**। न्यायसुधाकारातिरिक्तानां विदुषां मते स्मृतिविरुद्धानां सदाचाराणामप्रामाण्यमेवेति बोध्यम्। स्मृतिविरुद्धानामाचाराणान्तु प्रामाण्यं न भवतीति सत्यम्। परन्तु श्रुतिविरुद्धानामाचाराणां प्रामाण्यं स्यान्न वेत्यत आह—**श्रुतिविरुद्धानामपीति**। एवमप्रामाण्यमित्यर्थः। स्मृतिविरुद्धानामाचाराणामिव श्रुतिविरुद्धानामप्याचाराणामप्राण्यमेवेत्यर्थः। उदाहरति—**यथेति**। आश्लीला तनूर्भवतीति श्रुतिविरुद्धानां वधूवस्त्रपरिधानाद्याचाराणामप्रामाण्यं भवत्येवेति। वार्त्तिककारमतमुपस्थापयति—**वार्त्तिकमते त्विति**। वार्त्तिककारमते यथा श्रुतिविरुद्धानां स्मृतीनामननुष्ठानलक्षणमेवाप्रामाण्यं भवति, न सर्वथा, तथैव स्मृतिविरुद्धानां श्रुतिविरुद्धानां वाचाराणामननुष्ठानलक्षणमेवाप्रमाण्यं बोध्यम्, न तु सर्वथा अप्रामाण्यमेवेति। **एषामाचाराणाम्**। एवन्तर्हि धर्मे केषां प्रामाण्यं स्यादित्यत आह—**उभयाविरुद्धनामिति**। श्रुत्यविरुद्धानां स्मृत्यविरुद्धानामित्यर्थः। तथा चायं धर्मः, अस्यानुष्ठाने धर्म इति धर्मबुद्ध्या वैदिकशिष्टैरनुष्ठीयमानानां सदाचारादीना धर्मे प्रामाण्यमिति विवेकः। उदाहरति—**यथेति**। **वसन्तोत्सवादीनाम्**। वसन्तोत्सवो होलाकः। स्वस्वकुलागतं करञ्जार्कादिस्थावरदेवतापूजादिकमान्हीनैबुकशब्देनोच्यते। ज्येष्ठमासस्य पौर्णमास्यां बलीवर्द्धानभ्यर्च्य धावयन्ति, सोऽयमुद्वृषभयज्ञ इति माधवः। होलाकादिः प्राच्यैरेव कर्त्तव्याः, आन्हीनैबुकादयो दाक्षिणात्यैरेव, उद्वृषभयज्ञावदय उदीच्यैरेवेत्यादिना विहिताः होलाकादायः तत्तद्देशीयशिष्टानुष्ठिताः सन्ति। अत इमे **शिष्टाचाराः**

धर्माधर्मयोः प्रमाणभूता इति । तत्रापि देशोपाधिरहितसर्वैरेवानुष्ठानयोग्या इति प्रसाधितवन्त आचार्याः । अस्मात्प्रमाणभूता एवेति । **अतश्चेति** । धर्मबुद्धया शिष्टैरनुष्ठीयमानत्वाभावाद् व्यतिक्रमसाहसाद्याचाराणामप्रामाण्येऽपि न कदाचिद्धानिरिति । कुत इत्याह—**तेषामिति** । व्यतिक्रमसाहसाद्याचाराणाम् । लोभादिमूलकत्वादप्रमाणमिति भावः । वार्त्तिके 'सदाचारेषु हि दृष्टो धर्मव्यतिक्रमः साहसं च महतां प्रजापतीन्द्रवसिष्ठविश्वामित्रयुधिष्ठिरकृष्णद्वैपायनभीष्मधृतराष्ट्रवासुदेवार्जुनप्रभृतीनां बहूनामद्यतनानां च' । ततश्च नहुषप्रजापत्यादीनां व्यतिक्रमः वसिष्ठस्य च शोकार्त्तस्य जलप्रवेशात्यागसाहसादीना वर्णनं कृत्वा—

श्रुतिसामान्यमात्राद्वा न दोषोऽत्र भविष्यति ।
मनुष्यप्रतिषेधाद्वा तेजोवलवशेन वा ।

यथा वा न विरुद्धत्वं तथा तद्गमिष्यति ॥ इत्यादिभिर्बहुभिः श्लोकैस्तथानेकैर्युक्तिप्रमाणैश्च समेषां समाधानं विहितम् । अतस्तैरनुष्ठितोऽपि नास्माभिरनुष्ठातव्यमिति समाहितम् । यथा शिष्टाचाराणां धर्माधर्मयोः प्रामाण्यन्तथैव शिष्टात्मतुष्टेरपि तत्र प्रामाण्यमिति बोध्यम् । कुत्रात्मतुष्टेः प्रामाण्यमित्याह—**सन्दिग्धधर्मनिर्णये इति** । यत्रैकस्मिन्नेव विषये वाक्यद्वयं वाक्यत्रयं वा दृश्यते, तत्र जायते सन्देहः । यथाग्निहोत्रमधिकृत्य श्रूयते—'उदिते जुहोति, अनुदिते जुहोति, समयाध्युषिते जुहोति इति । वाक्यैरेभिरग्निहोत्रस्य कालत्रयं ज्ञायते । तत्र भवति सन्देहः, कदा होतव्यमिति । नात्र बाध्यबाधकभावः सम्भवः, सर्वेषु वाक्येषु वैदिकत्वसामान्यात्तुल्यबलत्वात् । तुल्यवलत्वे च 'तुल्यबलविरोधे विकल्पः' इति सूत्रेण विकल्पस्यैव साधीयस्त्वात् अत्रात्मतुष्टेः प्रामाण्यं भवति । यस्मै रोचते यः पक्षः अर्थात् यत्रात्मतुष्टिस्तस्यैवानुष्ठानम् । श्रुतिस्मृतिविरोधे समानबलत्वाभावाज्जायते बाध्यबाधकभावः । सर्वमेतत्प्रतिपादितं विस्तरेण वार्त्तिके । वार्त्तिककारीयं वचनमुपस्थापयति—**एतेनेत्यादिना** ।

एतेन वैदिकानन्तधर्मधीसंस्कृतात्मनाम् ।
आत्मतुष्टेः प्रमाणत्वं प्रसिद्धं धर्मशुद्धये ॥ इति ।

धर्मशुद्धये वैदिकानन्तधर्मधीसंस्कृतात्मनात्मतुष्टेः प्रमाणत्वमिति प्रसिद्धम् । **सामर्थ्यस्यापीति** । सन्दिग्धार्थनिर्णये सामर्थ्यस्यापि प्रामाण्यं भवति । तेनापि निर्णीयते धर्मः । उदाहरति—**यथेति** । स्तुवेणावद्यति, स्वधिति-

नावद्यति, हस्तेनावद्यतीति विधित्रयं श्रूयते। विधित्रयेणाप्यवदानं विधीयते। अत्रावदेयपदार्थाः आज्यमांसपुरोडाशरूपाः भवन्ति। तत्र स्तुवाद्या अवदानहेतवो व्यवस्थिताः विद्यन्ते, तद्गतशक्तेरेव व्यवस्थापकत्वात्। द्रवीभूतस्याज्यस्यावदाने स्तुवो योग्याः। छेदनीयमांसस्यावदाने शास्त्रविशेषः स्वधितिर्योग्यः। संहतस्य पुरोडाशस्यावदाने हस्तः समर्थः। अतः सामर्थ्यात्तत्र तत्र ते ते हेतवो व्यवस्थिताः सन्ति। सामर्थ्यमनुसृत्यैवात्र विनियोगप्रतिपानम्। **तत्सिद्धये** इति। विनियोगसिद्धये विधिवाक्येषु द्रवादिपदमध्याह्रियते। स्तुवयोग्यं द्रवम्, स्वधितियोग्यं मांसम्, हस्तावदानयोग्यं कठिनमिति। कथं द्रवादियदकल्पनमित्याह—**शाब्दमिति**। शाब्दं शाब्देनान्वेति नाशाब्देन। अतः शाब्दबोधं सम्पादनायशब्दकल्पनमावश्यकम्। कल्पितस्य द्रवादिपदस्य वेदत्वाभावात्कथंप्रामाण्यमित्याह—तस्येति। कल्पितस्येत्यर्थः। अहादि—**वदिति**। 'अग्नये जुष्टं निर्वपामि' इत्यग्निदेवताको मन्त्रः। सूर्याय ऊह्यते चेत्तर्हि 'सूर्याय जुष्टं निर्वपामि' इति भवत्यूहितो मन्त्रः। परन्तु नास्य मन्त्रत्वं प्रसिद्धम्। अहितानां च मन्त्राणामवेदत्वं प्रसाधितमपि नवमे। तथापि यथा प्रामाण्यं भजन्ते तथैवात्रापीति बोध्यम्। कुतः प्रामाण्यमित्याह—**वेदैकदेशत्वात्**। वेदात्वाभावेऽपि वेदैकदेशत्वादित्यर्थः। तस्माद्धर्माधर्मयोऽस्त्येव प्रामाण्यमिति। लोकेऽपि भवत्येतादृक् परिकल्पनम्, यथा—'कटे भुङ्क्ते' इत्यत्र 'कटे आसीनः भुङ्क्ते' 'कांस्यपात्र्यां भुङ्क्ते' इत्यत्र 'कांस्ययात्र्यां निधाय भुङ्क्ते' इत्यादि सामर्थ्यादेव परिकल्प्यते। तस्मात्प्रामाण्ये नास्ति काचिद्विचिकित्सेति। कुत्रचिदत्र पठचते श्लोकोऽपि—

अनन्तदेवपौत्रस्यापदेवसुतस्य च।
अगान्मानपरिच्छेदो जीवदेवस्य निर्मितौ॥ इति।

**अनन्तदेवपौत्रस्येति**। अनन्तदेवस्य पुत्रं आपदेवः। आपदेवस्य पुत्रद्वयम्—अनन्तदेवो जीवदेवश्च। अनन्तदेवस्य भाट्टालङ्कारः टीकाग्रन्थः। पुस्तकमिदं जीवदेवस्येति। **मानपरिच्छेद** इति। प्रमाणपरिच्छेदः प्रथम इत्यर्थः। माध्यमिकं मङ्गलमिदम्। इति समाप्तिद्योतकः। परिच्छेदेऽत्र प्रधानरूपेण धर्मप्रमाणानां वर्त्तते निरुपणम्। तदुपोद्वलकतयान्येषामपि वर्णनं बोध्यम्, तथापि **मल्लग्राम** इति व्यवहारवत्प्रमाणपरिच्छेद इति संज्ञेति शम्।

जीवदेवीयमानस्य टीका विरचिता मया।
यथाबुद्धि यथाशास्त्रं तेन तुष्यतु केशवः॥

इतिश्रीमद्रामानन्दनसुतकमलनयनशर्मकृतिपु प्रकाशाभिधटीकायां प्रमाण-परिच्छेदः समाप्तः ।

गतो मानपरिच्छेदः प्रमेयमुपयतेऽधुना ।
प्रकाशाभिधटीकायां गोविन्दस्तेन तुष्यतु ॥

**अथेति ।** अत्राथशब्दोऽऽनन्तर्ये भवति । प्रमाणनिरूपणं पूर्वं वृत्तम् । अतः प्रमाणनिरूपणानन्तरमित्यर्थः । **वेदादिप्रमेयमिति** । आदिपदेन स्मृति-सदाचारात्मतुष्टेर्ग्रहणाम् । तैः प्रमेयमित्यर्थः । प्रमाविषयः प्रमेयः । प्रमा च यथार्थानुभवः । **धर्मस्वरूपमिति** । धर्मस्य स्वरूपमिति विग्रहः । स्वेन रूप्यते बोध्यत इति स्वरूपं लक्षणमिति यावत् । **निरूप्यत इति** । विषयी-क्रियते । निपूर्वकरूपधातोरत्र विषयत्वमर्थः । कर्मणि लकारः । अतएवा-त्मनेपदम् यद्यपि कर्तृगामिफले एवात्मनेपदं स्मर्यते, ग्रन्थनिर्माणस्य फल ज्ञानादिकं परस्मै एव भवति तथापि यशःकीर्त्तिप्रभृतिफलन्तु ग्रन्थनिर्माण-कर्त्तरि तिष्ठत्येव । अतोऽऽआत्मनेपदव्यवहारे न किञ्चद्दूषणं पश्यामः । जीवतो या ख्यातिः सा यशःशब्देनोच्यते । मरणानन्तरं या ख्यातिः सा कीर्त्तिशब्देन व्यपदिश्यते । अतएव धर्मविषयकनिरूपणानुकूलाभवनेत्यर्थः । **तत्रेति** । धर्मरूपे प्रमेये । अत्र यागादिक्रियाणामेव धर्मत्वमित्युक्तं प्राक् । न यागादिविहितकर्मजन्यो धर्म इति । यद्यपि लोके यागहोमप्रभृतीना मनेकेषां धर्माणामस्ति प्रसिद्धिस्तथापि न सर्वेषामत्र विवेचनं प्रस्तूयते, अपि तु यागहोमदानस्वरूपाणां धर्माणामत्र लक्षणादिकं प्रस्तूयते । अतएवोक्तम्—**लोकप्रशिद्धेरपीति** । अनेन यागादिव्यतिरिक्तानां धर्माणां विवेचनाभावेऽपि ग्रन्थस्य न्यूता निवारिता । यागस्वरूपमुपस्थापयति—**देवतोद्देशेनेति** । विधिविहितां यां काञ्चिद्देवतामुद्दिश्य तत्र विधिविहितद्रव्याणां त्यागो यागपदेनोच्चते ।

देवतास्वरूपं प्रतिपादयितुमाह—**देवता नामेति** । विधिवाक्यगतो यः शब्दस्तेन तेन विहितद्रव्यत्यागं प्रत्युद्दिश्यमाना या सा देवतापदवाच्यता लभते । उदाहरति—**यथेति** । **आग्नेयोऽष्टाकपाल इति** । अग्निर्देवता अस्येत्याग्नेयः । 'सास्य देवता' इति पाणिनिस्मरणम् अष्टाकपालपुरोडाश-रूपमत्र द्रव्यम् । अष्टसु कपालेषु संस्कृतत्वादष्टाकपालशब्देनोच्यते । 'संस्कृतं भक्षाः' इति पाणिनिस्मरणात् । 'आग्नेयोऽष्टाकपाल' इतिवाक्य-गताग्निशब्देनाग्निरूपां देवतामुद्दिश्याष्टाकपालरूपं द्रव्यं त्यजेदित्यर्थे सम्पद्य-

माने उद्देश्यगतस्याग्नेर्देवतात्वम्। अग्निशब्दस्य देवतात्वेऽपि तत्पर्याय-वन्ह्यादिशब्दस्य देवतात्वं निषेधति—**वन्ह्यादिशब्दोद्दिष्टेत्यादिना**। वन्ह्यादिशब्दस्य विधिगतत्वाभावात्। **तस्याञ्चेति**। देवतायामित्यर्थः। **त्रीणि प्रमाणानीति**। **तत्राद्यमिति**। तद्धितीयप्रत्ययरूपं प्रमाणमित्यर्थः। **देवतायामेवेति**। देवतायामेवार्थे इति भावः। **तद्धितविधानादिति**। तद्धितीयप्रत्ययविधानादित्यर्थः। चतुर्थ्या देवतात्वमुदाहरति—**अग्नीषोमाभ्यामिति**। **चतुर्थ्येति**। **चतुर्थीविभक्त्येत्यर्थः**। चतुर्थ्याः सम्प्रदानत्वमुपपादयति **त्यज्यमानद्रव्योद्देश्यत्वे सतीति**। देवतायाः प्रतिग्रहीतृत्वं निवारयति—**देवतायाश्चेति**। तत्रैव हेतुमुपस्थापयति—**विग्रहाभावादिति**। विग्रहमय्याः देवतायाः मीमांसायामनुपयोगात्। शब्दमय्याः देवतायाश्च स्वीकाराच्च। विद्यते तत्रैकाख्यायिका तैत्तिरीयब्राह्मणे—एकदानुष्ठानप्रसङ्गे देवा अविचारयन्। अस्माकं समीपे साक्षादग्निदेवो विराजते तर्हि आवाहनपूर्वकमग्नेः स्थापनं पूजनञ्च कथं कर्त्तव्यमिति। तथैव चानुष्ठितवन्तः। तत्र दत्तं हविरग्निदेवो न स्वीकृतवान्। पराबभूवुश्च देवाः। तत एव निश्चितमिदं यत् यज्ञानुष्ठानादिषु न विग्रहवत्याः देवतायाः पूजनादिकं कर्त्तव्यमपि तु शब्दमय्या एव देवताया इति। अतएव 'परोक्षप्रिया हि देवाः' इत्यपि सङ्गच्छते। यद्यपि मीमांसा देवताविग्रहं निराकरोति तदप्यनुष्ठानप्रसङ्गे एव न तु सर्वथा। अतएवोपासनायां देवताविग्रहस्वीकारे न विरोधः। अपि च कर्मणः महत्त्वं प्रतिपादयितुं वेदप्रतिपाद्यसाध्यसाधनभावस्यैव प्राधान्यं फलं प्रति प्रतिपादितम्। कर्मवैगुण्ये फलाभावात्। स्वर्गादिकं साध्यम्। दर्शपूर्णमासादिकञ्च साधनम्। साधनसाद्गुण्यात्फलप्राप्तिः। साधनवैगुण्यात्फलाभाव इति मीमांसासिद्धान्तः। अतएव कर्मणः फलप्रतिपादकत्वं न तु देवताप्रसादस्य। साधनवैगुण्येऽपि देवताप्रसादात्फलं न स्वीकुर्वन्ति। अपि च कर्मवैगुण्ये देवताप्रसादोऽप्यतिदुर्लभः। अतोऽपि फलाभावः। सर्वथा देवतानां विग्रहाभावे 'इन्द्रो वज्रमुदयच्छत्' प्रभृतीनामर्थवादानां का गतिरित्याह—**तत्प्रतिपादकानामिति**। विग्रहप्रतिपादकानामित्यर्थः स्वार्थे न भवति प्रामाण्यमिति भावः। अतएवोक्तं भगवता जैमिनिना—'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते' इत्यादि। अनेनाप्यर्थवादानां न सर्वथा अप्रामाण्यमपि तु विधिवाक्येन सहैकवाक्यतया भवति प्रामाण्यम्। तदुक्तमपि—'विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः' इत्यादिः। चतुर्थ्याः देवताप्रतिपादकत्वमुपपादयति—**तेनेति**। त्यज्यमानद्रव्योद्देश्यत्वं प्रतिग्रहीतृत्वञ्च चतुर्थ्यर्थे घटकत्वेन समावेशितम्। तत्र द्रव्योद्देश्यत्वमात्रैकदेशभूतं देवतात्वं प्रतिपाद्यते। कथमयमर्थश्चतुर्थ्याः ?

तस्याः सम्प्रदानेऽर्थे विहितत्वात् । 'चतुर्थी सम्प्रदाने' इति पाणिनिस्मरणात् । अत आह—**लक्षणयेति** । नामधेयमित्यर्थः । **अतएवेति** । लाक्षणिकत्वादेव । चतुर्थीविभक्तिप्रतिपाद्या देवता तद्धितीयप्रत्ययवाच्यदेवतापेक्षया दुर्बला भवति । वाच्यलक्ष्ययोर्मध्ये वाच्यार्थस्यैव प्राधान्यात् । **मन्त्रेण त्विति** । यद्यपि मान्त्रवर्णिक्यपि भवति देवता तथापि न मन्त्रेण देवतात्वं प्रतिपाद्यतेऽपि तु देवतात्वस्याधिष्ठानभूतमग्न्यादिकं प्रतिपाद्यत इत्यर्थः । कथन्तत्र देवतात्वकल्पनं भवतीत्याह—**वाचकमन्त्रविनियोगानुपपत्त्येति** । देवतात्वकल्पनं विना देवतावाचकानां मन्त्राणां विनियोग एव न सम्पत्स्यते । अतएव देवतात्वकल्पनमावश्यकम् । **अतश्चेति** । वैयर्थ्यभिया देवतात्वकल्पनादेव । चतुर्थीविभक्तिपरिलक्षितदेवतापेक्षया मान्त्रवर्णिक्याः देवतायाः भवति दौर्बल्यमिति भावः । तदेव प्रमाणयितुमाह—**यथाहुरिति** । वार्त्तिककारा इति शेषः । **तद्धितेन चतुर्थ्या वेति** । अनेन प्राबल्यदौर्बल्ये प्रतिपादिते । तद्धितीयेन प्रत्ययेन चतुर्थीविभक्त्या तथा मन्त्रेण देवता विधीयते । तत्र परम्परं दुर्बलं भवति । पूर्वं पूर्वन्तु प्रबलमिति अर्थात्सिद्ध्यति । सम्प्रति चैवं पठितोऽयं श्लोको दृश्यते—

तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन चेष्यते ।
देवतासङ्गतिस्तत्र दुर्बलञ्च परं परम् ।। इति ।

तत्रैव चतुर्थीतद्धितयोर्वैशिष्ट्यमपि प्रदर्शितम्—

देवतासङ्गतिः श्रुत्या तद्धितान्तात्प्रतीयते ।
चतुर्थ्यन्तात्तु वाक्येन पदद्वयसमीपतः ।। इति ।

यागस्य स्वरूपं स्पष्टयति—**एवमिति** । यागाद्धोमं भिनत्ति—**स एवेति** । होमे यागापेक्षया प्रक्षेपाधिको भासते । दानस्वरूपमपि पुनः कथयति—**स्वस्वत्वेत्यादिना** । स्वत्वमधिकारः । दाता स्वस्वत्वं ततो निवर्त्तयति ग्रहीतुश्च स्वत्वं तत्रापादयति । तत्रैव दानशब्दस्य प्रयोगः । कर्मभेदकानि प्रमाणानि निर्दिशति—**एषामिति** । कर्मणामित्यर्थः । **षडिति** । नाधिकं न न्यूनमित्यर्थः । तानि कानीत्याह—**शब्दान्तराभ्याससंख्यासंज्ञागुणप्रकरणान्तररूपाणीति** । शब्दान्तरमुपपादयति—**तत्रेति** । प्रमाणषट्के इत्यर्थः । परस्परमपर्यायधातुनिष्पन्नानि तथैकप्रकरणपठितान्याख्यात पदानि शब्दान्तरशब्देन व्यपदिश्यते । उदाहरति—**यथेति** । अत यजतिददातिजुहोतयः न परस्परं पर्यायाः अपि तु विभिन्नार्थप्रतिपादकाः । तथैकस्मिन्नेव

ज्योतिष्टोमप्रकरणे त्रीण्यपि वाक्यानि परिपठितानि सन्ति। **धातुभेदादर्थभेदोऽपि ।** तस्माद्धात्वर्थभेदाद्भिन्नाः भिन्नाः भावना अपि प्रतिपादिताः भवन्ति। अतएवात्र शब्दान्तरत्वात्कर्मभेदो भवति । भावनाभेदाच्चापूर्वभेदोऽपि भवतीत्याह—**एकधात्वर्थामुक्तायामिति** । कुतो भावनाभेद इत्याह —**धात्वर्थान्तरेत्यादिः** । अभ्यासमुपपादयति—**अनन्यपरविधिरिति** । न अन्योऽनन्यः। तत्परं तद्‌बोधको विधिरिति। तस्य पौनः प्रन्येन श्रवणमभ्यासः। उदाहरति—**यथेति ।** दर्शपूर्णमासप्रकरणे पञ्च प्रयाजाः पठिताः सन्ति। यथा—समिधो यजति, तनूनपातं यजति, इन्द्रो यजति, वर्हिर्यजति, स्वाहाकारं यजतीति। अत्र पञ्चकृत्वो यजतेरभ्यासः। अत्र यावानभ्यासस्तावान् धात्वर्थः। यावान् धात्वर्थस्तावती भावना। यावत्यो भावनास्तावन्त्यपूर्वाणीति क्रमः। तस्माज्जायतेऽभ्यासात्कर्मभेद इति। **अन्यथेति ।** कर्मभेदाभावेऽपूर्वभेदाभावे वा । पञ्चकृत्वोऽभ्यासवैयर्थ्यं प्रसज्येत । कुतो वैयर्थ्यमित्याह—**समिदादिदेवतानामिति** । क्रमपठितैर्मन्त्रैरेव समिदादिदेवानां ज्ञानं सम्भवति। देवताप्रतिपादकत्वे च समिदादियदानां नामधेयत्वं सम्पद्यते। नामधेयस्य च विधेयत्वं न सम्भवति। विधेयत्वाभावे चानर्थक्यं स्वाभाविकमेवेति भावः। संख्यया कर्मभेदं दर्शयितुमाह—**साङ्ग्रहणीष्टिप्रकरण** इति। अत्रैव प्रकरणे श्रूयते—'आमनस्यामनस्य देवा इति तिस्त आहुतीर्जुहोति इति। अत्र तिस्त इति पदेन त्रित्वसंख्या वोध्यते। त्रित्वसंख्यया च होमत्रयस्य विधानमिति प्रतीयते। अतोऽत्र संख्यया कर्म भेद इति । भाष्यकार इति । भाष्यकारमते संख्याया उदाहरणमिदमिति बोधनाय। वार्त्तिककारमतमुपस्थाययितुमाह—**वार्त्तिककारस्त्विति** । तुना भाष्यकारीयं मतं व्यावर्त्तयति। संख्यया कर्मभेदस्यदेवोदाहरणं प्रस्तौति—**सप्तदश प्राजापत्यानिति ।** कर्मभेदकं तत्त्वं स्पष्टयति—**अत्र हीति ।** अत्रोदाहरणे पशूनिति द्रव्यगतवहुत्वसंख्यया न कर्मभेदः स्पष्टीभवति तथापि पशुरुपद्रव्यप्रजापतिरुपदेवतयोः सम्वन्धवहुत्वेन यागेऽपि बहुत्वमायाति । अतएव तत्र भेदोऽप्यापद्यते। अन्वयप्रकारं दर्शयति—**प्रजापतिदेवता पूर्वं पशुनान्वेति**। ततश्च देवतान्वितपशूनां वहुत्वेऽन्वयः। **प्रजापतिर्देवतेति।** 'सा॰ऽस्य देवता'। वहुत्वसम्पादनायैकशेषं दर्शयति—**प्राजापत्यश्चेत्यादिना।**

'सरुपाणामेकशेष एकविभक्तौ। एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यत इत्यर्थः। तत्फलं निर्दिशति—**तेनेत्यादिना।** प्रत्येकेन पशुना पृथक्-पृथक् देवतासम्वन्धेन यावन्तः पशवस्तावन्तो यागा इति कल्प्यते। तत्र पशूनां संख्या सप्तदश वर्त्तते अतो यागानामपि संख्या

सप्तदश इत्यर्थः। पूर्वान्वये युक्तिं दर्शयितुमाह—**यदि त्विति**। यदि सर्वप्रथमं पशुषु बहुत्वान्वयः। ततश्च पशूनां देवतया सह सम्बन्धकल्पना। तत्रैवैकशेषं दर्शयति—**पशुश्चेत्यादिना**। एतत्फलं स्पष्टयति—**तथा सतीति**। सप्तदशपशुद्रव्यविशिष्ट एक एव यागः सिध्येत्, न तु यागबहुत्वमिति। अनेन किं स्यादित्याह—**सा त्वेति**। एकत्वसंख्या चेत्यर्थः। प्रजापतियागोऽयमग्नीषोमीययागस्य विकृतिरूपः। अतो यागस्यैकपशुनिष्पन्नत्वेनावदानसमूहस्य बाधः स्यात्। अवदीयमानान्यवदानानि चैकादशभवन्ति। बाधे सत्येकादशाधिकानामवदानानामानर्थक्यं प्रसज्येत। एकादशावदानानि च 'हृदयस्याग्रेऽवद्यति, अथ जिह्वायाः, अथ वक्षसः' इत्यादिवाक्येभ्यः परिगणितानि। हृदयम्, जिह्वा, वक्षः, यकृत्, वृक्यौ, सव्यं दोः, उभे पार्श्वे, दक्षिणा श्रोणिः, गुदस्तृतीयमित्येतानि भवन्त्यवदानानि। **यदि त्विति**। यद्येतादृश एवोपदेश इति स्वीक्रियते तर्हि सप्तदशपशुषु सत्स्वेकस्मात्पशोरेकादशावदानग्रहणेन यागमनुष्ठीयेत तदा तद्भिन्नषोडशपशूनामानर्थक्यमापद्येत। अतएवोक्तं **तत्रेतरपशूनामिति**। पुनश्च शङ्कते—**यदीति**। यदि प्रत्येकस्मात्पशोः हृदयाद्येकैकमवदानं स्वीक्रियेत, तैरेव यागानुष्ठानम्, तर्हि तद्वशेनैकैकावदानग्रहणवशेन चोदकत्ववाक्यस्य बाधः स्यात्। **स त्विति**। चोदकस्त्वित्यर्थः। पशुना सह पूर्वं देवताया अन्वयः, ततश्च तत्र बहुत्वान्वयः। अथवा पूर्वं बहुत्वान्वयस्ततो देवतान्वय इति। पौर्वापर्यविषये परस्परविरुद्धकोटिद्वयस्योपस्थितत्वात्सन्देहे जाते चोदकः च जाते निर्णयाभावः। निर्णयाभावे चानुष्ठानाभावः। ततश्च विधिवैयर्थ्यं स्यादिति भावः। अतश्च निर्णय आवश्यकः। कथं निर्णयः स्यादित्याह—**एवञ्चेति**। 'सन्दिग्धेषु वाक्यशेषात्' इति न्यायेन वाक्यशेषरूपेण चोदकवाक्येन बहुभागविधायित्वेनैव निर्णयः। बहुयागविधायकत्वमेव वर्त्तते न त्वेको याग इति। एवं सति कथमन्वय इत्याह—**तथा चेति**। एवं सति प्रथमन्तावत् पशूनां देवतया सहान्वयः, ततश्च बहुत्वान्वय इति क्रमः। **तदुक्तमिति**। **प्राजापत्येष्विति**। प्रजापतिदेवताकेषु प्राजापत्येषु योगेष्वेकत्वानेकत्वसंशये सति वाक्यशेषेण निर्णय इति। इति संख्यया कर्मभेदः। संख्यया कर्मभेदं निरुप्य संज्ञया कर्मभेदं निरुपयितुमाह—**ज्योतिष्टोमानन्तरमिति**। 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यनन्तरमथैष ज्योतिरित्यारभ्य सहस्रदक्षिणेन यजेतेति श्रूयते। एतेषाञ्च ज्योतिविश्वज्योतिसर्वज्योतिरिरिति संज्ञा। ज्योतिष्टोमादिन्नसंज्ञाविधानेन भिन्नान्येतानि कर्माणि भवन्ति, न तु ज्योतिष्टोम एव। अत्र प्रयुक्तज्योतिरादिशब्देन ज्योतिष्टोमस्य ग्रहणाभावं सोदाहरणमुपपादयति—**न त्वति**। यथा 'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यत्र

प्रयुक्तज्योति:शब्देन 'नामैकदेशेन नामग्रहणमि' ति न्यायाज्जयोतिष्टोमस्य ग्रहणं भवति तथैव नात्र ज्योति:शब्देन ज्योतिष्टोमस्य ग्रहणमित्यर्थः। तत्रैव हेतुमुपन्यस्यति—**'अथशब्देनेति'**। अथैष ज्योतिरित्यादौ प्रयुक्ताथशब्देन प्रकरणविच्छेदसम्भवात्। 'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यत्र कथन्न प्रकरणविच्छेद इत्याह—**वसन्तवाक्यं त्विति**। ज्योतिष्टोमप्रकरणे एव तस्य वाक्यस्य पठितत्वान्न प्रकरणविच्छेद:, अपि तु तद्विषयत्वमेव सम्पद्यते। निष्कर्षं वदति—**एवञ्चेत्यादिना**। ज्योतिरादिसंज्ञापार्थक्येन तद्वाच्यभेदात् ज्योतिष्टोमाद्भिन्नानेव सहस्रदक्षिणाविशिष्टान् यागान् विधत्ते वाक्यमिदम्। तस्मात्संज्ञया कर्मभेद इति।

संज्ञया कर्मभेदं निरुप्य गुणप्रयुक्तकर्मभेदं निरुपयति—**चातुर्मास्येष्विति**। वैश्यदेवो वरुणप्रघासः साकमेधः शुनासीरीयश्चेति। तेषु प्रथमे वैश्वदेवपर्वण्यष्टौ यागाः भवन्ति। तद् यथा—आग्नेयमष्टाकपालं निर्वपति, सौम्यं चरुम्, सावित्रं द्वादशकपालम्, सारस्वतं चरुम्, पौष्णं चरुम्, मारुतं सप्तकपालम्, वैश्वदेवीमामिक्षाम्, द्यावापृथिव्यमेककपालमिति। एतेषामष्टानां यागानां सन्निधावेव 'वैश्वदेवेन यजेत' इति श्रूयते। अत्र चातुर्मास्यस्य प्रथमे एव पर्वणि 'वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति श्रूयते। वाक्येनानेन यागद्वयं विधीयते। तदेव वक्ति—**तत्राद्यवचसेत्यादिना**। तत्र प्रथमेन वाक्येन 'वैश्वदेव्यामिक्षा' इत्यनेन विश्वेदेवदेवताक आमिक्षाद्रव्यको यागो विधीयते। द्वितीयेन च 'वाजिभ्यो वाजिनम्' इति वाक्येन वाजिदेवताकवाजिनद्रव्यकं यागान्तरं विधीयते, न तु वाक्यद्वयेन यागैकमिति। 'वैश्वदेव्यामिक्षा' इति वाक्येन विहितं यागमनूद्य वाजिनरुपस्य द्रव्यस्य विधानं तथा वाजिपदं विश्वेदेवदेवतानुवादकं स्यात्तथा सत्येकस्यैव यागस्य विधाने लाघवं भवेदिति शङ्कते—**न चेति**। वाजमन्नम्। अन्नस्य वाज इति संज्ञा। तद्रुपामामिक्षाम्। तद्योगाद् वाजं विद्यते येषामिति व्युत्पत्तिः। अतएव विश्वेदेवदेवतानुवादकत्वं भवति। समाधत्ते—**उत्पत्तिशिष्टेत्यादिना**। अत्राभिक्षोत्पत्तिशिष्टम्। वाजिनञ्चोत्पन्नशिष्टम्। पूर्ववाक्यविहितस्य यागस्यान्यानपेक्षत्वेन निराकाङ्क्षत्वं भवति। निराकाङ्क्षत्वाच वाजिनेन सह सम्बन्धाभावः। अतः परस्परसम्बन्धाभावेन पूर्वयागमनूद्य वाजिनद्रव्यस्य विधानं न युक्तमिति भावः। वाजं विद्यते येषामिति वाजशब्दस्य विश्वेदेवानुवाकत्वं निराकरोति—**वाजिपदस्येति**। वाजिपदं मन्त्रादिप्रसिद्धया देवताविशेषे रुढम्। अतो 'योगाद्रूढिर्बलीयसी' इति न्यायेन व्युत्पत्ति-

माश्रित्यविश्वेपरत्वं न सम्भवति, अपि तु देवताविशेषवाचकत्वमेव तस्योचितमिति भावः। कर्मभेदकत्वमुपपादयति—**तनेति**। उत्पत्तिशिष्टामिक्षारूपगुणावरुद्धे कर्मणि वाजिनगुणस्य विवेशाभावादयं गुणोऽत्र कर्मभेदक इति। अतोऽत्र गुणस्य कर्मभेदकतेति। कुत्रचिद् वाक्यभेदसम्पादकोपि गुणो भवति कर्मभेदक इत्याह—**वाक्यभेदापादकोऽपीति**। उदाहरति—**यथेति**। सान्नायं प्रकृत्येति। सान्नाय्यं दधिपयसी। तस्मिन्नेव प्रकरणे 'यस्योभयम्' इत्यादि श्रूयते। अत्र सान्नाय्यनामकदधिपयोरूपोभयोर्हविर्नाशे सति तन्निमित्तके यागे नष्टहविष्कत्वादिन्द्रदेवताकं पञ्चशरावपरिमितमोदनं द्रव्यं विधीयते। वाक्यभेदं प्रदर्शयितुमाह—**तस्मिन्निति**। तत्र च वैकल्पिकं देवताद्वयं वर्त्तते—इन्द्रो महेन्द्रश्च। तत्र यदि इन्द्ररूपदेवताया ओदनरूप—द्रव्यस्य च क्रियते नियमस्तर्हि उभयविधाने विध्यावृत्तिलक्षणवाक्यभेदः प्रसज्येत। वाक्यभेदनिवारणोपायमाह—**तेनेति**। हविर्नाशनिमित्तकं तद्भिन्नमेवेन्ददेवताकपञ्चशरावोदनद्रव्यं यणं विदधाति। पूर्वापरयागयोः प्रधानाप्रधानभावं निश्चेतुमाह—**पूर्वयागत्वेनेति**। यागोऽयं पूर्वविहितयागाङ्गम्। अर्थात् पूर्वविहितो यागः प्रधानः, अयञ्च तदङ्गमिति भावः। **एवमेति**। पूर्वोक्तन्यायेनेत्यर्थः। यत्रानेके गुणाः विधेयत्वेन श्रूयन्ते तत्र न सर्वेषां कर्मभेदकत्वमपि तु वाक्यभेदापादको यो गुणस्तस्यैव कर्मभेदकत्वमित्यर्थः। उदाहरति—**यथेति**। 'आग्नेयोऽष्टाकपाल' इत्यादाविति।

गुणप्रयुक्तकर्मान्तरत्वमुपपाद्य प्रकरणान्तरप्रयुक्तकर्मभेदोऽभिधीयते। तदेवोपक्रमते—**कुण्डपायिनामयन इति**। एतन्नामके सत्र इत्यर्थः। 'मासमग्निहोत्रं जुहोति' वाक्यं श्रूयते। **तत्रेति**। पूर्वमपि नित्याग्निहोत्रविषये 'अग्निहोत्रं जुहोति' इति श्रूयते। अत्राप्यग्निहोत्रं वर्त्तते, तथापि नोभयोः कर्मैक्यम्। निभिन्नप्रकरणपठितत्वाद्विभिन्नं कर्म। अत्र मासरूपकालविशिष्टंमन्तिरं विधीयते। प्रकरणान्तरं लक्षयति—**प्रकरणान्तरं नामेति**। **पूर्व**-प्रतिपादितकर्मविपरिवर्त्तनम्। विपरिवृत्तिः विपरिवर्त्तनम्। तथा कर्मपरिवर्त्तनसहकारिभूतोऽनुपादेयपञ्चकव्याप्योपादेयपञ्चकेन सह सम्बन्धश्च। 'अग्निहोत्रं जुहोति' इत्यनेन विहितं कर्म स्वतन्त्रं प्रधानभूतम्। 'मासमग्निहोत्रं जुहोति' इत्यनेन विहितं कर्म सत्रप्रकरणे पठितम्। तस्य सत्रस्याङ्गभूतमिदं कर्म, न प्रधानमिति प्रकरणभेदः। पूर्वविहितकर्मापेक्षयास्य कर्मणः परिवर्त्तनमपि। तथा चानेन प्रकारेण कर्मभेदकता

सिद्धयति । व्याप्यत्वञ्च व्याप्तिविशिष्टत्वम् । यत्र यत्रानुपादेतत्वज्ञानं तत्र तत्रोपादेयज्ञानं भवत्येव । उपादेयज्ञानस्यानुपादेयज्ञानघटकीभूतत्वात् । **नाम्नश्चेति** । नाम प्रातिपदिकम् । तच्चाख्यातपरतन्त्रम् । आख्यातस्य प्राधान्यं भवति नाम्नश्चाप्राधान्यम् । अतएव तत्परतन्त्रता । **अस्ति चेति** । प्रकृतेऽत्र स्थले । नित्याग्निहोत्रं दूरस्थं वर्त्तते । अतएवात्रानुपस्थितिस्तस्य । अग्निहोत्रमिति नामाख्यातसमानाधिकरणम् । अतोऽऽख्यातार्थपरामर्शि तत् । आख्यातपरतन्त्रत्वादेव तस्य स्वतन्त्ररूपेण कर्मानुवादकत्वं न सम्भवतीत्यर्थः । स्वतन्त्रं नाम कर्मानुवादकं भवतीत्याह—**यत्र त्विति** । यत्र नाम्नः स्वातन्त्यम्, तत्र दूरस्थमपि कर्मानुवादकं भवति । उदाहरति—**यथेति** । **दर्शपूर्णमासाभ्यामिति** । अत्रेयं स्थितिः । पूर्वन्तावत् स्वतन्त्ररुपेण 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यनेन दर्शपूर्णमासौ विधीयेते । तदनन्तरं सोमप्रसङ्गे 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इति श्रूयते । अत्र नाम्नः स्वतन्त्रत्वात् दर्शपूर्णमासपदेन दूरस्थमपि विहितं दर्शपूर्णमासरूपं नित्यं कर्मानूद्य तदनुष्ठानोत्तरकालत्वं सोमयागनिष्ठं विधीयतेऽनेन । अत्र **त्विति** । मासमग्निहोत्रं जुहोतीत्यत्र । तुना नाम्नः स्वतन्त्रपक्षं व्यावर्त्तयति । नामात्राख्यातपरतन्त्रम् । आख्यातस्य चाप्रवृत्तपुरुषप्रवर्त्तनं स्वभावः । आख्यातं पुरुषं कर्मणि प्रवर्त्तयति । कुर्यादित्याद्याख्यातश्रवणसमनन्तरमेव पुरुषप्रवृत्तिदर्शनात् । अतोऽनेनापूर्वं कर्म विधीयते । यद्यपूर्वमेव कर्म तर्हि कथमग्निहोत्रमिति नाम । तदेव स्पष्टयति—**तस्यैवेदमिति** । इदमग्निहोत्रम् । मासाग्निहोत्रस्याग्निहोत्रमिति नाम गौण्या वृत्त्या भवति न त्वभिधयाभिधेयमिति । गौणमिदं नामेत्यर्थः । कुत इत्याह—**अनेकशक्तिकल्पनस्येति** ।

उभयत्र भिन्न-भिन्नरूपेण शक्तिकल्पने गौरवापत्तिः स्यात् । अतएवान्याय्यमनुचितमित्यर्थः । कथं गौणीवृत्तिः प्रवर्त्तत इत्याह—**नित्याग्निहोत्रसादृश्यमिति** । तत्सिद्धिजातिसारुप्यप्रशंसालिङ्गभूमभिः शब्दानां गौणीवृत्तिः प्रकल्प्यते । एतानि गौणीवृत्तेर्निमित्तानि सन्ति । तेष्वत्र सादृश्य रुपं निमित्तं वर्त्तते । नित्याग्निहोत्रसादृश्यं मासाग्निहोत्रे तिष्ठति । अतस्तत्सादृश्यादग्निहोत्रत्वमस्यापीत्यर्थः । मानान्तरं निषेधति—**न मानान्तरावगतमिति** । न प्रमाणान्तरादत्र गौणीवृत्तिप्रकल्पनमिति । सादृश्याद् गौणीवृत्तिप्रकल्पनेनैव वत्यर्थलक्षणया मित्याग्निहोत्रगतधर्माणां मासाग्निहोत्रे कर्मान्तरेऽतिदेशो भवति । अतिदिष्टं वाक्यं निर्दिशति—**अग्निहोत्रवज्जुहोतीति** । **सोऽयमिति** । अयं नामातिदेश इत्यर्थः **भवति चेति** ।

प्रमाणान्तरेणानवगतमज्ञातं सादृश्यं येषां तत्सादृश्यं प्रकल्प्यापि गौणः प्रयोगो भवति । उदाहरणं यथा—**अमीपिष्टपिण्डाः सिंहाः क्रियन्तामिति** । अत्र सिंहसादृश्यं न प्रमाणान्तरेण प्रकल्पयितुं शक्यते तथापि पिष्टपिण्ड-निर्मितसिंहे तत्सादृश्यं कल्प्यते । तथायमपीति । तथैवात्रापि मासाग्निहोत्रे प्रमाणान्तरानवगतसादृश्यस्य सादृश्यं कल्पयित्वा गौणीवृत्तिप्रकल्पनेति । तदेवोपपादयति—**न चात्रेति** । पूर्वप्राप्तहोममनूद्य न कस्यचिद् गुणस्य विधेयता सम्भवति । येन गुणेन गुणसंक्रान्तिशक्तिसम्पन्नेन विधिवाक्येन नित्याग्निहोत्ररुपं दूरस्थमपि कर्मानूद्येत । नानुवादितुं शक्यत इत्यर्थः । दृष्टान्तं प्रददाति—'यदाहवनीये जुहोतीति' । अत्रापि 'अग्निहोत्रं जुहोती' त्यादिवाक्येभ्यः प्राप्तं होममनूद्य न विधेयः कश्चिद् गुणो दृश्यते । **मास-कालस्येति** । 'मासमग्निहोत्रं जुहोति' इत्यत्र मासरुपस्य कालस्यानुपा-देयपञ्चके परिगणितस्योपादानापरपर्यायिग्रहणशक्तिविषयत्वाभावादित्यर्थः । अर्थात् कालो विधिविधेयाभाववानित्यर्थः । न कालस्य विधानं श्रूयते कुत्रापि । सिद्धत्वात्कालस्य । साध्यमेव विधीयते न तु सिद्धम् । **सिद्धे हीति** । काले सिद्धे सति तत्र भवति कर्मण उपादानम् । कालस्योपादेयत्वं निवर्त्तयति—**न त्विति** । न काल उपादीयत इत्यर्थः ।

**एवमिति** । एवमेव देशकालनिमित्तफलसंस्कार्यरुपानुपादेयपञ्चकेन सह सम्बन्धे सति प्रकरणान्तररुपेण हेतुना कर्मभेदो द्रष्टव्य इति । कर्मान्तरं सम्पद्यत इत्यर्थः । उदाहरणप्रदानपुरस्सरं स्पष्टयति—**तद् यथेति** । **'सर-स्वत्याः दक्षिणे तीरे इति** । तीरशब्दोऽत्र नदीकूलरुपदेशविशेषवाचकः । तत्रैवास्यानुष्ठानमिति । दर्शपूर्णमासप्रकरणेऽपि आग्नेययागो विहितः । तदपेणयेदं कर्मान्तरं भवति । देशविदेशषरुपानुपादेयसहकृतप्रकरणान्तर-त्वात् । अत उभयोराग्नेययोः परस्परं भेदः । निमित्तवशात्कर्मभेदमुदा-हरति—**सत्रायागूर्येति** । सत्रमनुष्ठितुं संकल्पे कृते सति केनचिद्विध्नेनासमर्थो जातस्तर्हिनानुष्ठतवान् असामर्थ्ये निमित्ते विश्वजिद् यागस्यानुष्ठानं कर्त्तव्यमित्येको विश्वजिद् यागः । अपरश्चैकाहकाण्डपठितः । एकाहकाण्ड-पठिता—द्विश्वजिद् यागादयं नैमित्तिको विश्वजिद् यागो भिन्नः । निमित्त रुपानुपादेयसहकृतप्रकरणान्तरस्य विद्यमानत्वात् । अतः कर्मान्तर-मिदमिति ।

फलरुपानुपादेयसम्बन्धात्कर्मान्तरमुदाहर्त्तुमाह—**आग्नेयमष्टाकपाल-मिति रूक्कामोऽनुतिष्ठेत्** । रुक् कान्तिः । तदेव च फलमस्य यागस्य । अतः

फलरुपान्डपादेयसम्वन्धात्पूर्वविहिताग्नेययागापेक्षययाग्नेययागो भिन्नः । अतः कर्मान्तरमिदमिति । संस्काररुपानुपादेयसम्वन्धात्कर्मान्तरमुदाहरति—**'त्रैधातवीया'** इति । दोक्षणीया दीक्षासंस्कारप्रयुक्ता । अत्र च दीक्षासंस्कार-मुद्दिश्यास्य त्रैधातव्याख्यास्य विधानम् । पूर्णविहितश्च यागः स्वतन्त्रफल-प्रदायकः । अतः संस्काररुपानुपादेयसम्वन्धेन प्रकरणान्तरत्वाकर्मान्तर-मिति । **एवमिति** । पूर्वोक्तरीत्येत्यर्थः अन्यत्रेति । पूर्वपरिगणितापेक्षया भिन्नस्थलेऽपीत्यर्थः । अनुपादेयसम्वन्धसहकृतसन्निधिभिन्नं प्रकरणान्तरं कर्मभेकवमूह्यं वितर्क्यम्न्वेषणीयमिति यावत् । पूर्वोक्तं न परिगणनमपि तूदाहरणमात्रम् । **सन्निधाविति** । सन्निधिपठिते सत्यनुपादेयसम्वन्धेऽपि न कर्मभेदकता भवतीत्यर्थः । **उदाहरति—यथेति** । 'सायं जुहोति', प्रात-र्जुहोति' इत्यादीनि वाक्यानि सायंप्रातः रुपकालविधायकानि । एतानि चाग्निहोत्रं जुहोतीति वाक्यसन्निधावेव पठितानि सन्ति । अत्रानुपादेयरुप-कालसम्वन्धेन प्रकरणान्तरत्वान्न कर्मान्तरविधानम् । सन्निधेर्विद्यमान-त्वात् । सन्निधिपाठेनाग्निहोत्रसम्वन्धिनः कालस्यैव विधानमिति । अतो यथानुपादेय सम्बन्धोऽऽवश्यकस्तथैवात्रासन्निधिरप्ययेक्षते । **दिगिति** । विचार-सरणिप्रदर्शनम् । **एवमिति** । अत्रावधिविचारप्रसङ्गेन शब्दान्तरादिप्रमाण-सहकृतेन विधिवाक्येन परस्परं भिन्नत्वेन भेवविशिष्टत्वेन बोधितानि विहितानि यागादीनि तानि स्वस्वरुपेण विविच्यन्ते स्पष्टीक्रियन्ते । अर्थात् साकल्येन तेषां स्वरुपं प्रतिपाद्य इत्यर्थः । केषां स्वरुपं विविच्यत इत्याह—**तत्रेति** । अग्निहोत्रमारभ्य सोमविकृतिं यावत् ये यागास्तेषां स्वरुप-मित्यर्थः । स्वविवेचनक्रमस्य प्रामाण्यायाह—**वैदिकं क्रममाश्रित्येति** । तत्क्रमानुसारं सर्वप्रथममग्निहोत्रस्वरुपं विविच्यते । अग्निहोत्रहोमस्योत्पत्ति-विधिं दर्शयति—**अग्निहोत्रमिति** । कर्मस्वरुपमात्रवोधकत्वादयमुत्पत्ति-विधिरिति । वाक्यार्थं दर्शयितुमाह—**अग्निहोत्रेणेति** । इष्टं भावयेदिति वाक्यार्थे इष्टः कः ? इति इष्टविशेषाकाङ्क्षायां जायमानायां स होम एव इष्टत्वेन विधीयते । स होम एव स्वर्गसाधनत्वेन जीवने निमित्ते पापक्षय-साधनत्वेन चाधिकारविधिभ्यां विधीयते । अधिकारविधी चाग्निहोत्रं जुहुयात्स्वर्गकामः, यावज्जीवमग्निहोत्रं जुहुयादिति । अनयोर्वाक्ययोः कर्मजन्यफलभोक्तृत्ववोधकत्वादधिकारविधित्वम् । **तेनेति** । अनेन च काम्यनैमित्तिकप्रयोगयोर्भिन्नत्वं प्रसाधितं भवति ।

**उभौ च प्रयोगौ भिन्नौ अतएव प्रतिप्रयोगमपूर्वमपि भिद्यते । काल-भेदात्प्रयोगभेदः । प्रयोगभेदाच्चापूर्वभेद इति** प्रतिपादयितुमाह—**पुनरिति** ।

सायं जुहोति, प्रातर्जुहोतीति । आभ्यां प्रयोगविधिभ्यां कालद्वये प्रयोगद्वयस्याभ्यासौ विधीयेते । प्रयोगगतशैघ्र्यबोधकत्वात्प्रयोगविधिशब्देन व्यपदेशः । **प्रत्यभ्यासमिति** । पौनःपुन्येनोच्चारणमभ्यासः । **कर्मणामभ्यासे** सति प्रत्यभ्यासमपूर्वोत्पत्तिः यदा यदा कर्मानुष्ठानं तदा तदाऽपूर्वमिति । अतोऽपूर्णभेदः । एवमेवाधारभेदेऽपूर्वभेदमुपपादयितुमाह— **पुनश्चतस्त इति** । गार्हपत्ये चतस्त आहुतयः, अन्वाहार्यपचने च चतस्त आहुतयः, आहवनीये च द्वेऽऽहुती । कलनया च दशाहुतयो भवन्ति । 'य एवं विद्वान्' इत्यनेनाहवनीयाधारभेदोऽपि प्रतिपाद्यते । तेन च दशाभ्यासाः । अभ्यासाच्चपूर्वभेदः । पक्षान्तरं दर्शयितुमाह—द्वेऽऽहवनीये इति । आहवनीये द्वेऽऽहुती, गार्हपत्ये द्वे, अन्वाहार्यपचने च द्वे इति मिलित्वा षडभ्यासाः सम्पन्नाः । आधारभेदादेव । प्रत्यभ्यासं चापूर्वं भेद इति । अतोऽत्रापि षट्संख्याकमपूर्वं भवतीति बोध्यम् । 'दध्ना जुहोति' इति । 'दध्ना जुहोतिप्रभृतिभिर्दशभिर्वाक्यैर्होममनूद्य द्रव्याणां भवति विधानम् । तानि द्रव्याणि परिगणयितुं कर्काचार्यवचनं प्रस्तौति—**प्राय इति** । एतानि दश द्रव्याणि प्रोक्तानीत्यर्थः । **तेषामिति** । एतेषां द्रव्याणामुत्पन्नशिष्टत्वाद्विकल्पः, न तु सर्वेषामेकत्रैव समावेशः । **दध्नेन्द्रियकामस्येति** । अत्र फलमुद्दिश्य होमाश्रितं दधि विधीयते । होमान्तरत्वमस्य निवारयितुमाह—न **त्विति** । **भावनापूर्वे इति** । होमान्तरत्वाभावेऽपि भावहा अपूर्वञ्च भिनत्त्येव । अग्निर्ज्योतिरिति तथा सूर्यो ज्योतिरिति मन्त्रद्वयं सायंप्रातः कालीनयोर्होमयोर्विनियुज्यते । आभ्याञ्च मन्त्राभ्यामग्निसूर्यौ देवतं प्रतिपादिते भवतः । ते देवतेऽऽहवनीयाधारयोर्होमाभ्यासयोरुपयुज्येते । **यदग्नये चेति** । 'यदग्नये च' इत्यनेन मन्त्रेणाग्निसमुच्चितप्रजापति—देवता तथा सायंकालो विधीयते । एवमेव 'यत्सूर्याय च' इत्यनेन सूर्यसमुच्चितप्रजापतिदेवता तथा प्रातः कालो विधीयते । **अतश्चेति** । अस्मादेव कारणादित्यर्थः । मन्त्रबलेन ज्योतिष्ट्वगुणविशिष्टयोरग्निसूर्ययोर्देवतात्वं न भवति । प्रजापतिदेवतयानयोर्बाधोऽपि न भवतीत्याह—**नापीति** । चतुर्थीविभक्त्या बोधितप्रजापतिदेवतयाग्निसूर्ययोर्देवतात्वं न बाध्यते अर्थात् प्रजापतिना सहानयोरपि देवतात्वं तिष्ठत्येवेति ।

कथमवगम्यत इत्याह—**अग्नेरिति** । आहुतिक्रमबोधकाभ्यां मन्त्राभ्यामिदमवगम्यते । यथा पूर्वाहुतिरग्नेरुत्तराहुतिश्च प्रजापतेरिति । यदि परस्परं बाध्यबाधकभावः स्यात्तर्हि कथं क्रमबोधकौ मन्त्रौ सङ्गच्छेते । तस्मादुभयोर्देवतात्वमिति । **अतएवेति** । परस्परं बाध्यबाधकभावादेव ।

अग्निर्ज्योतिर्सूर्योज्योतिरित्युभयोर्न देवताद्वयकल्पनम् । **वाचनिकयोर्वचन** रुपेणपठितयोः **मिश्रलिङ्गकमात्रयोरिति** । मिश्रं मिश्रितं लिङ्गं प्रमाणं ययोस्तयोर्मन्त्रयोरित्यर्थः । एकदेवताप्रकल्पकत्वं समर्थयितुमाह—**किन्त्विति**। एकदेवताबोधकत्वेनैवमन्त्राणामनुष्ठानङ्गत्वमिति । फलितार्थमाह—**तेनेति** । उभयत्रैकदेवताप्रकाशनेनेत्यर्थः मिश्रलिङ्गकमन्त्रेण शुद्धलिङ्गकमन्त्रेण चैकैव देवता प्रतिपाद्यते । अत एकार्थत्वादेकार्थप्रतिपादकत्वाद्विकल्प इति । **होमार्थमिति** । होमसम्पादनायाग्निमुद्धृतवान् । ततश्च होमसम्पादनात्पूर्वमेव नष्टोऽग्निः । तदर्थं प्रायश्चित्तं विधीयते। प्रायश्चित्तविधायकं मन्त्रं दर्शयितुमाह—'**अग्नये ज्योतिष्मते** इति । **तत्रेति**। तत्रैव यदि दर्शसम्पादनायाग्निरुद्धृतवान् तत्रैवाग्निहोत्रानुष्ठानं स्यादिति धिया । तत्रापि तस्य यदि नाशः सञ्जातस्तर्हि नेदं प्रायश्चित्तमनुष्ठेयमिति । कुत इत्याह—**तस्येति** । प्रायश्चित्तस्येत्यर्थः । यस्य पुरुषस्य होमसम्पादनायोद्धृतोऽग्निर्नष्टस्तेन सम्पाद्यमानत्वाद्धोमाङ्गत्वं प्रायश्चित्तस्येत्यर्थः । दशार्थोद्धृतस्य कथं न होमाङ्गत्वमित्याह—**दर्शार्थोद्धृतस्येति** । दर्शसम्पादनायोद्धृतस्याग्नेर्शग्नहोत्रहोमसम्पादनमुद्दिश्योद्धरणाभावान्न होमाङ्गत्वमिति । **अतएवेति** । होमार्थोद्धरणाभावादेव । होमकालाभावे तथा होमाङ्गोद्धरागमन्त्राभावेऽपि दर्शार्थोद्धृतस्याग्नेर्न वैगुण्यं भवतीति भावः। होमार्थमुद्धरणाभावेऽपि प्रसङ्गप्राप्तत्वाद्धोममुपकरोतीति निर्देष्टुमाह—**प्रसङ्गेन त्विति** । उदाहरति—**यथेति** । **निशीष्टाविति** । 'यो रक्षोभ्यो विभीयात्सोऽग्नये रक्षोघ्नेष्टाकपालं पुरोडाशं निर्वपेत्' इति विहितायां **निशीष्टौ** स एवाग्निः प्रसङ्गवशादुपकरोति, तथैवात्राप्युपकरोतीति भावः। उपसंहरति—**तस्मादिति** । होमार्थं होमसम्पादनायोद्धृतेऽग्नौ पुनश्च तस्य नष्टे जाते तत्प्रायश्चित्त रुपं ज्योतिष्मतोष्टिः सम्पादनीया । मृताग्निहोत्रं निरुपाणायोपक्रमते—**एवमिति** । मृताग्निहोत्रस्वरुपं निर्दिशति—**यजमान इति** । यजमानः देशान्तरं उत्क्रस्तत्रैव च मृतः । तदा तत्संस्कारं यावत्तत्पुत्रादिनानुष्ठीयमानमग्निहोत्रं मृताग्निहोत्रशब्देन व्यपदिश्यते । तत्रैव श्रूयते—**अधस्तात्समिधमित्यादिः** । जीवतो यजमानस्याग्निहोत्रं दैवाग्निहोत्रशब्देन व्यवहारपदवीं लभते । तत्राग्निहोत्रहवण्या उपरि समिधं भृत्वा आहवनीयं प्रति गच्छेत् **मृताग्निहोत्रे त्विति** । अयमत्र विशेषः । मृताग्निहोत्रेऽग्निहोत्रेऽग्निहोत्रहवण्या अधस्तात्समिधं धृत्वा आहवनीयं प्रति गच्छेदिति । **तथेति** । नेनैव प्रकारेणेत्यर्थं । **प्राचीनावीती दोहयेदित्यादिः** । अत्र होमसम्पादनाय यद् दोहनं तदङ्गत्वेन प्राचीनावीतित्वं विधीयते। यज्ञोपवीतं सर्वकर्मोपयोगि सामान्यरुपेण सर्वत्र तस्यावश्यक-

त्वात् । अतस्तेन सामान्यवचनेन प्राप्तस्य यज्ञोपवीतस्यानुवादमात्रमत्र क्रियत इत्यर्थः । न तु तस्य विधानमिति भावः ।

इत्यग्निहोत्रवाक्यानि व्याख्यातानि यथामति ।
रामनन्दनपुत्रेण तेन तुष्यतु माधवः ।। इति ।

इति श्रीमद्रामनन्दनसुतकमलायनशर्मकृतिषु प्रकाशाभिधटीकायामग्निहोत्रं समाप्तम् ।

दर्शस्य पूर्णमासस्य व्याख्यां प्रस्तौमि शोभनाम् ।
हसन्तु दर्जनास्तत्रानुगृहणन्तु हि साधवः ।।

अत्राप्यथशब्द आनन्तर्ये एव । अग्निहोत्रवचोव्याख्यानानन्तरं क्रमप्राप्तत्वाद्दर्श पूर्णमासवचांसि व्याख्थायन्ते । **तत्रेति** । दर्शपूर्णमासयोरित्यर्थः । दर्शपूर्णमासयोः षड्यागाः भवन्ति । तत्र यागत्रयं पौर्णमास्यां यागत्रयञ्च दर्शे । मिलित्वा षड् भवन्ति । तदेव निर्दिशति—**आग्नेय इति** । आग्नेय उपांशुयाजोऽग्नीषोमीय इति पूर्णमासे यागत्रयम् । एवमेवाग्नेय ऐन्द्रः दधियागः पयोयागश्चेति यागत्रयं भवति दर्शे । एतेषामुत्पत्तिविधयो निर्दिश्यन्ते—**तेषामित्यादिना । यदाग्नेय इति** । अयञ्च दर्शपूर्णमासयोरुभयोराग्नेययोरुत्पत्तिविधिरिति । अत्रैकस्यैवाग्नेययागस्य कथं कालद्वयेऽन्वय इत्याह—**अत्रैकस्येति** । एक एवाग्नेययागोऽभ्यस्यते । अभ्यासेन च यागद्वयं सम्पद्यते । ततश्च कालद्वयेऽन्वयः । मिश्रमतमतेदिति बोधनायाह—**मिश्रा इति** । राणकमतं दर्शयितुमाह—**एकत्रेति** । एकत्रोभयोः समावेशाभावात्कालद्वयरुपगुणभेदाद् यागभेद इति । उभयोः पृथक्-पृथक् यागत्वमिति भावः । **राणक इति** । न्यायसुधायामित्यर्थः । **अत्रेति** । अग्निरुपा देवता तथा अष्टाकपालरुपं द्रव्यं वर्त्तते । उभयोश्च यागेन सह सम्बन्धकल्पने सति सकलगुणविशिष्टो यागो विधीयत इत्यर्थः । आग्नेयाग्नीषोमीययागयोर्मध्ये उपांशुयाजो भवतीति प्रतिपादनायाह—**उपांशुयाजमिति** । अन्तरा अन्तराले मध्ये इत्यर्थः । शङ्कामुपस्थापयति—**यद्यपीति** । न कृत इत्यकृतः । अकृतः सोमयागो येनासावकृतसोमकागस्तस्य पुरुषस्य पूर्णमासीप्रयोगेनाप्यग्नीषोमीयो भवति । कुत इत्याह—**'आग्नेयो वै' इति** । अनेन वाक्येनाग्नीषोमीयदेवताकपुरोडाशद्रव्यकयागस्य सोमयागानुष्ठानोत्तरकाले उत्कर्षविधानादिति । समाधत्ते—**तथापीति** । उत्कर्षविधानेऽपीत्यर्थः । आग्नेयाग्नीषोमीययोर्मध्ये उपांशुयाजोपलक्षितोऽन्तरालो भवत्येवेत्यर्थः । तत्रैव

न्यायमवतारयति—**उपलक्षणापायेऽपीति** । उपलक्षणस्यापाये निवाशे सत्यपि उपलक्ष्यस्यानपायो विनाशाभाव इति न्यायार्थः । अत उपांशुयागस्यानुष्ठानाभावेऽपि तदुपलक्षितस्य कालास्यान्तरालो वर्त्तत एव । अत्रैवोदाहरति—**शङ्खवेलायामिति** । शङ्खवादनवेलायायागन्तव्यमिति कश्चिद् कञ्चिन्नियमयति । कदाचित्केनापि कारणेन शङ्खध्वनिर्नजातस्तथापि शङ्खध्वन्युपलक्षितो यः कालस्तत्रागमनं भवपि तथैवात्राप्युपांशुयाजाशुयाजनुष्ठानाभावेऽपि तदनुष्ठानोपलक्षितकालस्य ।

विद्यमानत्वादन्तरालो भवत्येव । **दर्शेऽपीति** । दर्शसंज्ञकयागेऽपीत्यर्थ । अकृतसोमयागस्याग्नेयपुरोडारीन्द्राग्नपुरोडाश इति पुरोडाशद्वयव्यवधानस्य विद्यमानत्वेऽपि 'तावब्रूताम्' इति पुराकल्परुपार्थवादवाक्यपरिकल्पितविधिवाक्येन पूर्णमासीकालसम्बन्धविधानादुपांशुयाजाभाव इति **मीमांसकमतम्** । कर्मकाण्डिनां मतमुपस्थापयितुमाह—**याज्ञिकास्त्विति** । याज्ञिकानां मते दर्शयागेप्युपांशुयाजस्यानुष्ठानं भवतीति । मीमांसका अपि मतमिदं स्वीकुर्वन्तीत्याह—**स्वीकृतं चेति** । **इत्यर्थमिति** । अनेन पूर्वोक्तप्रकारेणेत्यर्थः । उत्पन्नस्योत्पत्तिविधिविहितस्योपांशुयाजस्य 'यद् ध्रुवायामाज्यं स्थापितं वर्त्तते तत्सर्वस्यै यज्ञानुष्ठानाय ग्रहितुं शक्यते' इति नियमेनाविहितद्रव्यकयागेष्वाज्यरुपं द्रव्यं भवतीति वोध्यम् । अर्थात् यत्र यागे पुरोडाशद्रव्यविशेषविधानं नास्ति तत्राज्येनानुष्ठानं सम्पादनीयमिति । विष्ण्वादिदेवानां वैकल्पिकं देवतात्वं कल्प्यत इत्याह—**विष्णुप्रजापत्यग्नीषोमरुपा इति** । मन्त्रेभ्य एतेषां देवतात्वकल्पनमित्यर्थः । **एतत्सन्निधाविति** । विष्ण्वादिदेवताकानां त्रयाणां याज्यानुवाक्यायुगलानां शाखाभेदश्रवणम् । ततश्च 'जामि वा एतद्' इत्यारभ्य 'उपांशुयाजमन्तरा' इत्यनेनोपांशुयाजस्य विधानम् । तदनन्तरञ्च 'विष्णुरुपांशु यष्टव्योऽजामित्वाय' इति वाक्यद्वयं श्रुतम् एतस्य च वाक्यद्वयस्यार्थवादत्वमेव जामित्वनिवारणरुपेण यागप्रशंसाविधानात् । अस्य मन्त्रद्वयस्य विधायकत्वनिवारणायाह—**न त्विति** । नानयोः मन्त्रयोर्विष्णुप्रजापतिदेवताविशिष्टयागविधायकत्वमित्यर्थः एवन्तर्हि कथं यागप्राप्तिरित्याह—**अन्तरालसंयुक्तवाक्येनैवेति** । 'उपांशुयाजमन्तरा यजति' इत्यन्तरालसंयुक्तयागविधायकवाक्येनैव यागस्य प्राप्तिर्भवतीति । **एवाञ्चेति** एषां वाक्यानां देवतात्रयविशिष्टयागत्रयविधाने स्वीक्रियमाणे वाक्यभेदः प्रसज्येत । सम्भवत्येकवाक्यत्वे वाक्यभेदो न युज्यते' इति न्यायादेकवाक्यत्वे सम्भवे वाक्यभेदो दोषावहः । तस्या-

देकवाक्त्वमुपपादयति—**जामिदोषोपक्रमोपन्यासादिति**। 'जामि वा एतद् यज्ञस्य' इत्यनेन जामिदोषोपक्रमः। 'विष्णुरुपांशु यष्टव्योऽजामित्वाय' इत्यनेनाजामित्वेनोपसंहारः। तस्मादुपक्रमोपसंहारन्यायेनैकवाक्यत्वप्रतीतिरिति। **तेनेति**। एकवाक्यत्वेनार्थवादत्वमेवानयोर्मन्त्रयोरिति युक्तं प्रतीभः। **ताभ्यामेतमिति**। ताभ्यामेतमित्यादिना परकृतिरुपार्थवादवाक्यपरिकल्पितविधिवायेनैकादशकपालरुपद्रव्याग्नीषोमीयरूपदेवतयोः सम्बन्धकल्पनद्वारा विधीयते यागः। **अयमञ्चेति**। अयञ्च यागकृतसोमयागस्यैव पुरुषस्य पौर्णमास्यां भवतीति प्रतिपादितम्। **अकृतसोमस्येति**। अनुष्ठितसोमयागस्य पुरुषस्य पौर्णमास्यामनुष्ठानं विनैव पौर्णमास्या फलप्राप्तिः। कुत इति चेदाह—**वचनादिति**। तत्प्रतिपादकवचनप्रामाण्यादित्यर्थः। **अस्याग्नेयादिति**। यद्यप्यस्य यागस्याग्नेययागापेक्षया पूर्वं ब्राह्मणयापाठस्तथापि मन्त्रपाठक्रमेण पश्चादनुष्ठानं भविष्यति। ब्राह्मणपाठापेक्षया मन्त्रपाठस्यप्रावल्यात्। **उक्तं प्रागिति**। मन्त्रपाठब्राह्मणपाठयोर्दौबल्यप्रावल्यविचारावसर इति। **दर्शेऽपीति**। अपिना पौर्णमासस्यापि ग्रहणम्। उभयत्राग्नेययागस्य विद्यमानत्वात्। **स एवेति**। आग्नेय एव। 'ऐन्द्रं दधि ऐन्द्रं पय' इत्याभ्यां वाक्याभ्यामिन्द्रदेवताकदधिद्रव्यकयागस्येन्द्रदेवताकपयोद्रव्यकयागस्य च विधानं भवति। **तयोश्चेति**। दधियागपयोयागयोश्चेन्द्ररुपैकदेवताकत्वाद् यद्यपि सहप्रयोगो भवति तथापि नैकं कर्म, अपि तु कर्मभेदो विद्यत एव। **एतौ चेति**। यागाविमौ कृतसोमयागस्य पुरुषस्य कृते वर्त्तेते। अकृतसोमयागस्य कृते किं भवतीत्याह—**अन्यस्य त्विति**। अकृतसोमयागस्य कृते 'इन्द्राग्नी अमावास्यायाम्' इति वचनेनैन्द्राग्नयाग एव विहितो वर्त्तते। अयमेवानुष्ठेयः। **आभ्यामेवेति**। एताभ्यां द्वाभ्यामेव यागाभ्यां कालसिद्धिर्वचनात् तत्प्रतिपादकवचनप्रामाण्यादित्यर्थः। **एवमिति**। पूर्वोक्तप्रकारेणेत्यर्थः। उत्पन्नानामुत्पत्तिवाक्यविहितानां षट्संख्याकानां दर्शपूर्णमासघटकीभूतानां यागानां 'दर्शपूर्णमासाभ्याम्' 'सर्वेभ्यः कामेभ्यः' इति वाक्याभ्यां स्वर्गरूपफलप्रतिपादकता स्वर्गातिरिक्तपशुपुत्रादिफलप्रतिपादकता च विधीयते। स्वर्गादिफलमेव अर्थः प्रयोजनं यस्य तत्तेति भावः। **गोवलीवर्द्धन्यायेनेति**। यथा गोशब्दोच्चारणेन बलीवर्दस्यापि ग्रहणं भवति, तस्यापि गोत्वावच्छिन्नत्वात् तथापि तन्निष्ठवैशिष्टयबोधनाय पृथग्ग्रहणं भवति, तथैवात्रापि सर्वकामपदेन स्वर्गस्यापि ग्रहणसम्भवात्पृथग्ग्रहणेन स्वर्गनिष्ठवैशिष्टयबोधनायेति बोध्यम्। एतदेव स्पष्टयति—**सर्वकामवाक्येनेति**। 'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ' इति सर्वकामप्रदायकत्वे सति स्वर्गरूप-

फलस्यापि तदन्तर्गतत्वादपि 'दर्शपूर्णमासाभ्या'मिति पृथक्वाक्यश्रवण-सामर्थ्यात्तद्वाक्यज्ञानसत्त्वादेव स्वर्गो भवतीति कल्प्यते । **नान्यथेति ।** तदज्ञानवतां न भवति स्वर्ग इत्यर्थः । 'यावज्जीवमि'ति वाक्येन किं बोध्यत इत्याह—**यावज्जीवमिति ।** अनेन वाक्येन पौर्णमास्यमावास्याकालावच्छिन्नेऽर्थात् तत्कालं यावत् जीवने निमित्ते सति पापक्षयप्रयोजनता तेषां तत्कालावच्छिन्नं यावत् जीवनधारणकुर्वतां पुरुषाणां बोध्यते । अपूर्वभेदमुपपादयितुमाह—**तेनेति ।** नित्यकर्मणां काम्यकर्मणाञ्च परस्परमनुष्ठानभेदः । अनुष्ठानभेदाच्च तत्तत्कर्मजन्यापूर्वभेद इत्यर्थः । काम्यप्रयोगेऽपि तत्तदनुष्ठानभेदात्तज्जन्यापूर्वभेदोऽपि भवतीति बोधनायाह—**काम्यप्रयोगभेदातिति ।** काम्यप्रयोगानुष्ठाने नित्यकर्मणामपि प्रसङ्गवशादनुष्ठानं सिद्ध्यत्येवेति प्रतिपादनायाह—**काम्यप्रयोगे चेति ।** दर्शपूर्णमासाभ्यामित्यत्र द्वित्वं समर्थयति—**दर्शपूर्णमासाभ्यामित्यादिना ।** द्वयोः दर्शपूर्णमासयागयोः समुदायाभिप्रायेण द्विवचनत्वेन प्रयोगः । तद् द्वित्वमेवोपपादयति—**उत्पत्तिवाक्यगतेत्यादिना ।** 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति' इत्युत्पत्तिवाक्यावगतपूर्णमासरूपकालसम्बद्धानामाग्नेयोपांशुयाजाग्नीषोययागत्रयाणां समुदायः 'य एवं विद्वान्' इति वाक्यस्य-पूर्णमासीपदेनानूद्यते । एवमेव पूर्वोक्तोत्पत्तिवाक्यावगतामावास्यारूपकालसम्बद्धानामाग्नेयं ऐन्द्रं दधि ऐन्द्रं पयोयागरूपयागत्रयसमुदायः 'य एवं विद्वान्' इति वाक्यस्थामावास्यापदेनामावास्यारूपकालसम्बन्धादनूद्यते । **एवमिति ।** विद्वत्पदघटितवाक्यद्वयसिद्धयागसमुदायद्वयाभिप्रायेण दर्शपूर्णमासाभ्यामिति द्विवचनप्रयोगः । यागत्रयसमुदायस्य दर्शपूर्णमास इति न नामधेयमपि तु समुदायिनां नामधेयमिति प्रतिपादयितुमाह—**न चेति ।** दर्शपूर्णमासशब्दो न यागत्रयसमुदायस्य नाम, अपि तूत्पत्तिवाक्येन यागत्रयसमुदायविशिष्टसमुदायिनां यागानामेव तत्तत्कालेन सह सम्बन्धज्ञानात्तेषां समुदायिनामेव यागानां दर्शपूर्णमास इति नामधेयम् । **तेषाञ्चेति ।** समुदायसहितानां समुदायिनां फलेन सह सम्बन्धे स्वीक्रियमाणेऽपि प्रत्येकस्य कालेन सह सम्बन्धस्य विद्यमानत्वात्तेषां परस्परं भिन्नप्रयोग एवेति प्रतीयते तथापि 'पूर्णमास्यां पूर्णमास्या यजेत' तथा 'अमावास्यायामवास्यया यजेत' इत्याभ्यां वाक्याभ्यां पूर्णमासीकालसम्बन्धिन एकस्य त्रिकस्य तथामावास्याकालसम्बन्धिनोऽपरस्य त्रिकस्येत्यनेन प्रकारेण प्रयोगद्वयं विधीयते । वाक्यार्थं दर्शयति—**पौर्णमास्यामिति । एवममावास्यायामपीति ।** साङ्गैस्त्रिभिर्यागैरपूर्वं कुर्यादिति शेषः । **एवञ्चेति ।** फलप्रतिपादकवाक्येषु दर्शपूर्णमाससम्बन्धिनां षण्णां यागानां फलं प्रति साधनत्वानुपपत्तिः । यद्येकं फलं

कल्प्येत तर्हि साधनषट्कं न युक्तम् । तदनुपपत्त्यैकमेव फलवाक्यमिति कल्पनीयम् । तस्माच्चैकफलवाक्यादेकमेव फलापूर्वं परिकल्पितं स्यात् । तस्य च वाक्यस्येतिकर्त्तव्यताकाङ्क्षायामङ्गसमुदायानां भवत्यन्वयः । अङ्गान्वये जाते षडङ्गसहितप्रधानवाक्यैस्तदुपपत्तेः फलोत्पत्तेश्चधारणं निश्चयः । ततश्च शीघ्रतरविनाशशालिनां यागानां तत्पर्यन्तं फलप्राप्तिपर्यन्तमनवस्थानाद्विद्यमानत्वाभावात् । षड्भ्योऽङ्गेभ्यः षडुत्पत्त्यपूर्वाणि । परिकल्पितानि । **तानीति** । तानि च परिकल्पतान्युत्पत्त्यपूर्वाणि । अमावास्यापूर्णमासरूपकालद्वयविधायकवाक्यद्वये भाव्यतां साध्यतां प्रतिपद्यन्ते प्राप्नुवन्ति । तत्रैव हेतुं दर्शयति—**साङ्गसहितेत्यादिना** । एतेषामङ्गजन्यानामपूर्वाणामङ्गसहितप्रधानयागत्रयजन्यत्वासम्भवात् । **एवञ्चेति** । अनेन प्रकारेण 'पूर्णमास्यां पूर्णमास्या' 'अमावास्यायामावस्यया' इत्यनयोर्वाक्ययोरङ्गसहितप्रधानयागत्रयकरणक**भावनाभाव्यत्वेन** भावनासाध्यत्वेन प्रधानयागद्वयात्समुदायापूर्वद्वयं परिकल्प्यते । **एवञ्चेति** । अनया च प्रक्रियया साङ्गप्रधानयागैरपूर्वाणि जन्यन्ते । अङ्गान्यपि फलापूर्वं परिगृह्णन्तीत्याह—**अङ्गानि त्विति** । यद्यप्यङ्गानि फलवाक्यजन्यकथंभावाकाङ्क्षयैव फलापूर्वं गृह्णन्ति तथाप्यङ्गसमुदायजन्यसमुदायापूर्वजननद्वारा फलापूर्वसाधकानि भवन्ति । **कालवाक्यद्वये इति** । पूर्णमास्यमावस्यारूपकालद्वयविधायके कालवाक्यद्वये समुदायापूर्वजनकत्वावगमात् । **अतएवेति** । समुदायापूर्वजननद्वारा फलापूर्वं प्रति सहायकत्वादेव । प्रतिसमुदायमङ्गान्यावर्त्तन्ते । **तत्रापीति** । अङ्गेष्वपीत्यर्थः । **सन्निपत्योपकारकाणीति** । यागहोमादिकर्माङ्गद्रव्यादिकमुद्दिश्य विधीयमानं कर्म सन्निपत्योपकारकम् । यथा—**अवघातप्रोक्षणादिकम्** । तान्यङ्गानीतिशेषः । **उत्पत्त्यपूर्वार्थत्वादिति** । उत्पत्त्यपूर्वजननरूपप्रयोजनत्वादित्यर्थः । **तद्भेदेनेति** । समुदायभेदेनेत्यर्थः । **आरादुपकाराणीति** । द्रव्यादिकमनुद्दिश्य केवलं विधीयमानं कर्म आरादुपकारकम् । यथा—**प्रयाजादयः** । यद्यप्यारादुपकारकाण्यङ्गानि समुदायापूर्वजननद्वारा फलापूर्वप्रयोजनकानि भवन्ति तथापि तद्भेदेन समुदायभेदेन भिद्यन्ते । **सन्निपत्योपकारकेष्वपीति** । सन्निपत्योपकारकेष्वप्यङ्गेषु कानिचिदङ्गानि प्रधानयागमात्रप्रयोजनकानि भवन्ति । उदाहरति—**यथेति** । निर्वपति - प्रोक्षति - अवहन्ति-पिनष्टि-संयौतिप्रभृतिभिर्विधिभिर्विहितानि । **औषधद्रव्यकेत्यादि** । ओषधिः फलपाकान्ता । तद्द्रव्यकयागोत्पत्त्यपूर्वजननप्रयोजनकानीत्यर्थः । **वाक्याभ्यामिति** । आभ्यां वाक्याभ्यां पुरोडाशद्रव्यप्रधानयागमनूद्य पुरोडाशप्रकृतिद्रव्यत्वेन व्रीहियवौषधिद्रव्ये नियम्येते । अर्थात् पुरोडाशप्रकृतिकत्वादेतावेव व्रीहियवौ ग्राह्यौ पुरोडाशार्थम् ।

**तयोश्चैकार्थत्वेनेति**। तयोर्व्रीहियवयोरित्यर्थः। **एकार्थत्वेनैकप्रयोजनकत्वेन**। उभयोः पुरोडाशसम्पादनरूपमेकमेव प्रयोजनं वर्त्तते। **निरपेक्षविधानादिति**। परस्परं सापेक्षत्वाभावेन निरपेक्षविधिविहितत्वादित्यर्थः। **विकल्प इति**। 'तुल्यबलविरोधे विकल्पः' इति न्यायादित्यर्थः। उभयोर्वाक्ययोर्वैदिकत्वसामान्यात्तुल्यबलत्वम्। अतएव न बाध्यबाधकभावः। **तत्र यद्यपीति**। निर्वपति-प्रोक्षतिप्रभृतिभिर्वाक्यैर्व्रीह्यादिकमुद्दिश्य निर्वापादीनि विधीयन्ते तथापि व्रीहिस्वरूपपरिवर्त्तनाद्यभावात्तत्स्वरूपे प्रोक्षणादीनामानर्थक्यात् व्रीहीन् प्रोक्षति, व्रीहीन् वहन्ति तण्डुलं पिनष्टि इत्यादिक्रमेण पुरोडाशसम्पादनम्। तत्सम्पादनपूर्वकं यद् व्रीहीणामाग्नेयादियागजन्यापूर्वसाधनत्वं 'व्रीहिभिर्यजेत' इति वाक्येनावगम्यते, तद्व्रीहिपदेन **लक्षयित्वा** लक्षणावृत्त्या ज्ञात्वा **तादर्थ्येन** तत्प्रयोजनकत्वेन विधीयन्ते। व्रीहिपदस्य यदभिधेयं व्रीहिस्वरूपं तन्न साक्षादुपयुज्यते अपि तु व्रीह्युपलक्षिततण्डुलादीनामेवोपयोगः। अतएवोक्तं **लक्षयित्वेति**। निर्वापादिवाक्यार्थं प्रदर्शयितुमाह—**तेनेति**। निर्वापादिपदघटितवाक्यानामयमर्थ इति। यत्तण्डुलनिर्वृत्तिपरित्यादिः। व्रीहिभिस्तण्डुलनिष्पादनद्वारा यदाग्नेयागजन्यापूर्वं प्रति साधनत्वमवगम्यते तन्निर्वापादिभिः संस्कुर्यादित्यर्थः। **तद्दृशाश्च यवा अपीति**। यवा अपि व्रीहिसदृशा एव सन्ति। तैरपि पुरोडाशसम्पादनं क्रियते। तेष्वप्याग्नेयादियागजन्यापूर्वं प्रति साधनता तिष्ठति। तस्मात्तेऽपि निर्वापादिभिः संस्कार्या इति। **तत्रेति**। निर्वापादिष्वङ्गेष्वित्यर्थः। निर्वापावघातप्रभृतीनि वैतुष्यादिदृष्टसंस्कारप्रयोजनकानि भवन्ति। तत्रावघातस्य वैतुष्यरुपं दृष्टमेव प्रयोजनं वर्त्तते। **अत इति**। येषामङ्गानां दृष्टप्रयोजनानि न विद्यन्ते तान्यदृष्टप्रयोजनकानि भवन्ति। यथा चतुर्मुष्टीन् जुहोतीत्यादौ चतुःसंख्यामुष्टिरुपपरिमाणनियमादीनि सन्ति तेषां तत्र दृष्टस्वरूपसम्पाने नास्ति किमपि प्रयोजनमत एव च वैयर्थ्यं तेषाम्। अतस्तत्संख्यारुपपरिमाणपरिमितादिनियमसाध्यं यदपूर्वं तत्प्रधानापूर्वजननप्रयोजनकान्येव भवन्ति। **प्रोक्षणादीनीति**। 'व्रीहीन् प्रोक्षति' इत्यादिवाक्यैर्विहितानि प्रोक्षणादीनि केवलमदृष्टसंस्कारप्रयोजनकानि। प्रोक्षणेन व्रीहिस्वरुपे नैव किञ्चिद् दृष्टं भवति। **तदङ्गानीति**। तदङ्गभूतान्युत्पवनादीन्यपूर्वजनकान्येव भवन्ति। **तत्रैवेति**। उत्पवनादीनामपूर्वजनकत्वे एवानर्थक्यपरिहारसम्भवात्। यद्यपूर्वमपि न स्यात्तथा दृष्टमपि किमपि प्रयोजनं न स्यात्तर्हि तेषां वैयर्थ्यं सुतरामेव। **एवमिति**। पूर्वोक्तप्रकारेणैवाज्यसंस्कारसम्पादकान्युत्पवनापेक्षणादीनि यानि सन्ति तानि सर्वाण्यप्याज्यसाध्योपांशुयाजानुष्ठानजन्यापूर्वप्रयोजनकानि भवन्ति। **सान्नाय्यार्था-**

**नीति** । दोहनातञ्चनादीनि साम्नाय्यसम्पादकत्वात्तदर्थानि भवन्ति । साम्नाय्यं दधिपयसी । तत्साम्नाय्यसाध्ययागापूर्वार्थान्येव । कानिचित्सन्निपत्योपकारण्यङ्गानि भवन्ति, तानि च प्रधानार्थानि । उदाहरति—**यथेति** । **अन्वाधानमिति** । **पूर्वेद्युरिति** । प्रथमेऽह्नि अग्निं गृह्णाति, अपरस्मिन्नहनि च यजन्ते । अत्राग्निषु यत्समित्प्रक्षेपादिकं तदग्निसंस्कारकं भवति । अग्नीनां च 'यदाहवनीये' इत्यादिभिर्वाक्यैरङ्गप्रधानार्थहोमहविःश्रयणान्वाहार्यपाकार्थत्वं प्रतीयते । अत एतेषामङ्गप्रधानार्थत्वं सद्धयति । एवमेव परिसमूहनादयोप्यग्निसंस्कारा एव भवन्तोत्यूहृयम् । शास्त्रेण वितर्क्यम् । **एवमिति** । 'वेद्यां हवींषि' 'बर्हिषि हवींषि' इत्याभ्यां वाक्याभ्यामङ्गप्रधानहविरासादनप्रयोजनकत्वेन विहिते वेदिबर्हिष्यङ्गप्रधानार्थे । **तद्धर्माश्चेति** । वेदिबर्हिर्धर्माश्चेत्यर्थः । **खननलवनादय इति** । तत्र वेद्याः खननम् । बर्हिषश्च लवनं भवति । एतेऽप्यङ्गप्रधानार्थाः । **वेदिकरणमिति** । 'पूर्वेद्युरमावास्यायां वेदिं करोती'ति वाक्येन पूर्वेद्युरेव वेदिकरणं विहितम् । पौर्णमास्यां विशेषं दर्शयितुमाह—**पौर्णमास्यामिति** । पौर्णमास्यां हविःश्रपणोत्तरं वेदिकरणं भवति । **एवमिति** । यागानुष्ठानार्थमृत्विग्वरणं दक्षिणादानञ्च भवति । ऋत्विजां सर्वार्थत्वाद् यागानुष्ठाने सर्वकार्यसम्पादकत्वाद् ऋत्विग्वरणदक्षिणादाने च सर्वार्थे भवतः । दर्शपूर्णमासयोः 'यज्ञक्रत्वोश्चत्वार ऋत्विजः' इत्यनेन ऋत्विजां संख्याश्चत्वारो भवन्तीति प्रतीयते । तेषामनुष्ठानारम्भे यद्वरणं विहितं तदानतिसम्पादकत्वाद् दृष्टप्रयोजनकम् । आनतिरानमनम् । **यत्त्विति** । 'भूपते' इत्यादिमन्त्रेणानुष्ठानमध्ये ब्रह्मणो वरणं विहितम्, तददृष्टजनकम् । दृष्टफलस्यादृष्टार्थत्वाभावात् । प्रणोतायाः प्रधानमात्रार्थत्वं साधयितुमाह—**प्रणीतास्त्विति** । 'प्रणीताभिर्हवींषि संयौति' इत्यनेन प्रधानहविः संयवनार्थं प्रणीताः विहिताः । ताः प्रधानमात्रार्थाः । कात्यायनीयं मतं दर्शयति—**सर्वार्था इति** । कात्यायनमते प्रणीताः सर्वार्थाः भवन्ति न तु प्रधानमात्रार्था इति । **अन्तर्वेदि इति** । तासां प्रणीतानामन्ते प्रतिपत्तिः । प्रतियत्तिरत्र स्थापनम् । **प्रोक्षणीधर्मा इति** । उत्पवनादयः प्रोक्षणीधर्मा अप्यङ्गप्रधानार्थाः भवन्ति । कुत इत्याह—**प्रोक्षणीनामिति** । पात्रादिप्रोक्षणार्थत्वेन विहितत्वात्प्रोक्षणीनां सर्वार्थत्वमिति भावः । **इध्माधानमिति** । एतच्चाग्निसमिन्धानार्थं विहितम् । अग्निश्च भवति सर्वार्थः । अत इध्माधानमप्यङ्गप्रधानार्थमिति । अङ्गार्थं प्रधानार्थञ्चेति भावः । **एवं सामिधेन्योऽपीति** । अङ्गप्रधानार्था इति भावः प्र वो वाजेत्याद्या पञ्चदशर्चः समिधाग्निप्रकाशकाः मन्त्राः भवन्ति । वैश्यकर्तृके प्रयोगे 'सप्तदश वैश्यस्य' इति वचनात्सप्तदशसामिधेन्यो विहिताः विहिताः

सन्ति। एवमेव काम्यप्रयोगे 'एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य' इत्यनेनैकविंशतिसामिधेन्यो भवन्ति। ये प्रतिष्ठास्यन्ति तेषां कृते सामिधेनीसंख्येयम्। पञ्चदशत्वसप्तदशत्वसंख्यासम्पादनप्रकारमाह—**तत्रेति**। यद्यप्यृचां संख्यैकादश एव वर्त्तते तथापि तासां पञ्चदशत्वसंख्यापूरणाय 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इति वचनप्रामाण्यादावृत्तौ कृतायां प्रथमाया अन्तिमायाश्च चतुःसंख्यायाः वृद्धौ संकलने पञ्चदशसंख्या सम्पद्यते। आवृत्त्या पञ्चदशत्वसंख्या भवतु, परन्तु साप्तदश्यं कथं भवतीत्याह—**साप्तदश्यन्त्विति**। तत्र पश्यतु भवान्। एकादशसंख्या तु सिद्धा वर्त्तते। तत्रैव च धाय्यासंज्ञकानां षण्णामृचां प्रक्षेपाद् अर्थात् संयोजनेन सप्तदशसंख्या सम्पन्ना भवति। तत्रैव प्रमाणमुपन्यस्यति—**पृथुपाजवत्याविति**। पृथुपाजवत्यौ द्वौ धाय्ये द्वे उष्णिक्ककुभौ द्वाविति मिलित्वा ऋचां संख्या षट् सञ्जायन्ते। प्रक्षेपश्च कुत्र भवतीत्याह—**प्रक्षेपश्चेति**। **अन्तराले** मध्ये। तत्रैव श्रुतिं प्रमाणयति—**'ययं वै' इति**। उभयोर्मध्ये या सा धाय्या इति। **एवं निविन्मन्त्रा अपीति**। एतेऽप्यग्निप्रकाशका एव। **प्रयाजशेषभिधारणमिति**। 'प्रयाजशेषेण हवींष्यभिघारयति' इति विहितं प्रयाजशेषाभिघारणं यद्यपि प्रयाजशेषप्रतिपत्तिप्रयोजनकं तथापि 'ध्रुवामेव' इत्यधिकरणनियमांशेन हविःसंस्कारकमपि भवति। अतोऽङ्गप्रधानोभयप्रयोजनकमित्यर्थः। तत्रैव श्रुतिं प्रमाणयति—**एवं हीति**। **एवमादीनीति**। एतादृशान्यङ्गानि प्रधानयागानुष्ठानात्पूर्वमेवानुष्ठितानि भवन्ति। तथा च सन्निपत्योपकारकाणि भवन्ति। अतएवैतानि प्रधानयागानुष्ठानजन्योत्पत्त्यपूर्वोत्पत्तौव्याप्रियन्ते। **उत्तरकालानि त्विति**। प्रधानयागानुष्ठानजन्यापूर्वस्थितौ उत्तरकालवर्त्तीन्यङ्गानि व्याप्रियन्ते। **तान्यपीति**। तान्यपि कानिचिदङ्गानि प्रधानमात्रार्थानि भवन्ति, कानिचिच्चाङ्गप्रधानोभयार्थानि भवन्ति। उभयत्रोपकुर्वन्तीति यावत्। उदाहरति—**यथेति**। 'उत्तरार्द्धात्स्विष्टकृते समवद्यति'। अयञ्च स्विष्टकृत् यागस्याङ्गप्रधानोभयहविष उत्तरार्द्धप्रतिपत्त्यर्थः तथा मन्त्रांशेन चाङ्गप्रधानोभयदेवतास्मारकत्वम्। अतएवास्योभयार्थता भवति। **एवमिति**। इडाप्राशित्रप्रभृतीनामप्युभयार्थता बोध्येति। **एते चेति**। एते केवलं हविःप्रतिपत्त्यर्था एव भवन्ति। अतएव हविर्नाशे सत्येतेऽपि लुप्यन्ते। **स्विष्टकृद् यागस्त्विति**। स्विष्टकृद् यागस्य त्यागांशेनादृष्टार्थतापि भवति।

तथोत्तरार्द्धहविर्नाशे सत्याज्येन शेषं सम्पादयन्तीति विशेषः। तत्रैव श्रुतिवाक्यं प्रमाणयति—**'यस्य सर्वाणि' इति**। अत्राज्येनैता देवता इत्यपि

वर्त्तते। **अत्र हविषा मिति**। स्विष्टकृद् यागे यदि केनापि कारणेन हविषां नाशः सञ्जातस्तर्हि तन्निमित्तकं नष्टहविषः स्थाने प्रतिनिधिरूपेणाज्यस्यैव ग्रहणं भवति। **तच्चेति**। आज्यञ्चेत्यर्थः। अदृष्टार्थप्रतिपादकेष्वङ्गप्रधानोभययागेषु सर्वत्र सूक्तवाकाङ्गप्रधानार्थं एव भवति। **पूर्वपरिच्छेदे इति**। मानपरिच्छेदे प्रथम इत्यर्थः। पिष्टलेपहोमस्यापि प्रधानार्थत्वमुपपादयति—**दक्षिणाग्न्यधिकरणेत्यादिः**। दक्षिणाग्नौ पिष्टलेपहोमो विधीयते। स च प्रधानमात्रार्थपिष्टलेपप्रतिपत्त्यर्थः। तस्मात्सोऽपि प्रधानार्थं एव भवति। **सपिष्टयजुर्होम इति**। सपिष्टयजुर्होमस्तु ध्रुवायां सुरक्षितं यदाज्यं तस्यैव प्रतिपत्त्यर्थः। अतोऽङ्गप्रधानोभयार्थः। त्यागांशेनादृष्टजनकत्वाददृष्टार्थोऽपि भवति। **एवमध्वर्युकर्त्तृका इति**। अध्वर्युकर्त्तृकाः प्रायश्चित्तहोमा अपि साङ्गप्रधाननिष्ठवैगुण्यपरिहारार्था भवन्ति। तस्मादेतेऽप्यङ्गप्रधानोभयार्था इति। **एवं ब्रह्मकर्त्तृका** इति। एवमेव ब्रह्मकर्त्तृका अप्युभयार्था इत्यर्थः।

तत्रैव श्रुतिवाक्यम्—**'य घृताक्त'** इति। **इत्थमिति**। एतेन प्रकारेण प्राक्कालानि उत्तरकालानि वा सन्निपत्योपकारकाण्यङ्गानि विनिर्दिष्टानि। **प्रायश इति**। प्रायः सर्वाण्यङ्गानि निर्दिष्टानि, परन्तु यदि कानिदङ्गान्यवशिष्टानि स्युस्तर्ह्येवमेव विचारणीयानि। सन्निपत्योपकारकाण्यङ्गानि विचार्यारादुपकारकाणि विचारयितुमाह—**आरादुपकारकाणीति**। आरादुपकारकाणि सर्वाण्यङ्गानि स्वापूर्वद्वारा अर्थादङ्गापूर्वसम्पादनद्वारा परमापूर्वोत्पत्तिप्रयोजनकानीति भवन्ति। अर्थात् सर्वाण्यङ्गापूर्वाणि परमापूर्वोत्पत्तौ सहायभूतानि भवन्ति। उदाहरति—**यथेति**। प्रजापतिदेवत्यः प्रजापतिदेवताकः। इन्द्रदेवत्यः इन्द्रदेवताकः। समिधो यजतीत्यादिपञ्च प्रयाजाः भवन्ति। **पञ्चमस्त्विति**। तत्र 'स्वाहाकारं यजतीति पञ्चम' प्रयाजः। स च मन्त्रांशेन देवतानिष्ठसंस्कारसम्पादकोऽपि भवति। **पूर्वपरिच्छेदे** मानपरिच्छेद इत्यर्थः। 'आज्यभागौ' च द्वौ भवतः। 'आग्नीषोमाभ्यामाज्यभागौ यजती'ति तद्विधापकं वाक्यम्। शङ्कते—एवन्तर्ह्याग्नेयाज्यभागः प्रधानयागं प्रत्यङ्गभूताया अग्निदेवताया संस्कारकोऽपि भवत्विति।

समाधत्ते—**नेति**। एकस्मिन्नेव वाक्ये सोमदेवताकस्य सौम्यस्यारादुपकारकत्वं तथा अग्निदेवताकस्याग्नेयस्य सन्निपत्योपकारकत्वमित्युभयासम्भवात्। शङ्कते—**सौम्येनापूर्वमित्यादिना**। सौम्येनापूर्वं सम्पादयेदपरेणानेग्येनाग्निं संस्कुर्यादित्यनेन प्रकारेणोभयकार्यसम्भव इति। समाधत्ते—

**वचनव्यक्तिभेदेनेति** । वचनद्वयकल्पनेन वचनव्यक्तिभेदाद्वाक्यभेदापत्तिप्रसङ्गात् । फलितमाह—**तेनेति** । सौम्यसाहचर्यादाग्नेयोप्यारादुपकारकः सञ्जात इति । अत उभयोरेकमेव कार्यं । स्यादितिभावः । **एवमिति** । पूर्वोक्तप्रकारेणेत्यर्थः । नारिष्टहोमौ प्रधानभागानुष्ठानोत्तरकालानुष्ठेयौ तथारादुपकारकावपि भवतः । 'दश ते तनुवो यज्ञ यज्ञिया' इत्यादिभिर्मन्त्रैराज्याहुतयो नारिष्टहोमाः । एवमेव त्रयोऽनूयाजाः शंयुवाकाश्चारादुपकारका इति । **एवं पत्नीसंयाजा इति** । **गार्हपत्यधिकरणका इति** । गार्हपत्यग्नावनुष्ठीयमाना इत्यर्थः । 'आज्येन पत्नीः' 'जाघन्या पत्नीः' इत्याभ्यां वाक्याभ्यां विहितेनाज्येन पशुजघनस्यमांसेन वा सम्पादनीयाः । **इत्यमिति** । सर्वाङ्गसम्पूर्णयोर्दर्शपूर्णमासयोर्व्याख्यानं सञ्जातम् । तत्रैव विशेषमापादयितुमाह—**पौर्णमास्यामिति** । पौर्णमास्या अनुष्ठानानन्तरं 'वैमृधमनु निर्वपति' इति विधिवाक्येन विहिता वैमृधेष्टिः दर्शपूर्णमासप्रयोगवर्हिभूतं तदङ्गत्वेन विधीयते । अर्थादिपमिष्टिर्न दर्शपूर्णमासान्तर्गता तथापि तदङ्गत्वेनविहिता वर्त्तते । दर्शपूर्णमासानुष्ठानेन सहैवास्या इष्टेरप्यनुष्ठानं सम्पाद्यत इति याज्ञिकमतमुपस्थापयितुमाह—**याज्ञिकास्त्विति । समानतन्त्रामिति** । सहैवानुष्ठानमित्यर्थः । अस्या इष्टेः प्रयोजनं निर्देष्टुमाह—**इयमिति** । इयमिष्टिः स्वानुष्ठानजन्यापूर्वद्वारा साङ्गपौर्णमास्यनुष्ठानजन्यसमुदायापूर्वं स्थापयति संस्थापयति । एतदनुष्ठानाभावे का हानिरित्याह—**एतदभाव इति** । एतदनुष्ठानाभावे साङ्गदर्शपूर्णमासानुष्ठानेन निष्पन्नमपि सुसम्पन्नमपि समुदायापूर्वं विनश्यतीति कल्प्यते । समुदायापूर्वस्य विनाशे सति तज्जन्यफलाभावोऽपि स्यादेव । कारणाभावप्रयुक्तकार्याभावस्य स्वाभाविकत्वात् । अतएव कार्याव्यवहितपूर्वक्षणावच्छेदेन वृत्तिता कारणस्य स्वीकुर्वन्तीति । अन्यथा तज्जन्यकार्याभावः स्यादिति । इति समाप्त्यर्थम् ।

कमलनयनाचार्यः व्याख्यां करोति शोभनाम् ।
अनेन कर्मणा श्रीमान् नारायणः प्रसीदतु ॥

इतिश्रीमद्रामनन्दनसुतकमलनयनशर्मकृतिषु प्रकाशाभिधटीकायां दर्शपूर्णमासः समाप्तः ।

चातुर्मास्यानि वाक्यानि व्याख्यायन्ते मया मुदा ।
अनुगृह्णन्तु विद्वांसः कृपा यद्यस्ति ते मयि ॥

अत्राप्यथशब्द आनन्तर्ये भवति। दर्शपूर्णमासनिरुपणानन्तरं क्रमप्राप्तानि चातुर्मास्यानि निरुप्यन्ते। चातुर्मास्ये चत्वारि पर्वाणि भवन्ति। चतुर्णां पर्वणां समुदायस्य चातुर्मास्येति संज्ञा भवति। तदेवोक्तं**वैश्वदेवमित्यादिना**। वैश्वदेवादिसंज्ञकानि भवन्ति पर्वाणि। चातुर्मास्येति संज्ञामुपपादयति—**चतुर्ष्वति**। चतुर्षु चतुर्षु मासेष्वन्तरालेष्वेकैकस्य पर्वणोऽनुष्ठानादेषा संज्ञोपपद्यते। **तत्रेति**। पर्वस्वित्यर्थः। वैश्वदेवपर्वण्यष्टौ यागाः भवन्ति। तदेव परिगणयति—**आग्नेयमष्टाकपालमिति**। अग्निदेवताकमित्यर्थः। आग्नेयमित्यारभ्य द्यावापृथिव्यमेककपालमिति यावदष्टाभिर्वाक्यैरेते विहिताः सन्ति।

यावान् ग्रन्थः समुपलब्धस्तावान् व्याख्यातः। अनुपलब्धौ दौर्भाग्य-मेवास्माकमिति शम्।

वहुशो यतमानोऽपि नैव सम्पूर्णतां गतः।
अत्रास्माकं हि दौर्भाग्यमिति चेखिद्यते मनः ॥१॥

मूलं सम्पाद्य पूर्वन्तु ततष्टीका कृता मया।
वालबुद्धिविवृद्ध्यर्थं तेन विष्णुः प्रसीदतु ॥२॥

ग्रन्थरत्नस्य पूर्त्यर्थं सदा यत्नं करोम्यहम्।
सुहृदोऽपि च ते धन्यास्तत्र ये मार्गदर्शकाः ॥३॥

सदनुकम्पया तेषां यदि स्यात्पूर्णता किल।
नतोऽस्मि सर्वदा तेषु कार्त्तज्ञ्यमाविर्भमि च ॥४॥

यद्यपीदं महत्कार्यं विदुषामेव शोभते।
तथापि बालचापल्यात्प्रवृत्तोऽहं सुकर्मणि ॥५॥

न हि सद्वर्त्मना गच्छन् स्खलितेष्वप्यपोद्यते।
इति कौमारिलं वाक्यं संस्मरामि पुनः पुनः ॥६॥

दोषज्ञो हि भवेद्विद्वान् खलस्तु दोषवाचकः।
व्यवस्थेयं हि शास्त्रस्य तथैव च समाचरेत् ॥७॥

हसन्ति दुर्जनास्तत्र समादधति साधवः।
इति न्यायं समाश्रित्य समाधानमपेक्षते ॥८॥

—६०—

संख्यावतां समाधिश्च चित्तश्रोत्रप्रसादिनी ।
जनिका कार्यशक्तेश्च समुत्साहप्रदायिनी ॥६॥

स्यादिति शेषः ।

कातीयां वाचमाश्रित्य विद्यावाणीं समीक्ष्य च ।
रामनन्दनपुत्रेण कृतञ्च परिशिष्टकम् ॥१॥

त्वदीयं सकलं कृष्ण ! तुभ्यमेवार्पये मुदा ।
नास्ति मत्सविधे किञ्चिद् यदस्माकमपीह तत् ॥२॥

। इति श्रीगोविन्दार्पणमस्तु ।



# तृतीयं परिशिष्टम्

श्रीजीवदेवकृतलक्षणवैलक्षण्यसूचनिका ।

१. धर्मलक्षणम् ।
वेदबोधितश्रेयः साधनताको धर्मः ।

२. अधर्मलक्षणम् ।
वेदबोधित श्रेयः साधनताकोऽधर्मः ।

३. विधायकत्वम् ।
अज्ञातज्ञापकत्वमनुष्ठापकत्वञ्च ।

४. भावना ।
यात्रानुकूलो व्यापारः ।

५. शाब्दी भावना ।
शब्दगतः शब्दाभिहितो वा पुरुषप्रवृत्त्यनुकूलो व्यापारः ।

६. प्रवर्त्तना ।
प्रवृत्त्यनुकूलत्वात्प्रवर्त्तना ।

७. आर्थीभावना ।
पुरुषगतः फलानुकूलो व्यापारः ।
आर्थीभावना प्रयत्नात्मिका ।

८. स्वर्गः ।
दुःखादसम्भिन्ना अविच्छिन्ना सर्वेष्टा पारलौकिकी प्रीतिः स्वर्गपदवाच्या ।

९. देवतात्वम् ।
त्यज्यमानद्रव्योद्देश्यत्वाद्देवतात्वम् ।

१०. भावनाकरणत्वम् ।
भावनाभाव्यनिर्वर्त्तकत्वं भावनाकरणत्वम् ।

११. प्रकृतिलक्षणम् ।
यत्रोपदेशेनैव दृष्टादृष्टार्थयावदपेक्षिताङ्गान्वयः, सा प्रकृतिः ।

१२. विकृतिलक्षणम् ।

यत्रातिदेशेनैव तादृशाङ्गान्वयः, सा विकृतिः ।

१३. अपूर्वविधिः ।

अत्यन्ताप्राप्तबोधको विधिरपूर्वविधिः ।

१४. उत्पत्तिविधिः ।

कर्मणा उत्पत्तिं प्रथमज्ञप्तिं यः करोति, स प्रथमः ।

१५. विनियोगविधिः ।

विनियोगमङ्गाङ्गिभावसम्बन्धं यो वोधयति, स विनियोविधिः।

१६. अङ्गत्वम् ।

परोद्देशप्रकृतपुरुषकृतिसम्बन्धित्वम् ।

१७. श्रुतिलक्षणम् ।

लिङ्गादिकल्पनामन्तरेणाङ्गत्वबोधकः शब्दः श्रुतिः । प्रकृत्यर्थगतलिङ्गसंख्याभिधायित्वाद्वा अभिधात्री श्रुति । विधायकोलिङ्गादिः कर्मफलपुरुषाणां गुणप्रधानभावं वोधयतीति विधात्री ।

एकपदे प्रकृतिप्रत्यार्थगुणप्रधानत्वावगतेः पदश्रुतिः ।

एकप्रत्यये शब्दार्थभावनयोर्गुणप्रधानत्वावगतेरेकाभिधान श्रुतिः ।

१८. लिङ्गम् ।

लिङ्गं नामार्थगतं वा सामर्थ्यम् ।

१९. वाक्यंम् ।

वाक्यं नाम—पदानां वाक्यानां चैकवाक्यता ।

२०. प्रकरणम् ।

साकाङ्क्षधर्मसन्धिौ भावानायाः कथमित्याङ्क्षा प्रकरणम् ।

प्रधानभावनायाः प्रकरणं महाप्रकरणम् । अङ्गभावानायाः कथं भावाकाङ्क्षावान्तरप्रकरणम् ।

२१. स्थानम् ।

देशसामान्यं स्थानम् ।

२२. अधिकारविधिलक्षणम् ।

उत्पन्नस्येष्टसामान्ये विनियुक्तस्य च कर्मणः फलविशेष-

सम्बन्धबोधनेन पुंसः फलभोक्तृत्वरूपाधिकारं यो बोधयति, सोऽधिकारविधिः।

२३. प्रयोगविधिलक्षणम्।

उत्पन्नस्य विनियुक्तस्य फलविशेष सम्बन्द्धस्य च कर्मणः साङ्गस्य प्रयोगं बोधयन् यो विधिः स प्रयोगविधिः।

२४. अतिदेशः।

अन्यत्र श्रुतानामङ्गानामन्यत्र तदतिदेशनम्।

२५. अव्यक्तत्वम्।

स्वार्थचोदितदेवताराहित्यम्।

२६. ऊहः।

ऊहो नाम कार्यवशेनान्यथाभावः।

२७. प्रसङ्गः।

उपकाराय हि पदार्थानुष्ठानम्।

२८. प्रतिपत्तिः।

आकीर्णकरतानिवृत्तिः।

२९. श्रुतिः।

क्रमपरं वचनं श्रुतिः।

३०. अर्थक्रमः।

अर्थः प्रयोजनम्, तद्वशेन क्रमः।

३१. स्थानम्।

स्थानं तूपस्थानमुपस्थितिः।

३२. मुख्यक्रमः।

प्रधानक्रमेणाङ्गानां क्रमः मुख्यक्रमः।

३३. प्रवृत्तिक्रमः।

एकाङ्गक्रमेणान्याङ्गानां क्रमः प्रवृत्तिक्रमः।

३४. नियमविधिः।

पक्षप्राप्तार्थनियमबोधको विधिर्नियमविधिः। एवं क्रियादोनां दृष्टार्थो यो विधिः, स नियमविधिः। भ्रान्त्या पक्षप्राप्तावधि नियमो भवति।

३५. परिसंख्या।

इतरनिवृत्तिफलकोविधिः परिसंख्याविधिः।

३६. निषेधप्रामाण्यम् ।
निषेधानां निवर्त्तनाबोधकत्वेनाधर्मेप्रामाण्यम् । निवर्त्तना च निवृत्त्यनुकूलो व्यापारः ।

३७. अर्थवादः ।
विधिनिषेधैकवाक्यतया तदपेक्षितस्तुतिनिन्दार्थत्वेनार्थवादानां धर्मे प्रामाण्यम् ।

३८. गौणी ।
स्वार्थनिष्ठगुणयोगादर्थान्तरे वृत्तिः ।

३९. परकृतिः ।
एककर्त्तृकचरित्रान्वाख्यानं परकृतिः ।

४०: पुराकल्पः ।
अनेककर्त्तृकचरित्रान्वाख्यानं पुराकल्पः ।

४१. मन्त्रप्रामाण्यम् ।
मन्त्राणां प्रयोगसमवेतार्थस्मारकत्वेनार्थवत्त्वं पदार्थविधया च धर्मेप्रामाण्यम् ।

४२. मन्त्रत्वम् ।
अध्यापकादिगतमन्त्रत्वप्रसिद्धिविषयत्वमेव मन्त्रत्वम् ।

४३. नामधेयम् ।
नामधेयानां विधेयार्थपरिच्छेदकत्वेन धर्मेप्रामाण्यम् ।

४४. यागः ।
देवतोद्देशेन द्रव्यस्य च पुरोडाशादेस्त्यागो मानसः सङ्कल्पः यागः ।

४५. होमः ।
अग्न्याद्यधिकरणकप्रक्षेपाधिको होमः ।

४६. दानम् ।
स्वस्वत्वत्यागपूर्वकं परस्वत्वापादनं दानम् ।

४७. शब्दान्तरम् ।
अपरपर्यायिधातुनिष्पन्नान्येकप्रकरणगतान्याख्यातानि शब्दान्तरम् ।

४८. अभ्यासः ।
पुनः श्रवणमभ्यासः ।

४९. देवता ।
त्यज्यमानद्रव्योद्देश्यता ।

# चतुर्थं परिशिष्टम्

## ग्रन्थेऽत्रस्मृता:ग्रन्थकारा: ।

मण्डन मिश्रः ७

पार्थसारथि मिश्रः ७

मिश्राः ९, १०, १७, २०, २५, २७, ३७, ३९, ४०, ४५, ४६, ४७, ४९, ५१, ६०, ६४, ६७, ६९.

| | | |
|---|---|---|
| भाष्यकृत् | — | १६.१०० |
| साम्प्रदायिकाः | — | २१ |
| मन्दुः | — | ६९.७०.७७ |
| आपस्तम्बः | — | ४३.७० |
| वार्त्तिककारैः | — | ९४ |
| यथादुः | — | ९३ |
| शाक्यः | — | |
| बौद्धः | — | |
| कात्यायनः | — | |

# पञ्चमं परिशिष्टम्

ग्रन्थेऽत्र समुद्धृताः ग्रन्थाः ।

## षष्ठ परिशिष्टम्

| पृष्ठम् | पंक्तिः | वाक्यानि | आकरनिर्देशाः |
|---|---|---|---|
| | | अक्ताः शर्करा उपदधाति । | तै.ब्रा.३.१२.५ |
| | | अग्निर्ज्योतिरग्निः स्वाहेति सायं जुहोति । | तै.ब्रा.२.१.९.२ |
| | | अग्निचिद् वर्षति न धावेत् । | तै.सं.५.४.९ |
| | | अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालम् निर्वपेत् । | तै.सं.२.२.४.७ |
| | | अतिरात्रे षोडशिनं गृह्णाति । | मै.सं.४.७ ६ |
| | | अपशवो वा अन्ये गो अश्वेभ्यः । | तै सं.५.२.९.४ |
| | | अथ प्रथमयज्ञशब्देनाग्निाग्निष्टोम० । | कौषीतकि ब्रा. |
| | | अमावास्यायां अमावास्यया यजेत । | आप.२.४.२.१९ |
| | | अथैष ज्योतिः । | तां.ब्रा.१६.८.१ |
| | | अथैष विश्वज्योतिः । | तां,ब्रा.१६.९.१ |
| | | अथैष सर्वज्योतिः । | ता.ब्रा.१६.१०.१ |
| | | अभ्रिरसि । | मा.सं.११.१० |
| | | अभिघार्यास्त्यम्लका नाभिघार्या इति । मीमांसेते । | |
| | | अग्नेः पूर्वाहुतिः प्रजापतेस्त्तराहुतिः । | ऐ.ब्रा. ५.१ |
| | | अग्निर्ब्राह्मणः । | तै.सं.२.३.३.३ |
| ९८ | १ | अभित्वाशूरनोनुमः । | सासं.उ.१.१.११/ मा.सं.२७.३५ |
| ९० | १४ | अग्नये जुष्टं निर्वपामि । | तै.सं.१.१.४.१ |
| | | अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेत् । | मै.सं.२.१.१५ |
| | | अन्तर्वेदिप्रणीताः निनयति । | |
| | | अतिरात्रेण प्रजाकायं याजयेत् । | |
| ९० | ११ | अदितिः पाशान् प्रमुमोक्त्वेतान् । | मै.सं.१.२.१५ |
| | | अधस्तात्समिधं धारयन् अनुद्रवेत् । | आप.श्रौ.६.८.५ |
| | | अग्निष्टोमे प्रवृणक्ति । | तै.आ.८.६ |

| पृष्ठम् | पंक्तिः | वाक्यानि | आकरनिर्देशाः |
|---|---|---|---|
| | | अग्नीषोमीयाभ्यायाज्यभागौ यजति । | |
| १०० | १४ | अग्निहोत्रहवण्या हंवींषि निर्वयति । | तै.सं.१.६.८.३ |
| २४ | २ | अग्निहोत्रं जुहुयात्स्यर्गकामः । | मै.सं१.६.८.३ |
| | | अयक्षिया वैमाषाः वरकाः कोद्रवाश्च । | मै.सं,१.४.१२ |
| ५१ | १० | अग्नयेसमिद्धभानायानुब्रूहि । | मै सं.१ ४.४६ |
| ५२ | ६ | अग्नये स्वाहा । | तै.ब्रा.३.१.४.१/ तै.सं १.१.२ |
| ५२ | ६ | अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वयेत् । | तै.ब्रा ३.४.१. |
| | | अन्तरानूच्य स देवत्वाय | तै.सं.२.५.११ |
| २९ | १६ | अतिहायेडो बर्ठिः प्रतिसमानयते जुहवामौपभृतम् । | |
| ६२ | २ | अनड्वाहौ युनक्ति । | |
| २४ | २ | अग्निहोत्रं जुहोति । | तै.सं.१.५.९.१ |
| ६२ | ६ | अग्नोषोमयशावजोऽग्नीषोमीयः । | तां. ब्रा.१९.१४.११ |
| ३८ | २ | अग्नेस्तृणान्यपचिनोति । | आप श्रौ ६.२३.१ |
| ८८ | ४ | अप्सुमन्तावाज्यभागौ यजति । | |
| ३० | १ | अभिक्रामं जुहोति । | तै सं.२.६.१ |
| ५७ | १२ | अश्विनोस्त्वा बाहुभ्यां सध्यासम् । | तै.सं.३.२.५.१ |
| ४१ | १ | अश्रद्धया हुतं दत्तम् । | |
| | | अग्नीषोमीयान्तेनोपांशु चरन्ति । | |
| ५२ | ११ | अग्नीषोमीयं पशुआलभेत । | तै.सं.६.१.११ |
| | | अग्नीषोमीये दीक्षितस्यान्नमश्नीयात । | |
| ४० | १ | अविनाशी वा अरेऽयं आत्म । | |
| ५९ | १३ | अष्टवर्षं ब्राह्मणमुपनयीत । | |
| | | अष्टौ हवींषि । | तै०ब्रा १.६'३.४/ मै.सं.१.१०.८ |
| ५५ | २ | अक्षैर्दीव्यति । | मै.सं.४.४.६ |
| ३४ | ४ | अरुणया एकहायन्या पिङ्गाक्ष्या रावा सोमं कोणान्ति । | तै.सं.७.१.६.२ |

| पृष्ठम् | पंक्ति | वाक्यानि | आकरनिर्देशाः |
|---|---|---|---|
| | | अविनाशी वा अरे अयमात्मा । | बृ. ३.४.५ १४ |
| ४८ | ११ | आग्नावैष्णवमेकादशकपालं निर्वपेत् । | तै. सं. १.८.१ |
| ८७ | ११ | आग्नेयं पयः । | |
| ८२ | ५ | आग्नेयमष्टकपालं निर्वपति । | तै. सं. १.८.२/मै.सं. १.१०.१ |
| | | आग्नावैष्णवमेकादश कपालं निर्वयेत् | क स. ६४ |
| | | दीक्षिष्यभाणः। । | तै. सं. ५ ५.१.४ |
| | | आग्नेयमष्टाकपालो निर्वपति श्यामो दक्षिणा । | तै. सं १.८ १.१ |
| ६४ | १३ | आग्नेयमष्टाकपालं निर्वपेत् सवकामः । | तै. सं. २२६.३.३ |
| | | आग्नेयो वै ब्राह्मणो देवतया ससोमेनेष्ट्वा । | तै सं. २.३.३.३ |
| २२ | ३ | आग्नेयोऽष्टाकपालः । | तै. सं. २.६.३ ३ |
| २८ | १२ | आज्यभागौ यजति । | तै. सं०. २.६.३.३/मै सं. १.१०.१४ |
| | | आज्येन पत्नीः संयाजयन्ति । | तैः सं. २.६.१० |
| ८६ | १ | आज्येन शेषं संस्थापयति— | |
| ८८ | २ | आतिथ्यामिडान्तातिथ्या सन्तिष्ठते— | |
| | | आतिथ्यायां चतुर्गृहीतान्याज्यानि भवन्ति । | |
| | | आत्मा श्रोतव्यः । | बृ. उ. २.४.४ |
| ८७ | १५ | आदित्यः प्रापणीयः पयसि चरुः । | |
| | | आदितयो यूपः । | तै. ब्रा. २.१.५ |
| ५२ | ५ | आमनस्यायनस्य देवाः । | तै. सं. २.३.६ ३ |
| | | आश्लीला तनूर्भवति । | |
| | | आश्विनो दशमो गृह्यते । | काठ. सं. ३७.५ । मै. सं. ४.६.१ |
| ६७ | १४ | आर्षेयान् प्रवृणीते । | |
| ६८ | २ | आर्षेयं वृणीते । | तै सं २.५.८.७ |
| ३८. | ८ | आह्वनीये जुहोति । | |
| | | आहिताग्निः क्लिन्नं दार्वग्नौ नादध्यात् । | आप. श्री. ५.७.८ |
| | | इमामगृभ्णन् रशनामृतस्य । | तै. सं. ५.१.२.१ |
| ६३ | २ | इयमाश्रृणुधि हवंस्तीर्णम् । | |
| | | इति ह स्मा वार्ष्णि माषान् मे पचेत् । | |
| ६२ | ६ | इन्द्रागच्छ हरिव आगच्छ । | तै. आ. १.१२.३ |
| ६२ | ६ | इन्द्राय हरि वत्ते धाना । | |

| पृष्ठम् | पंक्तिः | वाक्यानि | आकरनिर्देशाः |
|---|---|---|---|
| ५४ | १० | इन्द्राग्नी इदं हविरजुषेताम् । | तै. ब्रा. ३.५.१० |
| | | इयं वै समिध्यमानवती । | |
| ६१ | ३ | इयं गौः तया क्रीणामि । | |
| ८५ | ४ | इषु विष्टुति करोति । | |
| ८५ | ४ | इषुणाभिचरन् यजेत । | |
| ५७ | ५ | इषेत्वेति शाखां छिनत्ति । | आप. श्रौ सू १.१.११ |
| ५७ | २ | इषे त्वा । | तै सं. १.१.११ |
| ८८ | १७ | ईशानाय परस्वत आलभेत । | मै. सं० ३ १४.१० |
| ४३ | ६ | उच्चैऽर्ऋचा क्रियते । | ऐ. ब्र. ५.५.६ |
| | | उच्चैर्निगदेन । | |
| | | उत्तरार्द्धात्स्विष्टकृते समषद्यति । | आप. श्रौ. २.२१.३ |
| ८४ | ७ | उद्भिदायजेत पशुकामः । | ता. ब्रा. ११.७.३ |
| | | उदिते जुहोति । | |
| | | उपांशु यजुषा । | ऐ. ब्रा. ५.५.६ |
| ५० | १५ | उपव्ययते देव लक्ष्ममेव तत्कुरुते । | तै. सं २.५.११.१ |
| | | उपरि हि देवेभ्यो धारयति । | आप. श्रौ. ६.२.५ |
| | | उपसदां प्रवर्ग्येण प्रचरन्ति । | |
| ८८ | ३ | उपसुत्सु स्रुवेणाघारमाधारयति । | |
| ८५ | १६ | उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति । | ता.ब्रा. २५.४.१ |
| | | उपांशुयाजमन्तरा यजति । | तै. सं २.६.६.४ |
| | | उल्मुकैर्ह स्म पूर्व समाजग्मुः । | |
| ५७ | ७ | उपहूयस्व । | |
| ६१ | १२ | उपहूताः मनुष्यस्य इमं यज्ञम् । | |
| ४५ | १७ | उरू चा एते यज्ञस्य । | |
| | | उरू प्रथस्वेति पुरोडाशं प्रचयति । | तै. सं० १.१.८ |
| | | ऊर्ग्वा उदुम्बरः ऊर्क् पशवः । | तै. सं. २.१.१ |
| १० | १ | ऋभूणां च । | तै. ब्रा. १४.१ [?] |
| ४ | ३ | ऋषिर्दर्शनात् । | |
| ५३ | १४ | एकविंशतिरनुब्रयात्प्रतिष्ठाकामः । | |
| ८८ | ८ | एकादश प्रयाजान् यजेति । | |
| ६८ | ३ | एक वृणीत । | आप. श्रौ. २.५.१६.७ |

| पृष्ठम् | पंक्तिः | वाक्यानि | आकरनिर्देशाः |
|---|---|---|---|
| ६३ | १० | एकैकस्मै वान्या इष्टयः कामायाह्रियन्ते । | |
| ६३ | ५ | एकैकस्यै वाऽन्ये यज्ञक्रतव इति । | |
| ७३ | ११ | एतयानिषादस्थपतिं याजयेत् । | मै. सं. २.२.४ |
| | | एतया पुनराधेय सम्मितयेष्ट्वा अग्निहोत्रं जुहोति । | |
| ८३ | ८ | एतया अन्नाद्यकामं याजयेत् । | |
| ६५ | १४ | एतद ब्राह्मण एककपालः । | |
| ८५ | ९ | एतद् ब्राह्मणान्येव पञ्चहवींषि । | तै. ब्रा. १.७.१ |
| ८५ | १४ | एतावता हैनसा न मुक्तो भवति । | |
| ५७ | ८ | एतेन राजपुत्ररोहितौ सायुज्यकामौ यजेयाताम् । | |
| | | एतेन सहस्रदक्षिणेन यजेत । | |
| | | एतौ च कृतसोमयागस्यान्यस्यत्विन्द्राग्नी । | |
| | | एष वाय प्रथमो यज्ञो यज्ञानां योज्योतिष्टोमः । | ता. ब्रा. १६.१.२ |
| ८५ | ११ | ऐन्द्राग्न एकादशकपालः । | |
| ४१ | १५ | ऐन्द्राग्न एकादशकपाल निर्वपेत् । | मै. सं. २.१.१ |
| ८५ | १३ | ऐन्द्राग्न एकादशकपालो वैश्वदेव कर्मणः । | |
| | | ऐन्द्रं दधि ऐन्द्रं पयः । | तै. सं. २.४.५.४. |
| ६० | ६ | ऐन्द्रं पञ्चशराणमोदनं निर्वपेत् । | |
| ५३ | १० | ऐन्द्रया गार्हपत्यमुपतिष्ठते । | मै. सं. १.५.४/३.२.४ |
| ८९ | ६ | ऐन्द्र वायवं गृह्णाति । | मै. सं. ४.५ ७ |
| | | औदुम्बरी स्पृष्ट्वोद्गायेत् । | द्रा. श्रौ. सू. ५.२ |
| ४१ | ८ | ओदुम्बरी यूपो भवति । | तै. सं. २.१.६ |
| ५३ | ११ | कदाचन स्तरीरसि । | मै. सं. १.५.४/ऋग्वे. ८.५१.७ मा. सं. ३. ३४ |
| ९५ | १३ | कप्यासं पुण्डरीकमेवाक्षिणी । | |
| ९५ | १० | कया नश्चित्र आभुवत् । | स. सं. ३.१.१.१२ मा. सं. २७.३९ |
| ९८ | ९ | कवतीषु रथन्तरं गयति । | |
| ६४ | २ | कारीर्या यजेत वृष्टि कामः । | |
| | | कामं योऽनूचाः श्रोत्रियः स्यात्तस्य प्रवृञ्ज्यात् । | तै. आ. ८.६ |

| पृष्ठम् | पंक्ति | वाक्यानि | आकरनिर्देशाः |
|---|---|---|---|
| ३ | ७ | दुतच्चैऋचा क्रियते । | |
| | | तनूर्वंषिष्ठा । | तै. सं. १.२.११/मै. सं १.२.७ |
| ८८ | १४ | त्वाष्ट्रं पालीवतमालभेत । | तै. सं. ६.६ ६.१ |
| ३ | ५ | त्रयो वेदा अजायन्ताग्ने । | |
| | | त्रयो यवा कृष्णलः । | |
| ७७ | ७ | ताचतुर्भिरभ्रिमादत्ते । | तै. सं. ५.१.१ |
| | | तानि वा एतानि ज्योतींषि येऽप्यस्तोमाः । | |
| | | ताभ्यामेतमग्नीषोमीयमेकादशकपाल पूर्णमासे प्रायच्छत् । | त. सं० २.५.२.३ |
| | | तिष्ठन्तं पशुं प्रयजन्ति । | |
| ५ | ५ | तिस्त आहुतीर्जुहोति । | तै. सं. २.३.८ |
| ५० | १३ | त्रिः प्रथमामन्वाह त्रिरुत्तमाम् । | तै. सं. २.५.७ |
| | | त्रिः फलोकरोति । | |
| | | तोर्थे स्वःति । | तै. सं. ६.१.१ |
| ६८ | ३ | त्रीन् वृणीते । | आप. श्रौ. ३.५.१६.७ |
| | | तोणि हवै यज्ञस्मोदराणि । | ता. ब्रा. ७.३ |
| | | तृप्तां जहुमोतुलस्येवयोषा | |
| | | तेजो वै घृतम् । | तै. ब्रा. ३.१२.५ |
| | | तेन ह्यन्नं क्रियते । | रा. ब्रा. २.२.२.२३ |
| | | त्रैधातवीया दीक्षणोया भवति । | |
| ७९ | ७ | त्रैधातवीयेन यजेत । | तै. सं. २.४ ११.२ |
| २१ | १ | दध्ना जुहोति | आप. श्रौ. सू. ६.२५ |
| ८७ | ४ | दधि मधु घृतं पयोधाना इत्यादि । | मै. सं २.३.६ |
| ४७ | १० | दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत । | श. प. ब्र. १.६.४ |
| | | दर्शपूर्णमासयोर्यज्ञक्रतोश्चरित्वा ऋत्विज । | |
| | | दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत । | तै सं. २.५.६.१ |
| ३८ | १ | दण्डी प्रैषानन्वाह । | |
| | | दण्डेन दीक्षयति— | |
| २४ | १ | दध्नेन्द्रिकामस्य जुहुयात । | तै. ब्रा. २.१.५.६ |
| ५५ | ८ | दर्भेण स्तृणोत । | |

| पृष्ठम् | पंक्ति | वाक्यानि | आकरनिर्देशाः |
|---|---|---|---|
| | | दक्षिणाग्नावाहार्यं पचति । | |
| ४५ | १३ | द्वयोः प्रणयन्ति । | |
| ७६ | ४ | द्वादशाहेन प्रजाकामं याजयेत् । | |
| | | दाक्षायणयज्ञेन स्वर्गकामो यजेत । | तै. सं. २.५.५.४ |
| | | दाक्षिणानि जुहोति । | तै. सं. ६.६.१.१ |
| | | द्यावापृथिव्यमेकादशकपालम् । | तै. सं १.८.२ / मै. सं. १.१०.१ क. सं. ९ ४ |
| १८ | १ | द्यावापृथिवीत्यादि । | |
| | | दिशामवेष्टया भवन्ति । | |
| | | द्विर्हविषोऽवद्यति । | |
| | | दीक्षासु यूपं छिनत्ति । | |
| | | दीक्षितो न ददाति न जुहोति न यजति । | मै. सं. ३.६ ५ |
| | | दीक्षितस्यान्नं नाश्नीयात् । | |
| ७९ | ८ | देवताभ्यो वा एष आवृश्च्यते यो यक्षमे । | तै. सं. २.४ ११.४ |
| ३७ | ४ | देवस्य त्वेति निर्वपति । | |
| | | देवासुराः संयत्ता आसन् । | तै. सं. २.३.५ |
| | | देवाश्च याभिर्यजते ददाति च । | तै ब्रा. २.४.६.९ |
| ५० | १३ | देवेद्धो-मन्विद । | तै. ब्रा. ३.५.३ |
| | | द्वे पौर्णमास्यौ द्वे अमावास्ये । | मा. श. ब्रा. २.४.१.६/ ११.१.२.१३ क. श. ब्रा. १.३.४.४ |
| ८८ | ११ | द्वे द्वे रशने यूपमृच्छते । | |
| २ | ३ | धर्मं चर । | तै. उ. शीक्षा. ११.१ |
| २ | ११ | धर्मान्न प्रमदितव्यम् । | तै. उ. शीक्षा. ११.१ |
| ९३ | १ | धान्यमसि धिनुहि । | मा. सं. १.२० /तै. सं. १.१.६ |
| | | धूम एवाग्नेर्दिया ददृशे । | |
| | | न कलञ्जं भक्षयेत् । | |
| | | न केसरिणो ददाति । | |
| ९४ | ८ | न गिरा गिरेति ब्रूयात् । | ता. ब्रा. ८.६ |
| १०४ | ५ | न तौ पशौ करोति । | |
| | | न सौम्येऽध्वरः । | |

| पृष्ठम् | पंक्ति | वाक्यानि | आकरनिर्देशः |
|---|---|---|---|
| | | न ब्राह्मणं हन्यात् । | |
| | | न पृथिव्यामग्निश्चेतव्योनान्तरिते न दिवि । | तै. सं. ५.२.७.१. / मै. सं. ३.२.६ |
| | | न्वेनं माता मन्यताम् । | तै. सं ६.१.७ ? |
| ६८ | ३ | न चतुरो वृणीते । | आप. श्रौ. २.५.१६.८ |
| | | न चैतद्विद्मो ब्राह्मणा वा वयं स्मोऽब्राह्मणा वा । | |
| ६८ | ४ | न पञ्चातिवृणीते । | आप. श्रौ. २.५.१६.८ |
| ४३ | १० | न वेदं शृणुयाद्विप्रा— | |
| | | न प्रथमः यज्ञे प्रवृञ्ज्यात् । | |
| ७० | १३ | न भर्त्रा विभजेत् । | |
| ५१ | १० | नमः प्रवक्त्रे । | |
| | | न माता वर्द्धते न पिता । | |
| | | नयनं दक्षिणं दोक्षितं पूर्वमङ्गे सव्यं हि मनुष्याः । | तै. सं. ६.१.१ |
| ७९ | ९ | न यजते । | तै सं. १.४.११.२ |
| | | न स्त्रियमुपेयात् । | तै. ब्रा. २.५.६ ४ |
| ९९ | ९ | न होतारं वृणीते । | मै. सं १.१०.१८ |
| १४ | ६ | नातिरात्रे षोडशिनं गृह्णाति । | तै. सं. ६.६.११ |
| | | नाकृतं वदेत् । | तै. सं. २.५ ५.६ |
| | | नानूयाजेषु ये यजायहं करोति । | आप. श्रौ. २४.१३.६ |
| | | न्यूनसंख्यास्तोमकेषु त्रिवृदग्निष्टुदग्निष्टोमः । | |
| | | निर्मर्थ्यमान य यक्ष्यामहे । | |
| | | निवीतं मनुष्याणा प्राचीनावीतं पितॄणाम् । | तै. सं. २.५.११.११ |
| ५३ | १० | निवेशलः सङ्गमनो वसू नाम--- | |
| | | नीचः सदो मिन्दुयात् । | तै. सं. ३.८.९ |
| ९३ | ७ | नैवारश्चरुः । | |
| ९४ | ३ | नैवारश्चरुर्नखावपूतानाम् । | |
| | | नोभयततः प्रतिगृह्णाति । | |
| | | पशुकाम वक्ष्यं गृहह्णीयात् । | |
| ८८ | १५ | पर्यग्निकृतं पात्नीवतमुत्सृजति । | तै. सं. ६.६.२ |

| पृष्ठम् | पंक्ति | वाक्यानि | आकरनिर्देशाः |
|---|---|---|---|
| ८८ | १७ | पर्यग्नि कृतानारण्यानुत्सृजति । | |
| | | पशुबन्धस्य यज्ञक्रतोः षट् ऋत्विजः । | |
| १४ | ६ | परिधौ पशुं नियुञ्जति । | तां. ब्रा १७.१३.४ |
| ७८ | ८ | पञ्चपञ्चाशत् त्रिवृत्तः सम्वत्सराः । | ता ब्राह्मण |
| ४४ | ७ | प्रजापतिर्वरुणायाश्वमनयत्स स्वां देवतामच्छेत् । | तै. सं. २.३ १२.१ |
| | | प्रवरे प्रव्रियमाणे देवा पितर इति श्रूयात् । | |
| | | परस्त्रीकामः प्रायश्चित्त कुर्यात् । | |
| ५० | १२ | पञ्चदश सामिधेतीरनुब्रूयात् । | तै. सं. २.५ १० |
| | | पञ्चमे प्रज्ञाकाममुपनयीत । | |
| | | प्रजापतिरुपाशुं यष्टव्योञ्जामित्वाय । | |
| | | प्रणीताभिर्हवींषि संयौति । | |
| | | प्र वो वाजा ख्यादि । | तै. ब्रा. ३.५.२.१ |
| १७ | ११ | प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति | तां. ब्रा. २३.२०.४ |
| | | पत्नी संयाजान्तान्महानि सन्तिष्ठते । | |
| ९१ | ८ | पत्नी सन्ह्यति । | |
| | | पत्न्या आजयमवेक्षते । | |
| | | प्रधानं नीयहमानं हि तत्राङ्गान्यपकर्षति । | |
| | | प्रथमं यजमानोऽतिरात्रेण यजेत । | |
| | | प्राचीनावीति दोहयेत् । | |
| ९९ | ५ | प्राजापत्यं घृते चरुं निर्वपेत् । | मै. सं. २ २.२ |
| १९ | ३ | प्रातर्जुहोति । | |
| | | प्राणभृत उपदधाति । | तै. सं ५.३.१.२/श. ब्रा. ८.१.१.१ |
| | | प्रातः प्रातरनृतं वदन्ति, पुरोदयाजुहोति । | |
| | | पुरोडाशानलङ्कुर्विति । | |
| ७५ | १० | पुरोहितं वृणीते । | |
| | | पूर्वेद्युरग्निं गृह्णाति उत्तमाहर्यजेत । | |
| | | पूर्णमास्यां पूर्णमास्या यजेत । | |
| ४१ | ११ | पूषणोरहं देवयज्यया । | |
| | | पूयति वा एतद् ऋचोक्षरं यदेनदूहति । | |

| पृष्ठम् | पंक्तिः | वाक्यानि | आकरनिर्देशाः |
|---|---|---|---|
| ३७ | ७ | पूर्वार्द्धादवद्यते | |
| | | पृथुयाजवत्यौधाय्ये, उष्णिक्ककुभौ धाय्ये । | |
| ४९ | ११ | पृषदाज्येनानूयाजान् यजति । | तै. सं. ६.३.११.६ |
| | | प्रोक्षणींभिरुद्वेजिताः स्यः । | |
| | | प्रोक्षणीरुत्पुनाति । | |
| | | प्रोक्षणीरासादय । | तै. ब्रा. ३.२.७.१४ |
| | | प्रौर्णमास्यां पौर्णमास्या यजेत । | आप. श्रौ. २४.२.२० |
| | | पौष्णं च चरूम् । | तै. सं. १.८.२/मै. सं १.१०.१/ क. सं. ९.४ |
| ९५ | १० | पौण्डरीकाणि व्रीहिर्भंत्रन्ति— | |
| | | बवरः प्रावाहणिरकामयत । | तै. सं. ७.१.१० |
| | | बर्हिषि हवींष्यासादयति । | |
| ४१ | ३ | बर्हिर्देवसदनं दामि । | मै. सं. १.२.२ |
| | | बर्हिषि रजतं न देयम् । | तै. सं १.५.१.२ |
| ७५ | २ | बार्हद्गिरं ब्राह्मणस्य साम । | |
| १०२ | १ | बार्हपत्यं ग्रहं गृह्णाति । | |
| | | ब्राह्मणोऽस्य मुखमासीत्, मुखादिन्द्रश्चाग्निश्च । | |
| ७७ | ११ | ब्राह्मणानामिदँ हविः सोम्यानाम् । | |
| | | बृहस्यपतेर्वा एतदन्नं यन्निवाराः । | |
| ५७ | १० | भक्षे हि मा विश । | तै. सं. ३.२.५ |
| ७३ | ७ | भार्यायै पूर्वमारिण्यै दत्त्वाग्नी० । | |
| ५६ | ५ | भिन्ने जुहोति । | |
| | | भूपत० इत्यादि । | |
| ५७ | १ | मधुमत उपहूतस्योपहुतोभक्ष्यार्गम— | |
| २८ | ७ | मरुद्भ्यो गृहमेधिभ्यो सर्वासां दुग्धे सायमोदननिर्वयेत् । | |
| ३८ | ६ | मध्याद्धादवद्यति । | |
| | | मारुतं सप्तकपालम् । | तै सं. १.८.२/मै.सं. १.१०१/ क. सं. ९।४ |
| | | मासमग्निहोत्रं जुह्रोति । | ता. ब्रा. २५.४.१ |

| पृष्ठम् | पंक्ति | वाक्यानि | आकरनिर्देशाः |
|---|---|---|---|
| ८५ | १६ | मासं दर्शपूर्णमासाभ्यां यजते । | |
| ६७ | ६ | मैत्रं श्वेतमालभेत वारुणं कृष्णम् । | |
| ३७ | १३ | मैत्रावरुणः प्रेष्यति चान्वाहेति । | |
| ३७ | ७ | मैत्रावरुणाय दण्डं प्रयच्छति । | तै. सं. ६.१.४.२ |
| | | क्षुते आचामेत् । | |
| ७१ | ६ | क्षौमे वसानावग्निमादधीयाताम् । | आप. श्रौ. ५.१.१० |
| ७० | १६ | यजमानः आज्यमवेक्षते । | |
| ५८ | १४ | यजमानस्य यज्या— | |
| | | यजमानः प्रस्तरः । | तै. सं. २.६.५.३/मै. सं. ३.८.६ |
| | | यजतिषु ये नजामहं करोति । | |
| १०१ | १ | य इष्टया पशुना सोमेन वा यजेत । | का. सं. ६.१ |
| ७८ | १ | य एव कश्चित स्तामभागानधायत— | |
| | | यर्हि हविर्द्धाने प्राची प्रवर्त्तयेयुः । | |
| | | यवागूं पचति । | तै. ब्रा. २.१५.६ |
| | | यजमानो यूयं नावसृजेत् । | |
| | | यदहरेवैनं श्रद्धोयनमेदथादधीत । | |
| | | यः सोमेन यक्ष्यमाणोऽग्निमादधीत । | |
| | | यदाहवनीये जुहोति । | तै. ब्रा. १.१.१०.५ |
| | | यत्प्रवर्ग्यं प्रवृञ्जन्ति । | |
| ६८ | ५ | यद् योन्यां गायति तदुत्तरयोर्गायति । | |
| १०० | ५ | यद्युद्गातापच्छिन्द्याददक्षिणं यज्ञं समाप्य पुनर्यजेत— | तां. ब्रा. ६.७.१४ |
| १०० | ७ | यदि प्रतिहर्त्तापच्छिन्द्यात् । | ता. ब्रा. ६.७.१४ |
| | | यदि कामयेत वर्षुकः पर्जन्यः स्यात् । | मै. सं. ३.८.६ |
| ८२ | ६ | यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधाय० | |
| १६ | १५ | यदह्ना पापमकार्षम् । | |
| २० | २ | यस्मिञ्जाते एतामिष्टिं निर्वपति । | |
| ४० | ५ | यदेव श्रद्धया करोति.......... तदेव वीर्यवत्तरं भवति । छान्दोग्य | |
| ६० | ६ | यस्योभयं हविरार्त्तिमार्च्छेद् । | तै. ब्रा. ३.७.१.७ |

| पृष्ठम् | पंक्ति | वाक्यानि | आकरनिर्देशः |
|---|---|---|---|
| | | यस्य हविर्निरुप्तं पुरस्तात् चन्द्रमाभ्युदियात् । | तै. स. २.५.५.१ |
| | | यस्य पुरोडाशं क्षाययति तं यज्ञं निर्ऋतिर्गृह्णाति । | |
| ४ | ११ | यस्य निःश्वसितं वेदाः । | |
| | | यस्याग्निरुद्धृतोहुतेरग्निहोत्र उद्वाहेत् । | |
| | | यस्योभावग्नी अनुगतावभिनिम्नो चेदभ्युदियाद्वा । | |
| ४७ | ३ | यः पुरोधाकामः स्यात्स बृहस्पतिसवेन यजेत । | |
| | | यथैष ज्योतिः । | ता. ब्रा. १६.८.१ |
| | | यदग्नये च प्रजापतये च सायं जुहोति । | मै. सं. १.८.७ |
| | | य एवं विद्वान् पौर्णमासीं यजते । | तै. सं. १.६.९ १ |
| | | य एवं विद्वान् अमविवास्यां यजते । | तै. सं. १.६.९.१ |
| | | यद्विश्वेदेवा समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वम् । | तै. ब्रा. १.४.१०.१ |
| | | यवमयानि करम्भपात्राणि भवन्ति । | |
| | | यदान्या ओपधयो म्लायन्ते । | रा. ब्रा. ३.६.१.१० |
| | | यद् ऋचा स्तुवते तदसुरा अन्ववायन् | |
| | | य एवं विद्वान् साम्ना स्तुवीत । | |
| | | यद् यजुषा जुहुयादथापूवाहुतीर्जहोति । | तै. ब्रा. १.१.६.८ |
| | | यदि सोमं न विन्देत् पुतीकानभिषुणुयात् । | तां. ब्रा. ९.५.३ |
| | | यदि यजुष्टोभुवः स्वाट्टेति । | |
| ८३ | ६ | यदि रोचे ब्राह्मणो यजेत— | |
| | | यदि सामंतः स्वरित्याहवनीये । | |
| ९३ | १३ | यदि पृष्ठयः षडहः सन्तिष्ठते— | |
| | | यत्सूर्याय च प्रजापतये च प्रातः । | मै. सं. १.८.७ |
| | | यस्य सर्वाणि हवींषि नश्रयुर्दुष्येयुरपहरेयुः । | |
| | | यज्ञोपवीति हि देवेभ्यो दोहयति । | रा. ब्रा. १२.२.७.६ |
| | | यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति । | तै. सं. २.६.३.३ |
| | | यदेवादः पौर्णमासं हविः । | |
| | | यवैर्यजेत । | आप. श्रौ. सू. ६.३१.१३ |

| पृष्ठम् | पंक्तिः | वाक्यानि | आकरनिर्देशाः |
|---|---|---|---|
| | | यः घृताक्तो यज्ञ, आर्त्तिमियात् भूः स्वाहेति । गार्हपत्ये जुहुयात् । | |
| १०३ | ७ | यया प्रचार्याग्नीषोमीय पुरोडाशमनुनिर्वपति— | |
| | | यथा वै निपत्यादत्ते एवमयं द्विषन्तं० | षडिवं. ब्रा. ३.८.३ |
| १८ | १६ | यावज्जीवमग्निहोत्रं जुहुयात् । | |
| ४४ | ९ | यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्क-पालान् निर्वपेत् । | तै. सं. २.३.१२ |
| ६६ | १३ | यावज्जीवं दर्शपूर्णमासाभ्यां यजेत । | आप. श्री. ३.१४.११ |
| | | या तेऽग्नेऽयाशया । | तै. सं. १.२.११/मा.सं. ५.८ |
| | | या तेऽग्ने हराशया । | तै. सं. १.२.११ |
| १०० | १ | यावत्या वाचा कामयति तावत्या दीक्षणीयायाम् । | आप. श्री. १०.४.१० |
| | | युवं हि स्थ स्वर्यति । | ता. ब्रा. ६.९.१३ |
| ५६ | १३ | यूयं छिनत्ति । | |
| ७७ | ३ | ये यजमानाः त एव ऋत्विजः— | |
| ३० | २ | यो वे प्रयजानां मिथुनं वेद । | तै. सं. २.६.१.४ |
| | | यो वर्हिषिरजतं दद्यात् पुरास्य सम्वत्सराद्० । | |
| | | यो वै त्रिवृदग्यं यज्ञक्रतुमापद्यते । | ता. ब्रा. १६.१.४ |
| २२ | ४ | वसन्ताय कपिञ्जलानालयेत । | |
| ६६ | १४ | वसन्ते वसन्ते ज्योतिषा यजेत । | आप. श्री. १०.२.५ |
| | | वर्मंवा एतद् यज्ञस्य क्रियते यत्० । | तै सं. २.६.१.५ |
| | | वषट्कर्त्तुः प्रथमभक्षः । | आप. श्री. १२.२४.६ |
| ६८ | १५ | वर्षासु रथाकारो आदधीत । | आप. श्री. ५.३ १६ |
| ६८ | १४ | वसन्ते ब्राह्मणोऽग्नीमादधीत, | तै. ब्रा. १.१.२.६ |
| | | वा सं ते वायुर्वातेन गच्छताम् । | मै. सं. १.२.१५ |
| ७३ | ११ | वास्तुमध्ये चरुं निर्वपेत— | |
| ८६ | ३ | वाजपयेनेष्ट्वा बृहस्पतिसवेन यजेत । | आप. श्री. १८.७.१९ |
| | | वाजपेयेनस्वाराज्यकयो यजेत । | आप. श्री. १८.१.१ |
| | | वायुर्वैक्षेपिष्ठा देवता । | तै. सं. २.१.१ |
| | | वायव्यं श्वेतमालयेत भूतिकामः । | तै सं. २.११/ मै. सं. २.२.२ |

| पृष्ठम् | पंक्ति | वाक्यानि | आकरनिर्देशाः |
|---|---|---|---|
| ५८ | ६ | वाग्जुषाणा सोमस्य तृप्यन्तु । | |
| | | विष्णुरुपांशु यष्टव्योऽजामित्वाय । | तै. सं. २.६.६ |
| | | विश्वजिति सर्वस्वं ददाति । | |
| | | विवृद्धस्तौमकेषु एकविंशेनातिरात्रेण प्रजाकायं याजयेत् । | |
| १४ | १७ | विश्वजिता यजेत । | आप. श्रौ. १.८.१३ |
| २१ | १ | व्रीहिभिर्यजेत । | आप. श्रौ. सू. ६.३१.१३ |
| | | व्रीहीनवहन्ति । | तै. ब्रा. ३.२.५/आप. श्रौ. १.१०.११ |
| ३७ | ६ | व्रीहीन् प्रोक्षति । | तै. ब्रा. ३.२.५ |
| ४ | १४ | वीतीणां मेध सुगतस्यगानः— | |
| ३७ | १२ | वेदविदे गां ददाति । | |
| ४३ | ६ | वेदमधीत्य स्नायात् । | |
| | | वेदं कृत्वा वेदिं करोति । | आप. श्रौ. १ ८.१३ |
| | | वेद्यां हवींषि आसादयति । | |
| | | वैमृधमनुनिर्वयति । | |
| ५० | २ | वैश्वदेवीं साङ्ग्रहणीं निर्वयेत् ग्रामकामः । | तै सं. २.:.६ |
| २० | २ | वैश्वानरं द्वादशकपालं निर्वयेत् पुत्रेजाते । | तै. सं. २.२.५३ |
| ८३ | ६ | वैश्यो वैश्यस्तोयेन यजेत । | |
| ७७ | १६ | वैश्वामित्रो होता । | |
| | | वैष्वदेवेन यजेत । | तै. ब्रा. १.४.१० १/श. ब्रा. ५.३.२.१ |
| | | वैश्वदेवीमामिक्षाम् । | तै सं. १.८.२./मै. सं. १.१०.१/ क. सं. ६.४ |
| | | वैश्वदेव्यामिक्षावाजिभ्यो वाजिनम् । | मै. सं १.१०.१ |
| ५६ | ११ | रशनया यूपं परिव्ययते । | तै. सं. ६.३.४.५ |
| ५५ | २ | राजन्यं जिनाति । | मै सं. ४.४ ६ |
| ८२ | ६ | राजानमभिषेचयेत— | |
| ५५ | ६ | राजसूयाय ह्येना उत्पुनाति । | तै. ब्रा १.७.६.४ |
| ५४ | १५ | राजसूयेन स्वाराज्यकामो यजेत । | आप श्रौ. १८.८.१.४ |
| | | रौद्रं वास्तुमध्ये चरुं निर्वयेत् । | मै. सं. २.२.४ |
| ७८ | १२ | शतायुर्वै पुरुषः । | तै. सं. २.११.५ |
| ६८ | १५ | शरदि वैश्यः । | तै. ब्रा १.१.२.७ |
| ८८ | १ | रात्रान्ता प्रायणीयाः सन्तिष्ठते । | |

| पृष्ठम् | पंक्ति | वाक्यानि | आकारनिर्देशाः |
|---|---|---|---|
| ६६ | ४ | शरमयं बर्हिर्भवति । | |
| ५५ | ११ | शुन्धध्वं दैव्याय कर्मणे । | तै. सं. १.१.३ १ |
| ३८ | १२ | शुक्लानां व्रीहीणां चरुम्— | |
| | | शूर्पेण जुहोति । | श. ब्रा. २.५.२.२३ |
| ३८ | ७ | श्येनेनाभिचरन् यजेत् । | षड्विं. ब्रा. ३.८.२/आप. श्रौ. २२.४.१३ |
| ६२ | १३ | श्यति वा एतद् ऋचातरम्— | |
| ५५ | २ | शौनः शयमाख्यापयति । | ऐ. ब्रा. ५.५ /तै. ब्रा. १.७.१०.६ |
| | | षट् पदान्यनुनिष्क्रामयति । | तै. सं. ६.१.८ |
| | | षोडशिना वीर्यकामः स्तुवीत । | |
| | | सकृदभिघारयति । | श. ब्रा. ५.१ ३५ |
| | | सकृदुपस्तृणाति । | तै. ब्रा. ३.३.८.२ |
| | | सङ्गमनो वसूनाम् । | मै. सं. २ ७.११ |
| ८५ | ५ | समानक्तिसृश्येनेने— | |
| ५२ | ३ | समिधः समिधोऽग्न आज्यस्य व्यन्तु । | तै. ब्रा. ३.५.५.१ |
| २६ | १४ | समिधो यजति । | तै. सं. १.१.२/श. ब्रा. १.४.५.१ |
| ६५ | ६ | समौद्गं चरुं निर्वपेत् श्रीकामः । | |
| | | सर्वस्यै वा एतत् यज्ञाय गृह्यते यद् ध्रुवायामाज्यम् । | तै. ब्रा. ३.३.५.५ |
| ३६ | १२ | सक्तून् जुहोत— | |
| ५२ | ११ | स ए द्विदेवत्यपशु | |
| ५० | १६ | स देवत्वाय— | |
| ६३ | ११ | सर्वेभ्यो कामेभ्यो दर्शपूर्णमासो | |
| १५ | १० | सर्वेभ्यो कामेभ्यो ज्योतिष्टोमः | |
| ७४ | १६ | स यदि राजन्यं वैश्यं वा याजयेत् । | |
| ८७ | २ | सरस्वतीमाज्यस्य यजेत । | |
| | | सप्तमं पदमध्वर्युरञ्जलिना गृह्णाति । | |
| | | सप्तदश प्राजापत्यान् पशूनालभेत । | तै. ब्रा. १.३.४.३/ श. ब्रा. ५.१.३.७ |
| ६६ | १२ | सप्तदश वैश्यस्य । | तै. सं. २ ५.१०.२ |
| ८५ | ५ | सप्तानामह साम भवति । | |

| पृष्ठम् | पंक्ति | वाक्यानि | आकरनिर्देशाः |
|---|---|---|---|
| ६४ | २ | सत्रायागूर्य विश्वजिता यजेत । | |
| | | समे दर्शपूर्णमासाभ्यां यजेत । | |
| ६६ | ३ | संस्थितेऽहन गृहपतिर्मृगयां याति— | |
| ६३ | ११ | संस्थिते षडहे मध्वाये घृतं च । | तां. ब्रा. १३.१२.१५ |
| ८० | ६ | संम्वत्सर प्रतिमा वैडापशरात्रय— | |
| | | सवनीयपशावग्नी मारुतादूर्ध्वमनुयाजैश्चरन्ति । | |
| | | स वै ध्रुवायामेवाग्नियभिधारयेत् । | |
| | | सरस्वत्याः दक्षिणेतीरेऽऽग्नेयोऽष्टाकपालः । | |
| ६२ | ६ | सत्रादुदवसाय पृष्ठशमनीयेन यजेरन् । | |
| | | सह कुम्भीभ्यामभिक्रायेत् । | तै. सं. २ ५.४.३ |
| | | सह श्रपयति । | |
| | | सह पशूनालभते । | का. श्रौ. सू. २२.३.२८ |
| | | साकम्प्रस्थाय्येन यजेत पशुकायः । | तै. सं. २.५.४.३ |
| ६८ | ३ | साम तृचे क्रियते स्तोत्रीयम् । | |
| १६ | २ | सायं जुहोति । | मै. सं. ७.८.६ |
| | | सावित्रं द्वादश कपालम् । | तै.सं.१.८.२/मै सं १.१.१/क सं ६.४ |
| ६१ | ५ | साण्डस्त्रिवत्सः सोमक्रयणः— | |
| ७७ | १३ | सुचक्षण अवख्येषम् । | |
| १७ | ६ | सुवर्णं हिरण्यं भार्यं दुर्वर्णोऽस्य भ्रातृव्यो भवति । | |
| १७ | १६ | सूक्तवाकेन प्रस्तरं प्रहरति । | |
| | | सूर्योज्योतिरिति प्रातर्जुहोति । | तै. ब्रा. २.१.६ २ |
| ६० | १७ | सूमोय जुष्टं निरार्वयामि— | |
| ४६ | ६ | सोमापौष्णं त्रतमालयेत । | तं. सं. २.१.६ |
| २१ | ११ | सोमेन यजेत । | श. ब्रा. ४.३.४.२१/आप.श्रौ. ८.२१.२ तै. सं. ३.२.२ |
| | | सोऽरोदीत् यदरोदीत् तद्रुद्रस्य रुद्रत्वम् | तै.सं.१.५.१.१ |
| | | सौम्यं चरुम् । | तै. सं. १.८ २/मै.सं. १.१०१/क सं.६.४ |
| ७० | १ | सौधन्वन ऋभवः— | |
| २३ | १ | सौर्यं चरुं निर्वयेत् ब्रह्मवर्चसकामः । | तै स. २ ३.२.३ |
| | | स्कन्ने जुहोति । | |
| ११ | १ | स्वर्गकामो यजेत । | |

| पृष्ठम् | पंक्ति | वाक्यानि | आकरनिर्देशः |
|---|---|---|---|
| ३९ | १० | स्वधितिना अवद्यति । | |
| | ९ | स्वाध्यायोऽध्येतव्यः । | शत. ब्रा. ११ ५ ६/तै आर० २.१६.७ |
| १७ | ९ | स्वाहाग्निं स्वाहा सोमम्— | |
| १७ | ८ | स्वाहाकारं यजति । | तै.सं. १.१.२/श.ब्रा. १.४.५.१ |
| २८ | १२ | स्विष्टकृतं यजति । | |
| ३७ | ६ | स्त्रुचः सम्मार्ष्टि । | तै. ब्रा. ३.३.१ |
| | | सृष्टीरुपदधाति । | तै. सं ५ ३ ४.७ |
| | | स्रुवेणाघारमाधारयति । | तै सं ६.२.३ ३ |
| ३९ | १० | स्तुवेणाद्यति । | आप. श्रौ सू २.१९ १ |
| | | स्तेनं मनोऽनृतवादिनी वाक् । | |
| ५३ | १४ | स्योनं ते सदनं कृणोमि । | तै. ब्रा. ३.७.५ |
| ३९ | १० | हस्तेनावद्यति । | |
| ५४ | ४ | हविष्कृदेहीति त्रिरवघ्ननाह्वयति । | तै. ब्रा. ३ २ ५.८ |
| | | हिरण्यं हस्ते भवति, अथ गृह्णाति । | |
| ५७ | १४ | हिन्व मे गात्राणिहरिव । | तै. सं. ३.२.५ ९ |
| ३७ | १३ | हिरण्यमात्रेयाय ददाति । | श. ब्रा. ४.३ ४.२१ |
| | | हुं फट् । | |
| | | होतव्यमग्निहोत्रं न होतव्यम् । | |

## सप्तमं परिशिष्टम्

### कालक्रमानुसारिणी मीमांसाग्रन्थविवरणी

| क्र०सं० | कृति: | लेखक: | समय: | प्रकाशिता / अप्रकाशिता |
|---|---|---|---|---|
| 1. | मीमांसासूत्रम् | जैमिनि: | 300ख्रीष्टपूर्व: | प्रकाशितंकतिधा |
| 2. | मीमांसासूत्रवृत्ति: | उपवर्ष: | 1 श० | |
| 3. | मीमांसासूत्रवृत्ति: | बोधायन: | 1 श० | |
| 4. | शाबरभाष्यम् | शबरस्वामी | 2 श० | कतिधा प्रकाशितम् |
| 5. | मीमांसासूत्रवृत्ति: | भवदास: | 2 श० | |
| 6. | मीमांसासूत्रव्याख्या | भर्तृमित्र: | 3 श० | |
| | [कृतिरियं नोपलभ्यते। भट्टउम्बेक: पार्थसारथिमिश्रश्चामुमुल्लिखत:।] | | | |
| 7. | बृहट्टीका | कुमारिलभट्ट: | 7 श० | अनुपलब्धा |
| 8. | मध्यमटीका | कुमारिलभट्ट: | 7 श० | अनुपलब्धा |
| 9. | श्लोकवार्त्तिकम् | कुमारिलभट्ट: | 7 श० | कतिधा प्रकाशितम् |
| 10. | तन्त्रवार्त्तिकम् | कुमारिलभट्ट: | 7 श० | कतिधा प्रकाशितम् |
| 11. | टुप्टीका | कुमारिलभट्ट: | 7 श० | कतिधा प्रकाशिता |
| 12. | लघ्वी (विवरणम्) | प्रभाकरमिश्र: | 7 श० | अप्रकाशिता |

13. बृहती (निबन्धनम्)
(उभेअपि शाबरभाष्यव्याख्ये)
प्रभाकरमिश्र: 7 श0 प्रकाशिता

14. मीमांसानुक्रमणिका
मण्डनमिश्र: 7 श0 प्रकाशिता

15. विधिविवेक:
मण्डनमिश्र: 7 श0 प्रकाशित:

16. भावनाविवेक:
मण्डनमिश्र: 7 श0 प्रकाशित:

17. विभ्रमविवेक:
मण्डनमिश्र: 7 श0 प्रकाशित:

18. तात्पर्यटीका (श्लोकवार्त्तिकव्याख्या)
भट्ट उम्बेक: अयमेव
भवभूतिनाम्ना
काव्यजगति प्रसिद्ध: 8श0 प्रकाशिता

१9. भावनाविवेकव्याख्या
भट्टउम्बेक: अयमेव
भवभूतिनाम्ना
काव्यजगति प्रसिद्ध: 8श0

20. दीपशिखा (लघ्वीव्याख्या)
शालिकनाथमिश्र: 8श0 अप्रकाशिता

21. ऋजुविमला (बृहतीव्याख्या)
शालिकनाथमिश्र: 8 श0 प्रकाशिता

22. प्रकरणपञ्चिका (प्रकरणग्रन्थ:)
शालिकनाथमिश्र: 8 श0 प्रकाशिता

23. माहाव्रती (भाट्टमतानुसारिणी)
महाव्रताचार्य: 8 श0 अनुपलब्धा

24. महोदधि: (प्राभाकारमतानुसारी)
महोदधि: 8 श0 अनुपलब्ध:

25. अमृतबिन्दुः
चन्द्राचार्यः 9 श0

26. न्यायरत्नाकरः
चन्द्राचार्यः 9 श0

27. न्यायकणिका (विधिविवेकव्याख्या)
वाचस्पतिमिश्रः 9 श0 प्रकाशिता

28. तत्त्वबिन्दुः
वाचस्पतिमिश्रः प्रकाशितः

29. प्रपञ्चहृदयम्
देवस्वामी 10 श0 प्रकाशितम्

30. काशिका (श्लोकतन्त्रवार्त्तिकयोर्व्याख्या)
सुचरितमिश्रः 11 श0 प्रकाशिता

31. शास्त्रदीपिका (प्रकरणग्रन्थः)
पार्थसारथिमिश्रः 11 श0 प्रकाशिता

32. न्यायरत्नाकरः (श्लोकवार्त्तिकव्याख्या)
पार्थसारथिमिश्रः 11 श0 प्रकाशितः

33. तन्त्ररत्नम् (टुप्टीकाव्याख्या)
पार्थसारथिमिश्रः 11 श0 प्रकाशितम्

34. न्यायरत्नमाला (प्रकरणग्रन्थः)
पार्थसारथिमिश्रः 11 श0 प्रकाशिता

35. प्रकाशः (प्रभाकरमतानुसारी ग्रन्थः)
श्रीकरः 11 श0

36. नयविवेकः (द्वादशलक्षणीव्याख्या प्रभाकरमतानुसारीग्रन्थः)
भवनाथमिश्रः 11 श0 प्रकाशितः

37. शर्करिका (श्लोकवार्त्तिकव्याख्या)
जयमिश्रः 11 श0 प्रकाशिता

38. तौतातिकमततिलकम्
भवदेवभट्टः 11 श0

39. अजिता (तन्त्रवार्त्तिकव्याख्या)
परितोषमिश्रः 12 श0 प्रकाशिता

40. न्यायसुधा (तन्त्रवार्त्तिकव्याख्या)
भट्टसोमेश्वर: 12 श0 प्रकाशिता

41. तन्त्रसार: (प्रकरणग्रन्थ:)
भट्टसोमेश्वर: 12 श0

42. नीतितत्त्वाविर्भाव: (प्रकरणग्रन्थ:)
चिदानन्दपण्डित: 12 श0 प्रकाशित:

43. मीमांसाशास्त्रसर्वस्वम्
हलायुधभट्ट: 12 श0 प्रकाशित:

44. एकादशाध्यायाधिकरणम्
मुरारिमिश्र:द्वितीय: 13 श0 अप्रकाशितम्

45. त्रिपादीनीतिनयनम्
मुरारिमिश्र:द्वितीय: 13 श0 प्रकाशित:

46. प्रभाकरविजय: (प्राभाकरमतानुसारी)
नन्दीश्वर: 13 श0 प्रकाशित:

47. तन्त्रवार्त्तिकविवरणम् (न्यायपरायणम्)
गङ्गाधरमिश्र: 13 श0

48. सेश्वरमीमांसा (गद्यमयी)
वेङ्कटनाथ: वेदान्त –
देशिकापराभिध: 14 श0 प्रकाशिता

49. मीमांसपादुका (पद्यमयी)
वेङ्कटनाथ: वेदान्त
देशिकापराभिध: 14श0 प्रकाशिता

50. जैमिनीयन्यायमाला
माधवाचार्य: 14 श0

51. न्यायमाला विस्तार:

52. मीमांसामहार्णव:
वटेश्वर: 14 श0 नोपलभ्यते

53. नयतत्वसंग्रह: (प्राभाकरमतानुसारी)
भट्टविष्णु: 14 श0

54. विजया (अजिताव्याख्या)
अनन्तनारायण: 14 श0 प्रकाशिता

55. नयविवेकव्याख्या

रविदेवः 14 श0 प्रकाशिता

56. जुषध्वंकरणी स्वदितङ्करणी (न्यायकणिकाव्याख्या)

परमेश्वरप्रथमः 14 श0

57. स्फोटसिद्धिव्याख्या

परमेश्वरद्वितीयः 15 श0

58. विभ्रमविवेकव्याख्या

परमेश्वरद्वितीयः 15 श0

59. तत्त्वविभावना (तत्त्वबिन्दुव्याख्या)

परमेश्वरद्वितीयः 15 श0

60. नीतितत्त्वाविर्भावव्याख्या

परमेश्वरद्वितीयः 15 श0

61. मीमांसासूत्रार्थसंग्रहः

परमेश्वरतृतीयः 15 श0

(एकवंशीयाः केरलदेशवासिनश्च सर्वे परमेश्वराभिधानाः)

62. श्लोकवार्त्तिककाशिकायाः व्याख्या

63. न्यायरहस्यम्

अनन्तदेवः 16 श0

64. फलसाङ्कर्यखण्डनम्

अनन्तदेवः 16 श0

65. ज्योत्स्ना

अनन्तदेवः 16 श0 अप्रकाशितः

66. अर्थवादादिविचारः

क्षीरसमुद्रवासी 16 श0 प्रकाशितः

67. अधिकरणमाला

गोविन्दठक्कुरः 16 श0

68. नयविवेकदीपिका

वरदराजः 16 श0

(नैयायिकतार्किकरक्षाकारतोऽयं भिन्नः)

69. अधिकरणकौमुदी
देवानाथठक्कुरः 16 श० प्रकाशितः

70. मीमांसारत्नम्
रघुनाथभट्टः 16 श०

71. तन्त्ररहस्यम्
रामानुजाचार्यः 16 श० प्रकाशितः

72. नायकरत्नम्
रामानुजाचार्यः 16 श०

73. भावार्था (तन्त्रवार्तिकव्याख्या)
कमलाकरभट्टः 16 श०

74. विधिरसायनम्
अप्पयदीक्षितप्रथमः 16 श०

75. उपक्रमपराक्रमः
अप्पयदीक्षितप्रथमः 16 श०

76. वादनक्षत्रमाला
अप्पयदीक्षितप्रथमः 16 श०

77. मयूखावली
अप्पयदीक्षितप्रथमः 16 श०

78. चित्रपटः
अप्पयदीक्षितप्रथमः 16 श०

79. मीमांसार्थप्रकाशः
भट्टकेशवः 16 श० प्रकाशितः

80. न्यायाध्वदीपिका
विजयीन्द्रभिक्षुः 16 श० अप्रकाशिता

81. मीमांसान्यायकौमुदी
विजयीन्द्रभिक्षुः 16 श० अप्रकाशिता

82. उपसंहारविजयः
विजयीन्द्रभिक्षुः 16 श० अप्रकाशितः

83. वार्त्तिकाभरणम् (टुप्टीकाव्याख्या)
वेङ्कटेश्वरदीक्षितः 16 श० अप्रकाशितम्

84. मीमांसारसपल्वलम्

इन्द्रपत्युपाध्याय: 17 श0 प्रकाशितम्

85. मानमेयोदय: (प्रमाणपरिच्छेद:)

नारायणभट्ट:प्रथम: 17 श0 प्रकाशित:

86. मानमेयोदय: (प्रमेयपरिच्छेद:)

नारायणभट्टद्वितीय: 17 श0

87. तन्त्रवार्त्तिकव्याख्या निबन्धनम्

नारायणभट्ट:प्रथम: 17 श0

88. कौमारिलमतोपन्यास:

नारायणपण्डित: 17 श0 प्रकाशित:

89. तन्त्रवार्त्तिकनिबन्धनम्

नारायणभट्ट:प्रथम: 17 श0

90. मीमांसार्थप्रकाश:

भट्टकेशव: 17 श0

91. अर्थसंग्रह:

लौगाक्षिभास्कर: 17 श0 कतिधा प्रकाशित:

92. शास्त्रदीपिकाप्रकाश:

शङ्करभट्ट: 17 श0

93. मीमांसाबालप्रकाश:

शङ्करभट्ट: 17 श0

94. मीमांसारसंग्रह:

शङ्करभट्ट: 17 श0

95. विधिरसायनदूषणम्

शङ्करभट्ट: 17 श0

96. भाट्टभास्कर: (मीमांसासूत्रव्याख्या)

शङ्करभट्ट द्वितीय:17 श0 अप्रकाशित:

97. न्यायबिन्दु: (सूत्रवृत्ति:)

भट्टवैद्यनाथ: 17 श0 प्रकाशित:

98. मीमांसान्यायप्रकाश:

आपोदेव: 17 श0 प्रकाशित:

99. **भाट्टरहस्यम्**
खण्डदेवः 17 श० प्रकाशितम्

100. **भाट्टदीपिका**
खण्डदेवः 17 श० प्रकाशिता

101. **मीमांसाकौस्तुभम्**
खण्डदेवः 17 श० प्रकाशितम्

102. **तन्त्रशिखामणिः**
राजचूडामणिदीक्षितः17 श० अप्रकाशितः

103. **सङ्कर्षमुक्तावली**
राजचूडामणिदीक्षितः17 श०

104. **कर्पूरवर्त्तिका**
राजचूडामणिदीक्षितः

105. **अङ्गत्वनिरुक्तिः**
मुरारिमिश्र तृतीयः 17 श० प्रकाशिता

106. **मीमांसामकरन्दः**
वेङ्कटाध्वरिः 17 श०

107. **विधित्रयपरित्राणम्**
वेङ्कटाध्वरिः 17 श०

108. **मीमांसान्यायदर्पणम् (सूत्रवृत्तिः)**
रामकृष्णदीक्षितः 17 श०

109. **भाट्टसंग्रहः**
राघवेन्द्रयतिः 17 श० प्रकाशितः

110. **मयूखमालिका (शास्त्रदीपिकाव्याख्या)**
सोमनाथदीक्षितः 17 श० प्रकाशितः

111. **प्रभामण्डलम् (शास्त्रदीपिकाव्याख्या)**
यज्ञनारायणदीक्षितः 17 श० प्रकाशितः

112. **तन्त्रसिद्धान्तदीपिका**
अप्पयदीक्षिततृतीयः 17 श०

113. **अतिदेशलक्षणविचारः**
अप्पयदीक्षिततृतीयः

114. तन्त्रवार्त्तिकालोक:
कमलाकरभट्ट: 17 श0

115. शास्त्रदीपिकाटीका (भाट्टदिनकरी)
दिनकरभट्ट 17 श0 अप्रकाशित:

116. भाट्टालङ्कार:
दिनकरभट्टोऽपर: 17 श0

117. भाट्टभास्कर:
जीवदेव: 17 श0 प्रकाशित:

118. तन्त्रवार्त्तिकव्याख्या
कविन्द्राचार्यसरस्वती 17 श0

119. भाट्टचिन्तामणि: (सूत्रवृत्ति:)
गागाभट्ट: 17 श0 प्रकाशित:

120. शिवार्कोदय: (श्लोकवार्त्तिकव्याख्या)
गागाभट्ट:

121. कुसुमाञ्जलि: (लघुवृत्ति: सूत्राणाम्)
गागाभट्ट:

122. प्रभावली (भाट्टदीपिकाव्याख्या)
शम्भुभट्ट: 17 श0

123. विधिस्वरूपविचार:
गदाधरभट्टाचार्य: 17 श0 प्रकाशित:

124. पूर्वमीमांसासूत्रव्याख्या
महादेववेदान्ती 17 श0

125. नीतितत्त्वाविर्भावटीका
नीलकण्ठभट्ट: 17 श0

126. भाट्टार्क:
नीलकण्ठभट्ट: 17 श0 प्रकशित:

127. सुबोधिनी
अन्नम्भट्ट: 17 श0

128. राणकोज्जीविनी
अन्नम्भट्ट: 17 श0

129. राणकभावनाकारिकाविवरणम्

अन्नम्भट्टः 17 श०

130. युक्तिस्नेहप्रपूरणी (सिद्धान्तचन्द्रिका अपरं नामास्याः)

रामकृष्ण भट्टः 17 श०

131. अधिकरणकौमुदी

रामकृष्ण भट्टः 17 श०

132. प्रकरणपञ्चिकाव्याख्या

जयपुरि नारायणः 17 श० प्रकाशिता

133. चन्द्रोदयः (भाट्टदीपिका व्याख्या)

भास्करराय: 18 श०

134. चन्द्रिका (संकर्षकाण्डव्याख्या)

भास्करराय: 18 श०

135. मीमांसापरिभाषा

कृष्णयज्वा 18 श० प्रकाशिता

136. भाट्टालङ्कारः (मीमांसान्यायप्रकाश व्याख्या)

अनन्तदेवोऽपरः 18 श० प्रकाशितः

137. मीमांसासर्वस्वम्

कोल्लूरनरायणशास्त्री 18 श० अप्रकाशितम्

138. विधिविवेकः

कोल्लूरनारायणशास्त्री 18 श०

139. विधिदर्पणम्

कोल्लूरनारायणशास्त्री 18 श०

140. अध्वरमीमांसाकुतूहलवृत्तिः (सूत्रवृत्तिः)

वासुदेवदीक्षितः 18 श० प्रकाशिता

141. नायकरत्नम् (न्यायरत्नमालाव्याख्या)

रामानुजाचार्यः 18 श० प्रकाशिता

142. तन्त्ररहस्यम्

रामानुजाचार्यः 18 श०

143. भाट्टकल्पतरुः (भाट्टदीपिकाव्याख्या),

रामसुब्रह्मण्यशास्त्री 18 श० प्रकाशितः

